॥ श्रीः ॥

# ॥ शतपथब्राह्मणम् ॥



॥ सायणाचार्यकृत-"वेदार्थप्रकाश"-नामभाष्यसहितम् ॥

( अथ भाष्योपक्रमः )



॥ ॐ नमः श्रीगणेशाय नमः[1] ॥

वागीशाद्याः सुमनसः सर्वार्थाना मुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥१॥
यस्य निःश्वसितं[2] वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥२॥
तत्कटाक्षेण तद्रूपं दधतो बुक्कभूपतेः[3] ।
कृतावतरणः[4] क्षीरसागरादिव चन्द्रमाः ॥३॥
विजितारातिव्रातो[5]

धर्मब्रह्माध्वन्यः[१] समादिशत्सायणाचार्य्यम्[२] ॥ ४ ॥
ऋग्यजुः[३]सामशाखाना मेकैका व्याकृता त्वया ।
तावता तत्समानार्थाः ज्ञातुं शक्यास्ततः पराः ॥ ५ ॥
वासना विशदा[४] यत्र मन्त्रार्थाना मशेषतः ।
प्रायेणाध्वर्यवं कर्म पूर्णं[५] शाखान्तरैर्विना ॥ ६ ॥
करामलकवद्यत्र परं तत्त्वं प्रकाशितम् ।
या काचित्तादृशी शाखा त्वया व्याख्यायता मिति ॥ ७ ॥
सर्वतः[६] सायणाचार्य्यो विमृश्योदीरितान् गुणान् ।
माध्यन्दिने शतपथे ब्राह्मणे व्याकरोति[७] तत् ॥ ८ ॥
सञ्चारः पदवाक्यार्थन्यायानां दर्शितः पुरा ।
वेदाना मर्थवत्त्वादि यच्चान्यदुपयुज्यते ।
सर्वशाखासमत्वेन विज्ञेयं तदिहाखिलम् ॥ ९ ॥
यच्च[८] सन्दिग्ध मज्ञात मत्र तद्विवरिष्यते[९] ।
सम्मत्या कल्पसूत्राणां ब्राह्मणानाञ्च सङ्ग्रहात् ॥ १० ॥

---

१— “  ” — ’-इति ज, झ, ञ, ट; ‘धर्मब्रह्माचार्यः’-इति ड ।

( अथ प्रथमकाण्डीय-प्रथमप्रपाठक-प्रथमब्राह्मणस्यावतरणी )

इह हि चरमे चतुर्दशे काण्डे करतलामलकवत् परतत्त्वं प्रकाशितम्, ततः प्राक्तनैश्च त्रयोदशभिः काण्डैस्त्रेताग्निसाध्यो[1] धर्मः प्राधान्येन प्रतिपादितः। अग्न्याधाने[2] अग्नयश्चाधानपवमानेष्टिभिर्निष्पाद्याः; पवमानेष्टयश्च दर्शपूर्णमासविकृतितया[3] तदधिगमसापेक्षज्ञाना इति प्रथमे काण्डे दर्शपूर्णमासौ प्रतिपाद्येते; तदनुष्ठानारम्भश्च पूर्णमासपूर्वकः[4]; अतश्च तस्य पूर्णमासस्य प्रथमं यदङ्गं व्रतोपायनं[5] तदङ्गत्वेनापा मुपस्पर्शनं विधत्ते—

---

१— "दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः।
अग्नित्रय मिदं त्रेता प्रणीतः संस्कृतोऽनलः॥"—इति अम० को० २. ७. २०। "त्रेता त्वग्नित्रये"—इति च तत्रैव ३. ३. ६८।

२— नास्त्येतत् पदं ठ-पुस्तके।

३— 'दर्शपूर्णमासविध्यन्तग्राहितया'—इति ठ; 'दर्शपूर्णमासप्रकृतितया'—इति ड; 'दर्शपूर्णमासविप्रकृतितया'—इति ज, झ, ञ, ट।

४— 'पूर्णमासपूर्वकम्'—इति झ-ञ-टातिरिक्तेषु।

५— व्रतोपायनम् = व्रतग्रहणम्। "व्रतशब्देन कर्माङ्गभूता शास्त्रतो नियमा उच्यन्ते। "कर्माङ्गभूता यमनियमा व्रतम्, तदुपगमार्थो 'अग्ने व्रतपते'—इत्येयं मन्त्रः"—इत्युक्तं तन्त्ररत्ने"—इति का० २. १. ११ सू० वृ०। तच्च दर्शपौर्णमासयोः अग्न्यन्वाधानानन्तरं भवति, पशौ तु ब्रह्मवरणानन्तर मिति विशेषः। विहितश्चैतत् कात्यायनेन "अपराह्णे व्रतोपायनीय मश्नीतः"—इत्यादिसूत्रद्वयेन (२. १. १०, ११.)। "अशन मग्न्यन्वाधानं व्रतोपायन मित्येके, व्रतोपायन मशन मग्न्यन्वाधान मित्येके, अग्न्यन्वाधानं व्रतोपायन मशन मित्येके (श्रौ० सू० ४. २. ८.)"—इत्यापस्तम्बग्रन्थश्चेह द्रष्टव्यः। तद्विधानं तु तत्रैव मुक्तम्—"दक्षिणेनाहवनीय मव-

स्याय व्रत मुपैष्यन् समुद्रं मनसा ध्यायति, अथ जपति 'अग्ने व्रतपते व्रतं चरिष्यामि'–इति ब्राह्मणः"–इत्यादि (आप० श्रौ० सू० ४. ३. १,२.)।

अथ पद्धतिः—"कृताधानस्याधानानन्तरं प्रथमपौर्णमास्यां मातृपूजा-पूर्वक माभ्युदयिकं श्राद्धम्। ततो मुख्याया मेव पौर्णमास्यां सद्यो ऽन्वा-रम्भणीयेष्टिः। तदनन्तरं पौर्णमासस्यारम्भः। समूह्नन्त्यग्न्यागारम्, × × ×। अथाग्न्यन्वाधान मुच्यते × × ×। यजमानस्य सपत्नीकस्य मांसमैथुनवर्जनसङ्कल्पः। केशश्मश्रुवपनं शिखां वर्जयित्वा × × ×। अपराह्णे पत्नीयजमानौ माषमांसलवणप्रातर्दोह्यमाणद्रव्यव्यतिरिक्तं घृत-संयुक्त मल्प मश्नीतौ, न तृप्तिपर्यन्तम्। × × ×। व्रत्याशनानन्तरं यजमानः स्फ्य मादाय गार्हपत्यदक्षिणाग्न्योरन्तरालेन गत्वा आहवनी-यस्य पश्चात् समीपे पूर्वाभिमुखस्तिष्ठन्नाहवनीयं विलोकयन्नुदकं दक्षिण-हस्तेन स्पृष्ट्वा 'अग्ने व्रतपते व्रतम्'–इतिमन्त्रेण व्रत मुपैति, सत्यवदनादि-नियम मङ्गीकरोतीत्यर्थः। अथवा इदमहमनृतादित्यनेन मन्त्रेण व्रत मुपैति, न पूर्वोक्तेन। अतः प्रभृति क्रियमाणकर्माङ्गभूतो यजमानस्य सत्यवदननियमः। रात्रौ तस्मिन्नेव विहारे स्वय मेवाग्निहोत्रहोमः। सायाशनेच्छायां सत्यां होमानन्तर मारण्यौषधीनां नीवारश्यामाककङ्गु-दीना मन्नं वा आरण्यवृक्षाणा माम्रराजादनादीनां फलानि वाश्नीयाद्; नाश्नीयाद्वा। रात्रावाहवनीयागारे गार्हपत्यागारे वा पत्नीयजमानाभ्यां खरस्याग्न्यपेक्षया अधो नीचं शयनं कर्त्तव्यम्। आस्तरणस्य न निषेधः। × × ×। प्रातरपि तस्मिन्नेव विहारे स्वय मेवाग्निहोत्रहोमः। तत उदिते सूर्ये ब्रह्मवरणाद्युपक्रमः"–इति।

# ॥ अथ प्रथमकाण्डम् ॥

( तत्र )

प्रथमाध्याये ( प्रथमप्रपाठके )

प्रथमब्राह्मणम् ।



॥ हरिः ॐ ॥

व्रत मुपैष्यन्* । अन्तरेणाहवनीयञ्च गार्हपत्यञ्च प्राङ् तिष्ठन्नप ऽउप†स्पृशति तद्यदप ऽउपस्पृशत्यमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वा ऽआपो‡ मेध्यो भूत्वा व्रत§ मुपायानीति पवित्रं वा ऽआपः पवित्रपूतो व्रत मुपायानीति तस्माद् वा ऽअप ऽउपस्पृशति ॥ १ ॥

सोऽग्नि मेवाभीक्षमाणो व्रत मुपैति । अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यता मित्यग्नि-र्वै देवानां व्रतपतिस्तस्मा ऽएवैतत् प्राह व्रतं चरि-

---

* 'व्रत मुपैष्यन्'—इति च । एवं स्वरपाठभेदे स्यान्मुद्राशुद्धिरेव हेतुः ।

† 'प ऽउप'—इत्येवमादिषु 'ऽ'—इति चिह्नं नास्ति ग-च-छ-पुस्तकेषु ।

‡ 'वा ऽआपो'—इत्येवमादिषु च 'ऽ'—इति चिह्नं ग-छ-पुस्तकयोर्नास्ति ।

§ 'व्रत'—इति एकवकारात्मकः पाठः ख-च-पुस्तकयोः । सर्वत्रैवं बोध्यम् ।

ष्यामि तच्छकेयं तन्मे राध्यता मिति नाच तिरोहित मिवास्ति* ॥ २ ॥

अथ सꣳस्थिते व्विसृजते†। अग्ने व्रतपते व्रत मचारिषं तदशकं तन्मे ऽराधीत्यशकद्ध्येतद् यो यज्ञस्य सꣳस्था मगन्नराधि ह्यस्मै यो यज्ञस्य सꣳस्था मगन्नेतेन न्वेव भूयिष्ठा ऽइव व्रत मुपयन्त्यनेन त्वेवोपेयात् ॥ ३ ॥

द्वयं वा ऽइदं न तृतीय मस्ति। सत्यं चैवानृतं च सत्य मेव देवा ऽअनृतं मनुष्या ऽइद मह मनृतात् सत्य मुपैमीति तन्मनुष्येभ्यो देवानुपैति ॥ ४ ॥

स वै सत्य मेव व्वदेत्। एतद्ध वै देवा व्रतं चरन्ति यत्सत्यं तस्मात्ते यशो यशो ह भवति य ऽएवं व्विद्वा-न्सत्यं व्वदति‡ ॥ ५ ॥

अथ सꣳस्थिते व्विसृजते। इद मह य ऽएवास्मि सोऽस्मीत्यमानुष ऽइव वा ऽएतद्भवति यद्व्रत मुपैति न हि तदवकल्पते यद् ब्रूयादिद महꣳ सत्यादनृत मुपैमीति तदु खलु पुनर्मानुषो भवति तस्मादिद मह य ऽएवास्मि सोऽस्मीत्येव§ व्रतं विसृजेत ॥ ६ ॥

अथातोऽशनानशनस्यैव। तदु हाषाढः सावयसो

---

* 'मिवास्ति'—इति ख। † 'विसृजते'—इति ख, च।

‡ 'वदति'—इति ख, 'वदति'—इति ग, च। § 'सोऽस्मीत्येव'—इति ख, च।

ऽनशन मेव व्रतं मेने मनो ह वै देवा मनुष्यस्या जानन्ति त ऽएन मेतद् व्रत मुपयन्तं विदुः प्रातर्नो यक्ष्यत ऽइति तेऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स ऽउपवसथः* ॥ ७ ॥

तन्न्वेवानवक्लृप्तम् । यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात् तस्मादु नैवाश्नीयात् ॥ ८ ॥

तदु होवाच याज्ञवल्क्यः । यदि नाश्नाति पितृदेवत्यो भवति यद्यु ऽअश्नाति देवानत्यश्नातीति स यदेवाशित मनशितं तदश्नीयादिति यस्य वै हविर्न गृह्णन्ति तदशित मनशितꣳ स यदश्नाति तेनापितृदेवत्यो भवति यद्यु तदश्नाति यस्य हविर्न गृह्णन्ति तेनो देवान्नात्यश्नाति ॥ ९ ॥

स वा ऽआरण्य मेवाश्नीयात् । या वारण्या ऽओषधयो यद्वा वृक्ष्यं तदु ह स्माहापि बर्कुर्वार्ष्णो माषान्मे पचत न वा ऽएतेषाꣳ हविर्गृह्णन्तीति तदु तथा न कुर्याद् व्रीहियवयोर्वा ऽएतदुपजं† यच्छमीधान्यं तद् व्रीहियवावेवैतेन भूयाꣳसौ करोति तस्मादारण्य मेवाश्नीयात् ॥ १० ॥

---

* 'उपवसथः'—इति च । † 'दुपचं'—इति ङ, सायणसम्मतश्च ।

स ऽआहवनीयागारे वैताᳪ रात्रिᳪ शयीत। गार्हपत्यागारे वा देवान्वा ऽएष ऽउपावर्त्तते यो व्रत मुपैति स यानेवोपावर्त्तते तेषा मेवैतन्मध्ये शेते ऽधः शयीताधस्तादिव हि श्रेयस ऽउपचारः* ॥ ११ ॥

स वै प्रातरप ऽएव। प्रथमेन कर्म्मणाभिपद्यते ऽपः प्रणयति यज्ञो वा ऽआपो यज्ञ मेवैतत् प्रथमेन कर्म्मणाभिपद्यते ताः प्रणयति यज्ञ मेवैतद्वितनोति ॥ १२ ॥

स प्रणयति। कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्तीत्येताभिरनिरुक्ताभिर्व्याहृतिभिरनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापति मेवैतद् यज्ञं युनक्ति ॥ १३ ॥

यद्वेवापः प्रणयति। अद्भिर्वा ऽइदᳪ सर्वं माप्तं तत्प्रथमेनैवैतत्कर्मणा सर्वं माप्नोति ॥ १४ ॥

यद्वेवास्याच। होता वाध्वर्युर्वा ब्रह्मा वाग्नीध्रो वा स्वयं† वा यजमानो नाभ्यापयति तदेवास्यैतेन सर्वं माप्तं भवति ॥ १५ ॥

यद्वेवापः प्रणयति। देवान् ह वै यज्ञेन यजमानांस्तानसुररक्षसानि ररक्षुर्न्न यक्ष्यध्व‡ ऽइति तद्यदरक्षंस्तस्माद्रक्षाᳪसि ॥ १६ ॥

---

* 'उपचारः'—इति ख,च। † 'स्वयं'—इति च। ‡ 'यक्ष्यध्व'—इति क।

ततो देवा ऽएतं वज्रं ददृशुः। यदपो वज्रो वा ऽआपो वज्रो हि वा ऽआपस्तस्माद् येनैता यन्ति निम्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति तत* एतं वज्र मुदयच्छंस्तस्याभये ऽनाष्ट्रे निवाते यज्ञ मतन्वत तथो एवैष एतं वज्र मुद्यच्छति तस्याभये ऽनाष्ट्रे निवाते यज्ञं तनुते तस्मादपः प्रणयति ॥ १७ ॥

ता उत्सिच्योत्तरेण गार्हपत्यᳶ सादयति। योषा वा ऽआपो वृषाग्निर्गृहा वै गार्हपत्यस्तद् गृहेष्वेवैतन्मिथुनं प्रजननं क्रियते वज्रं वा ऽएष उद्यच्छति यो ऽपः प्रणयति यो वा ऽअप्रतिष्ठितो वज्र मुद्यच्छति नैनᳶ शक्नोत्युद्यन्तुᳶ सᳶ हैनᳶ स्तृणाति ॥ १८ ॥

स यद्गार्हपत्ये सादयति। गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद् गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति तथो हैन मेष वज्रो न हिनस्ति तस्माद् गार्हपत्ये सादयति ॥ १९ ॥

ता ऽउत्तरेणाहवनीयं प्रणयति। योषा वा ऽआपो वृषाग्निर्मिथुन मेवैतत्प्रजननं क्रियत ऽएव मिव हि मिथुनं क्लृप्त मुत्तरतो हि स्त्री पुमाᳶस मुपशेते ॥ २०

ता नान्तरेण सञ्चरेयुः। नेन्मिथुनं चर्यमाण मन्त-

* 'तत्त'—इति ग-च-पुस्तकाभ्यां मन्यन्ते।

रेण सञ्चरान्निति ता नातिहृत्य सादयेन्नो ऽअनाप्ताः सादयेत्स यदतिहृत्य सादयेदृस्ति वा ऽअग्नेश्चापाञ्च व्विभ्रातृव्य मिव स यथैव ह तदग्नेर्भवति यत्रास्याप ऽउपस्पृशन्त्यग्नौ ह्यधि भ्रातृव्यं व्वर्द्धयेद्यदतिहृत्य सादयेद्यद्यु ऽअनाप्ताः सादयेन्नो ह्याभिस्तं काम मभ्यापयेद्यस्मै कामाय प्रणीयन्ते तस्माद्दु सम्प्रत्येवो-त्तरेणाहवनीयं प्रणयति ॥ २१ ॥

अथ तृणैः परिस्तृणाति । द्वन्द्वं पात्राण्युदाहरति शूर्प*ञ्चाग्निहोत्रहवणीञ्च स्फ्यञ्च कपालानि च शम्याञ्च कृष्णाजिनं चोलूखलमुसले दृषदुपले तद्दश दशाक्षरा वै व्विराड्विराड् वै यज्ञस्तद्विराज मेवैतद्यज्ञ मभिस-म्पादयत्यथ यद् द्वन्द्वं द्वन्द्वं वै व्वीर्यं यदा वै द्वौ संरु-भेते ऽअथ तद्वीर्यं भवति द्वन्द्वं वै मिथुनं प्रजननं मिथुन मेवैतत्प्रजननं क्रियते ॥ २२ ॥ १ ॥

(प्रथमप्रपाठके प्रथमाध्याये वा प्रथमम्)
ब्राह्मणम् ॥ १ । १ ॥

---

* 'सूर्पं'–इति ख ।

न्त मुपेय्यन्निति। पूर्णमासस्य प्राथम्यम्; अन्नैवाग्रे पौर्णमासप्रयोग मभिधाय पश्चाद् दर्शप्रयोगाभिधानात्। कात्यायनेनापि तथाभिधाय "पौर्णमासवदन्यत्"-इति[1] पौर्णमासतन्त्रस्य दर्शेऽतिदेशात्। तथा इहैव ब्राह्मणे[2] प्रजापतिपर्वसन्धानप्रस्तावे "पौर्णमासेन चैवामावास्येन[3] च पौर्णमासीञ्चामावास्यां च तत्पर्वाभिषज्यन्"-इति पौर्णमासप्राथम्यम्[4]। तथा तैत्तिरीयके[5]—"पौर्णमासꣳ हविरिद मेषां मय्यामावास्यꣳ हविरिद मेषां मयि"-इत्यन्वाधानानुमन्त्रणयोर्यजमानमन्त्रयोः पाठक्रमादपि पौर्णमासप्राथम्य मवगम्यते।

ननु पूर्वोऽयं पाठक्रमः श्रुत्यैव तु पौर्णमासप्राथम्यं प्रतिषिध्यते, श्रुतिश्च पाठाद्बलीयसी; श्रुत्यर्थपाठमुख्यस्थानप्रवृत्तीनां[6] क्रमप्रमाणाना मपि श्रुतेः प्राथम्येन प्राबल्यात्[7]। श्रूयते हि पौर्णमासप्राथम्यस्य निन्दा—"यत्पौर्णमासीं पूर्वा मालभेत, प्रतिलोम मेवैनावा-

१— श्रौ० सू० ४. २. ४४। २— उपरिष्टात् (१. ६. ३. ३६.)।
३— 'चामावास्येन'-इति झ, ट। ४— 'प्राथम्यात्'-इति ट।
५— ब्रा० ३. ७. ४. ८। तन्मन्त्रपाठस्तु इमा मूर्जं मित्यादिः।
६— 'श्रुत्यर्थपाठमुख्यार्थानां प्रवृत्तीनां'-इति ज, झ, ञ, ट, ड।
७— "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्य मर्थविप्रकर्षात्"-इति मी० सू० ३. ३. १४। "विरोधेऽर्थस्तत्परत्वात्। श्रुतिः क्रमादानुमानिकत्वात्"-इत्यादिः (१. ५.५-१०सू०) कात्यायनग्रन्थोऽप्यत्र पर्यालोच्यः। "अङ्गबोधकप्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभेदेन षट्"-इत्यादिश्च मीमांसापरिभाषाप्रबन्धः। "एतस्य विधेः (विनियोगविधेः) सहकारिभूतानि षट् प्रमाणानि"-इत्यादिना लौगाक्षिभास्करेणाप्यर्थसङ्ग्रहे यानि लक्षणोदाहरणानि प्रदर्शितानि, तानि चेह द्रष्टव्यानि।

लभेत"-इति[1], न[2]; तस्य वाक्यस्य "सारस्वतौ होमौ पुरस्तात्कुर्यादमावास्या वै सरस्वत्यनुहोम मेवैनावालभते"-इति[3] सारस्वतहोमविधिशेषत्वेन पौर्णमासप्राथम्यनिन्दार्थवादात्। अतस्तदुक्तरीत्या[4] पौर्णमासप्राथम्य मुपपन्नम्। उपस्पर्शनशब्देनाचमनं विवक्षितम्।

नन्वापस्तम्बेन[5] "अप आचामत्युपस्पृशति वा"-इत्याचमनप्रतिद्वन्द्विभावेनोपस्पर्शनाभिधानात् स्पर्शनमात्रं तत्प्रतिभाति। सत्यं तत्र तथा; इह तु "तेन पूतिरन्तरतः"-इति वाक्यशेषादपोऽश्नात्यन्तरत एव मेध्यो भवतीति वदताचमन मेव। यथा "अक्ताः शर्करा उपदधाति"-इत्यत्र घृततैलादिव्यञ्जनसाधनत्वेन सन्दिह्यमानेषु "तेजो वै घृतम्"-इति वाक्यशेषात्[6] घृत मिति निश्चयः, तद्वत्। सूचितं हि[7]—"सन्दिग्धेषु वाक्यशेषात्"-इति[8]। तस्य च व्रतोपायनाङ्गत्वम्, उपेष्यन्निति शतृप्रत्ययेन व्रतोपायनस्याचमनं प्रति हेतुत्वाभिधानात्; "लक्षणहेत्वोः क्रियायाः"-इति स्मृतेः[9]। प्रधानं हि स्वनिष्पत्त्यर्थ मङ्ग मनुष्ठापयन् तदनुष्ठाने हेतुर्भवति। न च लक्षणेऽपि शतुर्विधानात् कथं हेत्वर्थनिश्चय इति वाच्यम्। तदा हि भविष्यता व्रतेन लक्षितो हि यः तत्पूर्वकालः, तत्सम्बन्ध माचमनस्य

---

१— तै० सं० २. ५. १. ५। २— नास्त्येतत् पदं ज-झ ञ-ट-पुस्तकेषु।
३— तै० सं० २. ५. १. ६। ४— 'अत उक्तरीत्या'-इति ट।
५— श्रौ० सू० ४. ३. २. ९। ६— "शर्करा अक्ता उपदध्यात्; तेजो वै घृतम्"-इति तै० ब्रा० ३. १२. ५. १२।
७— 'च'-इति ड; ज-झ-ञ-ट-पुस्तकेषु नास्त्येव।
८— मी० सू० १. ४. २९। ९— पा० सू० ३. २. १२६।

विधातुं व्रत मुपैष्यन्नित्येतस्यात्। तत्काल्समन्वस्याचमनानन्तरं व्रतोपायनस्य विधानात् पाठादपि सिध्यतीति लक्षणार्थस्वीकारे वचन मनर्थक मिति।

ननु व्रतोपायनादपि प्रथम माहवनीयप्रणयन मन्वाधानञ्च। अत एवापस्तम्बः—"प्रातरग्निहोत्रं हुत्वान्य माहवनीयं[1] प्रणीयाग्नीनन्वादधाति"—इति[2]। कात्यायनस्त्वप्रणीतस्याहवनीयादेरन्वाधानासम्भवादर्थसिद्धं प्रणयनं मत्वा[3] अन्वाधान मेव प्रथम माह—"अग्न्यन्वाधान मध्वर्युर्यजमानो वा"—इति[4]। ब्राह्मणं तु तदनभिधाय ततः पराचीनं[5] व्रतोपायनं तदङ्ग माचमनं वा कथं प्रथमम् अभिदधाति[6]? अत्राभिधीयते—नियमेन याजमानानां मध्ये व्रतोपायन मेव प्रथमम्; अग्न्यन्वाधानं हि नियमेन न याजमानम्। अध्वर्युर्यजमानो वेति कात्यायनोक्तेः[7]।

नन्वन्वाधानमन्त्रस्य ममाग्ने वर्च इत्यस्य[8] प्रत्यगाशीष्ट्वान्नियमेन याजमानत्वं युक्तम्; यथा आयुर्दा अग्नेऽस्यायुर्मे देहीत्यादेः[9]। तस्य हि समाख्यया आध्वर्यवत्वप्राप्तावपि प्रत्यगाशीष्ट्वलिङ्गेन प्रबलेन समाख्यां बाधित्वा याजमानत्वं निर्णीतम् "मन्त्राश्चाकर्मकरणास्त-

---

१— 'हुत्वाहवनीयं'—इति ठ। २— श्रौ० सू० १. १. २।

३— 'मत्वानो'—इति ड; ज-झ-ञ-ट-पुस्तकेषु नास्त्येव।

४— श्रौ० सू० २. १. २। ५— 'परत्वेन'—इति ठ, ड।

६— 'आह'—इति झ, ञ, ट। ७— श्रौ० सू० २. १. २।

८— का० श्रौ० सू० २. १. ३. — तै० सं० ४. ७. १४. १।

९— तै० सं० १. ५. ५. १२।

इत्"-इति[1]। सत्यम्! अकरणमन्त्रत्वात् तत्र[2] तथास्तु, ममाग्ने वर्च इति तु करणमन्त्रत्वादाध्वर्यवक्रियायां विनियुक्तत्वाद् यजमानेन प्रयोगे तत्प्रतिपादनासामर्थ्यादध्वर्युणैव प्रयोज्य मित्युक्त मुत्तराधिकरणे— "करणेष्वर्थवत्त्वात्"-इति[3]। अत उक्तयुक्तेस्तत्करण मन्वाधान मप्यध्वर्युणैवानुष्ठेयम्। यत्तु कात्यायनेनाध्वर्युर्यजमानो वेत्युक्तम्, तत्र याजमानत्वं शाखान्तरमूलम्; एतच्छाखानुसारेण त्वापस्तम्बादिभिः केवलाध्वर्यवत्व मुक्त मिति विभागः[4]। अथवा यथा अप्रणीतस्यान्वाधानानुपपत्त्या प्रणयन मप्यन्वाधानविधिनैव सङ्गृहीतं कात्यायनसूत्रे, तथा अन्तरेणाहवनीयञ्च गार्हपत्यं च प्राङ् तिष्ठन्निति वचनादेवाग्निप्रणयनं तत्प्रबलीकरणरूप मन्वाधानं चार्थसिद्धत्वादनुक्त मित्युच्यमानाङ्गमध्ये व्रतोपायनस्य प्राथम्य मविरुद्धम् ॥

विहित मुपस्पर्शन मनूद्य प्रशंसति— "तद्यदिति। 'तत्' प्रकृतं 'यत्' उपस्पर्शनं तेनान्तरतः 'पूतिः' पवित्रता भवति। अनृतवदनेन हि पुरस्तात् सम्भावित मपवित्रत्व मिति।

ननूपस्पर्शनस्य फल मेवेदं[5] पवित्रत्वं किं न विधीयते; कथ मपि सम्बन्धाभावेऽपि हि फलविधित्वं दृष्टम्, यथा—"प्रतितिष्ठन्ति य एता रात्रीरुपयन्ति"-इति रात्रिसत्रे[6]। (अत्रोच्यते[7]—) रात्रिसत्रस्य ह्यनन्यशेषत्वेन स्वतन्त्रतया विधीयमानस्य युक्तं यदर्थवादो

१— मी० सू० ३. ८. १५। २— 'अकरणमन्त्रो यत्र, तत्र'—इति ङ।
३— मी० सू० ३. ८. २५। ४— 'किङ्गः (भिन्नः?)—इति ज, झ, ञ, ट।
५— 'ननूपस्पर्शनस्यापामेवेदं'—इति ज, झ, ञ, ट।
६— "द्वादशरात्रादीनि रात्रिसत्राणि"—इति का० श्रौ० सू० २४. १. १।
७— नास्त्येतद् वाक्यं ङातिरिक्तेषु पुस्तकेषु।

ऽप्यपेक्षितं फलं समर्पयतीति; उपसर्जनस्य तु संस्कारतया संस्कार्येणैव प्रयोजनेन निरपेक्षितस्य कथ मपेक्षितं फलं समर्थो ऽर्थवादः[१] समर्पयितुम्[२]? यथा— "यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते इति[३]। अत्र ह्यञ्जनस्य संस्कारतया फल मनपेक्षमाणस्य भ्रातृव्यचक्षुर्वर्जनं न फल मिति। सूचितं च— "द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्"-इति[४]।

ननु साध्यसाधनेतिकर्त्तव्यतालक्षणे अंशत्रये ऽनुप्रविष्टं कञ्चिदप्यर्थ मनभिदधानस्य वाक्यस्यानर्थक्य मेव प्राप्तम्; "आम्नायस्य क्रियार्थत्वादानर्थक्य मतदर्थानाम्"-इति[५]। तत्रैव कस्यचिदंशस्य स्तुत्यापि भवत्यर्थवत्तेति चेत्, न; प्रवृत्तिविशेष मकुर्वाणया किं स्तुत्या? अपि च यः स्तुतस्तास्तुतस्य तावानेव सोऽर्थः[६]। अत्रोच्यते। इह लिङादियुक्तेषु वाक्येषु द्वे भावने। शब्दात्मिका चार्थात्मिका च। उक्तं च— "अभिधां भावना माहुरन्या मेव लिङादयः।

अर्थात्म-भावना त्वन्या सर्वाख्यातेषु गम्यते"-इति।

एकैका च सा साध्यसाधनेतिकर्त्तव्यताभिः त्रिभिरंशैरंशत्रयवती। भावनायां[७] हि स्वर्ग एकः साध्योऽंशः, तत्करण माग्नेयादिः साधनम्, प्रयाजादिरितिकर्त्तव्यतारूपः। तत्रैवार्थभावनायां पुरुषप्रवृत्तिः शब्दभावनाया भाव्यम्, लिङादिः तद्व्यापारो वा करणम्,

१— 'फल मसमर्थोऽर्थवादः'–इति ज, झ, ञ, ट।

२— 'समर्थयितुं'–इति ज, झ, ञ, ट। ३— तै० सं० ६. १. १. १७।

४— मी० सू० ४. ३. १। ५— मी० सू० १. २. १।

६— 'तावानेवास्यार्थः'–इति ड। ७— 'अर्थभावनायां'–इति ठ, ड।

आर्थवादिकी स्तुतिरितिकर्त्तव्यता[१]। तत्रार्थभावनाया अंशत्रयान-

१— भावनोपदेशोऽयं मीमांसापरिभाषायां विशेषतो व्यक्तः, अर्थसङ्ग्रहे लौगाक्षिभास्करेणाप्यल्पाक्षरेण सम्यग् बोधितः। तथाहि—"स च यागादिर्यजेत स्वर्गकाम इत्यादिवाक्येन स्वर्ग मुद्दिश्य पुरुषं प्रति विधीयते। तथाहि यजेतेत्यत्रास्त्यंशद्वयम्— यजिधातुः प्रत्ययश्च। प्रत्ययेऽप्यस्त्यंशद्वयम्— आख्यातत्वं लिङ्त्वञ्च। तत्राख्यातत्वं दशलकारसाधारणं, लिङ्त्वं पुनर्लिङ्मात्रे। उभाभ्या मप्यंशाभ्यां भावनैवोच्यते। भावना नाम भवितुर्भवनानुकूलो व्यापारविशेषः। सा द्विधा— शाब्दी भावना, आर्थी भावना चेति। तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः शाब्दीभावना। सा च लिङंशेनोच्यते; लिङ्श्रवणे अयं मां प्रवर्त्तयति, मत्प्रवृत्त्यनुकूलव्यापारवानिति नियमेन प्रतीतेः। यद्यस्माच्छब्दान्नियमतः प्रतीयते, तत्तस्य वाच्यम्; गा मानयेत्यस्मिन् वाक्ये यथा गोशब्दस्य गोत्वम्। स च व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः; वैदिकवाक्येषु पुरुषाभावात् लिङादिशब्दनिष्ठ एव। अत एव शाब्दी भावनेति व्यवह्रियते। सा च भावना अंशत्रय मपेक्षते— साध्यं साधन मितिकर्त्तव्यताञ्च। किं भावयेत्? केन भावयेत्? कथं भावयेत्? इति। तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेता आर्थी भावना साध्यत्वेनान्वेति; एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः। सङ्ख्यादीना मेकप्रत्ययगम्यत्वेऽप्ययोग्यत्वान्न साध्यत्वेनान्वयः। साधनाकाङ्क्षायां लिङादिज्ञानं करणत्वेनान्वेति; तस्य च करणत्वं न भावनोत्पादकत्वेन, तत्पूर्व मपि तस्याः शब्दे सत्त्वात्; किन्तु भावनाज्ञापकत्वेन, शब्दभावना-भाव्यनिर्वर्त्तकत्वेन वा। इतिकर्त्तव्यताकाङ्क्षाया मर्थवादज्ञाप्यप्राशस्त्य मितिकर्त्तव्यत्वेनान्वेति। प्रयोजनेच्छाजनितक्रियाविषयव्यापार आर्थी भावना। सा चाख्यातसामान्यस्य; व्यापारवाचित्वात्। साप्यंशत्रय मपेक्षते— साध्यं साधन मितिकर्त्तव्यताञ्च। किं भावयेत्? केन भावयेत्? कथं भावयेदिति। तत्र साध्याकाङ्क्षायां स्वर्गादि फलं साध्यत्वेनान्वेति, साधनाकाङ्क्षायां यागादि करणत्वेनान्वेति, इतिकर्त्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजाल मितिकर्त्तव्यत्वेनान्वेति"—इति॥

भिधानेऽपि ग्रब्दभावनेतिकर्त्तव्यताभूतां स्तुतिं ब्रुवाणो ऽर्थवादः कथ मनर्थकः स्यात् । यदाह सूत्रकारः— "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः"-इति[१] । स्तुतिविरहे त्वप्रवेकत्वादपरिपूर्ण-ग्रब्दभावनया न प्रवृत्तिरर्थभावनायां पुरुषस्येति तस्या अप्यानर्थक्येन मूलोच्छेदप्रसङ्ग इति कथ मनर्थिका स्तुतिः स्यात् । यत्त्वर्थवादरहितं[२] केवलं विधिवाक्यम्, तत्र विधिरेव स्तुति माक्षिपतीति नोक्तदोषा-वतारः ; इह प्रत्यक्षश्रुतायां स्तुतौ सत्यां किं माक्षेपक्लेशेनेत्यलम् । अयं[३] च विचारः उत्तरत्र सर्वेष्वेवार्थवादेषु द्रष्टव्य इति ।

अनृतवदननिमित्ताशुद्धिपरिहारेणोपसर्जनस्य प्राग्रस्त्य मभिधाय तत्साधनभूताना मपां स्वतः शुद्धत्वात् स्वसम्बन्धिशुद्धिहेतुत्वाच तत्प्रशस्त मित्याह— "मेध्या वा इति ॥ १ ॥

इदानी मग्निदर्शनलक्षणेनाङ्गान्तरेण सहितं समन्त्रकं व्रतोपायनं विधत्ते— "सोऽग्नि मिति । 'सः' यजमानः 'अग्निम्' आहवनीयम् । मन्त्रार्थस्तु— हे व्रतस्य पालक ! अग्ने ! अनृतवदनत्यागादिरूपं 'व्रतं' चरिष्यामि ; तत्कर्त्तुं शक्तो भूयासम् । शक्नोतेर्लिङ्याशिष्ययम् । मदीयं 'तद्' व्रतं 'राध्यताम्' समृद्धं भवत्विति[४] ।

व्रतपतिपदं व्याकरोति— "अग्निर्वै देवाना मिति । उभय-वाक्यस्याव्याख्येयत्व मत्र— शकेयं राध्यता मिति । तत्र च हेतु माह— "नाचेति । 'तिरोहितम्' अविस्पष्टार्थं पदम्[५] ॥ २ ॥

---

१— मी० सू० १. २. ७ ।    २— 'यदर्थवादरहितं'-इति ज,भ,ञ;ट ।
३— 'एष'-इति ठ ।    ४— वा० सं० १. ५. १। तै० सं० १. ५. १०. ८ ।
५— यतोऽत्र अविस्पष्टार्थं पदं नास्ति, अतो व्याख्याने प्रयोजनाभाव इत्यर्थः ।

स्वीकृतस्य व्रतस्य यागसमाप्तिपर्यन्तता माह— "अथेति। 'संस्थिते' यागे पर्यवसिते। विसर्जनमन्त्र माह— "अग्ने व्रतपते व्रत मचारिष मिति[1]। अत्राशक मराधीति पूर्वमन्त्राद्वैलक्षण्यम्। तत्र हेतु माह— "अशकद्धीति। यो यज्ञस्य पर्यवसानं प्राप्तवान्, 'एतत्' कर्म कर्त्तुम् 'अशकत्' शक्तोऽभूत्। तस्मै तेन कर्मणा 'अराधि' सिद्धम्; तत्कर्म अभिध्यदित्यर्थः। अगन्मेति गमेर्लुटि "मन्त्रे घसेति[2] च्लेर्लुकि, हल्ङ्यादिलोपे[3], "मो नो धातोरिति[4]। अत्र व्रतोपायने मन्त्रान्तरं विधातुं पूर्वमन्त्रात्तस्यैव विशेष माह— "एतेनेति। यत 'एतेन' वक्ष्यमाणेनेद मह मित्यादिना[5] बहवो व्रत मुपयन्ति, अतस्तु हेतोः अनेनैवोपेयात्। एवकारेणैष मन्त्रः प्रशस्यते, न तु पूर्वो निषिध्यते। अत एव कात्यायनो द्वय मप्याह— "अग्ने व्रतपत इद मह मिति वा"-इति[6] ॥ ३ ॥

इद मह मिति मन्त्रे कर्मत्वेनापादानत्वेन च सत्यानृतयोरुभयो- रेवोपादाने कारण माह— "द्वयं वा इति। यद् 'इदं' जगत्, तत् सर्व मनृतं सत्यं वेति कोटिद्वय मेव; न तृतीया कोटिरस्ति। सत्य मेव देवाः; चिरावस्थानात्, नियमेन सत्यवादित्वाद्वा। अनृतं मनुष्याः; स्वप्नदृष्टवदल्पकालावस्थानात्, प्रायेणानृतवादित्वाद्वा। तथा च देवमनुष्याणां सत्यानृतवादित्व मैतरेयके[7] ऽप्याम्नातम्—

---

१— वा० सं० २. २८। तै० सं० १. ६. ६. १३।

२— पा० सू० २. ४. ८०।  ३— पा० सू० ६. १. ६८।

४— पा० सू० ८. २. ६४।  ५— वा० सं० १. ५. २।

६— श्रौ० सू० २. १. ११।  ७— 'तैत्तिरीयके'-इति ञ, झ, ञ, ट, ड।

"सत्यसंहिता वै देवा अनृतसंहिता मनुष्याः"-इति[१]। सत्यानृतवदनसाहित्यं हि तत्र विवक्षितोऽर्थः; "तस्माद्दीक्षितेन सत्य मेव वदितव्यम्"-इति वाक्यशेषात्[२]। यदनेन मन्त्रेणोच्यते 'तन्मनुष्येभ्यो देवानुपैति'-इत्येवमात्मक मिम मर्थ मयं मन्त्र आहेत्यर्थः॥ ४॥

अनेन मन्त्रेण व्रत मुपेयुषो नियम माह— "स वा इति। 'सः' इत्थं कृतव्रतोपायनः 'सत्य मेव' इत्येवकारकरणादनृतं न वदेदित्यर्थः। असत्येवकारे यद्यत् सत्यं, तत्तदवश्यं वक्तव्यं स्यात्,— "यद्दं सम्राष्ट्रीतिवदेकत्वस्याविवक्षितत्वात्; अनृतवचनं चाप्रतिषिद्धं स्यात्, इष्यते च तन्निषेधः। अत एव तैत्तिरीयके दर्शपूर्णमासप्रकरणे समाम्नायते— "तस्यैतद् व्रतं नानृतं वदेत्"-इति[३]। यद्यप्याहिताग्निमात्रस्यानृतवदन मन्यत्र प्रतिषिध्यते[४]— "तस्मादाहिताग्निर्नानृतं वदेत्"-इति[५], तथाप्यनृतवदनवर्जनस्य दर्शपूर्णमासाङ्गत्वसिद्धये पुनरिह वक्तव्य मेव; इतरथा ह्यनृतवदनेऽपि पुरुष एव प्रत्यवेयात्, क्रतुः पुनरविगुण एव स्यात्;—

"को नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत्।

न क्रतोस्तत्र वैगुण्यं यथाचोदितसिद्धितः"-इतिन्यायात्।

नन्वनेनापि वचनेन कथ मनृतवदननिषेधस्य कर्माङ्गत्वसिद्धिः? वदेदितिप्रत्ययार्थस्य कर्तुः प्राधान्यात् तदर्थ एवायं प्रतिषेध इति हि युक्तम्। कर्मप्रकरणात् कर्माङ्गतेति चेत्, न; प्रतिषेध्यपाठादपि

---

१— ब्रा० १. १. ६।
२— तत्रैव ततः प्राग् द्रष्टव्यम्।
३— सं० २. ५. ५. ११।
४— 'निषिध्यते'—इति ज, झ, ञ, ट।
५— "न वाहिताग्निनानृतं वदितव्यम्"—इतीहैवोपरिष्टात् (२.१.२,२०.)।

क्रियायाः सावत्कर्तृशेषता पदश्रुत्या प्रतीयते, तदर्थं प्रतिषेध्यम्; तादर्थ्येनैव प्रतिषेधोऽपि चाभिधीयते इति श्रौतेन पुरुषार्थत्वेन प्रबलेन प्राकरणिकी दर्शपूर्णमासार्थता बाध्यते ।

ननु न वदेदिति पदद्वयगम्यप्रतिषेधस्य कर्त्तुः सम्बन्धः, पदद्वयवाक्य मिति कथं प्रतिषेधस्य कर्त्तुः सम्बन्धः श्रौतः ? इति चेत्, न; यथा "ग्रहं सम्मार्ष्टी"ति पदद्वयगम्यसम्मार्गस्य ग्रहशेषता, तथापि द्वितीयायाः क्रियासामान्यं प्रति ग्रहस्य शेषत्वाभिधानात् तद्विशेषस्य सम्मार्गस्य पदान्तरेणोपस्थानेऽपि शेषशेषिभावस्य श्रौतता[1], तद्वत् । अत इह पुरुषार्थो निषेधो विधीयते । स्मृत्यैव विहित इति चेत्, तथापि हि तस्या एषैव श्रुतिर्मूलं भविष्यति; द्वयोरर्थसाम्यात् । अतो युक्तः श्रुत्या प्रकरणबाध इति । अथ मतम्— 'अविरोधे न दुर्बलं प्रबलेन निराक्रियते; न तु स्वसम्बन्ध मित्येव दुर्बलस्य हिंसा न्याय्या । न चेह प्रकृतक्रियया कर्त्तुः सम्बन्धे प्रकरणबाधः; अतो न केवलक्रत्वर्थतेति ।

ननु पुरुषमात्रार्थोऽनृतनिषेधः स्मृत्यैव सिद्धः, स एव क्रतुगतपुरुषार्थोऽपि भविष्यतीति किमनेन विशेषनिषेधेन ?। न च तस्याः स्मृतेरियं श्रुतिर्मूल मिति युक्तम्; सामान्यविशेषतया मूलमूलिभावासम्भवात् । एवं तर्हि सर्वविशेषगामिना सामान्येन स्मृतिसिद्धस्य निषेधस्य प्रकरणाबाधायाम्[2] क्रतुगतपुरुषविशेषे अनुवादोऽस्तु, तस्य प्रत्ययार्थत्वेन प्राधान्यादित्युक्तम् । स्यादेवं यदि कर्त्तुः

१— 'ऽपि न शेषशेषिभावस्य श्रौतत्वभङ्गः'—इति ज, झ, ञ, ट, ठ ।

२— एतदनन्तरं 'अनृत'—इति पद मधिकं ज-झ-ञ-ट-पुस्तकेषु ।

प्रत्ययार्थत्वं स्यात्, न त्वेवमस्ति; अनन्यलभ्यस्यैव प्रत्ययार्थत्वात्। अवश्याभिधातव्यया भावनयैवाक्षेपात् कर्त्तुः प्रतीतेः। न च "लः कर्मणि च"-इति[1] स्मृतिबलात् कर्त्तुः प्रत्ययार्थता; तस्याः स्मृतेर्द्वि-कयो[2]रित्यनेनैकवाक्यत्वे प्रत्ययाभिधेयत्वेनोच्यमानयोर्द्वित्वैकत्वयोर्व्या-वर्त्तकत्वेनैव कर्त्तुः समर्पणात्,— कर्त्तृद्वित्वे द्विवचनं कर्त्रेकत्वे एकवचन मिति; अतो भावनया संख्यया वा आक्षेपादेव कर्त्तुः प्रतीतिः सिद्धेति न स प्रधानतया प्रत्ययार्थः; अतः क्रियाया एव प्राधान्यात् तस्या एवाङ्गत्वेनानृतनिषेधो विधीयते। न च स्मृत्या पुरुषार्थतया विहि-तस्यानृतवदननिषेधस्य[3] कथ मिह प्रकरणात् क्रत्वर्थतेति[4] वाच्यम्; "खादिरो यूपो भवति[5]"-"खादिरं वीर्यकामस्य[6]"-इतिवत् संयोग-पृथक्त्वेनोभयार्थत्वसिद्धेः। उक्तं हि—"एकस्य तूभयत्वे संयोगपृथक्त्वम्"-इति[7]। अतः सत्य मेव वदेदिति दर्शपूर्णमासाङ्गत्वेनानृतप्रतिषेधस्य विधिरय मिति सिद्धम्। तदाह कात्यायनः— "इद मह मिति[8] वा सत्यवाग्यतः, कर्माङ्ग मुत्तरे सत्यवदनम्"-इति[9]।

तस्मात्ते यश इति। यशस्विनां देवानां यशोऽपि यशःप्रति-पादनाय प्रशस्तम्। 'एवम्' "अग्ने व्रतपते"-इतिमन्त्रवत्। इद मह मिति क्रियाविशेषणत्वान्नपुंसकम् ॥ ५ ॥

---

१— पा० सू० ३. ४. ६९। २— पा० सू० १. ४. २२।

३— 'विहितस्यातोऽनृतवदननिषेधस्य'-इति ज, झ, ञ, ट।

४— 'कर्मार्थतेति'-इति आदिषु। ५— इहैवोपरिष्टात् (३.६.२.१२.)।

६— ऐ० ब्रा० २. १. १। 'खादिरं स्वर्गकामो वीर्यकामो वा'-इति आप० श्रौ० सू० ७. १. १६। ७— मी० सू० ४. ३. ५।

८— वा० सं० १. ५. २। ९— श्रौ० सू० २. १. ११,१२।

मन्त्रेणाभ्युपेतस्य व्रतस्य प्रसङ्गाद्विसर्जन माह— "अथ सꣳस्थित इति । अव्रत्यविसर्जनमन्त्रस्य[१] अय मर्थः,— व्रतोपायनात् प्रागहं य एव मनुष्योऽस्मि, व्रतं मुक्त्वा स एव मनुष्यः इद मस्मि ; न तु व्रत-समये इव[२] देवः । इद मिति क्रियाविशेषणत्वान्नपुंसकम्[३] ।

नन्वसौ मनुष्यो व्रतसमयेऽपि मनुष्य एव, तत् किं मुच्यते य एव मनुष्योऽस्मि स एवेद मस्मीति ? तत्राह— "अमानुष ऽइवेति । मनुष्योऽपि हि तदा अन्यात्मकत्वात्[४] सत्यवदनाद्वा देव इवेत्युक्तम्, व्रतत्यागे तु कृते व्रतारम्भात् प्रागिव स्वभावसिद्धं मनुष्यत्व मेवेति ।

ननु यथा व्रतोपायने अनृतात् सत्य मुपैमीत्युक्तम्, एवं तत्त्यागे सत्यादनृत मुपैमीति किं नोक्त मित्यत आह— "न हीति ।

महत उत्कर्षात्[५] ( देवत्वात्[६] ) प्रच्युतत्वेनात्यन्तनिकृष्टमानुषत्व-प्राप्तिकथनस्य परुषत्वादनवकल्पनं तदाह— "तद्वु खल्विति ॥ ६ ॥

व्रतप्रसङ्गादागतं तद्विसर्जनं समाप्य पूर्वेद्युर्यजमानेन व्रतानन्तरं यत् कर्त्तव्यं तत् प्रतिजानीते— "अथात इति । यतो व्रतानन्तर मशनानशनापरनामक मारण्याशन मेव यजमानेन कर्त्तव्यम्, 'अतः' तदनन्तर मेव तस्य निरूपणं क्रियत इत्यर्थः ।

---

१— "व्रतं विसृजते येनोपायात्"—इति का० श्रौ० सू० ३. ८. २९ । 'पूर्वं हि व्रतग्रहणे द्वौ मन्त्रावुक्तौ अग्ने व्रतपते इदमह मिति वेति (का० श्रौ० सू० २. १. ११.), अत्र इद मह मित्येव मन्त्रः श्रुत्यभिमतः"— इति हरिस्वामिनः। श्रुतिश्च सा इहैवाग्रे द्रष्टव्या—१. ९. ३. २३ ।

२— मन्त्रपाठः खलु वा० सं० २. २८. २ द्रष्टव्यः ।

३— नपुंसकत्वम्'—इति भ, ठ, ढ ।

४— 'आत्मात्मकत्वात्'—इति भ, 'सात्मकत्वात्'—इति ड ।

५— 'उत्कृष्टात्'—इति ढ । ६— नास्त्येतत् पदं ड-पुस्तके ।

प्रतिज्ञातस्याशनानशनपक्षस्य प्रशंसार्थं केवलानशनपक्षं निरसितु मुपन्यस्यति— "तद् हेति। 'तत्' तस्मिन्नशनानशनविषये सवयसः पुत्रः ('सावयसः') 'अषाढ़'-नामकः, सर्वात्मना अशनत्याग मेव व्रतं मेने। तथा मन्यमानस्याषाढ़स्याशय माह— "मनो हेत्यादि। अनुपन्यस्त मपि मनुष्यस्य मनः 'आ' समन्तात् जानन्ति। अतो योऽसौ यजमानो व्रत मुपैति, एष नः प्रातरवश्यं यक्ष्यत इति ज्ञात्वा 'विश्वे' सर्वे 'ते' देवाः व्रतदिवसे यजमानस्य गृहानागच्छन्ति।

'उपवसथ'-नामनिर्वचनेन देवाना मागमनं दृढ़यति— "तेऽस्येति। 'उप' समीपे यजमानस्य वसन्ति देवा अस्मिन्निति पर्वदिवस 'उपवसथ'-नामक इत्यर्थः ॥ ७ ॥

अस्तु किं ततः? इति चेत्— "मनुष्येष्विति। गृहे मनुष्येष्वागतेषु अनश्नत्सु 'यः' कश्चिद्यजमानः स्वयं पूर्वं भुञ्जीतेति यत्तदेवानुचित मिति वितर्कयामः; अथ यः कश्चिद् देवेष्वनश्नत्सु पूर्वोऽश्नीयादिति यत्, तस्यानवक्लृप्तिः किमु वक्तव्या? कैमुतिकन्यायफल माह— "तस्मादिति। 'उ'-इत्यसन्देहे। तस्मादेव हेतोः अशनवर्जनलक्षणेऽर्थे नास्ति सन्देह इत्यर्थः ॥ ८ ॥

अषाढ़ेन चेन्मुनिना निर्णीतो ऽनशनपक्षः, तर्हि स एव परमार्थः; कथ मशनानशनपक्षः? इति चेत्, अस्यापि मुनिनैव याज्ञवल्क्येन सोपपत्तितो निर्णीतत्वादित्याह— "तदु हेति। 'तदु' तस्मिन्नप्यशनानशनपक्षे याज्ञवल्क्य उपपत्तिम् 'उवाच' आह।

अशनानशनलक्षणस्वमतसमर्थनाय प्रत्येकपक्षौ दूषयति— "यदीति। दैविके हि कर्मणि देवान् प्रत्युद्दिष्टस्यैव हविषः प्रथम मनुप-

योगः, काम मन्यस्य; पित्र्ये पुनरतिनियमाद्भुक्तिविषयोऽप्यद्य इति अनुपयोज्य मिति पितृदेवत्यता मापादयतीति याज्ञवल्क्यस्याशयः। तत् किं दैविके कर्मणि प्रागपि भोक्तव्य मिति यः, स माश्नीय मजानानः पृच्छते; तं प्रत्याह—"यद्यु इति। 'यद्यु' यदि त्वश्नाति, तदा अश्निप्रिषतो देवानतिक्रम्य स्वयं भुक्तवान् स्यात्।

अशनानशनपक्षयोरुभयोरपि दोषश्चेत्, का गतिः? इति (तत्राह—"स यदिति[1]।) 'यद्' द्रव्य मश्नित मप्यनश्नितवद् भवति, तदश्नीयात्। किं तदिति तदाह—"यस्येति। 'यस्य' द्रव्यस्य सम्बन्ध्यन्नं 'हविः' देवा न गृह्णन्ति, तदश्नित मपि सद् अनश्नितवद् भवति।

तथात्वे यथोदीरितदोषद्वयाभाव माह—"स यदिति। अशनादेव न पितृदेवतात्वम्; अश्यमानस्य देवायोग्यत्वादेव न देवाना मतिक्रमः[2] ॥ ९ ॥

अथ किं त्वेवं प्राश्यद्रव्यम्[3]? इति तदाह—"स वा इति। आरण्यग्रहणं प्रकृतदर्शपूर्णमासहविर्व्यतिरिक्तोपलक्षणम्। 'वृक्ष्यं' वृक्षोद्भवं फलम्।

---

१— नास्त्येषोऽंशः ठ-पुस्तकादन्यत्र।

२— 'अशनान्न पितृदेवतात्वम्, तस्यान्नस्यादेवयोग्यत्वादेव न देवाना मतिक्रमः'-इति ड। 'अशनानशनपितृदेवतात्वम्, अस्य यजमानस्य देवयोग्यत्वादेवं न देवाना मतिक्रमः'—इति ज, झ, ञ, ट।

३— 'अथ किं त्वाश्यद्रव्यम्?'—इति ज, झ, ञ, ट; 'अथ किं तादृग् द्रव्यम्?'—इति ठ।

भुक्तोपलक्षणत्वे मुनिविशेषव्यवहारं प्रमाणयति— "तदु हेति । वृषा नाम कश्चित्, तस्य पुत्रो 'वार्ष्णः', तस्य नाम 'वर्कुः'-इति ।

मुनेर्मत मपवदति— "तदु तथेति । तत्र हेतुः— "व्रीहियवयो-रिति । 'शमीधान्यं' तिलमाषादि । उपचिनोतीति 'उपचम्' अल्पेनापि माषपिष्टेन मिश्रितं व्रीहिपिष्टम् । त्रिचतुरान् यामानपि स्थापितम्[1] 'उपचितं' बहु भवति इति प्रसिद्धं तदाह— "व्रीहि-यवाविति । अतो माषोपयोगे व्रीहियवावेव यत उपयुक्तौ स्याताम्, अतस्तथा न कुर्यात् । अतो युक्त मारण्य मेवाश्नीयादिति । तदेवं व्यवस्थितं सकृदशनम् ॥ १० ॥

स आहवनीयेति । तां रात्रि माहवनीयागारे गार्हपत्यागारे वा शयीत[2] । तत्रैव शयने हेतुः— "देवान् वा इति । 'उपावर्त्तते' समीपे शेते[3] । 'अधः शयीत' न पुनः खट्वाद्युपरि ; यत उपरि स्थितं श्रेयांस मध एव स्थिताः[4] उपचरन्ति ॥ ११ ॥

अथ प्रभाते अध्वर्योः कर्त्तव्यता माह— "स वा इति । 'सः' प्रसिद्धोऽध्वर्युः प्रथमेन कर्मणा अप एवाभिमुख्येन प्राप्नोति । किं तत्प्रथमं कर्म ? तदाह— "अपः प्रणयतीति । एतच्चापां प्रणयनम्, "अथ संयौति"-इति[5] वक्ष्यमाणसंयवनार्थम् । अतः संयवनात्

---

१— 'माषानपि प्रापितम्'-इति ज, झ, ञ, ट ; 'माखावपितं'-इति ढ ।

२— का० श्रौ० सू० २. १. १४, १५ ।   ३— 'सेवते'-इति ठ ।

४— 'खट्वाद्युपरि ; यत उपस्थितं श्रेयांस मध उपस्थिताः'-इति ज, झ, ञ, ट । 'खट्वाद्युपरि शयीत ; उपस्थितं श्रेयांस मध उपस्थिताः'-इति ठ ।

५— १प्र० ६ब्रा० ३क० अथवा २अ० २ब्रा० ३क० ।

प्राक् प्रणीतानां नाशे पुनः प्रणयनं कार्यम्; कृते तु संयवने तन्नाशे ऽपि प्रयोजनस्य[1] जातत्वान्न पुनः प्रणेतव्यम्।

ननु अन्तर्वेदि प्रणीता निनयति[2] इत्युपरितन-निनयनार्थं पुनः कस्मान्न प्रणयन मिति चेत्, न; संयवनप्रसक्तौ तासा मेवापां प्रतिपत्तिमात्रम्, अतो न तदपां प्रणयनस्य प्रयोजकम्; न हि चाण्डाले प्राशनं कृष्णविषाणां[3] प्रयुङ्क्ते।

अथोभयं साधयतः[4] प्रणयनस्य कथं संयवन मेव प्रयोजनम्, न तु अन्तर्वेदि निनयन मिति चेत्, (न[5]); "पूर्णपात्रं निनयति"-इति[6] द्वितीयया अपां संस्कारकर्मत्वप्रतीतेर्निनयनस्योपयुक्तसंस्कार-तया प्राशनवत् प्रतिपत्तित्वात्। संयवने तु समानप्रकरणे शाखा-न्तरे "प्रणीताभिः[7] (हवींषि) संयौति"-इति[8] तृतीयया अपां संयवनं प्रति गुणत्वप्रतीतेः। अतः संयवनार्थ मेव प्रणयनम्।

उक्तं प्रणयनं प्रशंसति— "यज्ञो वा इति। अपां यज्ञसाधनतया यज्ञरूपत्वात्तद्विस्तारात्मकस्य प्रणयनस्य यज्ञविस्ताररूपत्वात् प्राशस्त्यम् ॥ १२ ॥

उक्तं प्रणयन मनूद्य कस्त्वेति व्याहृतिचतुष्टयात्मकं मन्त्रं[9] विधत्ते— "स प्रणयतीति। हे प्रणीतोदक! को नाम त्वां यज्ञेन 'युनक्ति'

---

१— 'संयोजनस्य'–इति ङ। २— इहैव २.२.२। का०श्रौ०२.५.११,१२।

३— इह ३.२.१.१८,२८; का०श्रौ० ७.३.२६; तै०सं० ६.१.२.१५।

४— 'अथोभयसाधनता'–इति ङ। ५— नैतत् पदं ठ-पुस्तकादन्यत्र।

६— इहैव ६.३.१। ७— 'प्रणीतेन'–इति ज, झ, ञ, ट, ड।

८— आप०श्रौ०सू० १.२४.३। ९— वा० सं० १.६.१–४।

योक्तुं समर्थः ? यः समर्थः 'सः' युनक्ति। 'कस्मै' त्वा प्रयोजनाय युनक्ति ? यस्मै युनक्ति, तस्मै युनक्ति। योजने कर्त्ता प्रयोजनञ्च दुर्ज्ञान मित्यर्थः। व्याह्रियन्त इति 'व्याहृतयः' मन्त्राः; दुर्ज्ञानत्वाभिधानात्, अनिश्चित्य वचनाच्च[1] 'अनिरुक्ताः'। व्याहृतिविशेषणस्यानिरुक्तत्वस्य प्रयोजन माह— "अनिरुक्तो वा इति। अनिर्ज्ञातो हि पदार्थः क इत्युपयुज्यते[2]। अतोऽसावनिरुक्तः प्रजापतिश्च 'कः'-इत्युच्यते। "को ह वै नाम प्रजापति"-इति श्रुतिः[3]। अतः श्रुतिसाम्यात् प्रजापतेरनिरुक्तत्वम्। अथवा वाचकमन्त्रोच्चारण मन्तरेण मनसैव (ध्यात्वा[4]) प्रजापतेर्होमादपि प्रजापतिरनिरुक्तः[5]। "यत्तूष्णीं तत्प्राजापत्यं स मनसा जुहोति, मन इव हि प्रजापतिः"-इति[6] श्रुतेः। अस्त्वनिरुक्तः[7] प्रजापतिः, प्रस्तुते किं मायात मित्यत आह— "प्रजापतिर्यज्ञ इति। "प्रजापतिर्यज्ञ मसृजत"-इति[8] यज्ञस्रष्टृत्वश्रुतेः कार्यस्य कारणादभेदात्। तथा "एष वै सप्तदशः प्रजापतिर्यज्ञ मन्वायत्तः"-इति[9] सप्तदशसमुदायात्मकस्य प्रजापतेः

१— 'निश्चित्य अवचनाच्च'-इति ठ। २— 'इति पर्यनुपयुज्यते'-इति ठ।

३— तै० ब्रा० ३. २. १०। ४— नास्त्येतत् पदं ठ-पुस्तकादन्यत्र।

५— "अनिरुक्तं वा उपांशु"-इति, "अनिरुक्तं हि मनो ऽनिरुक्तं ह्येतद् यत् तूष्णीम्"-इति चेहैव (१.३.५.१०, २.४.४.५.)।

६— तै० सं० ६. ६. १०. ३। "मनोऽसि प्राजापत्यम्"-इति तत्रैव १. ६. २. १२, "मनो वै प्राजापत्यम्"-इति च १. ६. १०. ४।

७— 'श्रुतेः स त्वनिरुक्तः'-इति ज, झ, ञ, ट।

८— तै० ब्रा० १. ७. १. ४। ऐ० ब्रा० ७. ४. १। "प्राजापत्यो यज्ञः"-इति तै० सं० १. ६. १०। ९— तै० सं० १. ६. ११. १।

सकलयज्ञानुगमश्रुतेः। अनुगच्छतश्च सामान्यादेर्लोके न पृथक् अनुगन्तव्यः; व्यक्तावभिमानदर्शनात्। यस्मात् प्रजापतिर्यज्ञः[१], अतः अनिरुक्ताभिर्व्याहृतिभिः प्रणयनादनिरुक्तप्रजापत्यात्मकतया अनिरुक्तं यज्ञ मेव 'युनक्ति' प्रारभत इत्यर्थः ॥ १३ ॥

प्रशब्दोपात्तप्रकर्षसूचितप्राथम्यद्वारा प्रणयनं प्रागस्तावीत्— "यज्ञो वा इति। तच्च नयतिपदोपात्तप्रापणात्मकविस्तारद्वारत इति 'अथापः'-इत्यस्यावयवार्थपर्यालोचनयापि द्विधा[२] स्तौति— "यद्वेवेति। अनियोग एवकारः। न नियोगेन प्रागुक्तरीत्या स्तुतिः, किन्त्वेव मप्यस्तीत्यर्थः। आप्नुवन्ति[३] सकलं जगदित्यापः। तादृशा मपां प्रणयनात् प्रथम मेव सर्व माप्तं स्यादित्यपि प्रशस्तं[४] तत्प्रणयन मित्यर्थः ॥ १४ ॥

अथवास्य कर्मणो यदेवाङ्गं प्रापयितव्य मध्वर्य्वादयः प्रमादान्न प्रापयन्ति, तद्वैकल्यम् उदकाचमनप्रोक्षणादिना[५] परिहरन्त आपयन्ति; अतोऽप्याप इति तत्प्रणयनं प्रशस्तम् ॥ १५ ॥

न केवल मवयवार्थपर्यालोचनया, उदकप्रभावपर्यालोचनयापि प्राशस्त्यं वक्तु मारभते— "देवान् हेति। असुराश्च रक्षांसि च 'असुररक्षसानि'। "अनसन्तान्नपुंसकाच्छन्दसि"-इत्यसन्तत्वात् समा-

---

१— 'सामान्यादेर्लोकेऽप्यनुगन्तव्यः। व्यक्ताद्यभिमानदर्शनात् प्रजापतिर्यज्ञः'-इति ज, झ, ञ, ट।

२— नास्त्येतत्पदम् ड-पुस्तके। ठ-पुस्तके तु 'द्वेधा'-इति।

३— 'व्याप्नुवन्ति'-इति ड, ढ। ४— 'प्रशस्तम्'-इति ज, झ, ञ, ठ।

५— 'उदकप्रोक्षणाचमनादिना'-इति ठ।

मान्तः[1]। 'न यच्छध्व इति' यष्टुं न लभध्वं यूय मिति वदन्तो 'ररक्षुः' प्रतिबन्धयेयुरित्यर्थः[2] ॥ १६ ॥

ततो देवा इति। इत्थं प्रतिबद्धा देवाः 'एतम्' अब्लक्षणं वज्रं ददृशुः। अपां वज्रत्वं "ता एता आपो वज्रीभूत्वा"-इत्यादि श्रुत्यन्तरे प्रसिद्धम्[3]; तदाह— "वज्रो वा इति।

न केवलं प्रसिद्धिबलादवज्रत्वम् उपपत्तिबलाच्चेत्याह— "वज्रो हीति। उपपत्तेः प्रसिद्धिं वै-शब्द आह। तां प्रसिद्धा मुपपत्तिं दर्शयति— "तस्मादिति। यस्मादापो वज्रः, तस्माद् एता आपः 'येन' पथा गच्छन्ति, तं पन्थानं 'निम्नं' गर्त्तं कुर्वन्ति। गत्वा वा 'यत्र' तृणगुल्मादौ उपतिष्ठन्ते, तत् 'निर्दहन्ति' निःसारं कुर्वन्ति। (ते[4]) देवाः 'एतम्' उदकलक्षणं वज्रम् 'उदयच्छन्' उक्तप्रकारप्रणयनात्मक मुद्यमनं तस्य कृतवन्त इत्यर्थः। 'तस्य' वज्रस्य सम्बन्धिनि 'अभये' तेन वज्रेण परिहृतभये[5], 'अनाष्ट्रे' नाशयन्तीति नाष्ट्रा अ्सुररक्षसानि, तद्रहिते, 'निवाते' तत्संस्पृष्टेन[6] वातेनापि रहिते, स्थाने। यथा देवाः कृतवन्तः, तथैवैषा मध्वर्युः ॥ १७ ॥

प्रणयनप्रकार माह— "ता उत्सिच्येति। चमसादिपात्रस्योपरि

---

१— पा० सू० ५. ४. १०३। २— 'प्रतिबबन्धुरित्यर्थः'—इति ठ।

३— तै० ब्रा० १. ७. १. ६. ७; ऋ० सं० ८. १४. १३ (अपाम्फेनेन)

४— नास्त्येतत् पदं ठ-पुस्तकादन्यत्र।

५— 'सम्बन्धिनाभयेन वज्रेण'—इति ज, झ, ञ, ट। 'सम्बन्धिनि "अभये" वज्रेण परिहृतभये'—इति ड।

६— 'तत्संस्पृष्टेन'—इति ठ।

सिक्त्वा पूरयित्वा न पुनः (तेन पात्रेण[1]) कुतश्चिज्जलाशयादुद्धृत्य गार्हपत्यस्योत्तरभागे स्थापयेत्। आपस्तम्बस्तु स्थापितपात्रस्य समन्त्रकं पूरण माह[2]; इह तु ब्राह्मणे पूरितस्य स्थापनम्। अतस्तथैवोक्तं कात्यायनेन— "गार्हपत्य मुत्तरेणोदपात्रं निधाय"-इति[3]।

अवश्यं प्राङ् नेतव्याना मपां[4] किं गार्हपत्यस्योत्तरदेशे स्थापनेनेत्याशङ्क्य तत्प्रयोजनकथनेन स्तौति— "योषा वा आप इति। अप्-शब्दस्य स्त्रीलिङ्गत्वात्। वृषेति, अग्निशब्दस्य पुंलिङ्गत्वात्। "गृहपतिना संयुक्ते ञ्यः[5]"-इत्यग्निविशेषो गार्हपत्यः। तदावास इह लक्षणया गार्हपत्य उच्यते। अत एव तस्य गृहत्व मुक्तम्— "गृहा वै गार्हपत्यः"-इति[6]।

उदपात्रस्थापनं प्रयोजनान्तरेण स्तौति— "वज्रं वा इति। 'अप्रतिष्ठितः' असम्बद्धः। "नैन मिति। त मेन मशक्तम्, अनुद्यन्तारं 'संशृणाति' हिनस्ति। "शृ हिंसायाम्[7]", "प्वादीनां ह्रस्वः[8]"। अतो हिंसापरिहाराय स्वयं सन्नद्ध एवोद्यच्छेत॥ १८॥

उद्यन्तुः प्रतिष्ठा मुक्त्वा उद्यन्तव्यस्यापि प्रतिष्ठा माह— "स यदिति। "गृहा वै प्रतिष्ठेति। कोशे स्थापितस्यासेरिव[9] वातादिस्पर्शविरहात्तैक्ष्ण्यस्याविनाशो वज्रस्य प्रतिष्ठा।

---

१— ठ-पुस्तकादन्यत्र नैते पदे स्तः। २— श्रौ० सू० ४. १. ४।

३— श्रौ० सू० २. ३. १। एता एवापः प्रणीता उच्यन्ते।

४— 'निधाय"-इति 'अवश्यं प्राङ् नेतव्याः। अपां'-इति ज, झ, ञ, ट।

५— पा० सू० ४. ४. ९०। ६— ९पृ० ८ पं० द्रष्टव्यम्।

७— क्र्या० प०। ८— पा० सू० ७. ३. ८०।

९— 'स्थापितस्यासेरिव'-इति ज, झ, ञ, ट।

तीक्ष्णीभूतः स वज्रः स्वप्रयोक्तुरभिमतफलनिष्पादनात् तद्वि-रहदुःखात्मिकां हिंसा मस्य न करोतीत्याह— "तथो हेति। गार्हपत्योपश्लिष्टे तदुत्तरभागे। 'वटे गावः सुशेरते'-इति-वदौ-पश्लेषिकाधिकरणे सप्तमी[१] ॥१९॥

सादिताना मपां प्रणयन माह— "ता इति। आहवनीयस्य सन्निहितोत्तरभागे 'प्रणयति' नीत्वा सादयति[२]। "एनबन्यतरस्या मदूरे पञ्चम्याः"-इत्यनेन एनप्[३]। "एनपा द्वितीया"-इति[४] षष्ठ्यर्थे द्वितीया। अपा मग्नेश्च मिथुनता मुपपादयति— "एव मिव हि मिथुनं क्लृप्त मिति ॥२०॥

ता नान्तरेणेति। अन्तरेणेतिबलादग्नि मिति लभ्यते। तासा मपा मग्नेश्च मध्ये[५] न सञ्चरेयुरित्यर्थः। तत्र कारण माह— "नेदिति। नेदिति परिभये। "अथापि नेत्येष इदित्येतेन सम्प्रयुज्यते परि-भये"-इति हि निरुक्तम्[६]। सञ्चारे हि वर्तमानं मिथुन मन्तरेण परस्परं सङ्गतयोः स्त्रीपुंसयोर्मध्ये सञ्चारान्मिथुनविच्छेदलक्षणा भीतिः 'सञ्चरान्' सञ्चरेयुरिति। (हेतुहेतुमद्भावरूपे[७]) लिङर्थे[८]

---

१— पा० सू० १. ४. ४५। 'औपश्लेषिको वैषयिको ऽभिव्यापकस्त्वेत्या-धारस्त्रिधा'-इति सि० कौ०।

२— "गार्हपत्यसमीपादाहवनीयसमीपं नीत्वा" का० २. ३. ३ वृ०।

३— पा० सू० ५. ३. ३५। ४— पा० सू० २. ३. ३१।

५— 'प्रणीताहवनीययोरन्तरालेन'-इति का०श्रौ०सू० २. ३. ४ वृ०।

६— नैघ० १. ३. ६। "सर्वतो भयं परिभयम्"-इति तद्वृत्तौ।

७— नास्त्येतत् पदं ठ-पुस्तके। ८— 'लिङर्थे'-इति ठ, ढ।

लेट्[१] झेरन्तादेशः[२], "इतश्च लोपः[३]"-इतीकारलोपे, संयोगान्तलोपः[४], तस्यासिद्धत्वान्नलोपाभावः[५]।

साक्षादुत्तरभागे आहवनीयप्रणयनं विवक्षित मिति दर्शयितुं ततः प्राक्प्रत्यगासादनं[६] निषेधति— "ता नातिहृत्येति। 'अतिहृत्य' उत्तरभाग मतीत्य प्राग्भागे। 'अनाप्ताः' उत्तरभाग मप्राप्ताः, प्रत्यगपि[७] नासादयेत्।

तदतिहरणपक्ष मनुवदति— "स यदिति।

तत्र दोषं वक्तु मुपोद्घात माह— "अस्ति वा इति। "व्यन् सपत्ने"-इति[८] स्मृतेः 'भ्रातृव्यः' शत्रुः, तस्य भावो 'भ्रातृव्यम्' (शात्रवम्[९]) युवादित्वाद्भावे अण्[१०], विशिष्टं भ्रातृव्यम्। अग्नेरपां च परस्परविनाशकत्वात् महदस्ति वैर मित्यर्थः। अस्तु, किं तत इत्याह— "स यथेवेति। 'तत्' अद्भिः सह महद्वैर मग्नेर्यथा 'भवति' स्वकार्यनिर्वापणरूप मुपद्रवं कर्त्तुं प्रभवति, तथा 'सः' अतिहरन् अध्वर्युः कुर्यादित्यर्थः।

---

१— पा० सू० ३. ३. १५६, पा० सू० ३. ४. ७।

२— पा० सू० ७. १. ३। 'सञ्चारान्मिथुनलक्षणा भीतिः। सञ्चाराश्च सञ्चरेयुरिति हेतुः। हेतुसद्भावरूपे लिङर्थे लेट्। आकारोऽन्तादेशः'-इति ञ, झ, ञ, ट, ड।

३— पा० सू० ३. ४. ९७। ४— पा० सू० ८. २. २३।

५— पा० सू० ८. २. १। ६— 'प्राक्प्रत्यग्भागासादनं'-इति ढ।

७— 'प्रत्यगेव'-इति ढ। ८— पा० सू० ४. १. १४५।

९— नास्त्येतत्पदं ड-ढ-पुस्तकयोः।

१०— 'हायनान्तयुवादिभ्योऽण्'-इति पा० सू० ५. १. १३०।

तथा अकरणे का हानिः? तत्राह— "यत्रेति। 'यत्र' कर्मणि 'अस्य' प्रणयनपात्रस्य सम्बन्धिनीरप उपस्पृशन्ति ऋत्विग्यजमानाः। तत्रोपस्पर्शेन मन्यौ 'भ्रातृव्यं' शत्रु मुदकलक्षणं 'वर्द्धयेत्' उत्तेजयेत्। अतिहरणस्य वैरकरणसम्बन्धार्थः प्रथमोऽनुवादः, चरमस्तु भ्रातृव्य-वर्द्धनसमर्थनार्थ इत्यपौनरुक्त्यम्।

अतिहरणपक्षे दोष उक्तः, अनाप्तिपक्षे दोष माह— "यद्यु इति। स्वसमये अप्राप्तत्वात्[1] तासा मपां कामप्रापकत्वं दूरापास्त मित्यर्थः।

इत्थं (तम्[2]) उपोद्घात मुक्त्वा औपोद्घातिक माह— "तस्मादिति। 'सम्प्रत्येवं' सम्यगुत्तरभाग एव, न पुरतो न पश्चात्। अत उक्तं कात्यायनेन "उत्तरेणाहवनीयꣳ सम्प्रति निदधाति"-इति[3] ॥ २१ ॥

प्रणीताप्रणयनानन्तरं परिस्तरणं पात्रासादनं चाह— "अथ तृणैरित्यादि। 'द्वन्द्वं' द्वे द्वे। "द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमण-यज्ञपात्रप्रयोगाभिव्यक्तिषु"-इति[4] निपातितम्। पात्रपदं यज्ञ-निर्वर्त्तकानां स्फ्यादीनाम् अप्युपलक्षकम्[5]।

अर्थतः प्राप्तां सङ्ख्या मनूद्य प्रशंसति— "तद्दशेति। तस्मिन् प्रयोगे एवं परिगणने कृते दश सम्पद्यन्ते। विराजश्छन्दसो[6] ऽक्षरेषु दशत्व मस्ति। प्रथमस्य यज्ञो ज्योतिष्टोमः। "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः"-इतिश्रुतेः[7]। तत्र च नवत्युत्तरशत-

१— 'स्वसमयप्राप्तत्वात्'-इति ज, झ, ञ, ट।

२— नास्त्येतत् पदं ड-ढ-पुस्तकयोः।

३— श्रौ०सू० २. ३. ३।   ४— पा० सू० ८. १. १५।

५— 'अप्युपलक्षणम्'-इति ठ।   ६— 'विराट्छन्दसो'-इति ड।

७— ता०ब्रा०१६. १। ऐ०ब्रा० ३. ४. ५। तै०सं० ७. ४. १०, ११।

सङ्ख्याकाः स्तोत्रियाः। तास्वेकोनविंशतिसङ्ख्यया विभज्यमानासु दश लभ्यन्त इत्यस्ति तत्रापि दश सङ्ख्या। अतो दशसङ्ख्यायोगाद् विराड्यज्ञयोरेकत्वादिह दशसङ्ख्यासम्पत्त्या विराडात्मको यज्ञ एव साकल्येन सम्पादितो भवति।

एवं दशत्वं स्तुत्वा द्विशः प्रयोग मनूद्य स्तौति— "अथ यदिति। 'संरभेते' "रभ राभस्ये", राभस्यं कार्योपक्रमः; कि मपि कार्यं कर्त्तुं मुपक्रमेते ॥ २२ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथभाष्ये[१] प्रथमाध्याये
प्रथमं ब्राह्मणम्[२] ॥

---

१— 'माध्यन्दिनशतपथब्राह्मणे'–इति अ, झ, ञ, ट, ड।

२— व्रतोपायनादनन्तर मपां प्रणयनम्। तत्पद्धतिस्त्वेषा।– अध्वर्युर्वारणं चमसं सव्यहस्ते कृत्वा दक्षिणहस्तस्थेनोदपात्रेण स्वयं तस्मिन्नुदक मासिच्य दक्षिणहस्तेन चमसं गार्हपत्यस्योत्तरतो निधाय 'ब्रह्मन्नपः प्रणेष्यामि?'– इति ब्रह्माणं पृच्छति। 'वाचं यच्छ'–इति यजमानं प्रेष्यति। ब्रह्मा 'प्रणय यज्ञमित्यादि (२. २. ८.) उपांशु पठित्वा 'ओं प्रणय'–इत्युच्चै रनुज्ञां करोति, यथाध्वर्युः शृणोति। ततोऽध्वर्युश्चमसं गृहीत्वा आहवनीया- दुत्तरस्यां दिशि वहिर्वेदि दर्भेषु प्रणीताचमसं निदधाति। एतदेव प्रणीता- प्रणयनं चोच्यते। प्रणीताप्रणयनादनन्तरं प्रागग्रैरुदगग्रैश्च दर्भैराहवनीयस्य परिस्तरणं भवति; गार्हपत्यस्य तु प्रथमं पुरस्तादुदगग्रैः, ततो दक्षिणतः प्रागग्रैः, पश्चादुदगग्रैः, उत्तरतः प्रागग्रैर्दर्भैः परिस्तरणम्। ततः पात्रा- सादनम्। तच्च शूर्पादिपात्राणां समीपे स्थापनम्। तत्पद्धतिस्त्वेवम्।– अध्वर्युर्यजमानो वा द्वे द्वे पात्राणि गृहीत्वा विनियोगक्रमेण आहवनीये गार्हपत्ये वा यत्र हविः श्रपणं करिष्यन् भवति, तस्योत्तरतः पश्चाद्वा निद- धाति। एतान्येव चत्वारि कर्माणीह प्रथमब्राह्मणे आम्नातानि।

अथ स्रुच्यं चाग्निहोत्रहवणीं चादत्ते। कर्म्मणे वां व्वेषाय वा मिति यज्ञो वै कर्म्म यज्ञाय हि तस्मा-दाह कर्म्मणे वा मिति व्वेषाय वा मिति व्वेवेष्टीव हि यज्ञम्* ॥ १ ॥

अथ व्वाचं यच्छति। वाग्वै यज्ञो ऽविक्षुब्धो यज्ञं तनवा ऽइत्यथ प्रतपति प्रत्युष्टꣳ रक्षः प्रत्युष्टा ऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ता ऽअरातय इति वा ॥ २ ॥

देवा ह वै यज्ञं तन्वानाः। ते ऽसुररक्षसेभ्य आस-ङ्गाद् बिभयाञ्चक्रुस्तद्यज्ञमुखादेवैतन्नाष्ट्रा रक्षाꣳस्यतो ऽपहन्ति† ॥ ३ ॥

अथ प्रैति। उर्व्वन्तरिक्ष मन्वेमीत्यन्तरिक्षं वा ऽअनु रक्षश्चरत्यमूल मुभयतः परिच्छिन्नं यथायं पुरुषो ऽमूल उभयतः परिच्छिन्नो ऽन्तरिक्ष मनुचरति तद् ब्रह्मणै-वैतदन्तरिक्ष मभय मनाष्ट्रं कुरुते ॥ ४ ॥

स वा ऽअनस एव गृह्णीयात्। अनो ह वा ऽअग्रे पश्चेव वा ऽइदं यच्छालꣳ स यदेवाग्रे तत्करवाणीति तस्मादनस एव गृह्णीयात् ॥ ५ ॥

भूमा वा ऽअनः। भूमा हि वा ऽअनस्तस्माद्यदा

* 'यज्ञम्'—इति ग, घ।

†. 'रक्षाꣳस्यपहन्ति'—इति क।

बहु भवत्यनोवाह्य मभूदित्याहुस्तद् भूमान मेवैतदु-पैति तस्मादनस एव गृह्णीयात् ॥ ६ ॥

यज्ञो वा ऽअनः। यज्ञो हि वा ऽअनस्तस्मादनस एव यजूꣳषि सन्ति न कोष्ठस्य न कुम्भ्यै भस्त्रायै ह स्मर्षयो गृह्णन्ति तदृषीन् प्रति भस्त्रायै यजूꣳष्यासुस्ता-न्येतर्हि प्राकृतानि यज्ञाद्यज्ञं निर्मिमा* ऽइति तस्मा-दनस एव गृह्णीयात् ॥ ७ ॥

उतो पात्र्यै गृह्णन्ति†। अनन्तराय मु तर्हि यजूꣳषि जपेत् स्फ्य मु तर्ह्यधस्तादुपोह्य‡ गृह्णीयाद्यतो युन-जाम ततो विमुञ्चामेति यतो ह्येव युञ्जन्ति ततो विमुञ्चति ॥ ८ ॥

तस्य वा ऽएतस्यानसः। अग्निरेव धूरग्निर्हि वै धूरथ य ऽएनद्वहन्त्यग्निदग्ध मिवैषां वहं भवत्यथ यज्जघनेन कस्तम्भीं प्रऽउगं वेदिरेवास्य सा नीड एव हवि-र्धानम् ॥ ९ ॥

स धुर मभिमृशति। धूरसि धूर्व धूर्वन्तं धूर्व तं यो ऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वाम इत्यग्निर्वा

---

* 'निर्ममा'—इति क, भाष्यसम्मतश्च। † 'गृह्णन्ति'—इति ख।
‡ 'तर्ह्यवस्तादुपोह्य'—इति ङ। 'तर्ह्यवस्तदुपोह्य'—इति च।

ऽएष धुर्य*स्त मेतदत्येष्यन् भवति हविर्ग्रहीष्यं†स्तस्मा ऽएवैतान् निह्नुते तथो हैत मेषो ऽतियन्त मग्निर्धुर्यो न हिनस्ति ॥ १० ॥

तद्ध स्मैतदारुणिराह । अर्द्धमासशो वा ऽअहꣳ सपत्नान् धूर्वामीत्येतद्ध स्म स तदभ्याह ॥ ११ ॥

अथ जघनेन कस्तम्भी मीषा मभिमृश्य जपति । देवाना मसि व्वह्नितमꣳ सस्नितमं प्रप्रितमं जुष्टतमं देवहूतमम् । अह्रुत मसि हविर्धानं दृꣳहस्व माह्वारित्युन एवैतदुपस्तौत्युपस्तुताद्रातमनसो‡ हविर्ग्रहानीति मा ते यज्ञपतिर्ह्वार्षीदिति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदह्वला माशास्ते ॥ १२ ॥

अथाक्रमते । व्विष्णुस्त्वा क्रमता मिति यज्ञो वै व्विष्णुः स देवेभ्य इमां व्विक्रान्तिं व्विचक्रमे यैषा मियं व्विक्रान्तिरिद मेव प्रथमेन पदेन पस्पाराथेद मन्तरिक्षं द्वितीयेन दिव मुत्तमेनैताम्वेवैष एतस्मै व्विष्णुर्यज्ञो व्विक्रान्तिं व्विक्रमते ॥ १३ ॥

अथ प्रेक्षते । उरु व्वातायेति प्राणो वै व्वातस्तद् ब्रह्मणैवैतत्प्राणाय व्वातायोरुगायं कुरुते ॥ १४ ॥

---

* 'धूर्य'–इति ख । † 'हविर्गृहीष्यं'–इति क ।

‡ 'ह्वातमनसो'–इति सायणसम्मतोऽपि न क्वापि मूलपुस्तके दृश्यते ।

अथापास्यति*। अपहतꣳ रक्ष इति यद्यत्र किञ्चिदापन्नं भवति यद्वा नाभ्येव मृश्येत् तन्नाष्ट्रा एवैतद्रक्षाꣳस्यतो ऽपहन्ति† ॥ १५ ॥

अथाभिपद्यते। यच्छन्तां पञ्चेति पञ्च वा इमा अङ्गुलयः पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतदत्र दधाति‡ ॥ १६ ॥

अथ गृह्णाति। देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं गृह्णामीति सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतद् गृह्णात्यश्विनोर्बाहुभ्यामित्यश्विनावध्वर्यू पूष्णो हस्ताभ्यामिति पूषा भागदुघो ऽशनं पाणिभ्यामुपनिधाता सत्यं देवा अनृतं मनुष्यास्तत्सत्येनैवैतद् गृह्णाति§ ॥ १७ ॥

अथ देवताया ऽआदिशति। सर्वा ह वै देवता अध्वर्युꣳ हविर्ग्रहीष्यन्तमुपतिष्ठन्ते मम नाम ग्र¶हीष्यति मम नाम ग्र¶हीष्यतीति ताभ्य एवैतत् सह‖ सतीभ्यो** ऽसमदं करोति ॥ १८ ॥

यद्देव देवताया ऽआदिशति। यावतीभ्यो ह वै देवताभ्यो हवीꣳषि गृह्यन्त ऽऋणमु हैव तास्तेन

---

* 'ति'—इति ख। † 'न्ति—'इति ख। ‡ 'ति'—इति ख।

§ 'ति'—इति क। ¶ 'ग्र'—इति ग।

‖ नास्त्येतत् पदं क-ख-पुस्तकयोः। ** एतदपि पदं ख-पुस्तके नास्ति।

मन्यन्ते यदस्मै तं कामꣳ समर्द्धयेयुर्यत्काम्या गृह्णाति तस्माद्वै देवताया ऽआदिशत्येव मेव यथापूर्वꣳ हवीꣳषि गृहीत्वा* ॥ १९ ॥

अथाभिमृशति । भूताय त्वा नारातय ऽइति तद्युत एव गृह्णाति तद्वैवैतत्पुनराप्याययति ॥ २० ॥

अथ प्राङ् प्रेक्षते । स्वरभिविख्येष मिति परिवृत मिव वा ऽएतदनो भवति तदस्यैतच्चक्षुः पाप्मगृहीत मिव भवति यज्ञो वै स्वर हर्देवाः सूर्य्यस्तत्स्वरेवैतदतो ऽभिविपश्यति ॥ २१ ॥

अथावरोहति । दृꣳहन्तां दुर्याः पृथिव्या मिति गृहा वै दुर्यास्ते हैत† ईश्वरो गृहा यजमानस्य यो ऽस्यैषो ऽध्वर्युर्यज्ञेन चरति तं प्रयन्त मनु प्रच्योतोस्तस्येश्वरः कुलं विक्षोब्धो‡स्तानेवैतदस्यां पृथिव्यां दृꣳहति तथा नानुप्रच्यवन्ते§ तथा न व्क्षिोभन्ते तस्मादाह दृꣳहन्तां दुर्याः पृथिव्या मित्यथ प्रैत्युर्व्वन्तरिक्ष मन्वेमीति सो ऽसावेव बन्धुः ॥ २२ ॥

स यस्य गार्हपत्ये हवीꣳषि श्रपयन्ति । गार्हपत्ये तस्य पात्राणि सꣳसादयन्ति जघनेनो तर्हि गार्हपत्यꣳ

---

* 'त्वा'—इति ख, च। † 'हैत'—इति च, भाष्यसम्मतश्च।

‡ 'विक्षुब्धो'—इति ख। § 'प्रच्यवते'—इति ख।

सादयेयुस्याहवनीये हवीꣳषि अपयन्त्याहवनीये तस्य पात्राणि सꣳसादयन्ति जघनेनो तर्ह्याहवनीयꣳ सादयेत् पृथिव्यास्त्वा नाभौ सादयामीति मध्यं वै नाभिर्म्मध्य मभयं तस्मादाह पृथिव्यास्त्वा नाभौ साद-यामी*त्यदित्या ऽउपस्थ ऽइत्युपस्थ ऽइवैनदभार्षुरिति वा ऽआहुर्यत्सुगुप्तं गोपायन्ति तस्मादाहादित्या ऽउपस्थ इत्यग्ने हव्यꣳ रक्षेति तदग्नये चैवैतद्धविः परि-ददाति गुप्त्या ऽअस्यै च पृथिव्यै तस्मादाहाग्ने हव्यꣳ रक्षेति ॥ २३ ॥ २ ॥

(प्रथमप्रपाठके प्रथमाध्याये वा द्वितीयं)

ब्राह्मणम् ॥ १ । २ ॥

पात्रासादनानन्तरं कर्त्तव्य माह—"अथ शूर्प मिति। एत-दादानं हविर्निर्वापार्थम्[१]। वामिति[२] मन्त्रगतद्विवचनलिङ्गात् उभे सह आदीयेते। अत एव सूत्रे—"शूर्पाग्निहोत्रहवण्यादाय"-इति[३]। इतरेतरयोग-द्वन्द्वः।

यज्ञो वा इत्यादि। यज्ञाय हि तदादानम्; अतः कर्म-शब्दः कर्ममात्रपरोऽपि तद्विशेषं यज्ञ मेव ब्रूते। इज्यते अनेनेति 'यज्ञः' हविः; तदिह निर्वापकाले व्रीहिरूपम्। तदग्निहोत्रहवण्या

* 'मौ'-इति ख। १— "अथ हविरावपति"-इतीहैव ४. ८।
२— वा० सं० १. ६. ५। ३— का० श्रौ० सू० २. ३. १०।

शूर्पे निर्वपम्[1] 'वेवेष्टीव' परिवेषणं करोतीव। यथान्नं दर्व्या भोजनपात्रे। अतो वेषाय वा मित्युक्तम्[2]। वेवेष्टीत्यत्र परि-रूपोपसर्गो लुप्तो निर्दिष्टः। "विष्लृ व्याप्तौ"[3]। "निजां त्रयाणां गुणः श्लौ[4]"—इत्यभ्यासस्य गुणः।

अथ शूर्प मित्यादि। अथ-शब्दादनुष्ठेयपदार्थपौर्वापर्यलक्षणं क्रम माह। अतस्तद्विशिष्टाः पदार्था विधीयन्ते। ननु चैष चेदनुष्ठेयलक्षणः क्रमः, स च सर्वेषु पदार्थेष्वेक एव, नैकैकपदार्थग इति, तद्विशेषणतया तद्विधिभिः कथं विधातुं शक्यते ? तर्हि सङ्घातविशेषणतया तद्विधानेनैव विधीयता मिति चेत्, न; सङ्घातस्याविधेयत्वात्; तस्य चैकत्वेन नियमेनानेकपदार्थाश्रितस्य क्रमस्यासम्भवात्। नैष दोषः। यथा संयोगादय एकैकवस्तुन्यपर्य-वसिता[5] अपि वस्त्वन्तर मपेक्ष्यैकत्रापि पर्यवस्यन्तः[6] तद्विशेषणतया तद्विधिभिर्विधीयन्ते, तद्वत् क्रमोऽपि किं न विधीयते[7]। न च शब्देनानभिधानादविधान मिति[8] मन्तव्यम्; प्राकृतोपकार[9]वद-नभिहितस्यापि चैतत्यलक्षणक्रमस्यार्थाद्[10] बुद्धावुपस्थितस्य विधि-

---

१— 'निर्वपति'—इति ङ। २— वा० सं० १. ६. ५।

३— जु० उ०। ४— पा० सू० ७. ४. ७५।

५— 'एकैकवस्तुपर्यवसिता'—इति ङ। 'संयोगो द्विष्ठः'—इत्यादि ल०म०।

६— 'मपेक्ष्यैकत्रापर्यवस्यन्तः'—इति ङ। ७— 'विधीयेत'—इति ङ।

८— 'शब्देनानभिधान मिति'—इति ङ।

९— 'प्रकृतौ एकार०'—इति ञ, झ; 'प्रकृतौ प्रकार०'—इति ङ।

१०— 'चैतदुपलक्षणक्रमस्यार्थाद्'—इति ङ।

सम्भवात्। न चावश्यं वैतत्यलक्षण एव क्रमः; अस्ति ह्यसावानुपूर्व्यलक्षणोऽपि। तथाच, यथा "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीति[1] क्त्वा-प्रत्ययेनाभिहितः पौर्वापर्य्यलक्षणः क्रम एवार्थविशेषणतया विधीयते, एव मत्र अथ-शब्देरभिहितो विधीयत इति कि मुपपन्नम्? तदुक्तं जैमिनिना—"श्रुतिलक्षण मानुपूर्व्यं तत्प्रधानत्वात्"-इति[2] ॥ १ ॥

वाग्वै यज्ञ इति। यच्छति-पदसन्निधानान्नियम्यमानैवेह वाग् विवक्षिता; तस्याश्च यज्ञसाधनत्वात्। यज्ञसाधनता मुपपादयति—"अविक्षुब्ध इति। वाङ्नियमे हि चित्तविक्षोभ[3]हेतोर्वाग्व्यवहारस्याभावात् तदैकाग्र्ये सत्यविकलो यज्ञो यतः सम्पद्यते। क्षुभेरदात्तोपदेशत्वे ऽप्यागमानुशासनस्यानित्यत्वादिड्भावः[4] (क्षुब्धस्वान्तेति[5] ज्ञापकात्)[6]। क्षुब्धेति[7] निपातितम्।

(शूर्पञ्चाग्निहोत्रहवणीञ्च प्रतपति[8]—) "अथ प्रतपतीति। शूर्प मग्निहोत्रहवणीं चेत्यनुषङ्गात् तदुभय मित्यर्थः। "निष्टप्ता अरातय इति वा"-इति। श्रौह्यनुष्ठानपक्षे यववाक्यस्य, (१) प्राप्तप्रामाण्यत्यागः, (२) अप्राप्ताप्रामाण्यस्वीकारः, (३) पुनर्यवानुष्ठाने स्वीकृताप्रामाण्यस्य त्यागः, (४) त्यक्तप्रामाण्यस्वीकारश्चेति चत्वारो

१— इहैवोपरिष्टात् दीक्षाप्रकरणं द्रष्टव्यम् (१२ का० १ प्र०)।

२— मी० सू० ५. १. १।

३— 'चित्तविक्षिप्त'–इति अ, भ, ञ, ट, ठ; चित्तविक्षेप'–इति ड।

४— "आगमशास्त्र मनित्यम्"–इति प० शे० ९५ (८.४.१६. म०भा०)।

५— पा० सू० ७. २. १८।

६— नास्त्येष पाठः ठ-पुस्तके।

७— 'क्षुब्ध इति'–इति ठ।

८— नास्त्येतद्वाक्यं ठ-पुस्तकादन्यत्र।

दोषाः। इत्थं व्रीहिवाक्येऽपि चत्वार इत्यष्टौ दोषा[१] यद्यपि, तथापि गत्यभावाद्विकल्प इत्युक्तं भट्टाचार्यैः[२]—

"एव मेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः।

विकल्प आश्रितस्तत्र गतिरन्या न विद्यते"–इति[३]।

इह पुनर्वाशब्देनाधस्तादप्यनुकृष्टेन मन्त्रद्वयपाक्षिकत्वस्य[४] श्रुत्यैवाभिधानान्नैकोऽपि दोषः। एतदर्थ मेव च "एकार्थास्तु विकल्पेरन्"–इति[५] व्रीहियववदेव न्यायप्राप्तस्यापि विकल्पस्य, वेति स्वशब्देनोपादानम् ॥ २ ॥

मन्त्रकरणकतायै साध्यस्य निरासस्योपयोगसिद्धये निरसनीयानां प्रसक्ति माह— "देवा ह वा इति। 'असुररक्षसेभ्यः'—इति षष्ठ्यर्थे चतुर्थी[६]। तेषाम् 'आसङ्गात्' संसर्गाद्भीताः। बिभेतेर्लिटि

---

१— 'इत्यसौ दोषः'—इति ज, झ, ञ, ट, ठ,।

२— मीमांसायां भट्टमतपोषकाचार्यैरित्यर्थः। मी०भ० १२ अ० ३ पा०।

३— विकल्पो द्विविधः— व्यवस्थित ऐच्छिकश्चेति। तत्रेच्छाविकल्पे भट्टमते अष्टौ दोषा भवन्ति। तद्यथा— "प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पना।· प्रत्युज्जीवनहानिभ्यां प्रत्येक मष्टदोषता"—इति। "व्रीहिभिर्यजेतेति वाक्यात् व्रीहयो नियम्यन्ते; एवं यवैर्यजेतेतिवाक्यात् यवा अपि नियम्यन्ते; तयो रेकार्थत्वाद् विकल्पः"—इत्यादि मी०प०।

४— "प्रतपनं प्रत्युष्टं निष्टप्त मिति वा"—इति का०श्रौ०सू० २. ३. ११। मन्त्रौ तु तौ वा० सं० १. ७. १, २।

५— मी० सू० १२. ३. १०। अस्मन्मते तु "मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यात्"—इति (२६) सूत्रस्यैवायं विषयः स्यात्।

६— पा० सू० २. ३. ६२. वा० १।

"भीह्रीभृहुवाम्[1]"—इत्याम् प्रत्ययः, श्लुभावश्च। नाष्ट्रयन्तीति 'नाष्ट्राः' असुर्यः प्रजाः, ताश्च रक्षांसि च 'तत्' तेन तपनेन[2]। अतो 'यज्ञमुखात्' यज्ञप्रारम्भाद् अपघ्नन्ति। 'एतत्'-इति क्रियाविशेषणम् ॥ ३ ॥

अथ प्रैतीति। शूर्पप्रतपनानन्तरम् उर्विति[3] मन्त्रेण हविर्निर्वापार्थं शकटसमीपं 'प्रैति' प्रगच्छेत्। मन्त्रप्रयोजन माह—"अन्तरिक्षं वा इति। यथा वृक्षो मूलैः पृथिवी मनुप्रविष्टस्तिष्ठत्येव, न गच्छति; यथा व्याघ्रादिरभितः पाशाभ्यां बध्वा ध्रियमाणः[4]; नैवं पुरुषो मूलवान्; नाप्युभयतः केनचित् संसर्गिणा प्रतिबद्धः, किन्तु 'परिच्छिन्नः' प्रतिबन्धकासंसृष्टः सन् अन्तरिक्षे विश्रब्धं[5] चरति। तथैव निर्वप्यमाणहविरादानार्थं रक्षोऽप्युक्तविशेषणविशिष्टं सत्त्वं[6] निर्वप्यन्तं पुरुष मनुगच्छेत्। अतस्तदेतत्पुरुषेण गम्यमान मन्तरिक्षप्रदेशं[7] 'ब्रह्मणा' उर्वित्यनेनैव मन्त्रेण[8] 'अनाष्ट्रं' हिंसाकररहितम्[9], अत एवाभयं कुरुते। 'उरु' विस्तीर्णं प्रतिबन्धकरक्षोलक्षणमूर्त्तद्रव्यविरहादिति हि मन्त्रार्थः ॥ ४ ॥

अनस एव (न शालायाः[10]) सकाशाद्ग्रहणे, कारण माह—"अनो ह वा इति। अन एव हि प्रथमं धान्यस्याधिकरणम्।

---

१— पा० सू० ३. १. ३९। २— 'यज्ञेन'-इति ड।
३— वा० सं० १. ७. ३। ४— 'ध्रियमाणः'-इति ज, झ, ञ, ट, ढ।
५— विस्रम्भं'-इति ठ, ड। ६— 'सत् तं'-इति ठ, ड।
७— 'मन्तरिक्षं'-इति ढ। ८— वा० सू० १. ७. ३।
९— 'हिंसकररहितम्'-इति ठ। १०—नास्त्येष पाठो ढ-पुस्तकादन्यत्र।

अनसः सकाशान्नीयमानं धान्यं 'पश्चेव' पश्चादेव। किं तत् ? यत् 'शालं' एतत्[1] शालागतं भवति। "पश्चपश्चा च छन्दसि"-इति[2] निपातितम्। शालाशब्दाच्छान्दसत्वेन छस्य विकल्पितत्वादण्। यत् 'अग्रे' गृहप्रवेशात् प्राक्, अनसि स्थितम्। अत एव गृहिणा माशया[3] अनुपहतं तदेव यज्ञसाधनं करवाणीति योग्यत्वे[4] हेतुः। तस्मादनस एव सकाशात् सोऽध्वर्युर्गृह्णीयान्न शालातः ॥ ५ ॥

अथानसोऽप्यग्रे खलादानीयमानं मूतस्थ मेव किं न निरूप्यते? इत्यत आह— "भूमा वा इति। मूतस्थं ह्येवाल्पम्[5], ततो निरूप्यमाणं हविः हिंसितभिक्षावद्देवा न गृह्णीयुः। अपि स्मर्यते हि—

"आत्मानं पीड़यित्वा तु भिक्षां यः सम्प्रयच्छति।

सा भिक्षा हिंसिता ज्ञेया न सा ग्राह्या कदाचन"-इति ॥

बहोर्भावः 'भूमा'[6]। भवितरि भावोपचारः अतिशयार्थः; मूर्त्तिभूतं ब्रह्मण्य मेवायं पुनातीतिवद्। अतो बहुतरं भूमा अन्न इत्यर्थः। तस्यार्थे लोकप्रसिद्धि माह— "भूमा हीति। प्रसिद्धिं लोकव्यवहारेण साधयति— 'अनोवाह्यम्' अनसा वोढु मर्हं तदि-त्यादि। तदेतदनस्स्थं हविरुपयच्छन् भूयिष्ठ मेवोपैति। अतो हिंसित-भिक्षा निराकृता ॥ ६ ॥

---

१— 'एतत (B. सतते A. C. !!)'-इति ढ।

२— पा० सू० ५. ३. ३३।  ३— 'माशय'-इति ढ।

४— 'योऽय मनसो ग्रहणे'-इति ड।

५— मूतम् = बद्धम्, मूतस्थम् = बद्धावस्थम्। अम० को० २. १. ६५।

६— पा० सू० ६. ४. १५८।

अनस एव ग्रहणे हेत्वन्तर माह— "यज्ञो वा इति । यज्ञसाधनत्वादनसि साधनस्तुत्यै यज्ञत्वोपचारः । इज्यते अनेनेति करणे एव वा नङ् प्रत्ययः[१] । वै-शब्दस्तस्य विधिश्रुतिसिद्धं यज्ञसाधनत्वं स्तोतुं स्मारयति ।

न केवलं श्रुतिसिद्धं तस्य तत्साधनत्वम्, अपि तु प्रत्यक्षादिप्रमाणैरपि तस्य साधनत्वं सिद्ध मित्याह— "यज्ञो हीति ।

अनसोऽसाधारण्ये हेत्वन्तर माह— "तस्मादिति । यस्मादनस एव ग्रहणम्, तस्माद्ग्रहणमन्त्राः "धूरसि ध्रुव मसि हविर्द्धान मित्यादयः[२] अनोऽवयवलिङ्गा दृश्यन्ते; न पुनः कोष्ठगतस्य कुम्भीगतस्य वा धान्यस्य । कुम्भी-शब्दस्तन्निष्ठं धान्यं लक्षयति, "मञ्चाः क्रोशन्तीतिवत्[३] । लुप्तनिर्दिष्टा षष्ठी ।

ऋषिमत माह—"भस्त्राया इति । षष्ठ्यर्थे चतुर्थी[४] ।

तस्मिन् पक्षे भस्त्रायाः के मन्त्रा इत्याह— "तद्दूषीनिति । उक्तार्थे । तदा तु तान्येव यजूंषि भस्त्रायाः[५] प्रतिपादकानि स्युरित्यर्थः । अनःपक्षे हे अनः! यत् त्वं 'धूरसि' त्व मुद्धूत मतस्त्वं हविर्द्धान मसीति । भस्त्रापक्षे[६] तु हे भस्त्रे! इत्येव विशेषः[७] ।

---

१— पा० सू० ३. ३. ६० । २— वा० सं० १. ८. १, २; ६. १ ।

३— "तात्स्थ्यात् तथैव ताद्धर्म्यात् तत्सामीप्यात् तथैव च । तत्साहचर्यात् तादर्थ्याज् ज्ञेया वै लक्षणा बुधैः"—इत्यादि ल० म० ।

४— पा०सू० २. ३. ६२. वा० १ । ५— 'यज्ञभस्त्रायाः'—इति ज, ट ।

६ — भस्त्रा चर्मनिर्मितं पात्रम्, तदेवेह पात्रीत्युच्यते ।

७— एतच्च पक्षद्वयं का० श्रौ० सू० २. ३. ३८ द्रष्टव्यम् ।

मन्त्रदारिद्र्य इव कस्मात्तान्येव ! अन्यानि चेत्, भस्त्रायाः के मन्त्रा इत्यत आह[१]—"तान्येतहीँति । तैरेव यजुर्भिर्ग्रहणे[२] यानि यजूंषि प्रकृतावनस्यासन्, तान्येवैवं सति विकृतौ भस्त्राया मपि[३] स्युः ।

तथात्वस्यापि किं फल मिति चेत् तत्राह— "यज्ञादिति । यज्ञसाधन मन आश्रित्य सकृत्प्रयुज्य तत इद मुत्क्रैव[४] यज्ञं भस्त्रादिकं 'निर्ममे' अनुतिष्ठानि इत्येव मनुष्ठातुराशय इत्यर्थः ।

ननु प्रकृतावेव पचान्तरं भस्त्रा यथा यवः[५], तत् किं मुच्यते प्राकृतानीति । सत्यम् ! प्राकृत मुपदिश्यमानं यथा प्रथमं वैकृतन्वतिदेशाच्चरमं प्रतीयते, एवं स्वशब्देनाभिधानात्प्रथमप्रतिपत्तेरेव प्राकृत मुच्यते ; तत्सचितापूर्वसाधनत्वात्तु पश्चात्प्रतीतेर्भस्त्राविकृतिवद्विकृतिः ; अतो भस्त्राया मपि यववदुपदेशादेव धर्मसम्बन्धो नातिदेशात् । व्रीहीनवहन्तीति अपूर्वं व्रीहयः प्रकृतिद्रव्य मवहन्तीति यथा, तथानेन पदेनापि भस्त्राविपरिग्रह इति ॥ ७ ॥

पात्रीतो ग्रहणे धर्मविशेष माह— "उतो पात्र्ये इति । 'उतो' अपि तु यदि पात्र्या[६] गृह्णीयात्[७], तदा धूरीषाद्यभावेन तदुप-

---

१— 'अन्यानि कानि चित् भस्त्रायाः किं न विधीयन्त इत्यत आह—' —इति ठ ।　　२— 'एतर्ह्यपि तैरेव यजुर्भिर्ग्रहणम्'—इति ठ ।

३— 'विहितभस्त्राया'—इति ठ, 'तान्येव भस्त्राया मपि'— इति ढ ।

४— 'सकृत्सकृत्प्रयुज्यत इद मुत्क्रैव'—इति ज, 'सकृत्प्रयुज्यत इदमुत्क्रैव'— इति झ, 'सकृत्प्रयुज्य तदनुत्क्रैव'—इति ढ ।

५— 'भस्त्रात्तु यथा यवः'—इति ज, झ, ञ, ट ; 'भस्त्रा न तु विकृतौ यथा यवाः'—इति ठ ।　　६— 'पात्र्यां'—इति ज, झ ।

७— "(पात्र्ये) पञ्चम्यर्थे चतुर्थी । पात्र्याः"—इति का०सू०वृ० (२.३.२८.) ।

स्थानविरहादननुष्ठानकृतं[1] व्यवधान मन्तराय मन्तरेण[2] तत्प्रकाशक-यजूंषि "धूरसि"-"देवानामसि"-इत्यादीनि[3] जपेत् ।

तत्रैव धर्मान्तर माह— "स्फ्य मु तर्हीति । तस्मिन् पात्रीपक्षे तस्या अधस्तात् स्फ्य मुपनिधाय[4] गृह्णीयात् । यदाह कात्यायनः— "पात्र्यां वा स्फ्योपहितायां धुरीषारोहणानि पात्रीबिले जपतीति[5]। अनसो ग्रहणे[6] स्फ्योपहितपात्रीतो ग्रहणे ऽतिशयितं प्रयोजन माह— "यतो युनजामेति । योऽयं[7] स्फ्य माश्रित्य 'युनजाम' यज्ञेन योगं प्राप्तम्, ततस्तस्मिन्नेव स्फ्ये 'विमुञ्चाम'-इति वियोग मपि करवाम। योगवियोगसामानाधिकरण्यसिद्धिः । स्फ्योपहितपात्रीतो ग्रहणपक्षे अनःपश्चादतिशय इत्यर्थः ।

अथ मन्त्राभिप्रायः।— अनसो निर्वापपक्षे हि जुह्वपभृतौ शकटस्य धुरोर्निदध्यात् । पात्रीतः पुनर्निर्वापे तदाधारभूते स्फ्ये तयोर्निधानं विमोकः। तदुक्तं कात्यायनेन— "घृताची ऽइति[8] धुरि निदधात्यनसि चेद्ग्रहणम्"-"स्फ्ये पात्र्यां चेत्"-इति[9]। तथा अपां

---

१— 'तदनुष्ठानविरहादनुष्ठानकृतं'-इति ठ ।

२— "अनन्तरायम्" (३६पृ० ८पं०)=अविच्छेदम् (का०श्रौ०२.३.२६.)।

३— वा० सं० १. ८. १, २; २, ६. १ । का० श्रौ० २. ३. १३, १४ ।

४— "स्फ्यो नाम बाहुमात्रः खड्गाकारः काष्ठविशेषः"-इति तै० सं० १. ६. ८. २. सा० भा० । "स्फ्योऽस्याकृतिः"—इति का० श्रौ० सू० १. ३. ३६ । "खादिरः स्फ्यः"-इति चेहैव ३. ६. २. १२ ।

५— श्रौ० सू० २. ३. २८, २६ । ६— "ग्रहणादपि"-इति ड ।

७— 'योऽयं'-इति ज, झ, ञ, ट; 'यमेव'-इति ठ; 'योगं'-इति ड ।

८— वा० सं० २. १६. १ । ९— श्रौ० सू० ३. ६. १६, २० ।

प्रणयनं च स्फ्येन स्वहेत्युक्त मापस्तम्बेन— "स्फ्येनोपसङ्गृह्याविषिञ्चन् हरति"-इति[1]। एवञ्च स्फ्येनैव योगः, स्फ्य एव वियोगात्मको विमोकोऽपीति प्राचीनो ग्रहणे योगवियोगयोः सामानाधिकरण्य-लाभोऽतिशय इति ।

अथ तयोर्वैयधिकरण्यात् सामानाधिकरण्यलोकोऽतिशय इत्या-शङ्क्य लोकप्रसिद्ध्यनुसरण मतिशय इत्याह— "यतो ह्येवेति । सार्व-विभक्तिकस्तसिः[2]। यत्रैव योगः, तत्रैव वियोगो न्याय्यः; न हि कर्णे युक्तः, कव्यां विमुच्यत इत्यर्थः ॥ ८ ॥

अथ धुरः समन्त्रक मभिमर्शनं विधास्यंस्तदुपोद्घातत्वेन देवता-रूपतां[3] तस्याः प्रतिपादयति— "तस्येत्यादिना ।

"अग्निरेव धूरिति यद्धुरोऽग्न्यात्मकत्वं प्रतिज्ञातम्, तस्योप-पादनम्— "अग्निर्हि वा इत्यादि । अनसो या धूर्बलीवर्दवहनस्थानं[4], तस्याग्न्यात्मकत्व मन्वयव्यतिरेकाभ्यां लोकप्रसिद्ध मिति 'हि'-शब्दार्थः ।

ता मेव प्रसिद्धिं दर्शयति— "अथ य एनदिति । 'एनद्' धुराख्यम्, अनसो योगे खलु बलीवर्दा वहन्ति, एषां 'वहं' वहन-साधनं स्कन्धरूप मङ्ग मग्निदग्ध मिव दृश्यते; अतो नूनं 'धूर्' वोढव्या धूः अग्न्यात्मिकेत्यवसीयत इत्यर्थः ।

---

१— औ० सू० १. १९. ८ । २— पा० सू० ५. ३. १४ ।

३— 'देवतास्वर्यतां'—इति ङ ; 'देवतारूयतां'—इति ढ ।

४— "युगस्य प्रान्तौ धूःशब्देनोच्येते, यावनडुत्स्कन्धयोरुपरि निधीयेते"—इति का० औ० २. ३. १३ सू० व० ।

शकटाग्निर्वापस्य[1] प्राशस्त्यातिशयं द्योतयितुं तस्मिन् वेदिहविर्द्धानयोः सम्पत्ति माह— "अथ यज्ञघनेनेति। शकटस्याधःपतनं वारयितु मीषादण्डप्रोत्तम्भनार्थौ[2] मेथी 'कस्तम्भी'। ईषाद्वयं यत्र संसृष्टं, ततः प्रत्यग्भागः, तयोरीषयोर्मध्यदेशः 'प्रउगम्'[3]; तच्च पश्चाद् विस्तृतम्, पुरस्ताद्धसीयः। 'वेदिः' अपि तथाविधा;— "त्रिंशत्पदानि पश्चात्तिरश्ची भवति, षट्त्रिंशत् प्राची, चतुर्विंशतिः[4] पुरस्तात् तिरश्ची"-इति[5] श्रुतेः। अतस्तत्सारूप्यात्प्रउगस्य वेदित्वव्यपदेशः। "नीड एवेति। धान्यनिधानाय परिश्रितप्रदेशो 'नीडः'[6]; हविर्द्धानमपि परिश्रितम्[7]; परिश्रयणसाम्यात् नीडस्य हविर्द्धानत्वम् ॥ ९ ॥

औपोद्घातिकं समन्त्रक मभिमर्शनं विधत्ते— "स धुर मिति।

धुराभिमर्शनस्य प्रयोजन माह— "अग्निर्वा इति। युगस्य धुरि भवोऽग्निः 'धुर्यः'। "भवेच्छन्दसि"-इति[8] यत्। हविर्ग्रहणाय शकटस्य 'परिश्रितप्रदेशं' पश्चाद्भागं यास्यन्, 'तं' धुर्यं पौरस्त्यम्[9] अग्नि मतिक्रमिष्यन् भवति। तदतिक्रमे च स क्रुध्येत्[10]। तस्य प्रसादनाय 'एतद्' "धूरसीति[11] मन्त्रोच्चारणेन 'तस्मै' एवाग्नये 'निह्नुते' अप-

---

१— 'शकटनिर्वापस्य'-इति ङ, ढ। २— का॰ श्रौ॰ सू॰ ८. ४. ५. वृ॰।

३— "प्रउगं प्राग्युग मीषान्तरम्"-इति का॰ श्रौ॰ सू॰ ७. ९. ५. वृ॰।

४— 'चतुर्विंशतिं'-इति आदिषु। ५— तै॰ सं॰ ६. २. ५. ८।

६— "शकटस्योपस्थरूपः पश्चाद्भागः"-इति का॰ श्रौ॰ सू॰ ७. ९. ६ वृ॰।

७— का॰ श्रौ॰ सू॰ ८. ३. २१ वृ॰। ८— पा॰ सू॰ ४. ४. ११०।

९— 'धौरस्त्यम्'-इति ज, झ, ञ, ट; "धौरेयम्"-इति ठ।

१०— 'सङ्क्रुध्येत्'-इति ठ। ११— वा॰ सं॰ १. ८. १।

नयति; अतिक्रमजनितं स्वापराधं प्रशमय्य[1] प्रसादयति। "शुच् अपनयने" धातुः (अदा० आ०)। "श्लाघ्ह्नुङ्स्थाशपाम्"-इति[2] तच्छब्दाच्चतुर्थी। यश्चास्माकं हिंसिता, योऽप्यस्माभिर्हिंस्यः, 'तं' द्विविधं शत्रु मेव 'धूर्व' हिंस्याः। योऽस्मानिति हि मन्त्रार्थः। तथा सत्येवं प्रार्थितोऽग्निरतिक्रामन्त मप्यध्वर्युं न बाधत इत्यर्थः॥ १०॥

तन्मन्त्रोच्चारणेन शत्रुहिंसनं महर्षिव्यवहारेण संवादयति— "तद्धेति। 'तत्' तत्राभिमर्शनविषये 'एतदारुणिराह स्म'। एतच्छब्दपरामृश्यं दर्शयति— "अर्द्धमासश इति। मासस्यार्द्ध मर्द्धमासः। "अर्द्धं नपुंसकम्"-इत्येकवद्भावः[3]। अर्द्धमासे ऽर्द्धमासे; पौर्णमास्यां दर्शे च। "बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्"-इति[4] शस् प्रत्ययः। 'एतत् ह स्म'-इति ऋषेरभिप्रायकथनम्। 'एतत्' इति, धूरसीत्यभिमर्शन मित्यर्थः॥ ११॥

अथ समन्त्रक मीषाभिमर्शनं[5] विधत्ते— "अथ जघनेनेति। 'कस्तम्भी' व्याख्याता[6]। "अन एवेति। यद्यप्ययं मन्त्र ईषाभिमर्शने जप्यः, तथाप्यवयविस्तुत्या अवयवोऽपि स्तुतो भवति इत्यभिप्रेत्येत-न्मन्त्रवाक्यं वोढृतमत्वादिगुणकथनेन अन एवोपस्तौति[7]। अभिमृष्ट-व्येषा-परित्यागेन तदवयवि शकटं स्तुवतो ऽभिप्राय माह— "उप-

---

१— 'प्रशंस्य'-इति ज, भ, ञ, ट, ठ। २— पा० सू० १. ४. ३४।
३— पा० सू० २. २. २। ४— पा० सू० ५. ४. ४२।
५— शकटस्य दीर्घं काष्ठ मीषा, तदग्रस्य भूमिस्पर्शो मा भूदिति तदाधारत्वेन स्थापितं काष्ठ मुपस्तम्भनम्, तस्य पश्चाद्भागे ता मीषां स्पृशेदित्यर्थः। ६— ५०पृ० ३पं० द्रष्टव्या।
७— वा० सं० १. ८. २ मन्त्रः। का० औ० सू० २. ३. १४।

स्तुतादित्यादिना। 'भ्रातं'[१] हृप्तम्। देवानां हृप्तिजनने पर्याप्त मित्यर्थः। "श्रै हृप्तौ"-इति भौवादिको धातुः। "अह्रुता माधास्ते"-इति। 'यज्ञपतिर्मा ह्वार्षीत्' कुटिलगतिर्मा भवत्विति मन्त्रवाक्ये प्रतिपादनात् ह्वरणनिषेध[२] एव 'अह्रुता'-शब्दार्थः[३] ॥ १२ ॥

शकटस्यारोहणं विधत्ते— "अथाक्रमत इति। हे शकट! त्वां विष्णुरेवाक्रमताम्, नाह मिति मन्त्रार्थः[४]। विष्णोरेवाक्रमणं किमिति प्रार्थते? इति चेत्, तत्राह— "यज्ञो वा इत्यादि। विष्णोर्यज्ञस्य च व्यापनसामान्यात् तादात्म्यव्यपदेशः। 'एषां' देवाना मर्थे या 'इयं' वैष्णवी विक्रान्तिः, इमा मिति पूर्वत्रान्वयः। का पुनरिय मिति तां दर्शयति— "इद मेवेत्यादिना। त्रैविक्रमसमये 'इद मेव' परिदृश्यमानं पृथिव्याख्यं स्थानं प्रथमेन पादनिधानेन आक्रममाणः 'पस्पार' पालयामास[५]। "स्पृ प्रीतिपालनयोः"-इति[६] धातुः। निगदसिद्ध मन्यत् ॥ १३ ॥

पुरोडाशीयानां व्रीहीणां समन्तक मवेक्षणं[७] विधत्ते— "अथ प्रेक्षत इति। "प्राणो वा इति। "वायुः प्राणो भूत्वा नासिके प्राविशत्"-इति[८] श्रुतेः प्राणवातयोरेकत्वम्। 'तत्' तथा सति

---

१— सर्वेष्वेव मूलपुस्तकेषु 'शातं' इत्येव पाठः। "शा दाने" अ० प०, "शै शब्दे" भू० प०। २— "ह्वरनिषेध"-इति डातिरिक्तेषु।

३— "ह्वल ह्माल चलने" भू० प०।

४— वा० सं० १. ९. ३ मन्त्रो द्रष्टव्यः। का० श्रौ० सू० २. ३. १५।

५— पुनरिहोपरिष्टात् ९. ३. ९. द्रष्टव्यम्। ६— स्वा० प०।

७— मन्त्रस्तु वा० सं० १. ९. ४। का० श्रौ० सू० २. ३. १६।

८— ऐ० आ० २. ४. २. ४।

'ब्रह्मणा' मन्त्रेणैव प्राणात्मकाय 'वाताय' एतत् 'उद्गायम्' उद्भवनं कीर्त्तनम्[१] कुरुतेत्यर्थः ॥ १४ ॥

यद्यत्रेति । 'अत्र' पुरोडाशीयेषु व्रीहिषु यदि किञ्चित् तृणादिकम् 'आपन्नं' चिप्तं भवेत्, तत् "अपहतम्"-इति[२] मन्त्रेण निरस्येदित्यर्थः । यदि तु तत्र तृणादिकं न भवेत्, तदा पुरोडाशीयं व्रीहिसमूह मेवानेन मन्त्रेण अभिमृशेदित्यर्थः ॥ १५ ॥

हविर्ग्रहणाय समन्त्रकं[३] स्पर्शनं विधत्ते— "अथाभिपद्यत इति । 'अभिपद्यते' आलभते, स्पृशति । हविर्गृहीतुं बध्नन्तु पञ्चाङ्गुलय इत्यर्थः । मन्त्रगतपञ्चशब्दार्थ माह— "पाङ्क्तो वा इति । "पञ्चपदा पङ्क्तिः[४]"; यज्ञोऽपि धानाकरम्भादिपञ्चहविष्क इति पञ्चसङ्ख्यायोगसाम्यात् 'पाङ्क्तः' । तथाच तैत्तिरीयकम्— "धानाः करम्भः परिवापः पुरोडाशः पयस्या, तेन पङ्क्तिराप्यते; तद्यज्ञस्य पाङ्क्तत्वम्"-इति[५] । 'तत्' तथा सति 'एतत्' एतेन पञ्चशब्दोपेतमन्त्रोच्चारणेन 'अत्र' अस्मिन् शकटे 'पाङ्क्तं' यज्ञ मेव धारयतीत्यर्थः ॥ १६ ॥

---

१— 'उद्भवनकीर्त्तनम्'-इति ठ-पुस्तकादन्यत्र ।

२— वा० सं० १. ९. ५ । का० श्रौ० सू० २. ३. १७, १८ ।

३— वा० सं० १. ९. ६ । का० श्रौ० सू० २. ३. १९ ।

४— ऐ० ब्रा० ६. ४. ४ । पि० छ० सू० ५,६ ख०. १२ सूत्राणि । पञ्च पदानि परिमाण मस्येत्यर्थे पा० सू० ५. १. ५९ ।

५— सं० ६. ५. ११. ८ । "भृष्टा यवा धानाः, आज्यसंयुक्ताः सक्तवः करम्भः, व्रीहिजन्या लाजाः परिवापाः, पिष्टविकारः पुरोडाशः, क्षीरविकारः पयस्या"-इति तै० सं० १. ४. २८ सा० भा० ।

अथ समन्त्रकं[1] हविर्ग्रहणं विधत्ते— "अथ गृह्णातीति। अनु-ष्ठेयहविर्ग्रहणानुगुण्यं मन्त्रस्य दर्शयति— "सविता वा इत्यादिना। 'देवानां' मध्ये 'सविता' खलु प्रसविता, स्वस्वव्यापारेषु सर्वस्य लोकस्य प्रेरयिता; "सूते प्रेरयतीति सविता"-इति[2] तन्नाम-व्युत्पत्तेः। 'अश्विनावध्वर्यू'-इति। पुरा खलु देवकर्तृके यज्ञे अश्विना-वध्वर्यू अभूताम्, अतस्तयोरेव बाहुभ्यां हविर्गृह्णामीति अस्यार्थस्य प्रदिपादको मन्त्रभागो युक्त इत्यर्थः। 'पूषा भागदुघः'-इति। भागं दोग्धीति 'भागदुघः' भागप्रद इत्यर्थः। "दुहः कब् घश्च"-इति[3] कब्घत्वे। तादृशः पूषा पाणितलाभ्यां सर्वस्य जनस्य 'अशनं' भोज्य मन्नम् 'उपनिधाता' उपनिधातु मुपस्थापयितुं शीलवान्; ताच्छीलिकस्तृन्[4]। "न लोकाव्ययनिष्ठेति[5] कर्मणि षष्ठ्याः प्रतिषेधः। तथाच पूष-देवताया हस्ताभ्यां हविर्ग्रहणं युक्ततर मिति भावः। इतोऽप्यश्विनोर्बाहुभ्या मित्यादिकं युक्त मित्याह— "सत्यं देवा इति। 'देवाः' इति यत्, तत् 'सत्यम्'; अमरणत्वेन विनाशा-भावात्। मनुष्यास्तु तद्वैपरीत्यादनृतरूपाः। तस्मादश्विनोर्बाहुभ्या मित्यादिमन्त्रभागोच्चारणात् देवतारूपेण 'सत्येनैव' तद्धविर्ग्रहणं कृतं भवतीत्यर्थः॥ १७॥

---

१— वा० सं० १. १०. १। का० श्रौ० सू० २. ३. २०।

२— निघ० ५. ४. २० द्रष्टव्यम्। निरु० ७. ७. ६।

३— पा० सू० ३. २. ७०।

४— पा० सू० ३. २. १३५।

५— पा० सू० २. ३. ६९।

"अग्नये जुष्टम्"-इति[1] देवतादेशनस्यावश्यकर्त्तव्यतां प्रतिपादयति—"सर्वा ह वा इत्यादिना। स्वस्वनामग्रहणसम्भावनयोपस्थितानां मध्ये कस्याश्चिदग्न्यादिदेवताया आदेशने सति सह वर्त्तमानाः। 'ताभ्यः' षष्ठ्यर्थे चतुर्थी[2]। तासां देवतानाम् 'असमदम्' अकलहं परस्पर मविरोधं करोति ॥ १८ ॥

प्रकारान्तरेणापि देवतादेशनस्य कर्त्तव्यतां प्रतिपादयति—"यावतीभ्य इति। यत्परिणामविशिष्टेभ्य इत्यर्थः। "ऋण सु हैवेति। स्वस्वनामोद्देशेन गृहीतं हविः ऋण मेव 'ताः' सर्वा देवता मन्यन्ते। कुत इद मवगतम्? इति चेत्, उच्यते— 'यत्काम्या' यस्य फलस्येच्छया हविर्गृह्णाति, 'तं कामं' काम्यमानं फलविशेषम् 'अस्मै' यजमानाय 'यद्' यस्मात् समर्द्धयेयुः, तेन कारणेन हविषः ऋणरूपत्व मवगत मित्यर्थः। यत्काम्येति यच्छब्दादिच्छार्थे "काम्यच्"-इति[3] काम्यच्, तदन्तात् अकारप्रत्यये[4] तृतीयाया लुक्[5]। "तस्मादिति। 'तस्मात्' हविषि देवताना मृणत्वाभिमानात्। फलप्रदानेन तत्प्रत्यर्पणार्थं तत्र देवतानाम अवश्य मादेष्टव्य मित्यर्थः।

अग्नीषोमीयादिहविरन्तरेऽपि उक्त मतिदिशति— "एव मेवेति। 'एव मेव' आग्नेयवदेव 'यथापूर्वं' यथाक्रमम्, अग्नीषोमीयादीनि 'हवींषि' गृह्णीयादित्यर्थः। अतएव मन्त्रकाण्डे आग्नेयहवि-

---

१— वा० सं० १. १०. २। का० श्रौ० सू० २. ३. २१।
२— पा० सू० २. ३. ६२. वा० १। ३— पा० सू० ३. १. ९।
४— पा० सू० ३. ३. १०२। ५— पा० सू० ७. १. ३९।

ग्रहणमन्त्रानन्तरम् "अग्नीषोमाभ्यां जुष्टं गृह्णामि"-इति[1] ग्रहण-मन्त्रशेष आम्नातः। कात्यायनोऽप्यसूत्रयत्— "एव मग्नीषोमीयं यथादेवत मन्यत्"-इति[2] ॥ १९ ॥

निरुप्तशेषस्य समन्त्रक[3] मभिमर्शनं विधत्ते— "अथेति। "तद्यत एवेति। 'तत्' तत्र शकटे 'यत एव' यस्मादेव स्थानाद् गृह्णाति, 'तदेव' तत् स्थान मेव अनेन मन्त्रेण पुनः 'आप्याययति' वर्द्धयति। 'भूताय' प्रभूताय समृद्ध्यर्थं त्वा मभिमृशामि, 'अरातये' अदानाय असमृद्धये नाभिमृशामि, इत्यस्यार्थस्य मन्त्रेण प्रतिपादनात्। सूचितं हि— "भूताय त्वेति शेषाभिमर्शनम्"-इति[4] ॥ २० ॥

अथ समन्त्रकं[5] प्रागवेक्षणं विधत्ते— "अथ प्राङिति। "परि-वृत मिव वेत्यादि। परिवेष्टित मेव खल्वनो भवति, धान्य-निधानार्थम्; तन्मध्ये अवस्थितस्याध्वर्योश्चक्षुः 'पाप्मगृहीत मिव' काचकामलादिदोषदूषितमिव द्रष्टुं न समर्थं भवति; तत्र सह-कारिण आलोकस्याभावात्। कथं तस्य दर्शनोपायः? इति, तदु-च्यते— अवेक्षणमन्त्रगत-स्वरितिशब्देन स्वर्गवाचिना तत्साधनभूतो यज्ञो ऽभिधीयते; अहरादीनि च तेन लक्षणया प्रतिपाद्यन्ते। अत एव 'स्वर्'-शब्दस्य[6] सूर्यनामत्व मुक्तं यास्केन— "स्वरादित्यो भवति। सु अरणः, सु ईरणः"-इति[7]। 'तत्' तथा सति एतन्मन्त्र-

---

१— वा० सं० १. १०. ३। २— औ० सू० २. ३. २१, २२।
३— वा० सं० १. ११. १। ४— का० औ० २. ३. २३।
५— वा० सं० १. ११. २। का० औ० सू० २. ३. २४।
६— 'स्वः-शब्दस्य'-इति आदिषु। ७—निरु० २. ४. २ द्रष्टव्यम्।

करणकेन प्रेरणेन स्वर्-शब्दप्रतिपादितं[१] यज्ञादिचतुष्टय मर्थजातं प्राच्यां दिशि प्रथमत उपलभ्यमानम् 'अतः' अस्माच्छकटस्थानात् 'अभिविपश्यति' अवलोकयति ॥ २१ ॥

अथ समन्त्रकं[२] शकटादवरोहणं विधत्ते— "अथावरोहतीति। "ते हैत इत्यादि। 'अस्य' यजमानस्य, य एषः अध्वर्युः 'यज्ञेन चरति' हविर्ग्रहणादिकं यज्ञसाधन मनुतिष्ठति, तं 'प्रयन्तं' शकटस्थानात् प्रगच्छन्तम् 'अनु'-सृत्य यजमानस्य 'ते' गृहाः 'इतः' अस्माद्भूलोकात् 'प्रच्योतोरीश्वराः' प्रच्युतिं प्राप्तुं[३] समर्थाः। तथा 'तस्य' यजमानस्य कुलं 'विक्षोभोः' विक्षोभयितुं समर्थाः। "ईश्वरे तोसुन्-कसुनौ"-इति[४] च्यवतेः क्षुभेश्च तोसुन् प्रत्ययः। अनेन मन्त्रेण अवरोहन्नध्वर्युः 'तानेव' यजमानस्य गृहान् 'अस्यां' पृथिव्यां 'दृंहति' दृढीकरोति। "दृह दृहि वृद्धौ"-इति[५] धातुः। एवं सत्युक्तदोषनिवृत्ति माह— "तथेति।

निरुप्तेन हविषा सहाग्निसमीपगमनं विधत्ते— "अथ प्रैतीति। "उर्विति मन्त्रस्य प्रागाम्नातं ब्राह्मणम्[६] अत्रातिदिशति[७]— "सोऽसाविति। "अन्तरिक्षं वा अनु रक्षश्चरति"-इत्यादिको यो वाक्यशेषः, 'सोऽसावेव' अत्राम्नातस्यापि तस्य मन्त्रस्य 'बन्धुः' अनुकूलः, अतोऽत्राप्यनुषज्य योजनीय इत्यर्थः ॥ २२ ॥

---

१— 'स्वः-शब्दप्रतिपादितं'-इति ढ।

२— वा० सं० १. ११. ३। का० श्रौ० सू० ७. ३. २५।

३— 'प्रच्यावयितुं'-इति ढ। ४— पा० सू० ३. ४. १३।

५— भ्वा० प०। ६— पुरस्तात् ३५, ४४ पृ० ११, ५ प० द्रष्टव्यम्।

७— का० श्रौ० सू० २. ३. २६। वा० सं० १. ११. ४।

आहृतस्य हविषः सादनं विधत्ते— "स यस्येत्यादिना। गार्हपत्ये आहवनीये वा यस्मिन्नग्नौ श्रपणम्, तस्य पश्चात् 'पात्रासादनं' निरुप्तस्य हविषः सादनं च कर्त्तव्य मित्यर्थः।

सादनमन्त्र[1]गत-'नाभि'-शब्दस्याभिप्रेत मर्थ माह— "मध्यं वा इति। मनुष्यादिशरीरेषु नाभेर्मध्यदेशेऽवस्थानात् पृथिव्या नाभिरिति मध्य मेवोच्यते। तच्च मध्यम् 'अभयम्' भयरहितम्; प्रान्तदेशे हि चौरव्याघ्रादिभयम्। अतः पृथिव्याः सम्बन्धिनि राक्षसादिभयरहिते स्थाने त्वां सादयामीति मन्त्रभागस्यार्थः। "अदित्या उपस्थे"-इति मन्त्रस्य द्वितीयभागं व्याचष्टे— "उपस्थ इवेति। 'यद्' वस्तु 'सुगुप्तं' सुष्ठु रक्षितं यथा भवति तथा 'गोपायन्ति' रक्षन्ति; एतत् 'उपस्थ इव' उत्सङ्ग इव, उदरमध्य इव वा, 'अभार्षुः' भृतवन्त इति खलु वदन्ति लौकिकाः। अतश्च यस्मिन् स्थाने सादितं हविः सुगुप्तं भवति, तत् स्थान मुपस्थशब्देन मन्त्रगतेन विवक्षितम्। अभार्षुरिति "भृञ् भरणे"-इत्यस्मात्[2] लुङि सिचि वृद्धिः[3]। 'गोपायन्ति'-इति "गुपूधूपविच्छि"-इति[4] आय्-प्रत्ययः। अन्तिमं भाग माचष्टे— "अग्ने हव्य मिति। "इयं वा अदितिः"-इति[5] श्रुतेः अदितिर्हि पृथिवी; तस्याश्चाधिपतिरग्निः[6]; स चात्र गार्हपत्यरूप आहव-

---

१— वा० सं० १. ११. ५। का० श्रौ० सू० २. ३. २७।

२— धा० उ०। ३— पा० सू० ७. २. १।

४— पा० सू० ३.१.२८। ५— ऐ० ब्रा० ३.६.७। तै० सं० ३.२. ४.७।

६— "पतिः पृथिव्याः"-इति वा० सं० ३. १२। निरु० ७. २. १; ३. १।

नीयरूपो वा ; तस्मै च 'अग्नये', तेनाधिष्ठितायै 'पृथिव्यै' च रक्षणार्थम्, 'एतद्धविः' अनेन मन्त्रभागेन दत्तं भवतीत्यर्थः ॥ २३ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथभाष्ये प्रथमाध्याये
द्वितीयं ब्राह्मणम्[1] ॥

---

१— पात्रासादनानन्तरं हविर्भ्यसहित मनो गार्हपत्यस्य पश्चात् प्राङीष मवस्थापयेत् । अनः शकटम् ; तच्च युगयोक्त्रसंयुक्तं वरत्रापरिवेष्टितं च स्थाप्यम् । ततोऽध्वर्युः शूर्पाग्निहोत्रहवण्यावादत्ते । तत आरभ्य हविरावपनपर्यन्तं हविष्कृदाह्वानपर्यन्तं वा अध्वर्योर्वाग्यमनम् । ततः शूर्पाग्निहोत्रहवण्योर्गार्हपत्ये प्रतपनम् । तत उदकस्पर्शनम् । ततः शकटं प्रति गमनम् । तत्समीपे उपवेशनम् । तस्य धुरभिमर्शनम् । ततस्तत्र स्थित एवोपस्तम्भनस्य पश्चात् उत्तरा मीषा मालभ्य मन्त्रजपः । ततः शकटस्य पश्चान्मार्गेण दक्षिणतो गत्वा दक्षिणचक्रस्योपरि आरोहति । आरुह्य व्रीहियवादीन् प्रेक्षते । ततस्तत्रत्यतृणनिरसनम् । हविरालभनम् । ततोऽपां स्पर्शनम् । पुनरपि हविरालभनम् । ततः सव्यहस्ते शूर्पं निधाय तस्योपरि उत्ताना मग्निहोत्रहवणीं निधाय प्राङासीनो मुष्ट्या हविःप्रक्षेपः । तत्र मन्त्रेण त्रिर्ग्रहणं, तूष्णीं चतुर्थम् । गृहीतं च तत् शूर्पस्य दक्षिणपार्श्वे संस्थाप्य, अपरपार्श्वेऽग्निषोमीयहविर्ग्रहणं च तथैव । शकटे यदवशिष्टं हविस्तदपि पृथक् ग्रहणीयम् । ततस्तत्रैवासन्नुपविष्टः प्राचीमिक्षते । ततः शकटादवरोहणम्, गार्हपत्योत्तरस्यां गमनम् । ततस्तच्छूर्पं सहविष्कं अपणस्य पश्चात् सादयति । अपण-शब्देनात्र यस्मिन्नग्नौ हविःअपणं क्रियते, गार्हपत्यो वा आहवनीयो वा सोऽभिधीयते । तदेवत् सर्वमिह द्वितीयब्राह्मणे द्रष्टव्यम् ॥

पवित्रे करोति। पवित्रे स्थो वैष्णव्याविति यज्ञो वै विष्णुर्यज्ञिये स्थ ऽइत्येवैतदाह ॥ १ ॥

ते वै द्वे भवतः। अयं वै पवित्रं यो ऽयं पवते सो ऽय मेक इवैव पवते सो ऽयं पुरुषे ऽन्तः प्रविष्टः प्राङ् च प्रत्यङ् च ताविमौ प्राणोदानौ तद्देतस्यैवानुमात्रां तस्माद् द्वे भवतः* ॥ २ ॥

अथो ऽअपि त्रीणि स्युः। व्यानो हि तृतीयो द्वे त्वेव† भवतस्ताभ्या मेताः प्रोक्षणीरुत्पूय ताभिः प्रोक्षति तद्यदेताभ्या मुत्पुनाति ॥ ३ ॥

वृत्रो ह वा ऽइदꣳ सर्वं वृत्वा शिश्ये। यदिद मन्तरेण द्यावापृथिवी स यदिदꣳ सर्वं वृत्वा शिश्ये तस्माद् वृत्रो नाम ॥ ४ ॥

त मिन्द्रो जघान। स हतः पूतिः सर्वत एवापो ऽभिप्रसुस्राव सर्वत इव ह्ययꣳ समुद्रस्तस्माद् हैका आपो बीभत्साञ्चक्रिरे ता उपर्युपर्यतिपुप्लुविरे‡ ऽत इमे दर्भास्ता हैता अनापूयिता आपो§ ऽस्ति वा ऽइतरासु सꣳसृष्ट मिव यदेना वृत्रः पूतिरभिप्रास्रवत् तदेवासा मेताभ्यां पवित्राभ्या मुपहन्त्यथ मेध्याभि-रेवाद्भिः प्रोक्षति तस्माद्वा ऽएताभ्या मुत्पुनाति ॥ ५ ॥

---

* 'भवतः'—इति ख।

† 'म्वेव'—इति च।

‡ 'पुप्लुविरे'—इति क, सायणसम्मतश्च।

§ 'अपो'—इति क, म।

स उत्पुनाति। सवितुर्वः प्रसव ऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिरिति सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतदुत्पुनात्यच्छिद्रेण पवित्रेणेति यो वा ऽअयं पवत ऽएषो ऽच्छिद्रं पवित्र मेतेनैतदाह सूर्य्यस्य रश्मिभिरित्येते वा ऽउत्पवितारो यत् सूर्य्यस्य रश्मयस्तस्मादाह सूर्य्यस्य रश्मिभिरिति ॥ ६ ॥

ताः सव्ये पाणौ कृत्वा। दक्षिणेनोदिङ्गयत्युपस्तौत्येवैना एतन्महयत्येव देवीरापो ऽअग्रेगुवो ऽअग्रेपुव इति देव्यो ह्यापस्तस्मादाह देवीराप इत्यग्रेगुव इति ता यत्समुद्रं गच्छन्ति तेनाग्रेगुवो ऽग्रेपुव इति ता यत्प्रथमाः सोमस्य राज्ञो भक्षयन्ति तेनाग्रेपुवो ऽग्र* ऽइम मद्य यज्ञं नयताग्रे यज्ञपतिꣳ सुधातुं यज्ञपतिं देवयुव मिति साधु यज्ञꣳ साधु यजमान मित्येवैतदाह ॥ ७ ॥

युष्मा† ऽइन्द्रो ऽवृणीत वृत्रतूर्य्ये ऽइति। एता उ हीन्द्रो ऽवृणीत वृत्रेण स्पर्द्धमान एताभिर्ह्येन महंस्तस्मादाह युष्मा‡ ऽइन्द्रो ऽवृणीत वृत्रतूर्य्ये ऽइति ॥ ८ ॥

यूय मिन्द्र मवृणीध्वं वृत्रतूर्य्ये ऽइति। एता उ हीन्द्र मवृणत वृत्रेण स्पर्द्धमान मेताभिर्ह्येन महंस्तस्मादाह यूय मिन्द्र मवृणीध्वं वृत्रतूर्य्ये ऽइति ॥ ९ ॥

---

* 'तेनाग्रेगुवो ऽग्रेपुवो ऽग्र'–इति ग। †, ‡ 'युष्माꣳ'–इति क, ख।

प्रोक्षिता स्थेति। तद्देताभ्यो निह्नुतेऽथ हविः प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्य मेवैतत्करोति ॥ १० ॥

स प्रोक्षति। अग्नये त्वा जुष्टं प्रोक्षामीति तद् यस्यै देवतायै हविर्भवति तस्यै मेध्यं करोत्येव मेव यथापूर्वꣳ हवीꣳषि प्रोक्ष्य* ॥ ११ ॥

अथ यज्ञपात्राणि प्रोक्षति। दैव्याय कर्म्मणे शुन्धध्वं देवयज्यायाऽइति दैव्याय हि कर्मणे शुन्धति देवयज्यायै यद्वो ऽशुद्धाः पराजघ्नुरिदं व्वस्तच्छुन्धामीति तद्यद्वैषा मत्राशुद्धस्तक्षा वान्यो वामेध्यः कश्चित्पराहन्ति तद्देवैषा मेतदद्भिर्म्मेध्यं करोति तस्मादाह यद्वो ऽशुद्धाः पराजघ्नुरिदं व्वस्तच्छुन्धामीति ॥ १२ ॥ ३ ॥

(प्रथमप्रपाठके प्रथमाध्याये वा तृतीयं)

ब्राह्मणम् ॥ १ । ३ ॥

पवित्रकरणमन्त्रगतस्य[1] वैष्णव्याविति[2] पदस्य तात्पर्यं माह—"यज्ञो वा इति। वेवेष्टि व्याप्नोतीति व्युत्पत्त्या[3] यज्ञ एव विष्णुः[4]"।

---

* 'प्रोक्ष्य'—इति ख, च।

१— वा० सं० १. १२. १।

२— 'व्यत्ययो बहुलमिति (पा० सू० ३. १. ८५.) स्त्रीत्वम्"—इति महीο।

३— निरु० १२. १. ७। निघ० ३. १७. १२।

४— "विष्णुर्वै यज्ञः"—इति तै० सं० २. १. ८. ३। ऐ० ब्रा० १. ३. ४।

तथाच मन्त्रगतस्य वैष्णव्याविति शब्दस्य, हे दर्भनाड्यौ! युवां यज्ञसम्बन्धिन्यावेव भवथ इत्यय मर्थः प्रतिपादितो भवतीत्यर्थः ॥ १ ॥

सङ्ख्यान्तरं वारयितुं पवित्रयोर्द्वित्वं विधत्ते— "ते वा इति। तदेतदुपपादयति— "अयं वा इति। 'यः' पवमानो वायुः, अयमेव 'पवित्रं' पवनसाधनम्, शुद्धिहेतुः। "पुवः संज्ञायाम्"-इति[1] करणे इत्र-प्रत्ययः। "पन्थानश्च विशुद्ध्यन्ति सोमसूर्यांशुमारुतैः"-इत्यादिस्मृतेः[2] वायोः शुद्धिहेतुत्वम्।

"एक इवैवेति। 'सः' च वाह्ये वर्त्तमानो वायुः, एकरूप एव वाति; 'सः' एव पुरुषशरीरानुप्रविष्टः सन् वृत्तिभेदेन 'प्राङ् च प्रत्यङ् च चरति'। इड़ापिङ्गलादिनाड़ीद्वारा वहिर्निर्गच्छन् प्राणः प्राङित्युच्यते, तयैव द्वारा पुनरन्तः प्रविशन् प्रत्यङ्ङिति; तावेतौ वृत्तिभेदौ 'प्राणोदानौ'-इत्युच्येते। तत्र प्राङ् सञ्चरन् प्राणः, 'उद्' ऊर्द्धदेशात् आनयति[3] अन्तः प्रवेशानुगुणं[4] चेष्टत इति 'उदानः'। तस्य 'च'-शब्देन प्रत्यङ्मुखो ऽपानो विवक्षितः, तदुत्क्रान्तिहेतुरुदानवृत्तिरिति; तस्या ऊर्द्धमुखत्वेन प्रत्यङ्ङुत्क्रमानुपपत्तेः[5]। अत एव तैत्तिरीयके समानप्रकरणे पवित्रयोः प्राणापानरूपत्व माम्नायते— "प्राणापानौ पवित्रे यजमान एव प्राणापानौ दधाति"-इति। एवं द्विधा भिन्नस्यैतस्यैव वाय्वाख्यस्य पवित्रस्य[6] 'मात्रां' परिमाणम्, 'अनु'-सृत्य, तत्पवित्रयोर्द्वित्वम् ॥ २ ॥

---

१— पा० सू० ३. २. १८५। २— वि० सं० २३. ४०।
३— 'अनिति'-इति ठ, ड। ४— 'प्रवेशानुगुणं'-इति ठ, ड।
५— 'प्रत्यगुत्क्रमानुपपत्तेः'-इति ठ, ड। ६— तै० सं० २. १. १०. २।

त्रिलपत्त मभ्युपन्यस्यति— "अथो ऽपि"-इति। पक्षान्तरद्योतकः 'अथोऽपि'-शब्दः।

तत्रोपपत्तिर्व्यानो ह्येति। मुख्यपवित्रस्य वायोः प्राणोदानवद् व्यानाख्यो वृत्तिभेदः तृतीयो 'हि' यस्माद् विद्यते[१], तस्मात् पवित्रत्रित्व मप्युक्त मित्यर्थः।

द्वित्वपक्ष मेव निगमयति— "द्वे त्वेवेति। "अथ यः प्राणापानयोः सन्धिः, स व्यानः"-इतिश्रुतेः[२] व्यानस्य सन्धिरूपतया तदुभयानतिरिक्तत्वाद् द्वित्वपक्ष एव श्रेयानित्यर्थः। कात्यायनस्तु पक्षद्वय मपि सूचयामास— "कुशौ समौ वप्रशीर्णाग्रा वनन्तर्गर्भौ कुशेश्छिनत्ति पवित्रे स्थ इति, त्रीन् वा"-इति[३]।

अथोत्पवनं विधत्ते— "ताभ्या मिति। प्रोक्षत्याभिरिति 'प्रोक्षण्यः' आपः। करणे ल्युट्[४]। 'ताभिः प्रोक्षति'-इत्युत्पवनस्य प्रयोजनकथनम्; न तु प्रोक्षणविधिः। यस्मादुत्पूताभिरद्भिः प्रोक्षणं कर्त्तव्यम्, तस्मात् पवित्राभ्यां तासा मुत्पवनं कार्य मित्यर्थः।

तदेतदुत्पवनं स्तोतु मनुवदति— "तद्यदिति ॥ २ ॥

उत्पवन-निवर्त्त्या मशुद्धिं दर्शयितु मितिहास मुदाहरति— "वृत्रो हेति। 'वृत्वा शिश्ये'-इति, आवृत्य शयनं कृतवान्। शीङो[५] लिटि "एरनेकाच"-इति[६] यण्। 'द्यावापृथिवी'-इति, द्यौश्च

१— "स वा अयं प्राणस्त्रेधा विहितः प्राणो ऽपानो व्यान इति"-इति ऐ० ब्रा० २. ४. ५। २— छा० उप० १. ३. ३।
३— श्रौ० सू० २. ३. ३२। ४— पा० सू० ३. ३. ११७।
५— अदा० आ०। ६— पा० सू० ६. ४. ८२।

पृथिवी च द्यावापृथिव्यौ[१]। "अन्तरान्तरेण"-इति[२] द्वितीया। द्यावापृथिव्योर्मध्ये इत्यर्थः। वरणाद् वृत्र इति नाम[३]। निर्वक्ति— "स यदिति ॥ ४ ॥

स इत इत्यादि। पूतिर्दुर्गन्धः। सर्वत एवापोऽभिसृत्य प्रस्रुतोऽभूत्। अत एव खल्वद्य मपि समुद्रः, सर्वतः सर्व मावृत्य वर्त्तते। 'तस्माद्' दुर्गन्धात् स्रुताद् वृत्रादिमा आपो 'बीभत्साञ्चक्रिरे' जुगुप्सन्ते स्म। "मान्बधदान्शान्भ्यः"-इति[४] बधेर्वैरूप्ये सन् प्रत्ययः। बीभत्समानाः 'ताः' आपः तत्संस्पर्शं परिहर्त्तु मुपर्युपरि वर्त्तमानाः 'अति पुप्रुविरे'[५] जलाशय मतिक्रम्य तीरदेशं प्राप्ता आसन्। "प्रुङ् गतौ"-इति[६] धातुः। प्रुताश्च 'ताः' आपो दर्भात्मना परिणताः। अय मर्थः तैत्तिरीयकेऽपि विस्पष्ट माम्नातः—"इन्द्रो वृत्र मह-न्सोऽपोऽभ्यं म्रियत, तासां यन्मेध्यं यज्ञियꣳ सदेव मासीत्; तदपोदक्रामत्, ते दर्भा अभवन्"-इति[७]। "अनापूयिता इति। 'आ' समन्तात् पूयं दौर्गन्ध्यं प्राप्ताः आपूयिताः, न आपूयिताः

---

१— पा० सू० ६. ३. ३०। २— पा० सू० २. ३. ४।

३— "वृत्रो वृणोतेर्वा वर्त्ततेर्वा वर्द्धतेर्वा"—इत्यादि निरु० २. ५. ३। "तत् को वृत्रः? मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः, अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति"—इत्यादि च तत्रैव २. ५. २। "यदिमाँल्लोकानवृणोत्, तद् वृत्रस्य वृत्रत्वम्"—इति तै० सं० २. ४. १२. २।

४— पा० सू० ३. १. ६।

५— "पप्रुविरे"—इति ग। मूले तु "पुप्रुविरे"—इत्येव सर्वपुस्तकेषु।

६— धा० पा० ६५८। ७— तै० ब्रा० ३. २. ५. १।

'अनापूयिताः'। "पूयी विशरणे, दुर्गन्धे च"-इत्यस्मात्[1] कर्त्तरि निष्ठायां छान्दस इट्। यद्वा 'आ' समन्तात् पूयमानं सञ्जात मिति 'आपूयिताः'। "तदस्य सञ्जातम्"-इति[2] तारकादित्वादितच्। 'इतरासु'-इति, दर्भात्मना परिणतजलव्यतिरिक्तासु; अमेध्यत्वा-पादकं किञ्चित् संसृष्ट मिव भवति। अत्र हेतुः— "यदेना इति। एव मनापूयिताब्विकारदर्भमयाभ्यां पवित्राभ्याम् 'आसाम्' अपा मुत्पवनं कुर्वन् पूयसंसर्गकृतं 'तत्' अमेध्यत्व मपहन्ति। ततश्च विधास्यमानं प्रोक्षणञ्च 'मेध्याभिः' मेधार्हाभिः शुद्धाभिरेवाद्भिः कृतं भविष्यतीत्यर्थः। 'तस्मात्'-इत्युत्पवननिगमनम् ॥ ५ ॥

विहित मुत्पवन मनूद्य मन्त्रं विधत्ते— "स इति। सविता वा इत्यादि पूर्ववत्[3]।

अच्छिद्रशब्दार्थ माह— "यो वा इति। योऽयं वायुः पवते, एष खल्वविच्छेदेन सर्वत्र वर्त्तमानात् छिद्ररहितं पवनसाधनम्। "एते वा इति। 'एते' सूर्यस्य रश्मयः, 'उत्' उत्कृष्टं 'पवितारः' शोधकाः; अतस्तैः करणभूतैरुत्पवनं युक्त मित्यर्थः ॥ ६ ॥

उत्पवनानन्तरं कर्त्तव्यं विधत्ते— "ता इति। 'ताः' प्रोक्षणीरपः अग्निहोत्रहवण्या पात्रेण साकं सव्ये पाणौ धारयन् "देवीरापः"-इति[4] मन्त्रेण दक्षिणेन हस्तेन 'उदिङ्गयति' ऊर्द्धं सेचनेन चाल-यति[5]। "इगि-रिगि-लिगि गत्यर्थाः"-इति धातुः[6]। मन्त्रतात्पर्य

---

१— भ्वा०आ०,४८४। २— पा०सू० ५.२.३६। ३— ५४पृ० द्रष्टव्यम्।
४— वा० सं० १. १२. ३। का० श्रौ० सू० २. ३. ३५।
५— उपरिष्टाच्च (१२.५.१. १२.) द्रष्टव्यम्। ६— भ्वा०प०१५३-१५५।

माह—"उपस्तौतीति। 'एतत्' एतेन, देवीराप इतिमन्त्रपठनेन 'एनाः' अपः प्रशंसत्येव। तेन च प्रशंसनेन 'महयति' पूजयत्येव।

कस्तर्ह्यासां स्तावकस्तथाविधो मन्त्र इति तं दर्शयति—"देवीरिति[1]। स्तुतिरूपता मुपपादयति—"देव्य इत्यादिना। अपां देवतारूपत्वेन देवीत्वं प्रसिद्ध मिति 'हि'-शब्दार्थः। "ता यदित्यादि। 'अग्रे' पुरतो वर्त्तमानं समुद्रं गच्छन्तीति 'अग्रेगुवः'। अग्रेगू-शब्दस्य समुद्रगामित्वं विवक्षित मिति भावः। "ऊङ् च गमादीनाम्"-इति[2] गमेरूकारः। "ता यत्प्रथमा इति। आपः खल्वभिषवार्थ मासिच्यमाना यष्टव्यदेवताभ्यः पूर्वं सोमरस मास्वादयन्ति, तेन सोमपानेन 'अग्रे' प्रथमं स्वात्मानं पुनन्तीति 'अग्रेपुवः'[3]। उभयत्र "तत्पुरुषे कृति बहुलम्"-इति[4] अग्रशब्दात् सप्तम्या अलुक्।

"साधुयज्ञ मित्यादि। "अग्र इमम्"-इत्यत्र 'अग्र'-शब्दः प्राशस्त्यवाची। 'अग्रे' प्रशस्ते 'अद्य' अस्मिन् काले 'इमं' यज्ञं प्रापयतेति प्रतिपादयता मन्त्रेण 'साधु यज्ञं नयत'-इत्येवोक्तं भवति; प्राशस्त्यं प्राप्तस्य साधुत्वनियमात्। यज्ञस्य पतिः यज्ञपतिः, त मिति। यज्ञशब्देन यजमानो विवक्षित इति व्याचष्टे—"साधु यजमान मिति। अत्रापि पूर्ववत् 'अग्रे'-शब्द-व्याख्यानम्। साध्विति विशेषणम् ॥ ७ ॥

---

१— वा० सं० १. १२. ३। "आपो देवीर्"-इत्यादिः तैत्तिरीयपाठः (तै० सं० १. १. ५. २.—ब्रा० ३. २. ५.)।

२— पा० सू० ६. ४. ४०. वा० १, २। अनुनासिकलोपस्त्वेतेनैव।

३— पुनातिस्तु गमादेरन्तर्गतः। ४— पा० सू० ६. ३. १४।

युष्मा इन्द्र इति[1]। हे आपः! युष्मान् वृत्रं हन्तुकामः इन्द्रः साहाय्यकरणार्थं प्रार्थयामास। ताश्च यूयं वृत्रशरीरनिरुद्धाः[2] विस्रम्भगमनार्थं वृत्रं हन्तुम् इन्द्रं प्रार्थितवत्यः। अत ईदृग्विधं परस्परप्रार्थनं युष्मा इन्द्र इत्यादिना मन्त्रभागेन[3] प्रतिपाद्यत इत्यर्थः ॥ ८ ॥ ९ ॥

"तदेताभ्य इति। यद्यपि प्रोक्षणीना मपां स्वातिरिक्तजलेन शुद्ध्यर्थं प्रोक्षणं नास्ति, तथापि "प्रोक्षिता स्थ"-इति[4] स्वात्मनैव प्रोक्षिता भवतेति मन्त्रेण प्रतिपादनात् प्रोक्षणवत्त्वसिद्धेः 'तत्' तेन मन्त्रपाठेन अप्रोक्षणजनित मपराधम् 'एताभ्यः' प्रोक्षणीभ्यो 'निह्नुते' अपनयति। प्रोक्षणपात्रगतेनैवोदकेन तत्पात्रगत मुदक मनेन मन्त्रेण प्रोक्षितव्य मिति तात्पर्यार्थः[5]। अत एवोक्तं सूत्रकृता

---

१— 'युष्माँ इन्द्र'-इति छ। मन्त्रस्त्वेषः- वा० सं० १. १३. १। तत्र "युष्मा = युष्मान्, अवृणीत। आकारश्छान्दसः"-इति मही०। "युष्मानिन्द्रो"-इति तैत्तिरीयपाठः (सं०१.१.५.—ब्रा०३.२.५.)।

२— "वृत्रसेनानिरुद्धाः"-इति ज, झ, ञ, ट।

३— यद्यप्ययं संहितायां कण्डिकान्तरगतत्वात् पृथक् मन्त्र एव बुध्यते, तथाप्येतद्ब्राह्मणविधितो देवीरापइतिमन्त्रस्यैवांशविशेष इति स्वीकार्यः; अत एव नास्य विनियोगान्तरं दर्शितं कात्यायनेन।

४— 'प्रोक्षिताः स्थ'-इति ठ। मन्त्रस्त्वेषः- वा० सं० १. १३. २।

५— 'तत् तेन'-इत्यारभ्य 'तात्पर्यार्थः'-इत्यन्तस्य स्थाने "प्रोक्षणपात्रगतेनैवोदकेन तत्पात्रगत मुदकं प्रोक्षयित्वा 'तत्' तेन मन्त्रपाठेन प्रोक्षणजनित मपराध मेताभ्यः प्रोक्षणीभ्यो 'निह्नुते' अपनयति"-इति ढ।

कात्यायनेन— "प्रोक्षिता स्थेति तासां प्रोक्षणम्"-इति[१]। तैत्तिरीयश्रुतिस्तु एतन्मन्त्रपठन मेवासां प्रोक्षणं मेने। यदाह— "प्रोक्षिता स्थेत्याह तेनापः प्रोक्षिताः"-इति[२]।

एवं संस्कृताभिरद्भिर्हविषः प्रोक्षणं विधत्ते— "अथ हविरिति। वक्ष्यमाणस्य हविःप्रोक्षणविधिशेषार्थवादस्य सर्वप्रोक्षणविधिसाधारण्य माह— "एको वा इति। 'बन्धुः' अनुकूलं स्तावक मर्थवादवाक्यम्[३], सर्वस्यापि प्रोक्षणस्य 'एको वै' एकविध मेव; अतस्तत् सर्वत्र योजनीय मिति भावः। किम्पुनस्तदित्याह— "मेध्य मिति ॥ १० ॥

विहितं प्रोक्षण मनूद्य मन्त्रं विधत्ते— "स प्रोक्षतीति। "अग्नय इति[४]। मन्त्रे देवतादेशनस्य प्रयोजन माह— " तद्यस्या इति।

उक्त मन्यत्रातिदिशति— "एव मिति। 'एवम्' अनेनैव प्रकारेण 'यस्यै' देवतायै हविर्गृहीतं भवति, तत्तन्नाम चतुर्थ्यन्तेनादिशेदित्यर्थः ॥ ११ ॥

हविःप्रोक्षणानन्तरं यज्ञपात्राणां समन्त्रकं प्रोक्षणं विधत्ते— "अथेति। "दैव्यायेति[५]। देवाना मिदं 'दैव्यम्'। "देवाद्यञञौ"-इति प्राग्दीव्यतीयो यञ्[६]। 'शुन्धति' शोधयति। 'शुन्ध विशुद्धौ"-इति[७] धातुः। 'देवयज्यायै'-इति, देवयजनरूपाय कर्मणे

१— का० श्रौ० २. ३. ३६। २— ब्रा० ३. २. ५ ( सं० १. १. ५. ३. )।
३— ३९ पृ० १६ पं०, ५७ पृ० १६ पं० द्रष्टव्यम्।
४— वा० सं० १. १३. ४, ५। का० श्रौ० सू० २. ३. ३७, ३८।
५— वा० सं० १. १३. ६। का० श्रौ० सू० २. ३. ३९।
६— पा० सू० ४. १. ८५. वा० २. ( पा० सू० ४. १. ८३. )।
७— धा० प० ७४।

इत्यर्थः । मन्त्रस्यापरभाग मनूद्य व्याचष्टे—"यद्व इति । 'तक्षा' वर्द्धकिः, 'अन्यः' तद्व्यतिरिक्तो वृषलादिः ; स सर्वोऽप्यशुद्धत्वात् 'अमेध्यः' । तत्संस्पर्शकृतं यत् 'तत्' 'एषां' पात्राणां दोषजातम्, 'एतत्' अनेन प्रोक्षणेनैषां निवर्त्तयन्, 'तत्' सर्वं पात्रं यज्ञार्हं करोति । अत ईदृग्विधस्यार्थस्य प्रत्यायनाय यद्व इति मन्त्रभागः पठितव्य इत्युपसंहरति—"तस्मादिति । 'पराजघ्नुः'-इति, पराहतं दूषितं चक्रुरित्यर्थः ॥ १२ ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथभाष्ये प्रथमाध्याये
तृतीयं ब्राह्मणम्[१] ॥

---

१— अस्मिन् तृतीये ब्राह्मणे पूर्वं पवित्रच्छेदनं विहितम् । तत्तु सम-प्रमाणयोः साग्रयोः अनन्तर्गर्भयोः अच्छरिताग्रयोः कुशयोः क्षुरिका-स्थानीयैः कुशैरेव छेदनम् । ततोऽग्निहोत्रहवण्यां स्वय मेवोदक मासिच्य ताभ्यां पवित्राभ्या मपा मुत्पवन मुत्क्षेपणम् । तयोः पवित्रयोस्तत्रैवाग्नि-होत्रहवण्यां स्थापनम् । ततः सव्यहस्ते अग्निहोत्रहवणीं निधाय सव्य-हस्तस्था मेव संलग्ना मेव दक्षिणहस्तेन 'उदिङ्गनम्' ऊर्द्ध्वं चालनम् । तत-स्ताभिरेव स्रुकस्थाभिः तासा मेव प्रोक्षणम् । ततो 'ब्रह्मन् हविः प्रोक्षामि ?' इति ब्रह्माणं पृच्छति ; ब्रह्मा च 'प्रोक्ष यज्ञं धेहीत्यन्त मुपां-स्तूक्त्वा 'ओं प्रोक्ष'-इत्युच्चैः प्रसौति (२. २. १०.) । ततोऽध्वर्युः अग्निहोत्र-हवण्याः उदक मादाय शूर्पस्थे हविषी प्रोक्षति । तत्र अग्नये प्रथमम्, अग्नीषोमाभ्यां द्वितीयम् । ततः सर्वाणि सहैव प्रोक्षति । एतच्च प्रोक्षणं बहूदक मादाय कार्यम् । प्रतिपात्रं प्रोक्षणावृत्तिपक्षस्तु युक्ततर इति याज्ञिकदेवः । ततोऽसञ्चरे प्रणीताहवनीययोरन्तराले, गार्हपत्याहवनीय-योरन्तराले वा प्रोक्षणीनां निधानं कार्य मिति दिक् ।

अथ कृष्णाजिन मादत्ते। यज्ञस्यैव सर्वत्वाय यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचार तस्य देवा अनुविद्य त्वच मेवावच्छायाजह्रुः* ॥ १ ॥

तस्य यानि शुक्लानि च कृष्णानि च लोमानि। तान्यृचां च साम्नां च रूपं यानि शुक्लानि तानि साम्नाᳲ रूपं यानि कृष्णानि तान्यृचां यदि वेतरथा यान्येव कृष्णानि तानि साम्नाᳲ रूपं यानि शुक्लानि तान्यृचां यान्येव बभ्रूणीव हरीणि तानि यजुषाᳲ रूपम् ॥ २ ॥

सैषा त्रयी विद्या यज्ञः। तस्या एतच्छिल्प मेष वर्णस्तद्यत् कृष्णाजिनं भवति यज्ञस्यैव सर्वत्वाय तस्मात् कृष्णाजिन मधि दीक्षन्ते यज्ञस्यैव सर्वत्वाय तस्मादध्यवहनन मधिपेषणं भवत्यस्कन्नᳲ हविरसदिति तद्यदेवात्र तण्डुलो वा पिष्टं वा स्कन्दात् तद्यज्ञे यज्ञः प्रतितिष्ठादिति तस्मादध्यवहनन मधिपेषणं भवति ॥ ३ ॥

अथ कृष्णाजिन मादत्ते शर्मासीति चर्म वा ऽएतत् कृष्णस्य तदस्य तन्मानुषᳲ शर्म देवत्रा तस्मादाह शर्मासीति तदवधूनोत्यवधूतᳲ रक्षोऽवधूता अरा-

---

* 'मेवावत्सायाजह्रुः'—इति च (M.)।

तय इति तस्मान्नाष्ट्रा एवैतद्रक्षाꣳस्यतोऽपहन्त्यतिनुत्येव प्राचाण्यवधूनोति यदस्यामेध्य मभूत् तदस्यैतदवधूनोति ॥ ४* ॥

तत्प्रतीचीनग्रीव मुपस्तृणाति। अदित्यास्त्वगसि प्रति त्वादितिर्वेत्त्विति तीयं वै पृथिव्यदितिस्तस्या ऽअस्यै त्वग्यदिद मस्या मधि किञ्च तस्मादाहादित्यास्त्वगसीति प्रति त्वादितिर्वेत्त्विति प्रति हि स्वः सञ्जानीते तत्सञ्ज्ञा मेवैतत् कृष्णाजिनाय च वदति नेदन्योन्यꣳ हिनसात ऽइत्यभिनिहित मेव सव्येन पाणिना भवति ॥ ५ ॥

अथ दक्षिणेनोलूखल माहरति। नेदिह पुरा नाष्ट्रा रक्षाꣳस्या विशानिति ब्राह्मणो हि रक्षसा मपहन्ता तस्मादभिनिहित मेव सव्येन पाणिना भवति ॥ ६ ॥

अथोलूखलं निदधाति। अद्रिरसि वानस्पत्यो ग्रावासि पृथुबुध्न इति वा तद्यथैवादः सोमꣳ राजानं ग्रावभिरभिषुण्वन्त्येव मेवैतदुलूखलमुसलाभ्यां दृषदुपलाभ्याꣳ हविर्यज्ञ मभिषुणोत्यद्रय इति वै तेषा मेकं नाम तस्मादाहाद्रिरसीति वानस्पत्य इति वान-

* एतदुत्तरं सर्वेष्वेव मूलपुस्तकेषु "अर्द्धप्रपाठकः"—इति लेखो विद्यते।

स्पत्यो ह्येष ग्रावासि पृथुबुध्न इति ग्रावा ह्येषु पृथुबुध्नो ह्येष प्रति त्वादित्यास्त्वग्वेत्त्विति तत्कृष्णा मेवैतत् कृष्णाजिनाय च व्वदति नेद्न्योन्यॅं हिनसात ऽइति* ॥ ७ ॥

अथ हविरावपति। अग्नेस्तनूरसि व्वाचो व्विसर्जन मिति यज्ञो हि तेनाग्नेस्तनूर्व्वाचो व्विसर्जन मिति यां वा ऽअमूॅं हविर्ग्रहीष्यन् वाचं युच्छत्युत्र वै तां व्विसृजते तद्युदेता मुत्र व्वाचं व्विसृजत ऽएष हि यज्ञ उलूखले प्रत्युष्ठादेष हि प्रासारि तस्मादाह व्वाचो व्विसर्जन मिति ॥ ८ ॥

स यदिदं पुरा मानुषीं व्वाचं व्याहरेत्। तत्रो व्वैष्णवी मृचं वा यजुर्वा जपेद् यज्ञो वै व्विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिर्देववीतये त्वा गृह्णामीति देवानवदित्यु हि हविर्गृह्यते† ॥ ९ ॥

अथ मुसल मादत्ते। बृहद्ग्रावासि व्वानस्पत्य इति बृहद्ग्रावा ह्येषु व्वानस्पत्यो ह्येष तदुवदधाति स इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्वेति स इदं देवेभ्यो हविः सॅंस्कुरु साधुसॅंस्कृतॅं सॅंस्कुवित्येवैतदाह ॥ १० ॥

---

* 'ऽइति'–इति ख, च। † 'हविर्गृह्यते'–इति ख, च।

अथ हविष्कृत मुद्वादयति। हुविष्कृदेहि हुविष्कृ-
देह्रीति व्वाग्वै हविष्कृद् व्वाच मेवैतद् व्विसृजते
व्वागु वै यज्ञस्तद्यज्ञ मेवैतत् पुनरुपह्वयते ॥ ११ ॥

तानि वा ऽएतानि। चत्वारि व्वाच एहीति ब्राह्मण-
स्या गह्या द्रवेति वैश्यस्य च राजन्यबन्धोश्चाधावेति
शूद्रस्य स युदेव ब्राह्मणस्य तदाह्वैतद्धि यज्ञियतम
मेतद् ह वै व्वाचः शान्ततमं यदेहीति तस्मादेहीत्येव
ब्रूयात् ॥ १२ ॥

तद्ध स्मैतत्पुरा। जायैव हविष्कृदुपोत्तिष्ठति तदिद
मप्येतर्हि य एव कश्चोपोत्तिष्ठति स यत्रैष हविष्कृत
मुद्वादयति तदेको दृषदुपले समाहन्ति तद्यदेता मुच
व्वाचं प्रत्युद्वादयन्ति ॥ १३ ॥

मनोर्ह वा ऽऋषभ आस। तस्मिन्नसुरघ्नी सप-
त्नघ्नी व्वाक् प्रविष्टा स तस्य ह स्म श्वसथाद्रवथादसुर-
रक्षसानि मृद्यमानानि यन्ति ते हासुराः समूदिरे
पापं वत* नोऽयु मृषभः सचते कथं न्विमं दभ्नुया-
मेति किलाताकुली ऽइति हासुरब्रह्मावासतुः ॥ १४ ॥

तौ होचतुः। श्रद्धादेवो वै मनुरावं नु व्वेदावेति

* 'बत'–इति क, ख।

तौ हागत्योचतुर्मनो याजयाव त्वेति केनेत्यनेनर्षभेणेति तथेति तस्यालब्धस्य सा व्वागपचक्राम ॥ १५ ॥

सा मनोरेव जायां मनावीं प्रविवेश । तस्यै ह स्म यत्र व्वदन्त्यै शृण्वन्ति ततो ह स्मैवासुररक्षसानि मृद्यमानानि यन्ति ते हासुराः समूदिर ऽइतो वै नः पापीयः सचते भूयो हि मानुषी व्वाग् वदतीति किलाताकुली हैवोचतुः श्रद्धादेवो वै मनुराव ं न्वेव व्वेदावेति तौ हागत्योचतुर्मनो याजयाव त्वेति केनेत्यनयैव जाययेति तथेति तस्या ऽआलब्धायै सा व्वागपचक्राम ॥ १६ ॥

सा यज्ञ मेव यज्ञपात्राणि प्रविवेश । ततो हैनां न शेकतुर्निर्हन्तुꣳ सैषासुरघ्नी सपत्नघ्नी* व्वागुद्वदति स यस्य हैव ं विदुष एता मद्य व्वाचं प्रत्युद्वादयन्ति पापीयाꣳसो हैवास्य सपत्ना भवन्ति ॥ १७ ॥

स समाहन्ति । कुक्कुटोऽसि मधुजिह्व इति मधुजिह्वो वै स देवेभ्य आसीद् विषजिह्वो ऽसुरेभ्यः स यो देवेभ्य आसीः स न एधीत्येवैतदाहेष मूर्ज मावद त्वया व्वयꣳ सङ्घातꣳ सङ्घातं जेष्मेति नात्र तिरोहित मिवास्ति† ॥ १८ ॥

---

* नास्त्येतत् पदं च-पुस्तके । † 'मिवास्ति'—इति ख ।

अथ शूर्प्प मादत्ते। व्वर्षवृद्ध मसीति व्वर्षवृद्धꣳ ह्येतद् यदि नडानां यदि व्वेणूनां यदीषीकाणां व्वर्ष मु ह्येवैता व्वर्द्धयति ॥ १९ ॥

अथ हविर्निर्व्वपति। प्रति त्वा व्वर्षवृद्धं व्वेत्त्विति वर्षवृद्धा उ ह्येवैते यदि व्रीहयो यदि यवा व्वर्ष मु ह्येवैतान् वर्द्धयति* तत्सञ्ज्ञा मेवैतच्छूर्पाय च व्वदति नेदन्योऽन्यꣳ हिनसात ऽइति ॥ २० ॥

अथ निष्पुनाति। परापूतꣳ रक्षः परापूता ऽअरातय ऽइत्यथ तुषान् प्रहन्त्यपहतꣳ रक्ष ऽइति तन्नाष्ट्रा ऽएवैतद्रक्षाꣳस्यतोऽपहन्ति† ॥ २१ ॥

अथापविनक्ति। व्वायुर्वो व्विविनक्त्वित्ययं वै व्वायुर्योऽयं पवत ऽएष वा ऽइदꣳ सर्व्वं व्विविनक्ति यदिदं किञ्च व्विविच्यते तदेनानेष एवैतद्विविनक्ति स यदैत ऽएतत्प्राप्नुवन्ति यत्रैनानध्यपविनक्ति ॥ २२ ॥

अथानुमन्त्रयते। देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण‡ पाणिना सुप्रतिगृहीता ऽअसन्नित्यथ त्रिः फलीकरोति त्रिवृद्धि यज्ञः ॥ २३ ॥

---

* 'वर्द्धयति'—इति ख, ग।

† '०स्यपहन्ति'—इति क। पूर्वमप्येवं गतम् ३५ पृ० १० पं०।

‡ 'प्रतिगृह्णात्वच्छिद्रेण'—इति ग।

तद्धैके देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्व मिति फली-कुर्वन्ति । तदु तथा न कुर्यादादिष्टं वा ऽएतद्देवतायै हविर्भवत्यथैतद्दैश्वदेवं करोति यदाह देवेभ्यः शुन्धध्व मिति तत्समदं करोति तस्मादु तूष्णी मेव फली-कुर्यात् ॥ २४ ॥ ४ ॥

( प्रथमप्रपाठके प्रथमाध्याये वा चतुर्थं )

ब्राह्मणम् ॥ १ । ४* ॥

अथ निरुप्तव्रीहियवावहननार्थं[1] कृष्णाजिनादानं विधत्ते—"अथेति । 'सर्वत्वाय'-इति, अवयवकार्त्स्न्यायेत्यर्थः । कथं कृष्णा-जिनादानेन यज्ञस्य कार्त्स्न्यं मित्येतदुपपादयितुं पुरावृत्त मुदा-हरति—"यज्ञो हेत्यादिना । 'कृष्णो भूत्वा'-इति, कृष्णमृगस्य रूप मास्थाय । 'अवच्छाय'-इति, अपच्छिद्येत्यर्थः । "छो छेदने"-इत्य-स्मात्[2] क्त्वो ल्यप्[3] ॥ १ ॥

तस्य कृष्णाजिनस्य यज्ञरूपतां वक्तुं त्रयीमयत्वं प्रतिपादयति—"तस्य यानीत्यादिना । शुक्लकृष्णलोम्नां सङ्गहात् ऋक्सामात्मकता मुक्त्वा विभज्यापि दर्शयति—"तस्य यानि शुक्लानीति । 'यदि वा'-इति पक्षान्तरकथनम् । 'इतरथा' उक्तवैपरीत्येनेत्यर्थः । तदेव

---

* सायणाचार्यमतेऽत्रैव प्रथमपरिच्छेदसमाप्तिः, एतच्छतपथीयपरिच्छे-दस्य चाध्याय इति व्यपदेशः सर्वत्र ; मूलग्रन्थे तु सर्वत्रैव प्रपाठक इति, न चात्र प्रथमप्रपाठकसमाप्तिः । एव मुत्तरत्रापि ।

१— 'निरुप्तव्रीह्यवहननाय'-इति ड । २— दि० प० ४० ।

३— पा० सू० ७. १. ३७ ।

दर्शयति—"यान्येवेति। एवं कृष्णाजिनस्य ऋक्सामरूपता मुक्ता यजूरूपत्व मप्याह— "यान्येव बभ्रूणीति। पिङ्गलवर्णानीव यानि लोमानि 'हरीणि'[1] हरितवर्णानि, तानि यजुषां रूपम्[2] ॥ २ ॥

अस्त्वेवं ऋक्सामयजुरात्मकत्वं कृष्णाजिनस्य, तदादानेन कथं यज्ञस्य कार्त्स्न्य मित्यत आह—"सैषेति। यैषा ऋग्यजुस्सामात्मिका त्रयीविद्या, सैव यज्ञः; तत्साध्यत्वात्। य एष शुक्लकृष्णादिलक्षणो वर्णः, एतत्तस्याः त्रय्या उक्तरीत्या 'शिल्पं' चित्रं रूपम्। अत एवोपरिष्टात् सोमप्रकरणे मन्त्र आम्नास्यते— "ऋक्सामयोः शिल्पे स्थ"-इति[3]। एव मपक्रान्तस्य यज्ञरूपस्य कृष्णाजिनस्य आदानं यज्ञस्य कार्त्स्न्याय भवतीत्यर्थः। "कृष्णाजिन मधि दीक्षन्ते"-इति। यस्मा-देवं कृष्णाजिनं त्रयीरूपत्वेन यज्ञरूपम्, 'तस्मात्' सोमाङ्गभूता दीक्षापि कृष्णाजिनस्योपरि क्रियते। कृष्णाजिनादानस्य प्रयोजना-न्तर माह—"तस्मादधीति। 'अधि' उपर्यर्थः। कृष्णाजिनस्योपरि अवहननं पेषणञ्च कर्त्तव्यम्। तथा सति तद्धविः 'अस्कन्नं' स्कन्न-रहितम् 'असद्' भवेदिति। बुद्ध्या यदि भूम्या मेवावहननादिकं कुर्यात्, तदा तस्य हविषो ऽवश्यं स्कन्नदोष इत्यभिप्रायः। एतदेव विवृणोति—"तद्यदेवेति। अवहननसमये तण्डुलो वा पेषणसमये पिष्टं वात्र कृष्णाजिने 'यदि' नाम 'स्कन्दात्' स्कन्देत्। लेट्यडा-गमः[4]। 'तत्' तदा यज्ञे एव यज्ञः प्रतितिष्ठेत्; न तु तस्य स्कन्नदोष इत्यर्थः ॥ ३ ॥

---

१— 'हरीणीव'-इति आदिषु। २— तै० सं० १. २. २. ७।
३— वा० सं० ४. ९. १। ४— पा० सू० ३. ४. ९४।

उक्त मादान मनूद्य मन्त्रं विधत्ते[१]— "अथेति। मन्त्रगत-'शर्म'-शब्दस्य तात्पर्य माह— "चर्म वा इति। यत् 'एतत्' कृष्णस्य 'चर्म' अजिनम्, 'अस्य' यज्ञस्यैतदजिनं 'तत्' लोकप्रसिद्धचर्मशब्दाभिधेयं सत् 'मानुषं' मनुष्यसम्बन्धि रूपं भवति। एतदेव 'देवत्रा' देवेषु, सुखकरत्वात् शर्मेत्युच्यते। अतो वैदिके कर्मणि 'शर्मासीति' तत्स्तुतिरुपपन्ना। देवत्रेति "देवमनुष्येत्यादिना सप्तम्यर्थे त्रा-प्रत्ययः[२]।

उपात्तस्य कृष्णाजिनस्यावधूननं विधत्ते— "तदवधूनोतीति[३]। "तस्माद्वा इति। 'तत्' तेन समन्त्रकावधूननेन। गत मन्यत्[४]।

कृष्णाजिनवत् प्रसक्त मवधूननं पात्राणां निषेधति— "न त्वेवेति। न केवल मवधूननस्य रक्षोपहनन मेव प्रयोजनं किन्तु अयज्ञियविक्षेपोऽपीत्याह— "यज्ञस्येति। रक्षःप्रभृतिसम्पर्कात् यत् खलु 'अस्य' कृष्णाजिनस्य 'अमेध्यं' मेधानर्हं मयज्ञियरूप मभूत्, तदेवास्यैतेन मन्त्रेण 'अवधूनोति' निरस्यति ॥ ४ ॥

तस्य समन्त्रकं प्रकारविशिष्टं स्तरणं विधत्ते[५]— "तदिति। 'प्रतीचीना' प्रत्यग्दिशि स्थिता ग्रीवा यथा भवति तथा।

इयं वा इत्यादि। 'दितिः' खण्डनं न विद्यते अस्या इति[६] व्युत्पत्त्या अत्र मन्त्रगतादितिशब्देन इय मेव पृथिवी विवक्षिता;

१— वा॰ सं॰ १. १४. १। का॰ श्रौ॰ सू॰ २. ४. १।

२— पा॰ सू॰ ५. ४. ५६।

३— वा॰ सं॰ १. १४. २। का॰ श्रौ॰ सू॰ २. ४. २।

४— ४४ पृ॰ १ पं॰ द्रष्टव्यम्।

५— वा॰ सं॰ १. १४. ३। का॰ श्रौ॰ सू॰ २. ४. ३।

६— निघ॰ १. १. १४, निरु॰ ४. ४. १ द्रष्टव्यम्।

कथ मन्यदीया त्वगन्यस्य त्वग्भवतीत्याशङ्क्याह— "तस्या इति। 'अस्यां' भूम्याम् 'अधि' उपरिभागे 'यदिदं किञ्च' किमपि वस्त्ववस्थितम् 'तस्यै अस्यै' पृथिव्यै, सा 'त्वक्' कृष्णाजिन मप्युपर्यवस्थानात् तस्या एव त्वगिति स्तुतिः। मन्त्रस्य द्वितीयं भाग मनूद्य व्याचष्टे— "प्रतीति। 'स्वः' स्वकीयो जनः आत्मीयं जनं प्रति 'सञ्जानीते' परस्परानुकूल्यं प्रकटयितुं सञ्ज्ञां करोति। 'तत्' तथा कृष्णाजिनभूम्योः समानज्ञानता मेवायं मन्त्रभागो वदति। सञ्ज्ञानस्य प्रयोजन माह— "नेदिति। परस्परानुकूल्यज्ञानाभावे ह्यन्य मन्यो हिंस्यात्। नैव तादृशी अन्योऽन्यहिंसा भवत्वित्यनेनाभिप्रायेणेत्यर्थः।

उलूखलनिधानपर्यन्तं कृष्णाजिनस्यानुत्सर्जनं विधत्ते— "अभिनिहित मिति ॥५॥

सव्येन स्पृशतो ऽभिप्राय माह— "नेदिति। यदि ह्युलूखलनिधानात् प्रागेव कृष्णाजिनस्पर्शं मुत्सृजेत्, 'तत्' तदा 'इह' अस्मिन् कृष्णाजिने राक्षसादिकं प्रविशेत्, तन्मैव भवत्विति। 'विशान्'-इति विशतेर्लेटि बहुवचने आडागमः[1] झेरन्तादेशे[2] "इतश्च लोपः"-इतीकारलोपः[3]।

ननु स्पर्शेऽपि उलूखलनिधानात् पुरा कुतो रक्षांसि न प्रविशन्ति तत्राह— "ब्राह्मण इति। 'हि' यस्माद् ब्राह्मणो रक्षसा मपहन्ता मन्त्रप्रभावेन, तस्मात् तेन स्पृश्यमानं राक्षसादिर्न प्रवेष्टुं शक्नोतीति भावः ॥ ६ ॥

---

१— पा० सू० ३. ४. ९४। २— पा० सू० ७. १. ३।
३— पा० सू० ३. ४. ९७।

अथ समन्त्रक मुलूखलस्य निधानं विधत्ते— "अथेति । "ग्रावासीति[१] वैकल्पिको मन्त्रः । अत एव सूत्रकृतोक्तम्— "निदधात्युलूखल मद्रिरसि ग्रावासीति वा"–इति[२] । तत्राद्यमन्त्रस्याभिप्राय माह— "तद्यथेति । 'अदः'-शब्दो लुप्तविभक्तिकः ; 'अमुत्र' सोमयागे यथा यागसाधनस्य सोमस्य ग्रावभिरभिषवः, एव मेवोलूखलादिभिर्हविर्यज्ञसाधनं व्रीह्यादिकम् 'अभिषुणोति' वितुषीकरणादिभिः संस्करोति । कुत एतदित्यत आह— "अद्रय इतीति । 'तेषां' सोमाभिषवहेतूनां ग्राव्णां, पुरोडाशनिष्पत्तिहेतूना मुलूखलादीनां च, अद्रय इत्येतत् साधारणं नाम ; अतो नामसाम्यात् उलूखलादिसाध्य मवहननादिकं ग्रावसाध्येन सोमाभिषवेण तुल्य मित्यर्थः । एवञ्च हे उलूखल ! त्वम् 'अद्रिरसि' सोमाभिषव[३]हेतुः । "ग्रावासीति ग्रावत्वारोपणं मन्त्रेण विवक्षित मिति व्याख्यातं भवति ।

वनस्पतिविकारत्वं प्रसिद्ध मिति वानस्पत्यपदतात्पर्य्य माह— "वानस्पत्यो हीति ।

वैकल्पिकं मन्त्र मनूद्य व्याचष्टे— "ग्रावासीति[४] । "पृथुबुध्नो हीति । उलूखलस्य विस्तीर्णमूलत्वं प्रसिद्ध मित्यर्थः ।

---

१— वा० सं० १. १४. ५ ।

२ – "सव्यास्रून्ये निद०—०ग्रावासीति वा"–इति का० श्रौ० २. ४. ४ ।
" 'सव्यास्रून्ये' सव्यहस्तेनास्रून्ये अमुक्ते कृष्णाजिने"–इति तत्र वृत्तिः ।

३— "कृष्णाजिन ( ८० पृ० ३ पं० )"–इत्यारभ्य "सोमाभिषव"–इत्यन्तो ( ८१ पृ० ११ पं० ) ग्रन्थः ठ-ड-पुस्तकाभ्या मन्यत्र नोपलभ्यते, वेवरमहोदयेन च न दृष्ट इति गम्यते तल्लेखत एव ।

४— वा० सं० १. १४. ५ । का० श्रौ० सू० २. ४. ४ ।

प्रतित्वेत्यादिकं मन्त्रद्वयशेष मनूद्य[1] व्याचष्टे— "तदिति। कृष्णाजिनोलूखलयोरन्योन्यं हिंसा मा भूदिति पृथिवीकृष्णाजिनयोरिवैकमत्यप्रार्थनं वदतीत्यर्थः॥ ७ ॥

उलूखले हविषः प्रक्षेपणं समन्त्रकं[2] विधत्ते— "अथेति। "यज्ञो हीति। यस्माद् 'यज्ञः' यज्ञसाधनं हविः, अतोऽग्नेः शरीर मेव तदित्यर्थः।

"यां वा इत्यादि। हविर्ग्रहणार्थम् "अथ वाचं यच्छति"-इति या वाग् नियमिता[3], 'अत्र' अस्मिन्समये ता मेव अनेन मन्त्रभागेन 'विसृजते'। (अतः[4]) विसृज्यते अनेनेति 'विसर्जनं' हविरिति मन्त्रपाठस्यार्थः[5]।

एतद्वाग्विसर्जन मुपपादयति— "तद्यदिति। 'एतां वाच मत्र विसृजते'-इति यत्, तद्युक्तम्; 'हि' यस्माद् एषः 'यज्ञः' यज्ञसाधनं हविः, उलूखले 'प्रत्यष्ठात्' प्रतिष्ठित मभूत्; यस्माच्च 'एषः' यज्ञः 'प्रासारि' प्रसारितो विस्तारितोऽभूत्; अतो हेतोर्वाग्यमनस्य प्रयोजनं नास्तीति तद्विसर्जन मेव युक्त मित्यभिप्रायः॥ ८ ॥

हविरावपनात् पूर्वं[6] लौकिकवाग्व्यवहारे प्रायश्चित्त माह— "स यदीति। 'वैष्णवी मृचम्'-इति, "इदं विष्णुर्विचक्रमे"-इत्यादिकाम्[7]। यजुरपि वैष्णव मेव जप्यम्। 'देववीतये'-इतिमन्त्रशेषस्य[8]

---

१— वा० सं० १. १४. ४। का० श्रौ० सू० २. ४. ५।
२— वा० सं० १. १५. १। का० श्रौ० सू० २. ४. ६।
३— ३५ पृ० ५ पं० द्रष्टव्यम्। ४— नास्त्येतत्पदं जादिषु।
५— 'मन्त्रपदस्यार्थः'-इति ड। ६— 'हविरावपने'-इति जादिषु।
७— वा० सं० ५. १५। ८— वा० सं० १. १५. १ मन्त्रांशस्येत्यर्थः।

अभिप्राय माह— "देवानवदितीति। यष्टव्यान् देवान् 'अवत्' अवतु, तर्पयत्विति। अनेनैवाभिप्रायेण हि हविर्गृह्यते, अतो 'देववीतये' देवानां तृप्तय इति[1] मन्त्रपदाभिप्रायः ॥ ९ ॥

समन्त्रकं मुसलादानं विधत्ते— "अथ मुसल मादत्त इति। "बृहद्ग्रावासीति[2]। सोमसंस्कारकग्रावत्‌वत् मुसलस्यापि हविस्संस्कारकत्वसाम्याद्ग्रावत्वम्, दीर्घत्वाच्च बृहत्त्व मिति 'बृहद्ग्राव'-शब्दाभिधेयता मुसलस्य (प्रसिद्धेत्यर्थः[3])।

(तस्य मुसलस्य[4]) उलूखले प्रक्षेपणं समन्त्रकं विधत्ते[5]— "तदवदधातीति। "शमीष्व"-इतिपदस्यार्थ माह— 'हविः संस्कुरु'-इति। 'शमीष्व' शमय; दोषोपशमनेन हविः संस्कुर्वित्यभिप्रायः। "सुशमि शमीष्वेति मन्त्रस्याभिप्राय माह—'साधु संस्कृतम्'-इति ॥ १० ॥

हविष्कृत[6] आह्वानं विधत्ते— "अथ हविष्कृत मिति। 'उद्वादयति' उच्चैराह्वयतीत्यर्थः। हविष्कृदेहीतिमन्त्रस्य द्विः पाठो मन्त्रकाण्डे द्विराम्नानात्[7]। हविष्कृच्छब्दार्थ माह— "वाग्वै हवि-

---

१— "पितृयज्ञे 'पितृवीतये'-इत्यूहः"-इति याज्ञिकदेवः।

२— वा० सं० १. १५. २। का० श्रौ० सू० २. ४. ११।

३— नास्त्येषोऽंशः जादिषु।  ४— नास्ति चैषोऽंशो जादिषु।

५— वा० सं० १. १५. ३। का० श्रौ० सू० २. ४. १२। "पितृयज्ञे 'स इदं पितृभ्यः'-इत्यूहः"-इति या० दे०।

६— 'हविःकृत'-इति ट। एव मुत्तरत्रापीह सर्वत्र।

७— मन्त्रकाण्डे=संहिताग्रन्थे। वस्तुतस्तत्र त्रिराम्नानं श्रूयते, न तु द्विः। "त्रिवार मुक्त मर्थं देवा मन्यन्त इति त्रिराम्नानम्"-इति च मही०। कात्यायनेनाप्युक्तं 'त्रिराह्वयति'-इति (२. ४. १३.)।

ष्कृदिति । निर्वापादौ मन्त्ररूपाया वाचो हविष्करणसाधनत्वाद् वागेव हविष्कृत्; अतस्तां मनेनैव मन्त्रेण आह्वयन् हविर्ग्रहणकाले नियमितां वाचं विसृजेत् । अत एव कात्यायनेन "अग्नेस्तनूरसीति[1] मन्त्रेण, "हविष्कृदेहीति[2] मन्त्रेण वा वाग्विसर्जनं कर्त्तव्य मिति विकल्पेन सूचितम्—"अग्नेस्तनूरसीति वाचं विसृजते, + + +, हविष्कृता वेति[3] ।

"वाग् वा इति । या वाक् हविष्कृत्, सैव खलु यज्ञः, तस्य तन्निर्वर्त्यत्वात् । 'तत्' तथा सति 'एतत्' एतेन वागात्मिकाया हविष्कृत आह्वानेन यज्ञ मेव पुनराह्वयते ॥ ११ ॥

ब्राह्मणक्षत्रादिवर्णभेदोपजीवनेन हविष्कृदाह्वानमन्त्रे विशेष माह—"तानि वा एतानि चत्वारीति । 'वाचः' सम्बन्धीनि 'चत्वारि' रूपाणि । कानि पुनस्तानीत्याह—"एहीत्यादि । वैश्यस्य "हविष्कृदागहीति मन्त्रः । 'राजन्यबन्धोः'[4] क्षत्रियजातेः "हविष्कृदाद्रवेति[5] । आपस्तम्बस्तु राजन्यवैश्ययोर्वैपरीत्येनासूत्रयत्—"हविष्कृदेहीति ब्राह्मणस्य, हविष्कृदागहीति राजन्यस्य, हविष्कृदाद्रवेति वैश्यस्य, हविष्कृदाधावेति शूद्रस्य"-इति[6] ।

एवं पूर्वपक्षतया ब्राह्मणक्षत्रादिवर्णप्रयुक्तं विशेष मुपन्यस्य स्वमतं निगमयति—"स यदेव ब्राह्मणस्येति । "एतद्धीति । 'एहीति' एतत् खलु 'यज्ञियतमम्' अतिशयेन यज्ञार्हम्; "इड एह्यदित एही-

---

१, २— वा० सं० १. १५. १, ४ । ३— का० श्रौ० सू० २. ४. ७, ९ ।
४— 'राजन्यस्य'—इति आदिषु । ५— एते तु मन्त्रा इहैवाम्नाताः ।
६— श्रौ० सू० १. १९. ९ ।

त्यादौ[1] अन्यत्रापि यज्ञे प्रयोगात्। "शान्ततमम्"-इति, आगच्छा-द्रवेत्यादेः सकाशात् एहीत्येतदेवातिशयेन शान्तम्; प्रार्थना-वाक्येष्वेहीत्येव सर्वत्र प्रयोगादागच्छादीनां च निकृष्टप्रेषणरूपत्वा-च्चेत्यर्थः ॥ १२ ॥

कोऽसौ हविष्कृदिति तं दर्शयति— "तद्धेति। पुरा खल्वेत-दाह्वानानन्तरं 'जायैव हविष्कृदुपोत्तिष्ठति', अतस्तदानीं जायैव हविष्कृदभूत्। 'तत्' तस्मादिदानीं मप्येतदाह्वानानन्तरं जाया वा, अन्यः 'कोऽपि' ऋत्विग्वा उपोत्तिष्ठति, स एव हविष्कृदित्यर्थः। तदप्युक्तं सूत्रकृता— "हविष्कृदेहीति त्रिराह्वयत्यतः पत्न्यन्यन्यो वा"-इति[2]।

हविष्कृदाह्वानसमये दृषदुपलयोः शम्यया समाहननं विधत्ते— "स यत्रैष हविष्कृत मुद्वादयति"-इति। समाहननजनितां वाचं प्रशंसितु मनुवदति— "तद्यदिति ॥ १३ ॥

अथ यज्ञायुधध्वनेः[3] यज्ञविघातकासुरराक्षसादिनिवृत्तिहेतुता मुपपादयितु मितिहास मुदाहरति— "मनोर्ह वा इति। पुरा खलु मनोः सम्बन्धिन ऋषभस्य प्रश्वासाद् रवाच्च यज्ञविघातिनो-ऽसुरराक्षसादयः बाध्यमाना गताः। ते च परस्परं संवादं कृतवन्तः। 'ह'-इति खेदे। 'अयम्' ऋषभः 'नः' अस्माकं 'पापं' निकर्षं

---

१— वा० सं० १.२९.१।

२— का० श्रौ० सू० २.४.१४। "अन्य इत्याग्नीध्रः"-इति या० दे०।

३— 'समाहननजनिताया वाचः'-इति ए।

पराजयं 'सचते' प्रापयति, कथं खलु इमं हिंस्यामेति। एवं संवादे कृते 'किलातस्य आकुलिस्य' द्वावसुरपुरोहितौ बभूवतुः ॥ १४ ॥

तयोर्व्यापार माह— "तौ होचतुरिति। श्रद्धैव देवो यस्य सः 'श्रद्धादेवः', श्रद्धालुरित्यर्थः[१]। 'आवं नु वेदाव'-इति, आवा मस्य मनोरभिप्रायं जानावहे इत्यर्थः। "प्रथमायास्च द्विवचने भाषायाम्"-इति[२] भाषाया मेवात्त्वविधानात् आव मिति ह्रस्वोच्चारणम्। "विद ज्ञाने[३]"-इत्यस्मात् लोटि उत्तमद्विवचने वेदावेति रूपम्। "मनो याजयावेत्यादि। हे मनो! त्वा मनेन ऋषभेण याजयावेति। श्रद्धालुं मनुं विप्रलभ्य[४] त मृषभ मवधिष्टा मिति तात्पर्यार्थः ॥ १५ ॥

"सा मनोरेव जायां मनावीं प्रविवेश"-इति। मनोर्भार्या 'मनावी'। "मनोरौ वा"-इत्यौत्त्वम्[५], पुंयोगलक्षणो ङीप्[६]। "तस्यै ह स्म यत्र वदन्त्यै शृण्वन्ति"-इति। 'तस्यै' षष्ठ्यर्थे चतुर्थी[७]। 'यत्र' यस्मिन् देशे वदन्त्यास्तस्याः शब्दं शृण्वन्ति, 'ततः' तस्मात् स्थानात्[८] असुरादयः बाधिताः पलायन्त इत्यर्थः। "पापीयः सचत इति। तिर्यग्जातेः ऋषभस्य[९] ध्वनेः श्रवणात् प्रागस्माकं निकर्षमात्रं प्राप्तम्, इदानीं तु मनुष्यशरीरात् निर्गतवाचः श्रवणात्

---

१— 'श्रद्धालुरिति यावत्'-इति ठ, ड। २— पा० सू० ७. २. ८८।
३— ग्रदा० प० ५७। ४— 'विप्रलभ्य'-इति ठ।
५— पा० सू० ४. १. ३८। ६— पा० सू० ४. १. ४८।
७— पा० सू० २. ३. ६२. वा० १। ८— 'वदनात्'-इति जादिषु।
९— 'वृषभस्य'-इति ठ।

अस्माकम् 'पापीयः' अतिशयितं पापं, पराजयः प्राप्नोति । इम मेवातिशय मुपपादयति— "भूयो हि मानुषी वाग्वदति"-इति । तिर्यग्वाचः सकाशात् 'भूयः' बहुतरं हि मानुषी वाग्वदति; वर्णपदवाक्यात्मना कस्यचिदर्थस्य प्रतिपादकत्वात् । एतदाकर्ण्य तावेव पुरोहितावस्यापि प्रतिक्रियाञ्चक्रतुरित्याह— "किलाताकुली हैवोचतुरिति ॥ १६ ॥

"सा यज्ञ मेवेति । असुरघ्नी या वाक्, क्रमेण मनोः ऋषभे जायायां चासीत्, 'सा' तयोर्हननान्निराश्रया सती यज्ञ मेव आश्रयितुं 'यज्ञपात्राणि प्रविवेश' । 'ततः' तेभ्यो यज्ञपात्रेभ्यः सकाशात् 'एनां' वाचं 'निर्हन्तुं' निर्गमयितुं न शेकतुः असुरपुरोहितौ । 'सैषा' यज्ञपात्रगता असुरघ्नी वाक्, शम्यया[1] समाहननादुच्छति । एवं यज्ञपात्रध्वनेरसुरराक्षसादिनिवृत्तिहेतुतां प्रतिपादिता मुपसंहरति— "स यस्येति ॥ १७ ॥

विहितं समाहनन मनूद्य मन्त्रं विधत्ते— "समाहन्ति कुक्कुटोसीति[2] । मधुजिह्वइतिविशेषणस्याभिप्राय माह— "स यो देवेभ्य इति । 'सः' खलु ऋषभः देवानां 'मधुजिह्वः' मधुरवाक् आसीत्; जयहेतुत्वात् । असुरेभ्यस्तु 'विषजिह्वः' विषवागासीत्; पराजय-

---

१— "गदया सदृशी बाहुपरिमिता शम्या"—इति सा० (तै० सं० १.२.१२)
"शम्या द्वात्रिंशदङ्गुलप्रमाणा वारणी"—इति या० दे० (का०५.३.१९)।

२— वा० सं० १. १६. १ । "असुराः क क इति तान् हन्तु मिच्छन् योऽटति, सर्वत्र सञ्चरति स कुक्कुटः । यद्वा कुकं कुत्सितशब्दं कुटति तनोतीति कुक्कुटः । यद्वा कुक्कुटाख्यपक्षिवत् ध्वनिविशेष मसुरभीत्यर्थं तनोतीति कुक्कुट इत्युपचर्यते"—इति तद्भाष्ये मही० ।

हेतुत्वात् । एवञ्च मधुजिह्व इति विशेषणस्याय मभिप्रायः—देवानां यादृश आसीः[1], अतोऽस्माकं[2] तादृशो भवेति ।

इष मूर्ज मावहेत्यादिमन्त्रशेषस्य स्पष्टार्थता माह—"नात्रेति । 'अत्र' अस्मिन्मन्त्रे किमपि तिरोहितं[3] नैवास्ति, अतो न व्याख्यायत इत्यर्थः ॥ १८ ॥

अथ समन्त्रकं[4] शूर्पाधानं[5] विधत्ते—"अथेति । शूर्पस्य वर्षवृद्धत्व मुपपादयति—"यदि नडानां यदि वेणूनां यदीषीकाणाम्"-इति । जलप्रान्ते वर्त्तमानास्तृणविशेषा नडाः । नलादीनि द्रव्याणि शूर्पस्योपादानभूतानि । 'वर्षम्' उदकवृष्टिरेव हि 'एताः' नडाद्याः ओषधीर्वर्द्धयति, अतो वर्षवृद्धत्वात् शूर्पस्य 'वर्षवृद्ध मसि'-इति व्यपदेशः ॥ १९ ॥

तस्मिन् शूर्पेऽवहतानां व्रीहीनां प्रक्षेपं विधत्ते—"अथ हविर्निर्वपतीति । 'निर्वपति' उलूखलान्निष्कृष्य (अवहतान् व्रीहीन्[6]) प्रक्षिपतीत्यर्थः । हे हविः! वर्षवृद्धं त्वा शूर्पं प्रति 'वेत्तु' आत्मन उपर्यवस्थानं जानात्विति मन्त्रार्थः[7] ।

हविषो वर्षवृद्धत्व मुपपादयति—"वर्षवृद्धा उ हीति । व्रीहि-

१— 'आसीत्'-इति जादिषु ।

२— 'नोऽस्माकं'-इति ठ, 'सोऽस्माकं'-इति ड ।

३— १७ पृ० १९ पं०, ५ टीप्पनी द्रष्टव्या ।

४— वा० सं० १. १६. २ । का० श्रौ० सू० २. ४. १६ ।

५— 'स्रूर्पादानं'-इति ठ । इह सर्वत्रैव स्रूर्पशब्दो दन्त्यादिः ड-पुस्तके ।

६— ट-पुस्तकादन्यत्र नैते पदे विद्येते ।

७— वा० सं० १. १६. ३ । का० श्रौ० सू० २. ४. १७ ।

यवयोरन्यतरो हि हविष उपादानम्; "व्रीहिभिर्यजेत"-"यवै-र्यजेत"-इति विकल्पेन[1] यागसाधनत्वश्रवणात्। व्रीहियवाद्योषध-यस्तु वृष्ट्या वर्द्धन्त इति प्रसिद्ध मित्यर्थः।

"प्रति त्वा"-इत्यस्याभिप्राय माह— "तत्सञ्ज्ञा मेवैतच्छूर्पाय"-इति। शूर्पहविषोरन्योन्यं हिंसा मा भवेदिति। 'शूर्पाय च'-इति चशब्दात् हविषे च। 'सञ्ज्ञां' सञ्ज्ञानम्। समानज्ञानत्व मेव मन्त्रो वदतीत्यर्थः ॥ २० ॥

तुषाणा मपनयनं समन्त्रकं[2] विधत्ते— "अथ निष्पुनातीति। तुषाणां राक्षसभागत्वात् तैस्तन्निरसनं विधत्ते— "अथ तुषान् प्रह-न्त्यपहतम्"-इति[3]। 'प्रहन्ति' प्रक्षिपन्ति।

एतन्मन्त्रद्वयस्य प्रयोजन माह— "तन्नाष्ट्रा एवैतदिति ॥ २१ ॥

वितुषीकृतानां तण्डुलानां व्रीहीणाञ्च पृथक्करणं विधत्ते— "अथापविनक्तीति। मन्त्र[4]गतवायुशब्दस्यार्थ माह— "अयं वै वायु-र्योऽयं पवते"-इति। तस्य विवेचनसामर्थ्य मुपपादयति— "एष वा इदꣳ सर्वं विविनक्ति"-इति। 'तत्' तस्मात् सर्वस्यास्य विवेचक-त्वात् 'एष एव' वायुः 'एनान्' व्रीहींस्तण्डुलांश्च 'विविनक्ति' पृथक् करोति, अतस्तत्प्रार्थनं युक्त मित्यर्थः। "स यदेत इति। 'यदा'

---

१— म०सं० २अ० १४, १५ श्लोकौ द्रष्टव्यौ। "एकार्थास्तु विकल्पे-रन्"-इत्यादीनि जैमिनिसूत्राणि (१२.३.१०-१५.) चेहेक्षितव्यानि।

२— वा० सं० १. १६. ४। का० श्रौ० सू० २. ४. १८।

३— वा० सं० १. १६. ५। का० श्रौ० सू० २. ४. १९।

४— वा० सं० १. १६. ६। का० श्रौ० सू० २. ४. २०।

यस्मिन् काले 'एते' व्रीहितण्डुलाः 'एतद्' विवेचनं प्राप्नुवन्ति, तस्मिन् समये 'यत्र' यस्यां पात्र्याम् 'अधि' उपरि एनान् अपविनक्ति ॥ २२ ॥

तत्पात्रीगतस्य हविषः समन्त्रक मनुमन्त्रणं विधत्ते[१]— "अथानुमन्त्रयते"-इति। यथा चैते तण्डुलाः 'अच्छिद्रेण' छिद्ररहितेन पाणिना 'सुप्रतिगृहीताः' शोभनं प्रतिगृहीता भवेयुः, तथा प्रतिगृह्णामिति मन्त्रार्थः[२]।

फलीकरणं विधत्ते[३]— "अथेति। तस्य त्रित्वं प्रशंसति— "त्रिवृद्धि यज्ञः"-इति। सवनत्रयादिरूपेण त्रिरावृत्तो हि यज्ञः; अतस्तदनुसारेण फलीकरण मपि त्रिः[४] कर्त्तव्य मित्यर्थः ॥ २३ ॥

तस्मिन् फलीकरणे शाखान्तरीयं मन्त्रविधि मनुवदति— "तद्वैके देवेभ्य[५] इति। तं निषेधयति— "तदु तथा न कुर्यात्"-इति। एतदुपपादयति— "आदिष्टं वा एतद्देवतायै"-इति। "अग्नये जुष्टं गृह्णामि"-इत्येव मग्न्यादिदेवतायै आदिष्ट मेवैतद्धविर्भवति। अत्र तु "देवेभ्यः शुन्धध्वम्"-इत्यनेन मन्त्रेण[६] 'एतद्' हविः 'वैश्वदेवम्' विश्वदेवसम्बन्धि करोति; अतो देवानां[७] एतन्मन्त्रप्रयोगे 'समदं' परस्परं कलहं करोति। अतो वैश्वदेवत्वापादकं मन्त्रं

---

१— 'तत्पात्रीगतं हविरनुमन्त्रयते'-इत्येव ट।

२— वा० सं० १. १६. ७। का० श्रौ० सू० २. ४. २१।

३— का० श्रौ० सू० २. ४. २२। ४— 'त्रिष्कृत्वः'-इति ट।

५— "वीप्सा प्रतिपर्यायं सकृन्मन्त्रप्राप्त्यर्था"-इति या० दे०।

६— शाखान्तरीय एष मन्त्रः। ७— 'देवतानां'-इति आदिषु।

परित्यज्य तूष्णी मेव फलीकर्त्तव्य मिति निगमयति—"तस्माद् तूष्णी मेव फलीकुर्यात्[1]"—इति ॥ २४ ॥ ४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे प्रथमाध्याये चतुर्थं ब्राह्मणम्[2],

प्रथमाध्यायस्य समाप्तः ॥ १ ॥

---

१— "शैत्याच्छादकदोषापनयनं फलीकरणम्"—इति तै० सं० १.१.५ भाष्येऽप्य मेव सायणः । इह तु कणनिष्काशनं फलीकरणम् ।

२— चतुर्थेऽस्मिन् ब्राह्मणे विहितान्येतानि—कृष्णाजिनस्यादानम्, अवधूननम्, तत उदकोपस्पर्शनम्, तत उत्तरेण गार्हपत्य मुत्करदेशे वा प्रत्यग्ग्रीवस्य कृष्णाजिनस्यास्तरणम्, तदुपरि उलूखलस्थापनम्, तत्र पूर्वस्थापितस्य हविर्द्वयस्य शूर्पेणावपनम् । ततोऽध्वर्युयजमानयोर्वाग्विसर्गः । ततोऽध्वर्युः मुसलं गृहीत्वा उलूखलमध्ये प्रवेश्य कण्डनं कुर्वन्नेव तत्काण्डनाय यजमानपत्नी मग्नीधं वा त्रिराह्वयति । तस्मिन्नेव काले आग्नीध्रः दृषदं मदं कुट्टयति उपलं चैकवारम् । वितुषीभूतेषु व्रीहिषु अध्वर्युः शूर्पं गृहीत्वा, कण्डितं तद्धविस्तस्मादुलूखलान्निष्काश्य तूष्णीं शूर्पे निदधाति । ततः शूर्पेण 'निष्पुनाति' तुषान् पृथक् करोति, पुनरप उपस्पृश्य तण्डुलानकण्डितांश्च 'विविनक्ति' पृथक् पृथक् करोति । ततः कण्डितान् निधाय अकण्डितान् पुनरुलूखलमध्ये प्रवेश्य कण्डनं कृत्वा पुनर्निष्काश्य शूर्पे कृत्वा तुषान् पृथक् कुर्यात्, निक्षिपेच्च सर्वान् तान् तुषानुत्करदेशे । पुनरप उपस्पृश्य शूर्पस्थान्ता-

[अथ द्वितीयाध्याये प्रथमं ब्राह्मणम्]

स वै कपालान्येवान्यतर ऽउपदधाति । दृषदुपले ऽअन्यतरस्तद्वा ऽएतदुभयꣳ सह क्रियते तद्यदेतदुभयꣳ सह क्रियते* ॥ १ ॥

शिरो ह वा ऽएतद्यज्ञस्य यत् पुरोडाशः । स यान्येवेमानि शीर्ष्णः कपालान्येतान्येवास्य कपालानि मस्तिष्क ऽएव पिष्टानि तद्वा ऽएतदेक मङ्ग मेकꣳ सह करवाव समानं करवावेति तस्माद्वा ऽएतदुभयꣳ सह क्रियते ॥ २ ॥

स यः कपालान्युपदधाति । स ऽउपवेष मादत्ते धृष्टिरसीति स यदेनेनाग्निं धृष्णिवोपचरति तेन धृष्टिरथ यदेनेन यज्ञ ऽउपालभत ऽउपेव वा ऽएनेनैतद्वेवेष्टि तस्मादुपवेषो नाम ॥ ३ ॥

तेन प्राचोऽङ्गारानुदूहति । अपाग्ने अग्नि मामादं जहि निष्क्रव्यादꣳ सेधेत्ययं वा ऽआमाद्येनेदं मनुष्याः पक्वाश्नन्त्यथ येन पुरुषं दहन्ति स क्रव्यादेतावेवैतदुभावतोऽपहन्ति ॥ ४ ॥

---

स्तण्डुलान् पात्र्यां प्रक्षिप्याभिमन्त्रयते ; तण्डुलाननामिकाग्रेण स्पृशन् विलोकयन् वा मन्त्रं पठतीत्यर्थः । ततस्त्रिः फलीकरणम् ; त्रिःकण्डनेन सूक्ष्मकणिकाभ्यो वियोज्योज्ज्वलान् करोतीत्यर्थः ।

* तद्यदित्याद्यन्तिमांशो ग-पुस्तके नास्ति ।

अथाङ्गार मास्कौति। आ देवयजं वहेति यो देवयाट् तस्मिन् हवीꣳषि श्रपयाम तस्मिन् यज्ञं तनवामहा ऽइति तस्माद्वा ऽआस्कौति ॥ ५ ॥

तं मध्यमेन कपालेनाभ्युपदधाति। देवा ह वै यज्ञं तन्वानास्ते ऽसुररक्षसेभ्य आसङ्गाद् बिभयाञ्चक्रुर्नेन्नोऽधस्तान्नाष्ट्रा रक्षाꣳस्युपोत्तिष्ठानित्यग्निर्हि* रक्षसामपहन्ता तस्मादेव मुपदधाति तद्युदेषु एव भवति नान्यु एष हि यजुष्कृतो मेध्यस्तस्मान् मध्यमेन कपालेनाभ्युपदधाति ॥ ६ ॥

स उपदधाति। ध्रुव मसि पृथिवीं दृꣳहेति पृथिव्या ऽएव रूपेणैतदेव दृꣳहत्येतेनैव† द्विषन्तं भ्रातृव्य मवबाधते ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधायेति‡ बह्वी वै यजुःष्वाशीस्तद् ब्रह्म च क्षत्रं चाशास्त ऽउभे वीर्ये सजातवनीति भूमा वै सजातास्तद्भूमान माशास्त ऽउपदधामि भ्रातृव्यस्य वधायेति§ यदि नाभिचरेद् यद्यु अभिचरेदमुष्य वधायेति¶ ब्रूयादभिनिहित मेव सव्यस्य पाणेरङ्गुल्या भवति ॥ ७ ॥

---

* 'न्नित्यग्निर्हि'—इति ख। † '०त्येनेनैव'—इति ग।

‡, §, ¶ एषु स्थानेषु 'बधायेति'—इति पवर्गीयादिपाठः घ-पुस्तके।

अथाङ्गार मास्कौति । नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानिति ब्राह्मणो हि रक्षसा मपहन्ता तस्मादभिनिहित मेव सव्यस्य पाणेरङ्गुल्या भवति ॥ ८ ॥

अथाङ्गार मध्यूहति । अग्ने ब्रह्म गृभ्णीष्वेति नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानित्यग्निर्हि रक्षसा मपहन्ता तस्मादेव* मध्यूहति ॥ ९ ॥

अथ यत्पश्चात् तदुपदधाति । धरुण मस्यन्तरिक्षं दृꣳहेत्यन्तरिक्षस्यैव रूपेणैतदेव दृꣳहत्येतेनैव द्विषन्तं भ्रातृव्य मवबाधते ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य व्वधायेति† ॥ १० ॥

अथ यत्पुरस्तात् तदुपदधाति । धर्त्रं मसि दिवं दृꣳहेति दिव एव रूपेणैतदेव दृꣳहत्येतेनैव द्विषन्तं भ्रातृव्य मवबाधते ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य व्वधायेति‡ ॥ ११ ॥

अथ यद्दक्षिणतस्तदुपदधाति । व्विश्वाभ्यस्त्वाशाभ्य उपदधामीति । स यदिमांल्लोꣳकानति चतुर्थ मस्ति वा न वा तेनैवैतद् द्विषन्तं भ्रातृव्य मवबाधते ऽनद्धा वै तद् यदिमांल्लो¶कानति चतुर्थ मस्ति वा न वानद्धो

---

* 'तस्मादेन'—इति च ।  †, ‡ 'बधायेति'—इति च ।

§, ¶. एतदुभयत्रैव 'यदिमाल्लो'—इति निरनुनासिकपाठो ग-पुस्तके ।

तद्यद्दिश्वा आशास्तस्मादाह विश्वाभ्यस्त्वाशाभ्य उपदधामीति तूष्णीं वैवेतराणि* कपालान्युपदधाति चित स्थोर्द्ध्वचित इति वा ॥ १२ ॥

अथाङ्गारैरभ्यूहति। भृगूणा मङ्गिरसां तपसा तप्यध्व मित्येतद्वै तेजिष्ठं तेजो यद् भृग्वङ्गिरसाꣳ सुतस्तान्यसन्निति तस्मादेव† मभ्यूहति‡ ॥ १३ ॥

अथ यो दृषदुपले उपदधाति। स कृष्णाजिन मादत्ते शर्म्मासीति तदवधूनोत्यवधूतꣳ रक्षो ऽवधूता अरातय इति सोऽसावेव बन्धुस्तत्§ प्रतीचीनग्रीव मुपस्तृणात्यदित्यास्त्वगसि प्रति त्वादितिर्व्वेत्त्विति सोऽसावेव बन्धुः ॥ १४ ॥

अथ दृषद मुपदधाति। धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्त्विति धिषणा हि पर्वती हि प्रति त्वादित्यास्त्वग्वेत्त्विति तत् सञ्ज्ञा मेवैतत् कृष्णाजिनाय च व्वदति नेदन्योऽन्यꣳ हिनसात¶ ऽइतीय मेवैषा पृथिवी रूपेण‖ ॥ १५ ॥

अथ शम्या मुदीचीनाग्रा मुपदधाति। दिव स्कम्भ-

---

* 'वैवेतराणि'—इति च। † 'तस्मादेन'—इति च।

‡ 'मुध्यूहति'—इति क, 'मुभ्यूहति'—इति ख।

§ 'बन्धूस्तत्'—इति क। ¶ 'हिनसाव'—इति च।

‖ 'रूपेण'—इति ख, 'रूपेण'—इति— घ।

नीरसीत्यन्तरिक्ष मेव रूपेणान्तरिक्षेण ह्यीमे द्यावा-
पृथिवी व्विष्टब्धे तस्मादाह दिव स्कम्भनीरसीति* ॥१६॥

अथोपला मुपदधाति। धिषणासि पार्व्वतेयी प्रति
त्वा पर्वती व्वेत्त्विति कनीयसी ह्येषा दुहितेव भवति
तस्मादाह पार्वतेयीति प्रति त्वा पर्व्वती व्वेत्त्विति प्रति
हि स्वः सञ्जानीते तत सञ्ज्ञा मेवैतद् दृषदुपलाभ्यां
व्वदति नेदन्योऽन्यꣳ हिनसात† इति द्यौर्वैषा रूपेण
हनू ऽएव दृषदुपले जिह्वैव शम्या तस्माच्छम्यया स-
माहन्ति जिह्वया हि व्वदति‡ ॥ १७ ॥

अथ हविरधिवपति। धान्य मसि धिनुहि देवा-
निति धान्यꣳ हि देवान् धिनवदित्यु हि हवि-
र्ग्गृह्यते‡ ॥ १८ ॥

अथ पिनष्टि। प्राणाय त्वोदानाय त्वा व्यानाय त्वा
दीर्घा मनु प्रसिति मायुषे धा मिति प्रोहति देवो वः
सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना
चक्षुषे त्वेति ॥ १९ ॥ (शतम् १००¶) ॥

तद्यदेवं पिनष्टि। जीवं वै देवानाꣳ हविरमृत

---

* 'रसीति'—इति च।

† 'हिनसाव'—इति च।

‡ 'व्वदति'—इति ख।

§ 'हविर्ग्गृह्यते'—इवि ख, 'हविर्ग्गृह्यते'—इति च।

¶ "शतकण्डिकाः"—इति ख; का-ग-पुस्तकयोर्नास्त्येवैतत्।

| | | | |
|---|---|---|---|
| Maghāzi of Wāqidī, (Text) Fasc. 1–5 @ /6/ each ... | Rs. | 1 | 14 |
| Muntakhabu-t-Tawārīkh, (Text) Fasc. 1–15 @ /6/ each .. .. | | 5 | 10 |
| Muntakhabu-t-Tawārīkh, (English) Vol. I, Fasc. 1–7; and 2 Indexes Vol. II, Fasc. 1–5 and Index; Vol. III, Fasc. 1 @ /12/ each ... | | 12 | 0 |
| Muntakhabu-l-Lubāb, (Text) Fasc 1–19 @ /6/ each .. ... | | 7 | 2 |
| Ma'āsir-i-'Ālamgīrī, (Text), Fasc. 1–6 @ /6/ each ... ... | | 2 | 4 |
| Nukhbatu-l-Fikr, (Text) Fasc. 1 ... ... ... | | 0 | 6 |
| Nizāmī's Khiradnāmah-i-Iskandari, (Text) Fasc. 1-2 @ /12/ each | | 1 | 8 |
| Riyāzu-s-Salātīn, (Text) Fasc 1–5 @ /6/ each ... ... .. | | 1 | 14 |
| *Suyūty's Itqān on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc 7–10 @ 1/ each ... ... .. | | 4 | 0 |
| Tabaqāt-i-Nāsiri, (Text) Fasc. 1–5 @ /6/ each .. ... .. | | 1 | 14 |
| Ditto (English) Fasc. 1–14 @ /12/ each ... .. | | 10 | 8 |
| Ditto Index .. .. ... | | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni (Text) Fasc 1–7 @ /6/ each... | | 2 | 10 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Afif. (Text) Fasc. 1–6 @ /6/ each... | | 2 | 4 |
| Ten Ancient Arabic Poems, Fasc 1-2 @ 1/8/ each .. ... | | 3 | 0 |
| Wīs o Rāmīn (Text) Fasc 1–5 @ /6/ each . ... | | 1 | 14 |
| Zafarnamah, Vol I, Fasc 1–9, Vol II, Fasc. 1–8 @ /6/ each .. | | 6 | 6 |
| Tuzuk-i-Jahāngīrī, (Eng.) Fasc 1 .. ... ... ... | | 0 | 12 |

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | | |
|---|---|---|---|
| 1. | ASIATIC RESEARCHES. Vol VII, Vols XI and XVII, and Vols XIX and XX @ 10/ each .. | 50 | 0 |
| 2. | PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No., and from 1870 to date @ /8/ per No | | |
| 3. | JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12) 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), @ 1/8 per No. to Members and @ 2/ per No to Non-Members | | |
| | *N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.* | | |
| 4. | Centenary Review of the Researches of the Society from 1784–1883 ... | 3 | 0 |
| | General Cunningham's Archæological Survey Report for 1863–64 (Extra No., *J. A. S. B.*, 1864) .. .. | 2 | 0 |
| | A sketch of the Turki Language as spoken in Eastern Turkistan by R. B. Shaw (Extra No. *J. A. S. B.*, 1878) . . | 4 | 0 |
| | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J. A. S. B.*, 1868) . . ... | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J. A. S. B.*, 1875) .. ... .. ... | 4 | 0 |
| | Introduction to the Maithilī Language of North Bihār by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J. A. S. B.* 1882) ... ... ... ... ... | 4 | 0 |
| 5. | Anīs-ul-Musharrahīn .. ... ... ... ... | 3 | 0 |
| 6. | Catalogue of Fossil Vertebrata ... .. ... | 3 | 0 |
| 7. | Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion | 3 | 8 |
| 8. | Istilāhāt-us-Sufiyah, edited by Dr. A. Sprenger, 8vo. .. ... | 1 | 0 |
| 9. | Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... | 32 | 0 |
| 10. | Jawāmiu-l-'ilm ir-riyāzī, 168 pages with 17 plates, 4to. Part I ... | 2 | 0 |
| 11. | Khizānatu-l-'ilm ... ... ... | 4 | 0 |
| 12. | Mahābhārata, Vols. III and IV, @ 20/ each .. ... ... | 40 | 0 |
| 13. | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to, @ 6/ each ... ... | 18 | 0 |
| 14. | Sharaya-ool-Islām . .. ... ... ... | 4 | 0 |
| 15. | Tibetan Dictionary, by Csoma de Korös ... ... ... | 10 | 0 |
| 16. | Ditto Grammar " " ... ... ... | 8 | 0 |
| 17. | Kaçmīraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... | 3 | 0 |

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. 1–29 @ 1/ each ... ... | 29 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... | 5 | 0 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

16-1-1900.

**Books are supplied by V-P.P.**

| | | | |
|---|---|---|---|
| Nyayabindutīkā, (Text) ... ... ... ... | Rs. | 0 | 10 |
| Nyāya Kusumāñjali Prakarana (Text) Vol. I, Fasc. 1-6; Vol. II, Fasc. 1-3 @ /6/ each ... ... ... ... ... | | 3 | 6 |
| Padumawati Fasc. 1-3 @ 2/ ... ... ... ... | | 6 | 0 |
| Pariçista Parvan, (Text) Fasc. 1-5 @ /6/ each ... ... ... | | 1 | 14 |
| Prithivirāj Rāsa, (Text) Part II, Fasc. 1-5 @ /6/ each ... ... | | 1 | 14 |
| Ditto (English) Part II, Fasc. 1 ... ... ... | | 0 | 12 |
| Prākrta Laksanam, (Text) Fasc. 1 ... ... ... ... | | 1 | 8 |
| Parāçara Smrti, (Text) Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-5 @ /6/ each ... ... ... ... | | 7 | 2 |
| Parāçara, Institutes of (English) ... ... ... ... | | 0 | 12 |
| Prabandhacintāmani (English) Fasc. 1-3 @ /12/ each ... ... | | 2 | 4 |
| *Sāma Vēda Samhitā, (Text) Vols. I, Fasc. 5-10; II, 1-6; III, 1-7; IV, 1-6; V, 1-8, @ /6/ each Fasc. ... ... .. | | 12 | 6 |
| Sānkhya Sūtra Vrtti, (Text) Fasc. 1-4 @ /6/ each .. ... | | 1 | 8 |
| Ditto (English) Fasc. 1-3 @ /12/ each ... ... | | 2 | 4 |
| Suçruta Samhitā, (Eng.) Fasc. 1 @ /12/ ... ... ... | | 0 | 12 |
| *Taittereya Samhitā, (Text) Fasc. 12-45 @ /6/ each ... ... | | 12 | 12 |
| Tāndya Brāhmana, (Text) Fasc. 1-19 @ /6/ each ... ... | | 7 | 2 |
| Tattva Cintāmani, (Text) Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-9 @ /6/ each ... ... ... ... | | 13 | 8 |
| Trikānda-Mandanam, (Text) Fasc. 1-2 @ /6/ ... ... ... | | 0 | 12 |
| Tul'si Sat'sai, (Text) Fasc. 1-5 @ /6/ each ... .. ... | | 1 | 14 |
| Upamiti-bhava-prapañca-kathā (Text) Fasc. 1-2 @ /6/ each ... | | 0 | 12 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ /12/ ... ... | | 4 | 8 |
| Varāha Purāna, (Text) Fasc. 1-14 @ /6/ each ... ... .. | | 5 | 4 |
| *Vāyu Purāna, (Text) Vol. I, Fasc. 2-6; Vol. II, Fasc. 1-7, @ /6/ each ... ... ... ... ... ... | | 4 | 8 |
| Visnu Smrti, (Text) Fasc. 1-2 @ /6/ each ... ... ... | | 0 | 12 |
| Vivādaratnākara, (Text) Fasc. 1-7 @ /6/ each ... ... ... | | 2 | 10 |
| Vrhannāradiya Purāna, (Text) Fasc. 1-6 @ /6/ ... ... | | 2 | 4 |
| Vrhat Svayambhū Purāna, Fasc. 1-5 ... ... ... | | 1 | 14 |

*Tibetan Series.*

| | | | |
|---|---|---|---|
| Pag-Sam Thi S'in, Fasc. 1-4 @ 1/ each ... ... ... | | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-5, @ 1/ each ... ... ... ... ... | | 13 | 0 |
| Rtogs brjod dpag hkhri S'in (Tib. & Sans.) Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5 @ 1/ each ... ... ... ... | | 10 | 0 |

*Arabic and Persian Series.*

| | | | |
|---|---|---|---|
| 'Ālamgīrnāmah, with Index, (Text) Fasc. 1-13 @ /6/ each... ... | | 4 | 14 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1-2 @ /12/ ... ... | | 1 | 8 |
| Āin-i-Akbarī, (Text) Fasc. 1-22 @ 1/ each .. ... ... | | 22 | 0 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 1/12/ each ... ... ... ... | | 29 | 12 |
| Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/ each ... ... | | 37 | 0 |
| Ditto English Fasc, 1-5 @ 1/ each ... ... ... | | 5 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger ... ... ... | | 0 | 6 |
| Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /6/ each ... ... | | 7 | 2 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... ... | | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/ each ... ... ... ... ... ... | | 21 | 0 |
| Farhang-i-Rashīdī, (Text) Fasc. 1-14 @ 1/ each ... ... | | 14 | 0 |
| Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1-4 @ /12/ each ... ... ... ... ... ... | | 3 | 0 |
| Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1-9 @ /6/ each ... ... | | 3 | 6 |
| Ditto of Āzādī, (Text) Fasc. 1-4 @ /6/ each ... ... | | 1 | 8 |
| Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... | | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1-6 @ /12/ each ... ... | | 4 | 8 |
| Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /6/ each ... ... | | 1 | 2 |
| Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... ... | | 38 | 4 |
| Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. III, Fasc. 11-12; Index to Vol. II, Fasc. 10-12 @ /6/ each ... ... | | 13 | 2 |

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 973.



## ॥ शतपथब्राह्मणम् ॥

॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

## THE ÇATAPATHA BRĀHMAṆA

OF THE WHITE YAJURVEDA,

WITH THE

COMMENTARY OF SĀYAṆA ĀCĀRYA.

EDITED BY

ĀCĀRYA SATYAVRATA SĀMAS'RAMĪ.

VOL. I, FASCICULUS II.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1900.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.,

46, Great Russell Street, London, W. C., and Mr. Otto

Harrassowitz, Bookseller, Leipzig, Germany.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | | |
|---|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each ... | Rs. | 1 | 8 |
| *Agni Purāṇa, (Text) Fasc. 4–14 @ /6/ each ... | .. | 4 | 2 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5 and Vol. II, Fasc. 1–5 Vol. III, Fasc. 1–5 Vol. IV, Fasc. 1–5 @ /6/ ... ... | ... | 7 | [illegible] |
| Aṇu Bhāṣyam, (Text) Fasc. 1–5 @ /6/ each ... ... | ... | 1 | 1[illegible] |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... ... | ... | 0 | 1[illegible] |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1–6 @ /6/ each | ... | 2 | [illegible] |
| Açvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... ... | ... | | |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... | ... | 10 | 0 |
| *Bhāmatī, (Text) Fasc. 4–8 @ /6/ each ... ... | ... | 1 | 14 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1–2 ... ... ... | ... | 0 | 12 |
| Bṛhaddēvatā (Text) Fasc. 1–4 @ /6/ each ... ... | ... | 1 | 8 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1–6 @ /6/ each ... | ... | 2 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–2 @ 2/ each | .. | 4 | 0 |
| Çatapatha Brāhmaṇa, Fasc. 1–2 ... ... | ... | 0 | 12 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–10 @ /6/ each ... ... .. | ... | 19 | 14 |
| Çlokavartika, (English) Fasc. 1 ... ... ... | ... | 0 | 12 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 4–14 @ /6/ each | ... | 4 | 2 |
| Ditto Lāṭyāyana, (Text) Fasc. 1–9 @ /6/ each ... | ... | 3 | 6 |
| Ditto Çāṅkhāyana, (Text) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4, Vol. III, Fasc. 1–4 @ /6/ each ... | ... | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1–3 @ /6/ each ... ... | ... | 1 | 2 |
| Gadadhara Paddhati Kālasāra Vol I. Fasc. 1 ... ... | ... | 0 | 6 |
| Kāla Mādhava, (Text) Fasc. 1–4 @ /6/ each ... ... | ... | 1 | 8 |
| Kāla Viveka, Fasc. 1–4 ... ... ... | ... | 1 | 8 |
| Kātantra, (Text) Fasc. 1–6 @ /12/ each ... ... | ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1–14 @ /12/ each ... | ... | 10 | 8 |
| Kūrma Purāṇa, (Text) Fasc. 1–9 @ /6/ each ... ... | ... | 3 | 6 |
| Lalita-Vistara, (English) Fasc. 1–3 @ /12/ each ... | ... | 2 | 4 |
| Madana Pārijāta, (Text) Fasc. 1–11 @ /6/ each... ... | ... | 4 | 2 |
| Mahā-bhāṣya-pradīpōdyōta, (Text) Fasc. 1–7 @ /6/ each ... | ... | 2 | 10 |
| Manuṭikā Saṅgraha, (Text) Fasc. 1–4 @ /6/ each ... | ... | 1 | 8 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1–6 @ /12 each ... | ... | 4 | 8 |
| *Mīmāṁsā Darçana, (Text) Fasc. 7–19 @ /6/ each ... | ... | 4 | 14 |
| Nārada Smṛti, (Text) Fasc. 1–3 @ /6/ ... ... | ... | 1 | 2 |
| Nyāyavārtika, (Text) Fasc. 1–4 @ /6/ ... ... | ... | 1 | 8 |
| *Nirukta, (Text) Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each | ... | 5 | 4 |

ममृताना मुथैतदुलूखलमुसलाभ्यां दृषदुपलाभ्याꣳ हविर्यज्ञं घ्नन्ति ॥ २० ॥

स यदाह । प्राणाय त्वोदानाय त्वेति तत्प्राणोदानौ दधाति व्यानाय त्वेति तद्व्यानं दधाति दीर्घा मनु प्रसितिमायुषे धा मिति तदायुर्दधाति देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना सुप्रतिगृहीतान्यसन्निति चक्षुषे त्वेति तच्चक्षुर्दधात्ये-तानि वै जीवतो भवन्त्येव मु हैतज्जीव मेव देवानाꣳ हविर्भवत्यमृत ममृतानां तस्मादेवं पिनष्टि पिꣳषन्ति पिष्टान्यभीन्धते कपालानि ॥ २१ ॥

अथैक आज्यं निर्वपति । यद्वा ऽआदिष्टं देवतायै हविर्गृह्यते यावद्देवत्यं तद्भवति तदितरेण यजुषा गृह्णाति न वा ऽएतत् कस्यै चन देवतायै हविर्गृह्णन्नादिशति यदाज्यं तस्मादनिरुक्तेन यजुषा गृह्णाति महीनां पयोऽसीति मह्य इति ह वा एतासा मेकं* नाम यद् गवां तासां वा ऽएतत् पयो भवति तस्मादाह महीनां पयोऽसीत्येव मु हास्यैतत् खलु यजुषैव गृहीतं भवति तस्मादेवाह महीनां पयोऽसीति ॥ २२ ॥ ५ ॥

॥ इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् [२. १.] ॥

* "मेके"–इति च ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

एवं प्रथमेऽध्याये व्रतोपायनादि तण्डुलकरणान्तं प्रयोगजात मुक्तम्; अथ द्वितीये कपालोपधानादिरभिधीयते ।

तत्र कपालोपधानपेषणयोर्युगपदनुष्ठानं विधत्ते— "स वै कपालानीति । 'अन्यतरः' ऋत्विजां मध्ये एकः आग्नीध्रः[1], 'सः' कपालाना मुपधाता । 'अन्यतरः' अध्वर्युः, 'सः' पेषणार्थं दृषदुपले उपदध्यात् । उक्तं कर्त्तृभेद मुपपादयति— "तद्वा एतदुभयꣳ सह क्रियते"-इति । एककर्त्तृकत्वे हि पर्यायेणानुष्ठानं स्यात्, एतच्चोभयं सहानुष्ठेयम्; अतो विभिन्नावेव कर्त्तारौ युगपत् कुर्याता मित्यर्थः । एतत् सहानुष्ठान मुपपादयितु मनुवदति— "तद्यदिति ॥ १ ॥

उपपादयति[2]— "शिरो ह वा एतद् यज्ञस्य यत् पुरोडाश इति । पुरोडाशस्य प्रतिज्ञातं यज्ञशिरस्त्वं सम्पादयति— "स यान्येवेमानीति । "मस्तिष्क एवेति । शिरःकपालान्तर्गतं मांसं 'मस्तिष्कः' । "तद्वा एतदिति । 'तत्' एतत् कपालं मस्तिष्करूपं मिलितं सत् शिरस्सञ्ज्ञक मेक मङ्गं प्रसिद्धं लोके । तथात्रापि शिरःकपालमस्तिष्कसंस्तुतयोः कपालपिष्टयोः सह प्रयोगात् पुरोडाशात्मकस्य यज्ञशिरसः एकीकरणं सेत्स्यतीत्यभिप्रायः ॥ २ ॥

---

१— 'आग्नीध्रादिः'-इति ठ । २— 'तदुपपादयति'-इति ढ ।

तत्र कपालान्युपदधतः कृत्य माह— "स उपवेष[1] मादत्ते धृष्टिरसि"-इति[2]। अङ्गारविभजनार्थं काष्ठ मुपवेषः[3]। धृष्टिशब्दं निर्वक्ति— "स यदेनेनेति। 'धृष्णिग्व'-इति क्रियाविशेषणम्। "ञि धृषा प्रागल्भ्ये"-इत्यस्मात्[4] धृष्णोत्यनेनेति धृष्टिरिति करणे क्तिन्नित्यर्थः। अत एवैतदुपवेषस्य मन्त्रान्तरम्। तथा चान्यत्र श्रूयते— "धृष्टिरुपवेषः"-इति[5]। "अथेत्यादि उपवेषस्य निर्वचनम्[6]। अथ यज्ञे 'एनेन' काष्ठेन 'यत्' अङ्गारादिकम् 'उपालभते' प्राप्नोति। 'तत्' एतत् 'एनेन' उपवेषेण 'वेवेष्टीव'। "विषॢ व्याप्ता-वित्यस्मात्[7] करणसाधनो घञन्त उपवेषशब्दः॥ ३॥

अग्निगताशुद्धांशस्य निरसनं विधत्ते— "तेनेति। 'प्राचः'-इति विधेयविशेषणम्, प्राग्दिग्गतानित्यर्थः।

मन्त्र[8]गतयोरामात्क्रव्याच्छब्दयोर्विवक्षित मर्थ माह— "अयं वा इति। आम मपक्व मत्तीति 'आमात्', मनुष्याणा मोदन-पाकादिहेतुरग्निः; क्रव्यं पलल मत्तीति 'क्रव्यात्'-इति शव-दहनोऽग्निः[9]॥ ४॥

१— 'उपवेश'-इति तालव्योपधः जादिषु। एव मिहोत्तरत्रापि।

२— वा सं० १. १७. १। का० श्रौ० सू० २. ४. २५।

३— "पलाशशाखाया मूलदेशे छिन्न उपवेषः"-इति महीधरः। का० श्रौ० सू० २. ४. १५. द्रष्टव्यम्। ४— धा० प० २१।

५— का० श्रौ० २६. २. १०; ३. ६; ७. २८।

६— 'उपवेषनामनिर्वचनम्'-इति ठ, ड। ७— जु० उ० १३।

८— वा० सं० १. १७. २। का० श्रौ० सू० २. ४. २६।

६— 'शवदाहकोऽग्निः'-इति ठ, ड।

एव मयज्ञिय मग्निं मन्त्रेण निर्हृत्य[1] शुद्धादग्नेः पुरोडाशश्रप-णार्थ मङ्गाराहरणं विधत्ते— "अथेति । 'आस्कौति' विभजती-त्यर्थः । "स्कुञ् आप्रवणे[2]"-इति धातुः[3] । इत्थं कुर्वता मभिप्राय माह— "य इति । देवान् यजति इति 'देवयाट्', 'यः' अग्निः, तस्मिन् हविःश्रपणादिकं करवामहा इत्यनेनाभिप्रायेणेत्यर्थः ॥ ५ ॥

तस्मिन्नङ्गारे मध्यमकपालस्योपधानं विधत्ते— "त मिति । अङ्गारस्योपरि विहितं कपालोपधानं प्रशंसति— "देवा ह वा इति । "नेन्नः"-इति । 'न' अस्माकं हविषो भागेनैव[4] राक्षसादय उपोत्तिष्ठेयुरित्यनेनाभिप्रायेणाङ्गारस्योपरि कपालोपधानं कृतवन्त इत्यर्थः ।

एवं सत्युक्तभयनिवृत्ति माह— "अग्निहीति । "आ देवयजम्"-इतिमन्त्रेण[5] स्थापितस्यैवाङ्गारस्योपरि कपालोपधानं प्रशंसति— "तद्यदिति । यजुषा मन्त्रेण संस्कृतत्वादेष एव हि कपालोपधाने मुख्यः; नान्य इत्यर्थः ॥ ६ ॥

विहित मुपधान मनूद्य मन्त्रं विधत्ते— "स उपदधातीति । "पृथिवीं दृꣳहेति[6] । पृथिवीसम्बन्धश्रवणात् तत्सम्बन्धिरूपेणैतदेव कपालं दृढं करोति । दृढेन चैतेन कपालेन विद्वेषणं कुर्वञ्छत्रु मवबाधते ।

---

१— 'निर्हृत्य'-इति ठ, ड । २— 'आप्रवणे'-इति ढ ।
३— धा० ७० ६ । ४— 'हविषोऽधोभागेनैव'-इति ठ ।
५— वा० सं० १. १७. ३ । का० श्रौ० २. ४. २८ ।
६— वा० सं० १. १७. ४ । का० श्रौ० सू० २. ४. २९ ।

एतन्मन्त्रशेष मनूद्य व्याचष्टे— "ब्रह्मवनीति। "बह्वी वा इत्यादि। 'यजुष्षु' यजुर्मन्त्रेषु बहुविधा खलु 'आशीः' फलप्रार्थना, अतो बहुविधं ब्रह्मक्षत्रादिसम्भजन मनेन प्रतिपाद्यत इत्यर्थः।

मन्त्रगतयोर्ब्रह्मक्षत्रशब्दयोर्लक्षणया तद्वीर्यपरत्वं विवक्षित मिति व्याचष्टे— "उभे वीर्ये"-इति। "भूमा वा इति। समानं जायन्त इति 'सजाताः' ज्ञातयः। तेषु च बहुभावस्य दर्शनात् धर्मिवाचिना सजातशब्देन तद्धर्म्मो विवक्षित इत्यर्थः।

अभिचरतो विशेषं वक्तुम् उक्तं[1] नित्यपक्ष मनुवदति— "उपदधामि भ्रातृव्यस्येति। त मेव विशेषं दर्शयति— "यद्यु अभिचरेदिति। अभिचरणपक्षे 'भ्रातृव्यस्य वधाय'-इति स्थाने 'अमुष्य वधाय'-इति शत्रोर्नाम षष्ठ्यन्तं निर्द्दिश्य ब्रूयादित्यर्थः।

उपहितस्य कपालस्य उपर्य्यङ्गुल्या अभिनिधानं विधत्ते— "अभिनिहित मेव"-इति ॥ ७ ॥

दक्षिणहस्तेनान्यस्याङ्गारस्याहरणं विधत्ते— "अथेति। "नेद्धिहेत्यादि। यदि सव्यपाण्यङ्गुल्या अभिनिधानं न कुर्यात्, तदा 'इह' अस्मिन् कपाले उपर्य्यङ्गारनिधानात् पुरस्तादेव राक्षसाः प्रविशेयुः; नैव तथा स्यादिति अङ्गुल्या[2] अभिनिहित मेव भवेदित्यर्थः। तथा सत्युक्तदोषनिवृत्ति माह— "ब्राह्मणो हीति। अग्निः यथा दाहेन रक्षांसि हिनस्ति, एवं ब्राह्मणोऽपि मन्त्रसामर्थ्येन तेषां

---

१— नास्त्येतत् पदं जादिषु।

२— "राक्षसाः प्रविशेयुः; अतः कपालस्योपरि अङ्गाराध्यूहनपर्य्यन्तम् अङ्गुल्या"—इत्येवं विशेषपाठो ढ-पुस्तके।

हिंसकः; अतोऽङ्गाराध्यूहनपर्यन्त मङ्गुल्याभिनिहित मेव भवेदित्यर्थः ॥ ८ ॥

समन्त्रकं[1] कपालस्योपरि अङ्गाराध्यूहनं विधत्ते— "अथेति । "नेदिह पुरेति । 'पुरा' पुरोडाशाधिश्रयणात् प्रागित्यर्थः । अन्यत् पूर्ववत् ॥ ९ ॥

पाश्चात्यकपालस्योपधानं[2] विधत्ते— "अथेति । मध्यमकपालस्योपधानानन्तर्यम् 'अथ'-शब्दार्थः । अन्यत् सर्वं पूर्ववद्व्याख्येयम् ॥ १० ॥

मध्यमकपालात् पूर्वदेशे स्थाप्यस्य कपालस्योपधानं[3] विधत्ते— "अथ यदिति । "दिव एव रूपेण"-इति । दिवः सम्बन्धिना रूपेण 'एतत्' तृतीयं कपालं दृढीकरोतीत्यर्थः ॥ ११ ॥

दक्षिणभागस्थितस्य कपालस्योपधानं विधत्ते— "अथ यदिति । मन्त्रस्य तात्पर्य माह— "स यदित्यादिना । पूर्वं[4] हि त्रिभिरुपहितैः कपालैः पृथिव्यादिलोकत्रयसकाशाच्छत्रोर्बाधः प्रतिपादितः, इदानीन्तु 'इमान्' त्रील्लोकान् 'अति' अतिक्रम्य यत् 'चतुर्थं' स्थानम्, तदस्ति वा न वेति सन्दिग्ध मेव; लोकत्रयवत् प्रसिद्ध्यभावात् । अतो मन्त्रे लोकवाचिशब्दविशेषं परित्यज्य "विश्वाभ्यस्त्वाशाभ्य"-इति[5] सर्वशब्दपर्यायस्य विश्वशब्दस्य प्रयोगात् सन्दिग्ध-

---

१— वा० सं० १. १८. १ । का० श्रौ० सू० २. ४. ३० ।

२— तत्र मन्त्रः – वा० सं० १. १८. २ । का० श्रौ० सू० २. ४. ३१ ।

३ – तत्र मन्त्रः – वा० सं० १. १८. ३ । का० श्रौ० सू० २. ४. ३२ ।

४— 'पूर्वैः'–इति ङ–पुस्तकादन्यत्र ।

५— वा० सं० १. १८. ४ । का० श्रौ० सू० २. ४. ३३ ।

मानात्[1] सर्वस्मादेव स्थानात् 'द्विषन्तं' शत्रुं 'सः' यजमानः 'तेन' चतुर्थकपालोपधानेन बाधत इत्यर्थः ।

"विश्वाभ्यः"-इतिमन्त्रस्य लोकत्रयातिरिक्तपरत्व मुपपादयति— "अनद्धा वा इत्यादि । लोकत्रयातिवर्त्तिनश्चतुर्थस्य सद्भावोऽसद्भावश्च 'अनद्धा वै' अस्माक मप्रत्यक्ष एव; यद् 'विश्वा आशाः' सर्वा दिशः, तदप्यनद्धा 'अनद्धेव' अप्रत्यक्ष मेव; (लोकत्रयवत्प्रसिद्ध्यभावात्[2]।) अतोऽप्रत्यक्षदिग्वाचिना विश्वाभ्य आशाभ्य इति[3] पदद्वयेन लोकत्रयव्यतिरिक्तं सकल मेवाप्रत्यक्षं विवक्षित मित्यर्थः ।

एवं कपालचतुष्टयस्य मन्त्रेणोपधानं प्रतिपाद्य अवशिष्टकपालोपधाने पक्षद्वय माह— "तूष्णीं चैवेति ॥ १२ ॥

उपहितेषु कपालेष्वङ्गाराध्यूहनं विधत्ते— "अथेति । मन्त्रे[4] भृगूणा मङ्गिरसा मिति[5] तपसो यद् विशेषणं तद्व्याचष्टे— "एतद्वा इति । यद् 'भृग्वङ्गिरसां' महर्षीणां तपोविशेषजनितं तेजः, 'एतत्' खलु अग्न्यादितेजोऽन्तरात् 'तेजिष्ठं' तेजस्वितमम्, अतिशयेन दीप्तम् । तेजस्वि-शब्दादिष्ठनि "विन्मतोर्लुगिति[6] लुक् । एवं वदतो मन्त्रस्याभिप्राय माह— "सुतप्तानीति । एतान्युपहितानि

---

१— 'सन्दिग्धमानात्'-इति जादिषु ।

२— नैतद्वाक्यं ठ-पुस्तकादन्यत्र । ३— 'विश्वा आशा इति'-इति ठ ।

४— 'मन्त्रेषु'-इति जादिषु; ठ-पुस्तके तु नास्त्येवैतत् पदम् ।

५— वा० सं० १. १८. ६ । का० श्रौ० सू० २. ४. ३५ ।

६— पा० सू० ५. ३. ६५ ।

कपालानि भृग्वङ्गिरसां तपसा सुष्ठु अतिशयेन तप्तानि भवेयुरित्य-नेनाभिप्रायेणेत्यर्थः। 'असन्'-इत्यस्तेः पञ्चमलकारे[1] रूपम् ॥ १३ ॥

एवं सह्यानुष्ठेययोः कपालोपधान मभिधाय पेषणं विधातु मारभते— "अथेति। अवहननवत् पेषणस्यापि[2] कृष्णाजिनस्योपरि कर्त्तव्यता मभिप्रेत्य तदादानं विधत्ते[3]— "स कृष्णाजिन मिति। "सोऽसावेवेति। अवहननप्रकरणे कृष्णाजिनावधूननविधिशेषो यः प्रागाम्नातः— "तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहन्तीति[4], स एवाचाप्यनु-षज्य योजनीय इत्यतिदेशः।

अस्य कृष्णाजिनस्य स्तरणं विधत्ते— "तदिति। "इयं वै पृथि-व्यदितिः"-इत्यादिना[5] यत् प्रागाम्नात मेव मन्त्रव्याख्यानम्[6], तद-त्रातिदिशति— "सोऽसावेवेति ॥ १४ ॥

तस्य कृष्णाजिनस्योपरि दृषदः समन्त्रकम्[7] उपधानं विधत्ते— "अथेति। "धिषणा हीत्यादि। पेषणीयतण्डुलानां धारणाद् 'धिषणा', पर्वतावयवत्वात् 'पर्वती'-इति। एतदुभयं प्रसिद्ध मिति 'हि'-शब्दयोरर्थः। गत मन्यत्। "इय मेवेति। पार्थिवेन धारणा-त्मकेन रूपेण योगात् 'एषा' दृषत् इय मेव पृथिवीति स्तुतिः ॥ १५ ॥

अथ दृषदः पश्चाद्भागे शम्याया उपधानं विधत्ते[8]— "अथ शम्या

१— पा० सू० ३. ४. ७। २— १. ४. ४. (७१, ७६ पृ०) द्रष्टव्यम्।
३— तत्र मन्त्रः— वा० सं० १. १९. १। का० श्रौ० सू० २. ५. २।
४— ७२ पृ० १ पं० द्रष्टव्यम्। ५— ७२ पृ० ५ पं० द्रष्टव्यम्।
६— 'मेतन्मन्त्रव्याख्यानम्'—इति ठ।
७— वा० सं० १. १९. २। का० श्रौ० सू० २. ५. ३।
८— तत्र मन्त्रः— वा० सं० १. १९. ३।

मिति। 'उदीचीनम्' उदगवस्थित मग्रे यस्याः सा तथोक्ता। कात्यायनोऽप्याह स्म—"पश्चाच्छम्या मुपोहत्युदीचीं दिव इति"—इति[1]। शम्याया द्युलोकस्तम्भनहेतुत्वं वक्तु मन्तरिक्षरूपता माह—"अन्तरिक्ष मेवेति। द्यावापृथिव्यात्मना संस्तुतयोर्दृषदुपलयोर्मध्येऽवस्थानलक्षणेन रूपेण 'अन्तरिक्ष मेव' अन्तरिक्षलोकात्मिकैव 'शम्या', इमे च द्यावापृथिव्यौ अन्तरिक्षेण हि यस्माद् 'विष्टब्धे' विविध मधस्तादुपरिष्टाच्च धारिते, अतोऽन्तरिक्षात्मिका शम्यापि "दिवस्कम्भनीरसीति[2] स्तूयते ॥ १६ ॥

दृषद उपरि उपलायाः स्थापनं समन्त्रकं[3] विधत्ते— "अथेति। 'पार्वतेयी'-शब्दं व्याचष्टे— "कनीयसीत्यादिना। यस्मादेषोपला अतिशयेन दृषदः सकाशादल्पपरिमाणा, अतः 'एषा' दृषदः 'दुहितेव भवति'; दुहिता हि लोके मातुरल्पीयसी भवति। तस्मादेषा पर्वत्याः[4] पुत्री 'पार्वतेयी'-इति। "स्त्रीभ्यो ढक्"-इति[5] ढक्।

"प्रति त्वा पर्वती वेत्तु"-इतिमन्त्रशेषेण परस्परहिंसापरिहारार्थं दृषदुपलयोर्मित्रीकरण मर्थ इति व्याचष्टे— "प्रति हीति। उपर्यवस्थानलक्षणेन रूपेण 'एषा' उपला 'द्यौरेव' द्युलोकात्मिकैवेत्यर्थः। तदेको दृषदुपले समाहन्तीति[6] प्राक् यत् तयोः समाहननं विहितम्, तत्र शम्यायाः साधनत्वं प्रसङ्गादुपपादयति— "हनू एवेति।

---

१— का० श्रौ० सू० २. ५. ४ । २— वा० सं० १. १९. ३ ।

३— वा० सं० १. १९. ४ । का० श्रौ० सू० २. ५. ५ ।

४— 'पार्वत्याः'—इति ज । ५— पा० सू० ४. १. १२० ।

६— १. ४. १३ ( ७४ पृ० ११ पं० ) द्रष्टव्यम् ।

दृषदुपलयोरुभयत्रावस्थानादुलूखलम्, तन्मध्येऽवस्थानाच्छम्यायाः जिह्वात्वम्। यस्माच्च जिह्वया लोको वदति, तस्मात् जिह्वास्थानीयया शम्ययैव समाहननं कुर्यादित्यर्थः ॥ १७ ॥

अथ पेषणार्थं दृषद उपरि समन्त्रकं[1] तण्डुलप्रक्षेपं विधत्ते— "अथ हविरिति। मन्त्रगतधान्यशब्दस्याभिप्राय माह— "देवान् धिनवदिति। "धिवि प्रीणनार्थः"-इति[2] धातुः। यष्टव्यानग्न्यादिदेवान् 'धिनवत्' प्रीणयेदित्यनेनैवाभिप्रायेण हि हविर्गृह्यते; अतो धिनोति प्रीणयतीति 'धान्यम्'। यत एव मतो देवान् धिनुहीति मन्त्रार्थः ॥ १८ ॥

समन्त्रकं[3] पेषणं विधत्ते— "अथेति। 'पिनष्टि' सञ्चूर्णयति। "पिष्लृ सञ्चूर्णने"-इति[4] धातुः। प्रकर्षेण अनिति चेष्टत इति नासिकाभ्यां बहिर्निर्गच्छन् श्वासरूपो वायुः 'प्राणः'। 'उत्' ऊर्द्ध्वात् अधोदेशं प्रत्यनिति चेष्टत इति 'उदानः'; नासिकाभ्यां देहे पुनः प्रविशन् वायुः। अन्नपानादिरसं विविधं सर्वासु नाड़ीषु अनिति प्रेरयतीति 'व्यानः'; ऊर्द्ध्वावाङ्वृत्ति[5]विलक्षणो मध्यवृत्तिर्वायुः।

एतन्मन्त्रार्थ उत्तरमन्त्रसापेक्ष इति तदुभयं समुच्चित्य व्याख्यातुमुत्तरमन्त्रं विनियुङ्क्ते— "प्रोहति देवो व इति[6]। अनेन मन्त्रेण

---

१— वा० सं० १. २०. १। का० श्रौ० सू० २. ५. ६।

२— भ्वा० प० ५६३।

३— वा० सं० १. २०. २। का० श्रौ० सू० २. ५. ६।

४— रु० प० १४। ५— 'ऊर्द्ध्वाधोवृत्ति-'-इति ठ, ड।

६— वा० सं० १. २०. ३। का० श्रौ० सू० २. ५. ७।

कृष्णाजिने प्रक्षिपतीत्यर्थः । यत्तु प्रकारान्तरेण कात्यायनेन सूत्रप्रणयनं, तद्ब्राह्मणान्तरमूलम् । स ह्येवं सूत्रयामास— "पिनष्टि प्राणाय त्वेति प्रतिमन्त्रं, दीर्घा मिति कृष्णाजिने प्रोहति, चक्षुषे त्वेतीक्षत इति[1] ॥ १९ ॥

प्राणायेतिमन्त्रस्याभिप्राय माविष्कर्त्तुं मुक्तं पेषण मनुवदति— "तद्यदिति । 'अमृतानां' मरणरहितानां देवानां हविः 'जीवं'[2] प्राणधारणं युक्त मेव सत् 'अमृतम्' मरणसाधनं न भवति[3] । अथैवं सत्येतद्यज्ञसाधनं हविरवहननपेषणाभ्या मृत्विजो मारयन्ति ; तथा सति निर्जीवत्वात् तस्यामृतत्वसाधनत्वं न युक्त मिति भावः ॥ २० ॥

मन्त्रप्रयोगेणास्य परिहारं दर्शयति— "स यदाहेति । पेषणसमये "प्राणाय त्वेत्यादिमन्त्रं प्रयुञ्जानः प्राणादीनेव[4] पुनरस्मिन् हविषि स्थापयतीत्यर्थः । गत मन्यत् ।

"एतानि वै जीवत इत्यादि । 'एतानि' प्राणोदानधारणादीनि 'जीवतः' पुरुषस्य लिङ्गानि । 'एवम्' अनेन मन्त्रप्रयोगेण प्राणोदानादिस्थापने सति हविरपि सजीव मेवेति युक्तं तस्यामृतत्वसाधन मित्यभिप्रायः । "पिंषन्तीति । एवं समन्त्रक मध्वर्युणा पेषणे कृते सति यजमानपरिचारका अवशिष्टं सर्वं चूर्णीकुर्युः[5] ।

---

१— का०श्रौ०सू० २. ५. ७, ८, ९. एतद्ब्राह्मणनये तु आयुषे धा मित्यन्तः पेषणमन्त्रः, देवो व इत्यादिरेव प्रोक्षणमन्त्र इति विशेषः ।

२— 'जीवनं'—इति ड । ३— 'अमरणसाधनं'—इति ठ, ड, ढ ।

४— "मन्त्रप्रयोगेण तस्य निर्जीवत्वं परिहरन् प्राणादीनेव"—इति ढ ।

५— "दासी पिनष्टि पत्नी वा, अपि वा पत्न्यवहन्ति शूद्रा पिनष्टि"—इति आप० श्रौ० सू० १. २१. ८, ९ ।

तथा उपहितानि च कपालानि 'अभीन्धते' अङ्गारैः प्रदीप्तानि कुर्युरित्यर्थः ॥ २१ ॥

पेषणसमये एव आज्यस्य निर्वापं विधत्ते— "अथैक इति। यदा चाध्वर्युः पिनष्टि, 'अथ' तस्मिन्नेव समये 'एकः' अन्यः आग्नीध्रादिः (आज्यं निर्वपति[1])। अत एव सूत्रकृता पेषणाज्यनिर्वापयोः सम-समयवर्त्तित्वं सूचितम्— "पिष्यमाणेषु निर्वपत्यन्यो मह्रीना मित्या· ज्यम्"-इति[2]। तच्चाज्यं प्रसिद्धदेवतावाच्यग्न्यादिशब्दरहितेन मन्त्रेण ग्रहीतव्य मिति विधित्सुराह— "यद्वा इति। 'यत्' खलु हविः "अग्नये जुष्टं गृह्णामीत्येवं देवतायै निर्दिष्टं भवति, 'तद्' ग्रहणसाधनं यजुश्च यावद्देवत्यं भवति, तावद्देवत्य मेव 'तत्' हविर्भवति। आज्यं च सर्वदेवतासाधारण मिति देवतादेशनरहितेनैव यजुषा गृह्णीया-दित्यर्थः। तथा चाज्यस्य सर्वदेवतासाधारण्यं सेत्स्यतीत्याह— "न वा इति। एव मनिरुक्तयजुषा ग्रहण मुपपाद्य तद्विधत्ते— "तस्मा-दिति। देवतानाम निःशेषेणोक्तं यस्मिन् तत् 'निरुक्तम्', तद्विल-क्षणम् 'अनिरुक्तम्'। तादृशं च "मह्रीना मित्यादि यजुः[3]; तत्र प्रसिद्धदेवतावाचिपदस्यानुपलम्भात्।

अथैतन्मन्त्रं व्याचष्टे— मह्य इति। "मह पूजायाम्"[4]। मह्यन्ते पूज्यन्त इति 'मह्यः'। एतच्च 'एतासां' गवाम् 'एकं' साधारणं नाम। आज्यस्य पयःकार्यत्वात् "पयोऽसीति। विकारे प्रकृतिशब्द इत्यर्थः। ग्रहीतव्याज्यप्रकाशकत्वात् 'असि'-मन्त्रः[5] प्रयोक्तव्य इत्याह—

---

१— नैते पदे ट-पुस्तकादन्यत्र। २— का० श्रौ० सू० २. ५. ९।
३, ५—वा० सं० १. २०. ५। ४— धा० पा० ७३०।

**एव मु हेति। 'एवम्' अनेनैव मन्त्रेण आज्ये निरुप्ते सति तस्य तत्प्रकाशनसमर्थत्वात् यजुषैव 'तत्' आज्यं गृहीतं भवती-त्यर्थः ॥ २२ ॥ ५ [२. १.] ॥**

**इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथभाष्ये द्वितीयाध्याये प्रथमं ब्राह्मणम्[1] ॥**

---

१— अथ पेषणोपधाने सह भवतः। तत्र अग्नीत् कपालानि प्रक्षाल्य, गार्हपत्यस्य पश्चादुपविश्य, प्रथमं तावत् उपवेषं गृहीत्वा तेन अपशस्य अङ्गारान् खरमध्ये एव स्वस्थानात् प्राच्यां प्रेरयति,— यथाङ्गारस्थानेऽति-तप्तभूमौ कपालान्युपधीयेरन्। ततस्तेनैव प्राक्प्रेरिताङ्गारमध्यात् एक मङ्गारं गार्हपत्यखरस्य पश्चाद्भागे दक्षिणपुरोडाशस्थानस्य मध्ये आनयति। तस्यानीतस्याङ्गारस्योपरि उत्तानं मध्यमं कपाल मुपदधाति [तत्राभिचारं कुर्वन् मन्त्रे 'भ्रातृव्यस्य' स्थाने अमुकस्येति शत्रोर्नामग्रहणं कार्यम्, तत उदकोपस्पर्शनञ्च]। ततः सव्यहस्तस्याङ्गुल्या अमून्ये स्पृष्टे मध्यमकपाले एक मङ्गारं निदधाति, ततः पश्चाद् द्वितीयम्, ततः पुरस्तात् तृतीयम्, मध्यमाद् दक्षिणं चतुर्थम्, चतुर्थात्पूर्व मेकस्य कपालस्यान्तरालं परिशिष्य पञ्चमम्, चतुर्थपञ्चमयोरन्तराले षष्ठम्, चतुर्थस्य पश्चात् सप्तमम्, तस्य पश्चादष्टमम्, सर्वेभ्य उत्तरतो नवमदशमैकादशानि प्राक्संस्थानि। ततो ज्वलदङ्गारैः सर्वाणि तानि कपालान्याच्छादयति। ततस्तदैवोपसर्जनीरग्नी-देव गार्हपत्येऽधिश्रयति। पिष्टसंयवनार्था आप उपसर्जन्यः। इति कपा-लोपधानम्। अथ पेषणम्। तत्र अध्वर्युः कृष्णाजिन मादाय, पूर्ववदवधूय, अप उपस्पृश्य, प्रत्यग्ग्रीव मास्तीर्य, सव्यहस्तेनाविमुक्ते कृष्णाजिने, दक्षिणेन हस्तेन प्रागग्रां दृषदं तस्य कृष्णाजिनस्योपरि निदधाति। तत्पश्चाद्भागे अधस्तादुदगग्रां शम्यां प्रेरयति,— यथा दृषदः प्राचीनप्रवणता जायेत। ततस्तस्या उपरि उदगग्रा मुपला मुपदधाति। ततस्तस्यां दृषदि तण्डुला-नोप्य पिनष्टि। पिष्यमाणेषु तण्डुलेषु, तप्यमानेषु कपालेषु च यजमानो आज्यस्थाल्या माज्यं प्रक्षिपतीतीह पेषणोपधाने कर्मणी विहिते।

पवित्रवति संव्वपति। पात्र्यां पवित्रे ऽअवधाय देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याᳪं संव्वपामीति सोऽसावेवैतस्य यजुषो बन्धुः ॥ १ ॥

अथान्तर्व्वेद्युपविशति। अथैक उपसर्जनीभिरेति ता आनयति ताः पवित्राभ्यां प्रतिगृह्णाति स माप ओषधीभिरिति सᳪं ह्येतदाप ओषधिभिरेताभिः पिष्टाभिः सङ्गच्छन्ते स मोषधयो रसेनेति सᳪं ह्येतदोषधयो रसेनैताः पिष्टा अद्भिः सङ्गच्छन्त ऽआपो ह्येतासाᳪं रसः सᳪं रेवतीर्जगतीभिः पृच्यन्ता मिति रेवत्य आपो जगत्य ओषधयस्ता उ ह्येतदुभय्यः सम्पृच्यन्ते सम्मधुमतीर्म्मधुमतीभिः पृच्यन्ता मिति सᳪं रसवत्यो रसवतीभिः पृच्यन्ता मित्येवैतदाह ॥ २ ॥

अथ संयौति। जनयत्यै त्वा संयौमीति यथा श्रिये ऽन्नाद्यायेमाः प्रजा यजमानाय यच्छेदेवं वै तत् संयौत्यधिवर्ष्यन्नु वै संयौति यथा वा ऽअधिवृक्तोऽग्नेरधि जायेतैवं वै तत् संयौति ॥ ३ ॥

अथ द्वेधा करोति। यदि द्वे हविषी भवतः। पौर्णमास्यां वै द्वे हविषी भवतः स यच्च पुनर्न सᳪंहरिष्यन्स्यात् तदभिमृशतीद मग्नेरिद मग्नीषोमयोरिति नाना वा ऽएतदग्रे हविर्गृह्णन्ति तत् सहावघ्नन्ति

तत् सह पिꣳषन्ति तत् पुनर्नाना करोति तस्मादेव मभिमृशत्यधिवृणक्त्येवैष पुरोडाश मधिश्रयत्यसा*-वाज्यम् ॥ ४ ॥

तद्वा ऽएतत्। उभयꣳ सह क्रियते तद्यदेतदुभयꣳ सह क्रियतेऽर्द्धो ह वा ऽएष आत्मनो यज्ञस्य यदाज्य मर्द्धो यदिह हविर्भवति स यश्चासावर्द्धो य उ चाय मर्द्धस्ता ऽउभावग्निं गमयावेति तस्माद्वा ऽएतदुभयꣳ सह क्रियत ऽएव मु हैष आत्मा यज्ञस्य सन्धीयते ॥ ५ ॥

सोऽसावाज्य मधिश्रयति। इषे त्वेति वृष्ट्यै तदाह यदाहेषे त्वेति तत् पुनरुद्वासयत्यूर्जे त्वेति यो वृष्टा-दूर्ग् रसो जायते† तस्मै तदाह ॥ ६ ॥

अथ पुरोडाश मधिवृणक्ति। घर्म्मोऽसीति यज्ञ मेवैतत् करोति यथा घर्म्मं प्रवृञ्ज्यादेवं प्रवृणक्ति विश्वायुरिति तदायुर्दधाति ॥ ७ ॥

तं प्रथयति। उरुप्रथा उरु प्रथस्वेति प्रथयत्येवैन मेतदुरु ते यज्ञपतिः प्रथता मिति यजमानो वै यज्ञ-पतिस्तद्यजमानायैवैतदाशिष माशास्ते ॥ ८ ॥

तन्न सत्रा पृथुं कुर्यात्। मानुषꣳ ह कुर्याद् यत्

---

* 'मधिश्रपत्यसा'—इति क।

† 'जायते'—इति च-पुस्तके।

पृथु कुर्याद् व्यृद्धं वै तद् यज्ञस्य* यन्मानुषं नेद् व्यृद्धं यज्ञे करवाणीति तस्मान्न सचा पृथु कुर्यात् ॥ ९ ॥

अश्वशफमात्रं कुर्यादित्यु हैक ऽआहुः। कस्तद्वेद यावानश्वशफो यावन्त मेव स्वयं मनसा न सचा पृथुं मन्येतैवं कुर्य्यात् ॥ १० ॥

त मद्भिरभिमृशति। सकृद्वा भिर्वा तद्यदेवास्याचा-वघ्नन्तो वा पिंषन्तो वा क्षरवन्ति† वा व्वि वा वृहन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्द-धाति तस्मादद्भिरभिमृशति ॥ ११ ॥

सोऽभिमृशति। अग्निष्टे त्वचं मा हिंसीदित्यग्निना वा ऽएनमेतदभितप्स्यन् भवत्येष ते त्वचं मा हिंसी-दित्येवैतदाह ॥ १२ ॥

तं पर्यग्निं करोति। अच्छिद्र मेवैन मेतदग्निना परिगृह्णाति नेदेनं नाष्ट्रा रक्षांसि प्रमृशानि-त्यग्निर्हि रक्षसा मपहन्ता तस्मात् पर्यग्निं करोति ॥१३॥

तं श्रपयति। देवस्त्वा सविता श्रपयत्विति न वा ऽएतस्य मनुष्यः श्रपयिता देवो ह्येष तदेनं देव एव-सविता श्रपयति व्वर्षिष्ठे ऽधिनाक ऽइति देवत्रो एत-दाह यदाह व्वर्षिष्ठे ऽधिनाक ऽइति त मभिमृशति शृतं व्वेदानीति तस्माद्वा ऽअभिमृशति ॥ १४ ॥

---

* 'याज्ञस्य'–इति ग। † 'क्षिणवन्ति'–इति च।

सोऽभिमृशति। मा भेर्मा संविक्था इति मा त्वं भैषीर्म्मा* संविक्था यत् त्वाहं मानुषः सन्तं मानुषोऽभिमृशामीत्येवैतदाह ॥ १५ ॥

यद्वा शृतोऽथाभिवासयति। नेदेन मुपरिष्टान्नाष्ट्रा रक्षांस्यवपश्यानिति नेद्देवु नग्न इव मुषित इव शयाता ऽइत्यु चैव तस्माद्वा ऽअभिवासयति† ॥ १६ ॥

सोऽभिवासयति। अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयादिति नेदेतदनु यज्ञो वा यजमानो वा ताम्याद्यदिद मभिवासयामीति तस्मादेव मभिवासयति ॥ १७ ॥

अथ पात्रीनिर्णेजनम्। अङ्गुलिप्रणेजन माप्त्येभ्यो निनयति तद्यदाप्त्येभ्यो निनयति ॥ १८ ॥ ६ ॥

॥ इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् [२. २.] ॥

अथ पिष्टानां पिण्डकरणार्थं पात्र्यां संवापं विधत्ते— "पवित्रवति"-इति। सामान्योपक्रमात् नपुंसकनिर्द्देशः ; पवित्रयुक्ते पात्रे इत्यर्थः। तदेव विवृणोति— "पात्र्यां पवित्रे अवधायेति। "सो ऽसावेवैतस्येति। "सविता वै देवानां प्रसवितेत्यादिना ग्रहणप्रकरणे[1]

---

* 'भेषीर्म्मा'—इति च। † 'अभिवासयति'—इति ख, च।

१— ३८ पृ० ७ पं०, ५४ पृ० २ पं० द्रष्टव्यम्।

प्रागाम्नात एव वाक्यशेषोऽस्यापि यजुषः[1] शेषत्वेन योजनीय इत्यर्थः ॥ १ ॥

"अथान्तर्वेदीति। यद्याहवनीये हविःश्रपणं गार्हपत्ये वा, उभयथापि वेदिमध्ये उपविशेदित्यर्थः। कात्यायनस्तु ब्राह्मणान्तराभिप्रायेण विकल्प माह— "श्रपणस्य पश्चादुपविशत्यन्तर्वेदि वा"-इति[2] ॥

"अथैक इति। 'एकः' अन्य आग्नीध्रादिः। उपसृजत्याभिरिति व्युत्पत्त्या पिष्टसंसर्जनार्था आपः 'उपसर्जन्यः'; ताभिः सहागच्छेदित्यर्थः। अथ तासां तूष्णी मासेचनं विधत्ते— "ता आनयतीति। "ताः पवित्राभ्या मित्यादि। आनीयमानाः 'ताः' "स माप"-इति[3] मन्त्रेण पिष्टाना मुपरि पवित्राभ्यां प्रतिगृह्णीयादित्यर्थः।

मन्त्रतात्पर्य माह— "सं ह्येतदिति। 'एतत्' एतर्हि, एताः आनीयमानाः 'आपः', पिष्टरूपेणावस्थिताभिः 'ओषधिभिः'[4] सङ्गच्छन्ते। अतो मन्त्रगतौषधिशब्देन तद्विकाराः पिष्टा विवक्षिताः। स मित्युपसर्गश्रवणाद् योग्यक्रियाध्याहार इत्यर्थः। एव मपा मोषधिभिः सङ्गतिं प्रतिपाद्य, व्यतिहारेणोषधीना मद्भिः सङ्गतिः प्रतिपाद्यत इति व्याचष्टे— "स मोषधय इति। पूर्ववदत्राप्योषधिशब्दः पिष्टपरः, रसशब्देन चापो विवक्षिता इत्याह— "एताः पिष्टा अद्भिरिति। "आपो हीति। उपष्टम्भकाप्यावयवयुक्ताः खल्वोषधय

---

१— वा० सं० १. २१. १। का० श्री० सू० २. ५. १०।

२— श्री०सू० २. ५. ११। "सौकर्यादेवोपवेशनम्"-इति तत्र या०दे०।

३— वा० सं० १. २१. २। का० श्री० सू० २. ५. १२, १३।

४— संहितापाठस्तु ओषधीभिरिति, तस्यैव प्रतिशब्द एषः।

आर्द्रा रसवत्यो भवन्ति, अतस्तासा मुदक मेव रस इत्यर्थः। मन्त्र-मतरेवतीशब्दस्यार्थ माह— "रेवत्य आप इति। रयिः धन मासा मस्तीति रेवत्य आपः। धनमूलत्वञ्च तासां नदीतटाकादिष्ववस्थितानां प्रसिद्धम्। अतो मन्त्रे रेवतीशब्देनापो विवक्षिताः। "रयेर्मतौ बहुलम्"-इति[1] सम्प्रसारणे, "उगितश्च"-इति[2] ङीप्। गम्यन्ते सर्व्वैः प्राणिभिः प्राप्यन्त इति[3] व्युत्पत्त्या जगतीशब्दोऽप्योषधिवाचक इति व्याचष्टे— "जगत्य इति। "सम्मधुमतीरित्यादि। अत्र मधुशब्देन माधुर्यरसो विवक्षित इत्याह— "सꣳ रसवत्य इति ॥ २ ॥

आसिक्तजलेन[4] पिष्टानां समन्त्रकं[5] मिश्रीकरणं विधत्ते— "अथेति। 'संयौति' सम्यग् मिश्रीकरोतीति। "यु मिश्रणे"-इति[6] धातुः।

मन्त्रतात्पर्यकथनेनैतत् संयवनं प्रशंसति— "यथेति। यथा खल्विमाः प्रजाः 'यजमानाय' षष्ठ्यर्थे चतुर्थी[7], यजमानस्य 'श्रिये' सम्पदर्थं मन्नाद्यर्थञ्च नियच्छेद्, एव मेतदनुकूल मेव तत्पिष्टसंयवन मित्यर्थः। मन्त्रगत-'जनयत्यै'-शब्दस्य जननायेति ह्यर्थः; त मुपजीव्य प्रशंसति— "अधिवर्ज्ज्यन्निति। 'अधिवर्जनं' पुरोडाशस्य

---

१— पा० सू० ६. १. ३४ वा० ३४७३। २— पा०सू० ४. १. ४६।

३— 'गम्यते०—० प्राप्यत इति'–इति ठ।

४— 'आक्षिप्तजलेन'–इति ज, झ।

५— वा० सं० १. २२. १। का० श्रौ० सू० २. ५. १४।

६— अदा० प० १०२३। 'मिश्रणेऽमिश्रणे च'–इति धा०।

७— पा० सू० २. ३. ६१ वा० १५०९।

अग्नावधिश्रयणं करिष्यन्, खलु संयौति। यथा खल्वधिश्रितः पुरोडाशोऽग्नेः सकाशात् जायेत, एवं तदनुगुण मेव तत् संयवनं "जनयत्यै"-इतिजननलिङ्गवतो मन्त्रस्य प्रयोगादित्यर्थः ॥ ३ ॥

"अथ द्वेधेत्यादिविभागविधिः। कुत्र तर्हि हविर्द्वय मिति तद्दर्शयति— "पौर्णमास्या मिति। 'पौर्णमासी'-शब्देन कालवाचिना तत्कालानुष्ठेयं कर्म्म विवक्षितम्। तत्र ह्याग्नेयोऽष्टाकपालः, अग्नीषोमीय एकादशकपाल इति 'द्वे हविषी' विहिते इत्यर्थः।

एवं द्वेधा विभज्य, विभक्तयोस्तयोर्मन्त्राभिमर्शनं विधत्ते— "स यत्रेति। 'सः' खल्वध्वर्युः 'यत्र' यस्मिन् काले 'तत्' हविर्द्वयं 'पुनर्न संहरिष्यन्स्यात्' संहरण मेकीकरणं, तत् करिष्यन् न भवेत्[1], 'तत्' तदानीम् "इद मग्नेः"-इत्येकं भाग मभिमृशति, "इद मग्नीषोमयोः"-इत्यपरम्[2]। तावेतौ यथासङ्ख्य माग्नेयाग्नीषोमीय-पुरोडाशावित्यर्थः[3]।

कथं पुनरनयोर्द्वित्वं, कुत्र वा तयोः संहरणं, यद्व्यावृत्तये "न संहरिष्यन्"-इति विशेष्यत इति, तत् सर्वं दर्शयति— "नाना वा इत्यादिना। अग्नेर्निर्वापसमये "अग्नये जुष्टं गृह्णामि", "अग्नीषोमाभ्यां जुष्टं गृह्णामि"-इति पृथक् पृथक् देवतादेशनाद्[4] ग्रहणस्य

---

१— 'यस्मिन् काले तस्य हविर्द्वयस्य पुनःसंहरणा मेकीकरणं करिष्यन् न भवेत्'-इति ढ।

२— वा० सं० १. २२. २, ३। का० श्रौ० सू० २. ५. १५।

३—"यथादेवतमन्यत्"-इति का०श्रौ०सू० २.५.१६। 'अन्यत्' ऐन्द्रादि।

४— 'देवतादेशेन'-इत्येव पाठो ङ-पुस्तकादन्यत्र सर्वत्रैव।

मानात्वम् । अवहननादिसंस्कारे सहैवानुष्ठिते सति तद्धविरस्मिन् समये पुनरनेन मन्त्रेण यथाखं विभजतीत्यर्थः ॥

पुरोडाशकपालस्याज्याधिश्रयणस्य च समानकालतां विवक्षितत्वात् कर्तृभेद माह[1]— "अधिवृणक्तीति। 'एषः' अध्वर्युः पुरोडाशम् 'अधिवृणक्ति' अग्नेरुपर्यधिश्रयति। "अथैक आज्यं निर्वपति"-इति प्रागन्यशब्दपर्यायेणैकशब्देन य आग्नीध्र आज्यनिर्वापे कर्तृतया प्रतिपादितः[2], सोऽत्र 'असौ'-इत्यदःशब्देन विप्रकृष्टवाचिना परामृश्यते। पुरोडाशाधिश्रयणसमये 'असौ' आग्नीध्रः 'आज्यम्' अधिश्रयेदित्यर्थः ॥ ४ ॥

तदेतदुभयोः सहानुष्ठान मुपपादयति— "अर्द्धो ह वा एष इत्यादिना। आज्यं यज्ञशरीरस्यार्द्धभागः; उपस्तरणाभिघारयोः[3] प्रयाजादीनाञ्च तत्साध्यत्वात्; इतरोऽर्द्धः पुरोडाशादिहविः। सहाधिश्रयणेन तदर्द्धद्वय मेकीकृत्य अग्निं प्रापयावेत्यध्वर्योराग्नीध्रस्य चाभिप्रायः। "एव मु हेति। आज्यहविषोरुभयोः सहाधिश्रयणे सति अर्द्धद्वयस्यैकीकरणात् यज्ञशरीरं सन्धीयत इत्यर्थः ॥ ५ ॥

विहित माज्याधिश्रयण मनूद्य मन्त्रं[4] विधत्ते— "सोऽसाविति। इष्यत इतीड़िति व्युत्पत्त्या इट्-शब्देन वृष्टिर्विवक्षितेति व्याचष्टे—

---

१— 'पुरोडाशकपालस्याज्यस्य चाग्नेरुपरि अधिश्रयणस्य समानकालतां विवक्षिषुः (विवक्षुः) कर्तृभेद माह—'-इति ट।

२— पुरस्तात् द्रष्टव्यम् २. १. २२ ( ६७ पृ० ११ पं० )।

३— "आद्यन्तयोराज्यम्"-इति का० श्रौ० सू० १. ६. ८।

४— तन्मन्त्रस्तु वा० सं० १. २२. ३। का० श्रौ० सू० २. ५. १७।

"वृष्ट्या इति । "वृष्टादूर्ग्ज इति । तस्मात् 'वृष्टात्' उदकात् जायमानो यो बलकरोऽन्नरसो जायते, स 'ऊर्क्'-शब्देन विवक्षितः ॥ ६ ॥

"अधिवृणक्तीति । अग्नावुपरि 'वृणक्ति' वर्जयति, श्रपणार्थं स्थापयतीत्यर्थः[1] । "यज्ञ मेवैतदिति । घर्मोऽसीति[2] घर्मतादात्म्यस्तवनात्, घर्मस्य च सोमयागाङ्गत्वात् तदात्मक मेवैतत्करोति । घर्मस्य यत् प्रवृञ्जनं सोमे, तत्सदृश मेवैतत् पुरोडाशस्य प्रवृञ्जन मित्यर्थः ॥ ७ ॥

"तं प्रथयतीति । उपहितेषु ( कपालेषु[3] ) विस्तारयतीत्यर्थः । "प्रथयत्येवैन मेतदिति विहितस्य प्रशंसा । 'प्रथयति' पृथु विस्तीर्णं प्रभूतं करोतीत्यर्थः[4] ॥ ८ ॥

पुरोडाशस्य स्वाभिमतपरिमाणं[5] विधित्सुः परिमाणान्तरं निषेधति— "तन्नेति । सचेति निपातोऽनेकार्थत्वादत्रातिशयार्थः । 'सचा पृथुम्' अतिपृथुं न कुर्यात् । विपक्षे बाध माह— "मानुषं हेति । अस्तु मानुषत्वं[6] को दोष इत्यत आह— "व्यृद्धं वा इति । 'व्यृद्धं' विगतर्द्धिक मित्यर्थः ॥ ९ ॥

---

१— गार्हपत्ये । रजोदोषप्रसवप्रवासादिना असन्निहितपत्नीकस्य मृतपत्नीकस्य चाहवनीयेऽधिश्रयण मिति का०श्रौ०सू० २. ५. १८ ।

२— वा० सं० १. २२. ५ । का० श्रौ० सू० २. ५. १९ ।

३— नास्त्येतत् पदं ढ-पुस्तकादन्यत्र ।

४— अत्र मन्त्रः— वा० सं० १. २२. ६ । का० श्रौ० सू० २. ५. २० ।

५— 'अभिमतं परिमाणं'–इति ठ, 'अभिमतपरिमाणं'–इति ड ।

६— 'मानुषं'–इति ड ।

पक्षान्तर मुपन्यस्यति[1]— "अश्वशफेति। अय मपि पक्षो दुर्ज्ञानत्वात् न साधुरित्याह— "कस्तदिति। स्वाभिमतं पुरोडाशपरिमाण माह— "यावन्त मिति। यत्परिमाणविशिष्ट मेव पुरोडाशं स्वयं मनसैवातिपृथुं न मन्येत, किन्तु दैवतसौविष्टकृतेडाद्यवदानपर्याप्त मेव मन्येत, तत्परिमाणविशिष्टं कुर्यादित्यर्थः[2] ॥ १० ॥

पुरोडाशस्याद्भिरभिमर्शनं विधत्ते— "त मिति। 'क्षण्वन्ति' हिंसन्ति। "क्षणु[3] हिंसायाम्"-इति[4] धातुः। 'विवृहन्ति' विश्लेषयन्ति। "वृह उद्यमने"-इति[5] धातुः। "शान्तिराप इति। दाहतृष्णादिशमनहेतुत्वेनापां शान्तिरूपता ॥ ११ ॥

"सोऽभिमृशतीत्यादिविहिताभिमर्शनानुवादेन मन्त्रविधिः[6]। मन्त्रेणाहिंसाप्रार्थनं युक्त मिति व्याचष्टे— "अग्निना वा इति। "अभितप्स्यन्निति। अभितः सर्वतः तपनं करिष्यन्नित्यर्थः ॥ १२ ॥

पर्यग्निकरणं विधत्ते— "त मिति। परितोऽग्निर्यस्य, स 'पर्यग्निः'; परितोऽग्निमन्तं पुरोडाशं करोतीत्यर्थः[7]। तस्य प्रयोजन

---

१— 'पक्षान्तर मपवदति'-इति ०।

२— "षडङ्गुलवृत्ता कपालचितिर्यथा सम्पद्यते, तथा कपालपरिमाण माश्रयणीयम्"-इति का० श्रौ० २. ५. २० सू० वृत्तौ या० दे०।

३—' 'क्षिणवन्ति' हिंसन्ति। "क्षिणु'-इति जादिषु, ०-पुस्तके च पाठः।

४— त० उ० ४ "क्षिणु च"। ५— तु० प० ६७।

६— मन्त्रस्तु वा० सं० १. २२. ७। का० श्रौ० सू० २. ५. २१।

७— पर्यग्निकरणमन्त्रस्तु "अन्तरितं रक्षोऽन्तरिता अरातयः"-इति तै० सं० १. १. ८. १। तद्विधिः का० श्रौ० सू० २. ५. २२।

माह— "अच्छिद्र मिति। राक्षसादिसंसर्गाभावार्थं प्राकारवन्नीरन्ध्र मग्निना वेष्टनं कृतवान् भवतीत्यर्थः ॥ १ ३ ॥

समन्त्रकं श्रपणं विधत्ते— "त मिति। "वर्षिष्ठेऽधिनाक इति[१]। मन्त्रपाठे 'देवत्रो'[२] देवान् प्रत्येवैतदाह। 'वर्षिष्ठे' वृद्धतमे 'नाके' स्वर्गे 'देवः' सविता श्रपयत्विति हि मन्त्रार्थः। तथा च तल्लोकवासिनो देवान् प्रत्येवैतद्वचनम्। "देवमनुष्यपुरुषपुरुमर्त्त्येभ्यः"-इति[३] द्वितीयार्थे त्रा-प्रत्ययः। श्रपणानन्तरं तस्याभिमर्शनं विधत्ते— "त मिति। अभिमृशतोऽभिप्राय माह— "शृत मिति। 'शृतं' पक्वं जानामीत्यर्थः। "श्रा पाके"-इत्यस्मात्[४] निष्ठायां "शृतं पाके"-इति[५] निपातितम्। 'वेदानि'-इति "विद ज्ञाने[६]"-इत्यस्माल्लोट्युत्तमैकवचनम् ॥ १ ४ ॥

विहित मभिमर्शन मनूद्य मन्त्रं[७] विधत्ते— "सोऽभीति। मन्त्रगतं 'भेः'-इत्येतत्पदं व्याचष्टे— "मा त्वं भैषीरिति। 'मा संविक्थाः'-इति मा च कम्पिष्ठा इत्यर्थः। भयकम्पयोः कारण माह— "यं त्वेति ॥ १ ५ ॥

"यदा शृत इति। 'यदा' यस्मिन् काले स पुरोडाशः 'शृतः' पक्वो भवति, 'अथ' अनन्तर मेव तस्योपरि 'अभिवासयति'

---

१— वा० सं० १. २२. ८। का० श्रौ० सू० २. ५. २३।

२— 'देवत्रा उ'-इति छेदः। एवार्थोऽत्र उ-शब्दः।

३— पा० सू० ५. ४. ५६। ४— अदा० प० ४३।

५— पा० सू० ६. १. २७। ६— अ० प० ४५।

७— वा० सं० १. २३. १। का० श्रौ० सू० २. ५. २४।

साङ्गारेण भस्मना[१] आच्छादयतीत्यर्थः। तस्य प्रयोजन माह— "नेदिति। प्रयोजनान्तरं सदृष्टान्त माह— "नेद्वेवेति। 'नग्नः' स्वभावतो विवसनः; 'मुषितः' चौरादिभिरपहृतवसनः; तावुभौ यथा निरावरणौ 'शयाते', तद्वत् पुरोडाशोऽप्यभिवासनाभावे निरावरणः शयीत। नैव तथा शयीतेत्यनेनैवाभिप्रायेणाभिवासनं कर्त्तव्य मित्यर्थः ॥ १६ ॥

"सोऽभिवासयतीत्यादिर्मन्त्रविधिः[२]। 'अतमेरुः' अतमनशीलः, इज्यते अनेनेति 'यज्ञः' पुरोडाशः, स ग्लानिरहितोऽभूत्; अतो यजमानस्य पुत्रादिरपि तथा भूयादिति मन्त्रार्थः। इम मर्थं प्रतिपादयति— "नेदेतदिति। यदिद मभिवासनम्, 'एतदनु' एतस्यानन्तर मित्यर्थः। "तस्मादिति। अतमेरुरिति-मन्त्रप्रयोगेण अभिवासनकृत-तमनाभावादित्यर्थः ॥ १७ ॥

पात्र्यङ्गुलि[३]प्रक्षालनोदकस्य निनयनं विधत्ते[४]— "अथेति। निर्णिज्यते शोध्यते अनेनेति 'निर्णेजनम्' अङ्गुलिप्रक्षालनम्, पात्रीनिर्णेजनं च[५] उदकम्। अद्भ्यो जातत्वात् 'आप्त्याः' त्रितादयः[६]

---

१— "साङ्गारेण भस्मनेति काठके"–इति का० श्रौ० २. ५. २५ या०दे०।

२— वा० सं० १. २३. २। का० श्रौ० सू० २. ५. २५।

३— 'पात्राङ्गुलि'–इति जादिषु।

४— मन्त्रस्त्वस्य वा० सं० १. २३. ३। का० श्रौ० सू० २. ५. २६।

५— ट-पुस्तके त्विमानि अङ्गुल्यादीनि त्रीणि पदानि न दृश्यन्ते।

६— ते च त्रितः, द्वितः, एकत इति। "अस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाप्त्याश्च देवाः"–इति ऐ० ब्रा० ८. ३. ३।

तेभ्यो[1] निनयेदित्यर्थः। विहितं निनयनं स्तोतु मनुवदति— "तद्यदिति ॥ १८ ॥ ६ [२.२.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथभाष्ये
प्रथमकाण्डे द्वितीयाध्याये द्वितीयं ब्राह्मणम्[2] ॥

---

१— तेषा मुत्पत्तिकथा त्विहैवोत्तरस्मिन् ब्राह्मणे वर्णयिष्यते।

२— अथ पिष्टावपनम्।— पवित्रे पात्र्यां कृत्वा कृष्णाजिनात् पिष्टान्यादाय सपवित्रायां पात्र्या मावपति। तत उत्थाय गार्हपत्यस्य पश्चात् वेदिमध्ये वा उपविशति। तत आग्नीध्रः स्फ्यं सव्ये गृहीत्वा उपसर्जनीरुदकस्य अध्वर्योर्दक्षिणेनानीय पिष्टाना मुपरि धृतस्य सपवित्रस्य अध्वर्योर्हस्तस्य उपरि निनयति। ततोऽध्वर्युः तेनाग्नीधा निनीयमाना उपसर्जनीर्दक्षिणहस्तधृताभ्यां पवित्राभ्यां प्रतिगृह्णाति। अग्नीधा च तथा निनयनं कार्यं यथाध्वर्योर्मन्त्रान्ते ग्रहणं सम्पद्यते। तत उदकं पिष्टानि च मिश्रयति। मिश्रितं तत् समं विभज्य द्वौ पिण्डौ कृत्वा पात्र्या मुदकसंस्थौ निधाय इद मग्नेरिति इद मग्नीषोमयोरिति च क्रमेण आलभते। ततोऽग्नीद् सव्यहस्ते वेदं गृहीत्वा दक्षिणत आज्य मधिश्रयति, अग्नेरुपरि आज्यस्थालीं निदधातीत्यर्थः। अथ पुरोडाशप्रथनम्।— तत्राध्वर्युः सहैवाष्टासु कपालेषु प्रथमं पुरोडाश मधिश्रयति, तत एकादशसु कपालेषु द्वितीयम्; ततो यावत्कपालं पुरोडाशं प्रथयति। अतिपृथुं न करोति। ततस्त मेव पुरोडाशं सकृत् त्रिर्वा अद्भिरभिमृशति, श्लक्ष्णयति; प्रथने क्रियमाणे यत्र क्वचन विदीर्णं भवति तत् सन्दधातीत्यर्थः। ततः पात्र्या अङ्गुलीनां च प्रक्षालनम्। अथ पर्यग्निकरणम्।— गार्हपत्यादङ्गार मादाय आज्यस्थालीपुरोडाशान् परितः प्रदक्षिण मङ्गारं

## ॥ इति प्रथमकाण्डे प्रथमप्रपाठकः समाप्तः[1] ॥

---

व्रताचरण मारभ्य पात्रीनिर्णेजनान्ततः ।
कर्मोक्तं प्राक्-प्रपाठकेऽन्यत्तु द्वितीयेऽभिधीयते ॥[2]

---

परिहरतीत्यर्थः । ततोऽङ्गारं गार्हपत्ये प्रक्षिप्य हस्तस्याप्रादक्षिण्ये-नानयनम्, तत उदकस्पर्शः । ततो ज्वलद्भिर्दर्भंदण्डैः प्रथमं द्वितीयं च पुरोडाशं क्रमेण श्रपयति ; शृताशृतज्ञानाय तौ द्वावेव पुरोडाशौ क्रमेणालभते च । अशृतौ चेत् तौ पुनः श्रपणप्रक्षेपः ; शृतौ चेत् वेदेनोपवेषेण वा तमतरेणाङ्गारमिश्रेण भस्मनाच्छादयेत् । अथ पात्री-निर्णेजनम् ।— पाण्यङ्गुलिप्रक्षालनं जलं पात्रीस्थ मेव गार्हपत्यादीनैस्तृ-णैर्ज्वलद्भिस्तापयित्वा विहारस्योत्तरतः स्फ्येन प्राक्संस्थास्तिस्रो रेखाः कृत्वा तासु रेखासु प्रत्यक्संस्थं परस्परं संसर्ग मप्राप्नुवत् त्रिर्निनय-तीत्येतानि चत्वारि पुरोडाशकर्माण्यत्र ब्राह्मणे विहितानीति ॥

१— एतस्मात् समाप्तिवचनादनन्तरं 'क० १२१ संख्याः'—इति ख, 'काण्डी १२१'—इति ग, 'कण्डिकासङ्ख्या १२१'—इति च ।

२— ठ-पुस्तकमात्रेऽत्रैष श्लोको दृश्यते ।

अथ

द्वितीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

द्वितीयाध्याये तृतीयं ब्राह्मणम् ।



॥ हरिः ॐ ॥

चतुर्द्धा विहितो ह वा ऽअग्रेऽग्निरास। स य मग्रेऽग्निᳪं होत्राय प्राहणत स प्राधन्वद्युं द्वितीयं प्राहणत स प्रैवाधन्वद्युं तृतीयं प्राहणत स प्रैवाधन्वदथ योऽय मेतर्ह्यग्निः स भीषा निलिल्ये सोऽपः प्रविवेश तं देवा अनुविद्य सहसैवाद्भ्य आनिन्युः सोऽपोऽभितिष्ठेवावष्यूता स्थ या अप्रपदनᳪं* स्थ याभ्यो वो मा मकामं नयन्तीति तत आप्त्याः सम्बभुवुस्त्रितो द्वित एकतः ॥ १ ॥

त ऽइन्द्रेण सह चेरुः। यथेदं ब्राह्मणो राजान मनुचरति स यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान तस्य हैतेऽपि वध्यस्य† विदाञ्चक्रुः शश्वद्धैनं त्रित एव जघानात्यह तदिन्द्रोऽमुच्यत देवो हि सः ॥ २ ॥

* 'अप्रदनवᳪं'—इति च-पुस्तके । † बुध्यस्य'—इति ग, च, ठ ।

त उ हैत ऽऊचुः। उपैवेम ऽएनो गच्छन्तु येऽस्य व्युध्यस्यावेदिषुरिति* कि मिति यत्र एवैषु मृष्टा मिति तदेष्वेतद्यज्ञो मृष्टे यदेभ्यः प्राचीननिर्णेजन मङ्गुलिप्रणेजनं निनयन्ति ॥ ३ ॥

त ऽउ हाप्त्या ऊचुः। अत्येव व्वय मिद मस्मत्परो नयामेति क मभीति य एवादक्षिणेन हविषा यजाता ऽइति तस्मान्नादक्षिणेन हविषा यजेताप्त्येषु ह यज्ञो मृष्ट आप्त्या ऽउ ह तस्मिन् मृजते यो ऽदक्षिणेन हविषा यजते ॥ ४ ॥

ततो देवाः। एतां दर्शपूर्णमासयोर्द्दक्षिणा मकल्पयन् यदन्वाहार्यं नेददक्षिणꣳ हविरसदिति तन्नाना निनयति तथैभ्यो ऽसमदं करोति तदभितपति तथैषाꣳ शृतं भवति स निनयति त्रिताय त्वा द्विताय त्वैकताय त्वेति पशुर्ह वा ऽएष आलभ्यते यत् पुरोडाशः ॥ ५ ॥

पुरुषꣳ ह वै देवाः। अग्रे पशु मालेभिरे तस्यालब्धस्य मेधोऽपचक्राम सोऽश्वं प्रविवेश तेऽश्व मालभन्त तस्यालब्धस्य मेधोऽपचक्राम स गां प्रविवेश ते गा मालभन्त तस्यालब्धस्य मेधोऽपचक्राम सोऽविं प्रविवेश तेऽवि

---

* 'बुध्यस्यावेदिषुरिति'—इति पवर्गीयादिः च, छ।

मालभन्त तस्यालब्धस्य मेधोऽपचक्राम सोऽजं प्रविवेश तेऽज मालभन्त तस्यालब्धस्य मेधोऽपचक्राम ॥ ६ ॥

स इमां पृथिवीं प्रविवेश। तं खनन्त ऽइवान्वीषुस्त मन्वविन्दंस्ताविमौ व्रीहियवौ तस्मादप्येतावेतर्हि खनन्त इवैवानुविन्दन्ति स यावद्वीर्य्यवद्ध वा ऽअस्यैते सर्वे पशव आलब्धाः स्युस्तावद्वीर्यवद्धास्य हविर्हविरेव* भवति य एव मेतद् वेदात्रो सा सम्पद् यदाहुः पाङ्क्तः पशुरिति ॥ ७ ॥

यदा पिष्टान्यथ लोमानि भवन्ति। यदाप ऽआनयत्यथ त्वग् भवति यदा संयौत्यथ माᳬसं भवति सन्तत ऽइव हि स तर्हि भवति सन्तत मिव हि माᳬसं यदा शृतो ऽथास्थि भवति दारुण इव हि स तर्हि भवति दारुण मिव ह्यस्थ्यथ† यदुद्वासयिष्यन्नभिघारयति तं मज्जानं दधात्येषो सा सम्पद्यदाहुः पाङ्क्तः पशुरिति ॥ ८ ॥

स यं पुरुष मालभन्त। स किम्पुरुषो ऽभवद्यावश्वञ्च गाञ्च तौ गौरश्च गवयश्चाभवतां य मवि मालभन्त स उष्ट्रोऽभवद्य मज मालभन्त स शरभोऽभवत्तस्मादेतेषां पशूनां नाशितव्य मुपक्रान्तमेधा ह्येते पशवः ॥ ९ ॥ १ ॥

॥ इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् [२. ३.] ॥

---

* 'हविरेव'—इति च। † 'दारुण मित्यस्थ्यथ'—इति च।

निर्व्रजननिनयनस्याग्निभागत्व मुपपादयितुं तावत् तेषा मुत्पत्ति माह—"चतुर्द्धा"-इत्यादिना[1]। पुरा खल्वग्निः शरीरचतुष्टयधारणेन चतुर्विधो बभूव। तत्र 'यम्' अग्निं 'सः' अध्वर्युः 'होत्राय' होतृकर्मणे 'प्रावृणत' प्रवृतवान्। व्यत्ययेन बहुवचनम्[2]; यद्वा सुपां सुपो भवन्तीति तच्छब्दात् जसः स्थाने सुः[3], ते देवा इत्यर्थः। 'सः' अग्निः 'प्राधन्वत्' प्रागच्छत्, अम्रियतेत्यर्थः। "धवि गमने"-इति[4] धातुः। "अथ योऽय मित्यादि[5]। एवं त्रिष्वप्यग्निषु प्रगतेषु 'अथ' अनन्तरभावी 'योऽयम्' इदानीन्तनश्चतुर्थोऽग्निः, 'सः' अयम् 'भीषा' पूर्वाग्निवन्मरणभयेन 'निलिल्ये' निलीनोऽन्तर्हितो बभूव। स निलीय चापः प्रविवेश। 'तम्' अप्सु प्रविष्टं देवाः 'अनुविद्य'

---

१— 'पूर्वप्रपाठकान्ते "आग्नेभ्यो निनयति (११३ पृ० १२ पं०)"-इत्युक्त-त्वादाग्न्योत्पत्ति माह— "चतुर्द्धेति।'-इति ङ-पुस्तकस्यावतरणी।

२— पा० सू० ३. १. ८५। इहास्ति चेयं कारिका-
"सुप्तिङुपग्रहलिङ्गनराणाम्, कालहलच्स्वरकर्तृयङां च।
व्यत्यय मिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन"-इति।

३— पा० सू० ७. १. ३९। ४— भ्वा० प० ५९७।

५— पुरेत्यादेः, योऽय मित्याद्यन्तस्य ग्रन्थस्य स्थाने ङ-पुस्तके पाठस्त्वेवं दृश्यते—" 'ह'-'वै'-इति निपातौ वेदप्रसिद्ध्यर्थौ। अग्नेरेकस्मात् सकाशात् अग्निश्चतुर्द्धा 'विहितः' कृतः 'आस' बभूव, इत्यय मर्थो वेदप्रसिद्धः। 'सः' प्रजापतिः 'अग्रे' सृष्ट्यारम्भे पूर्वकल्पे वा 'यम्' अग्निम् 'होत्राय' होतृकर्मणे 'प्रावृणत' प्रकर्षेण वृतवान्, स 'प्राधन्वत्' मृतोऽभवत्। यं द्वितीयं प्रावृणत, स एव सोऽपि प्राधन्वत्। यं तृतीयं, सोऽपि मृतोऽभवत्"-इति।

ज्ञात्वा, 'सहसैव' बलात् 'अस्याः' सकाशात् 'आनिन्युः' आजह्रुः[१]। 'सः' च बलादानीयमानोऽग्निः अपः 'अभि'लक्ष्य 'तिष्ठेव' ष्ठीवनं कृतवान्। "ष्ठिवु निरसने[२]"-इत्यस्माल्लिट्। केनाभिप्रायेण ष्ठीवन मिति तं दर्शयति— हे आपः! 'याः' यूयं भीतस्य मम 'अप्रपदनं स्थ' अनाश्रयभूताः[३] स्थ, 'याभ्यः' च 'वः' पञ्चम्यर्थे चतुर्थी[४], युष्म-त्सकाशात् 'अकामम्' इच्छारहितं मां बलान्नयन्ति, ता यूयं 'अवष्ठ्यूताः स्थ' ष्ठीवनेन दूषिता भवतेति। यथा लोके परैः प्रार्थितं कार्यं कर्त्तुं मक्षमः ष्ठीवनेन निन्द्यते, तद्वदपां निन्दा विव-क्षिता[५]। "तत इत्यादि। 'ततः' निष्ठीवनलक्षणवीर्यधारणात् ताभ्योऽद्भ्यः सकाशात् त्रितादिसञ्ज्ञका आप्त्या उत्पन्नाः। अद्भ्यो जातत्वाच्च तेषाम् 'आप्त्यः'-इति सञ्ज्ञा॥ १॥

अथ तेषां पात्रीनिर्णेजनोदकं भाग इत्येतत् प्रतिपादनायाह— "त इन्द्रेणेति। यथेदानीं 'ब्राह्मणः' पुरोहितः देशाधिपतिं 'राजानम्' 'अनु'सृत्य चरति, तद्वदेव 'ते' त्रितादयोऽपीन्द्रेण सार्द्धं तदनुसारेणावस्थिता इत्यर्थः। 'सः' चेन्द्रो 'यत्र' यस्मिन् समये सोमपानादिसाधनैः त्रिभिः शिरोभिः उपेतं त्वष्टुः पुत्रं 'विश्वरूपं' जघान, तस्मिन् समये ते त्रितादयोऽपि 'तस्य वध्यस्य' कर्मणि षष्ठी[६], तं 'वध्यं' वधार्हं[७] 'विदाञ्चक्रुः' ज्ञातवन्तः। "उषविदजागृ-

---

१—'देवाः अन्विष्य बलाद् आनिन्युः आजह्रुः'—इति ज, झ।

२— धा० प० ५६०। ३— 'अनाश्रयभूताः'—इति जादिषु, ढ—पुस्तके च।

४— पा० सू० ३. १. ८५। ५— 'तद्वदेव विवक्षिताः'—इति ङ।

६— पा० सू० २. ३. ५०। ७— 'बध्यं बधार्हं'—इति ढ।

भ्योऽन्यतरस्याम्"-इति[1] विदेर्ज्ञानार्थादाम् प्रत्ययः। अनन्तरं च 'एनं' विश्वरूपं त्रित एव इन्द्रसहायार्थं जघान। इन्द्रस्य 'तत्' हननजनितात्पापात् 'अत्यमुच्यत' अतिमुक्तोऽभवत्। तत्र हेतु माह— "देवो हीति। यस्मात् स इन्द्रो देवः, अतोऽस्मिन् पाप-संश्लेषो न युक्त इत्यर्थः ॥ २ ॥

एवं विश्वरूपहननानन्तरं जनैः कृतं संवादं दर्शयति— "त उ हेति। 'ते' लौकिका जनाः (विश्वरूपहननानन्तरम्[2]) एतदूचुः। एतच्छब्दपरामृश्यं दर्शयति— "उपैवेति। ये खल्वस्य वध्यस्य 'अवे-दिषुः' अज्ञासिषुः, इमे 'एनः' पापम् 'उपगच्छन्तु'। एव मुप-गन्तव्यं तदेनः किंरूप मिति प्रश्नपूर्वक माह— "कि मितीति। 'एषु' त्रितादिषु 'यत्'[3] विश्वरूपवधजनित मेनः, यज्ञ एव 'तत्'[4] एनो 'मृष्टां' मृजीत, अश्लेषयदित्यर्थः। अतो 'यत्' एषां त्रयाणां पात्रीनिर्णेजनादि निनयनम्, 'एतत्' एतेन 'एषु' त्रितादिषु 'तत्' विश्वरूपहननजनित मेनो यज्ञो 'विमृष्टे' संश्लेषयति। तस्मादवह-ननपेषणादिजनितस्यैनसो रूपं पात्र्यादिनिर्णेजन माप्त्येभ्यो निनेतव्य मित्यर्थः ॥ ३ ॥

अथ तस्यैनसस्तैरपि कृतां निष्कृतिं दर्शयन् दक्षिणावतैव यागेन यष्टव्यं, नादक्षिणेनेति प्रसङ्गादाह— "त उ हेति। वय मपि 'इदम्' एनः 'परः' परस्तादन्यत्र आधारान्तरे 'अस्मत्' अस्मत्तो नयामेति[5] योजना। 'क मभीति' 'कम्' पुरुषम् 'अभि'लक्ष्येत्यर्थः।

---

१— पा०सू० ३. १. ३८। २— ढ-पुस्तके एष पाठोऽधिकः।
३ — 'तत्'-इति ठ, ड। ४— 'यत्'-इति ठ, ड।
५— 'अस्मत्तोऽन्यत्र नयामेति'-इति ञ, झ।

य एव दक्षिणारहितेन हविषा यजेत, तस्मिन्निति शेषः। अदक्षिणयागनिषेधं विपक्षबाधोपन्यासेनोपपादयति— "आप्त्येष्वि- ति। 'मृष्टे'-इति "मृजू शुद्धौ"[1]-इत्यस्माल्लट्, अदादित्वाच्छपो लुक्[2] ॥ ४ ॥

का तर्हि दर्शपूर्णमासयोर्दक्षिणेति, तत्र माह— "तत इति। दर्शपौर्णमासिकं[3] हविर्दक्षिणारहितं नैव भवेदिति अन्वाहार्यरूपां दक्षिणा मकल्पयन्नित्यर्थः। अन्वाहरति यज्ञसम्बन्धि दोषजातं परिहरत्यनेनेति व्युत्पत्त्यान्वाहार्यो नाम ऋत्विग्भ्यो देय ओदनः[4]। तथाच तैत्तिरीयकम्— "यद्वै यज्ञस्य क्रूरं, यद्विलिष्टं, तदन्वा- हार्येणान्वाहरति, तदन्वाहार्यस्यान्वाहार्यत्वम्"-इति[5] ॥

"तन्नानेति। 'तत्' आप्त्यानां निनयनं पृथक् पृथगसंसृष्ट मेव कर्त्तव्यम्। 'तथा' सति 'एभ्यः' आप्त्येभ्यः 'अपमदम्' अकलहं करोति। संसर्गे हि मदीयन्त्वदीय मिति कलहः स्यादित्यभिप्रायः॥

निनीतस्योदकस्याङ्गारेण प्रतपनं विधत्ते[6]— "तदभितपतीति। 'यथा' सत्येषां 'तत्' जलं 'शृतं' पक्वं भवतीत्यर्थः ॥

---

१— अदा० प० ५६। २— पा० सू० २. ४. ७२।

३— 'दार्शपौर्णमासिकं'—इति ड।

४— "यज्ञस्य हीन मन्वाहरतीति अन्वाहार्यः। अध्वर्युरन्वाहार्यसञ्ज्ञकं दक्षिणार्थं तण्डुलरूप मोदनं चतुर्णां ऋत्विजां तृप्तिर्यावता सम्भाव्यते तत्परिमाणं ततोऽधिकं वा"—इत्यादि का०श्रौ० २. ५. २७ सू०टी०। एष चौदनः दक्षिणाग्नौ पच्यत इति तस्याग्नेरपरं नाम अन्वाहार्य- पचन इति। ५— तै० सं० १. ७. ३. १।

६— 'निनीत मुदक मङ्गारेण प्रतपति'—इति ढ।

विहितं निगमयन् मनूद्य मन्त्रं[1] विधत्ते— "स इति ॥

एवं संस्कृतं पुरोडाशं पशुत्वेन स्तौति— "पशुर्हेति ॥ ५ ॥

अस्य पशुरूपता मुपपादयितु मितिहास मुदाहरति— "पुरुषं ह वेति। "मेधोऽपचक्रामेति। यज्ञियः सारांशो 'मेधः'। 'तस्य' यज्ञमनस्य पुरुषस्य सकाशादपक्रान्तो बभूवेत्यर्थः ॥ ६ ॥

"स इमा मित्यादि। एवं पुरुषाश्वादिपशुष्वालब्धेषु ततस्ततो निष्क्रान्तः 'सः' मेधः अन्ततः[2] इमां पृथिवीं प्रविष्टवान्। 'तं' मेधं पृथिवीं 'खनन्तः' विदारयन्त इव 'अन्वीषुः' देवा अन्वैच्छन्। "इषु इच्छायाम्[3]"-इत्यस्माल्लिट्। ईदृग्विधं मेधं पृथिव्यां देवाः अलभन्त। "ताविमौ व्रीहियवाविति। स एव मेधो व्रीहियवरूपेण परिणत इत्यर्थः[4]। "तस्मादपीत्यादि। 'तस्मात्' मेधपरिणामरूपत्वादेव, इदानी मपि 'एतौ' व्रीहियवौ मेधवत्कर्षणलक्षणेन खननेन लभन्ते कर्षकाः। अतः खननप्राप्यत्वदर्शनात् मेधपरिणामरूपत्वं व्रीहियवयोः स्वध्यवसान मित्यर्थः ॥

एतज्ज्ञानस्य फल माह— "स यावदिति। स इति पूर्ववद्[5] वक्रर्थे एकवचनम्। 'अस्य' यजमानस्य ते 'एते' पुरुषादयः सर्वे पशवः[6] आलब्धाः सन्तो यत्परिमाणविशिष्टवीर्यवद् हविः 'स्युः'

---

१— वा० सं० १. २३. ३, ४, ५। का० श्रौ० सू० २. ५. २६।

२— नास्त्येतत् पदं ङ-पुस्तके। ३— तु० प० ७१।

४— 'परिणतोऽभूदित्यर्थः'-इति ङ।

५— व्यत्ययेनेति यावत्। १२७ पृ० द्रष्टव्यम्।

६— नैते पदे ढ-पुस्तके।

भवेयुः, 'अस्य' व्रीहियवयोः सर्वपशुसारत्वं विदुषो यजमानस्य तन्निष्पादितं पुरोडाशादिकं 'हविः', तावद्वीर्यवद् 'हविरेव' भवति। एवं सर्वपशुसारत्वात् पुरोडाशः पशुरूप एव संस्क्रियत इत्यर्थः[१]।

इत्थं सर्व्वपशुसारतया पुरोडाशस्य पशुत्वं प्रतिपाद्य सम्पत्त्यापि तद्दर्शयति— "अत्रो सेति। लोमत्वगादिपञ्चावयवयोगात् 'पाङ्क्तः पशुः'-इति यदाक्षरभिज्ञाः, 'सा' पाङ्क्तसम्पत् 'अत्रो' अत्रापि पुरोडाशे विद्यत इत्यर्थः[२] ॥ ७ ॥

ता मेव सम्पत्तिं दर्शयति— "यदेत्यादिना। यदा खलु पुरोडाशस्य पिष्टावस्था, 'अथ' अनन्तर मेव पिष्टेषु लोमसम्पत्तिः; लोमवत् पिष्टानां सूक्ष्मत्वाद्, बहुत्वाच्च। यदा खलु संयवनार्थ मप आनयति, अथ तस्मिन् समये पुरोडाशस्य त्वग् भवति; त्वचीव श्लक्ष्णीभावदर्शनात्। संयवनावस्थायां मांसधातूत्पत्तिः। संयवनावस्थस्य पुरोडाशस्य, लौकिकमांसस्य च साम्य माह— "सन्तत इवेति। शृतावस्थस्य पुरोडाशस्यास्थ्युत्पत्तिः। ता मुत्पत्तिं लौकिकास्थिसादृश्येन प्रतिपादयति— "दारुण इवेति। शृतावस्थो हि पुरोडाशो 'दारुणः' कठिन इव हि तस्मिन् समये भवति; लौकिक मप्यस्थि कठिनम्। अतः शृतावस्थायां पुरोडाशोऽस्थिमान् भवतीत्यर्थः। "उद्वासयिष्यन्निति। उद्वासनकाले यत्

---

१— एव मित्यादेः स्थाने 'एवञ्च पशुरूप मेव संस्क्रियते'-इति ठ।

२— 'लोमत्वगादिपञ्चावयवयोगात् या पशौ पाङ्क्तसम्पदभिज्ञैरुच्यते, साऽत्रापि पुरोडाशे विद्यते'-इति ठ।

पुरोडाशस्य 'अभिघारणम्'; अस्थ्यन्तर्गतं मज्जाख्यं धातु मेव तेन स्थापयतीत्यर्थः ।

उक्तां पाङ्क्तत्वसम्पत्तिं निगमयति— "एषो इति । 'एषा उ' एषैव ॥ ८ ॥

देवैरालब्धाना मपक्रान्तमेधानां पुरुषादिपशूनां परिणाम-विशेषं दर्शयन् तस्य प्रसङ्गादभक्ष्यता माह— "स य मित्यादिना । 'सः'-इति पूर्ववद् बहुवचनस्थाने एकवचनम्; ते देवा इत्यर्थः । "एतेषा मिति । किम्पुरुषादीनां पशूनां[1] मांसं 'नाशितव्यं' न भक्षितव्यम् । तत्र हेतु माह— "अपक्रान्तेति । अपक्रान्तमेधत्वेन[2] अयज्ञियत्वादित्यर्थः ॥ ९ ॥ १ [२. ३.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथभाष्ये प्रथमकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम्[3] ॥

---

१— इह तु 'एतेषां' पुरुषादिपशूना मित्येवार्थः कथं न भवतीत्यपि विचार्यम्; तेषा मेव ह्यालम्भनेन अपक्रान्तमेधत्वं श्रूयतेऽत्र षष्ठ-कण्डिकायाम् । तथाच पुरोडाशनामपिष्टकविशेषस्य मांसप्रतिनिधित्वं प्रकल्प्य हिंसाराहित्ये एव श्रुतितात्पर्यं पर्यवस्येत ।

२— 'सारांशो मेधः'-इति ह्युक्त मिहैव पुरस्तात् ( १२१ पृ० ४ पं० ) ।

३— एतत्पूर्वश्रुतस्यैव ब्राह्मणस्योपसंहाररूप मिदं ब्राह्मणम् । इष्टाग्याना मुत्पत्तिनिदानं वर्णितम्, तन्निनयनमन्त्राश्च विहिताः, अपि प्रसङ्गतः किम्पुरुष-गौर-गवयोष्ट्र-शरभ-मांसाना मभक्ष्यत्वं सूचितञ्चेति ।

इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार। स प्रहृतश्चतुर्द्धा ऽभवत्तस्य स्फ्यस्तृतीयं वा यावद्वा यूपस्तृतीयं वा यावद्वा रथस्तृतीयं वा यावद्वाथ यत्र प्राहरत्तच्छकलोऽशीर्यत स पतित्वा शरोऽभवत्तस्माच्छरो नाम यदशीर्य्यतैव मु स चतुर्द्धा वज्रोऽभवत् ॥ १ ॥

ततो द्वाभ्यां ब्राह्मणा यज्ञे चरन्ति। द्वाभ्याः राजन्य-बन्धवः संव्याधे यूपेन च स्फ्येन च ब्राह्मणा रथेन च शरेण च राजन्यबन्धवः ॥ २ ॥

स यत् स्फ्य मादत्ते। यथैव तदिन्द्रो वृत्राय वज्र मुदयच्छदेव मेवैष एतं पाप्मने द्विषते भ्रातृव्याय वज्र मुद्यच्छति तस्माद्वै स्फ्य मादत्ते ॥ ३ ॥

त मादत्ते। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या माददेऽध्वरकृतं देवेभ्य इति सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैन मेतदादत्ते ऽश्वि-नोर्बाहुभ्या मित्यश्विनावध्वर्यू तत्तयोरेव बाहुभ्या मादत्ते न स्वाभ्यां पूष्णो हस्ताभ्या मिति पूषा भागदुघ स्तत्तस्यैव हस्ताभ्या मादत्ते न स्वाभ्यां* वज्रो वा ऽएष तस्य न मनुष्यो† भर्त्ता त मेताभिर्देवताभिरादत्ते ॥ ४ ॥

---

* 'पूष्णो'–इत्यादीनि पदानि च-पुस्तके न सन्ति।

† 'ममुष्यो'–इति च।

आददेऽध्वरकृतं देवेभ्य इति। अध्वरो वै यज्ञो यज्ञकृतं देवेभ्य इत्येवैतदाह तꣳ सव्ये पाणौ कृत्वा दक्षिणेनाभिमृश्य जपति सꣳश्यत्येवैन मेतद्यज्जपति ॥ ५ ॥

स जपति। इन्द्रस्य बाहुरसि दक्षिण इत्येष वै वीर्य्यवत्तमो य इन्द्रस्य बाहुर्दक्षिणस्तस्मादाहेन्द्रस्य बाहुरसि दक्षिण इति सहस्रभृष्टिः शततेजा इति सहस्रभृष्टिर्व्वै स वज्र आसीच्छततेजा यं तं वृत्राय प्राहरत्त मेवैतत्करोति ॥ ६ ॥

वायुरसि तिग्मतेजा इति। एतद्वै तेजिष्ठं तेजो यदयं योऽयं पवत एष हीमांल्लोकांस्तिर्य्यङ्ङनुपवते* सꣳश्यत्येवैन मेतद् द्विषतो वध† इति यदि नाभिचरेद्यद्यु अभिचरेदमुष्य वध इति ब्रूयात्तेन सꣳशितेन नात्मान मुपस्पृशति न पृथिवीं नेदनेन वज्रेण सꣳशितेनात्मानं वा पृथिवीं वा हिनसानीति तस्मान्नात्मान मुपस्पृशति न पृथिवीम् ॥ ७ ॥

देवाश्च वा असुराश्च। उभये प्राजापत्याः पस्पृधिरे ते ह स्म यद्देवा असुरान् जयन्ति ततो ह स्मैवैनान् पुनरुपोत्तिष्ठन्ति ॥ ८ ॥

---

* 'ङ्ङनुपवते'—इति च, क।

† 'बध'—इति च। एव मुत्तरत्रापि सर्व्वत्र।

ते ह देवा ऊचुः। जयामो वा ऽअसुरांस्ततस्त्वेव नः पुनरुपोत्तिष्ठन्ति कथं न्वेनाननपजय्यं जयेमेति ॥ ९ ॥

स हाग्निरुवाच। उदञ्चो वै नः पलाय्य मुच्यन्त ऽइत्युदञ्चो ह स्मैवैषां पलाय्य मुच्यन्ते ॥ १० ॥

स हाग्निरुवाच। अहमुत्तरतः पर्येष्याम्यथ यूयमित उपसꣳरोत्स्यथ तान्त्सꣳरुध्यैभिश्च लोकैरभिनिधास्यामो यदु चेमांल्लोकानति चतुर्थं ततः पुनर्न सꣳहास्यन्त ऽइति ॥ ११ ॥

सोऽग्निरुत्तरतः पर्यैत्। अथेम ऽइत उपसमरुन्धंस्तान्त्सꣳरुध्यैभिश्च लोकैरभिन्यदधुर्यदु चेमांल्लोकानति चतुर्थं ततः पुनर्न समजिहत तदेतन्निदानेन यत् स्तम्बयजुः ॥ १२ ॥

स योऽसावग्नीदुत्तरतः पर्य्येति। अग्निरेवैष निदानेन तानध्वर्युरेवेत उपसꣳरुणद्धि तान्त्सꣳरुध्यैभिश्च लोकैरभिनिदधाति यदु चेमांल्लोकानति चतुर्थं ततः पुनर्न सञ्जिहते तस्मादप्येतर्ह्यसुरा न सञ्जिहते येन ह्येवैनान् देवा अवाबाधन्त तेनैवैनानप्येतर्हि ब्राह्मणा यज्ञे ऽवबाधन्ते ॥ १३ ॥

य उ ऽएव यजमानायारातीयति। यश्चैनं द्वेष्टि तमेवैतदेभिश्च लोकैरभिनिदधाति यदु चेमांल्लोकानति

चतुर्थᳶ स वा एभिश्च लोकैरभिनिदधद्यद्वेमांल्लोका-
नति चतुर्थं* मस्या एव सर्वᳶ हरत्यस्याᳶ ह्यीमे सर्वे
लोकाः प्रतिष्ठिताः किᳶ हि हरेद्यदन्तरिक्षᳶ हरामि
दिवᳶ हरामीति हरेत्तस्मादस्या एव सर्वᳶ हरति ॥१४॥

अथ तृण मन्तर्द्धाय प्रहरति। नेदनेन वज्रेण सᳶ-
शितेन पृथिवीᳶ हिनसानीति तस्मात् तृण मन्तर्द्धाय
प्रहरति ॥ १५ ॥

स प्रहरति। पृथिवि देवयजन्योषध्यास्ते मूलं मा
हिᳶसिष मित्युत्तरमूला मिव वा ऽएना मेतत्करोत्याद-
दानस्ता मेतदाहौषधीनां ते मूलानि मा हिᳶसिष मिति
व्रजं गच्छ गोष्ठान मित्यभिनिधास्यन्नेवैतदनपक्रमि
कुरुते तद्ध्यनपक्रमि यद् व्रजेऽन्तस्तस्मादाह व्रजं गच्छ
गोष्ठान मिति वर्षतु ते द्यौरिति यत्र वा ऽअस्यै खनन्तः
क्रूरी†कुर्वन्त्यप घ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शम-
यति तदद्भिः सन्दधाति तस्मादाह वर्षतु ते द्यौरिति
बधान देव सवितः पर मस्यां पृथिव्या मिति देव मेवै-
तत्सवितार माहान्धे तमसि बधानेति यदाह पर मस्यां
पृथिव्या मिति शतेन पाशैरित्यमुचे तदाह योऽस्मान्

* 'स वा'—इत्यादिरेतदन्तो ग्रन्थः च-पुस्तके नास्ति।

† 'क्रूरं'—इति सायणसम्मतः पाठः।

द्वेष्टि यञ्च व्वयं द्विष्मस्त मतो मा मौगिति यदि नाभिचरेद्यद्य ऽअभिचरेदमु मतो मा मौगिति ब्रूयात् ॥ १६ ॥

अथ द्वितीयं प्रहरति । अपाररुं पृथिव्यै देवयजनाद् बध्यास मित्यररुर्ह वै नामासुररक्षस मास तं देवा अस्या अपाघ्नत तथो ऽएवैन मेतद्देषोऽस्या अपहते व्व्रजं गच्छ गोष्ठानं व्वर्षतु ते द्यौर्बधान देव सवितः पर मस्यां पृथिव्याꣳ शतेन पाशैर्य्योऽस्मान् द्वेष्टि यञ्च व्वयं द्विष्मस्त मतो मा मौगिति ॥ १७ ॥

त मग्नीदभिनिदधाति । अररो दिवं मा पप्त इति यत्र वै देवा अररु मसुररक्षस मपाघ्नत स दिव मपिपतिषत्त मग्निरभिन्यदधादररो दिवं मा पप्त इति स न दिव मपतत्तथो ऽएवैन मेतदध्वर्युरेवास्माल्लोकादन्तरेति दिवोऽध्यग्नीत्तस्मादेवं करोति ॥ १८ ॥

अथ तृतीयं प्रहरति । द्रप्सस्ते द्यां मा स्कन्नित्ययं वा ऽअस्यै द्रप्सो य मस्या इमꣳ रसं प्रजा उपजीवन्त्येष ते दिवं मा पप्तदित्येवैतदाह व्व्रजं गच्छ गोष्ठानं व्वर्षतु ते द्यौर्बधान देव सवितः पर मस्यां पृथिव्याꣳ शतेन पाशैर्योऽस्मान् द्वेष्टि यञ्च व्वयं द्विष्मस्त मतो मा मौगिति ॥ १९ ॥

स वै त्रियजुषा हरति। त्रयो वा ऽइमे लोका एभिरेवैन मेतल्लोकैरभिनिदधात्यङ्गा वै तद्यदिमे लोका अङ्गो तद्यजुस्तस्मात् त्रियजुषा हरति ॥ २० ॥

तूष्णीं चतुर्थम्*। स यदिमांल्लोकानति चतुर्थ मस्ति वा न वा तेनैवैतद् द्विषन्तं भ्रातृव्य मवबाधतेऽनद्धा वै तद्यदिमांल्लोकानति चतुर्थ मस्ति वा न वानद्धो तद्य-त्तूष्णीं तस्मात् तूष्णीं चतुर्थम् ॥ २१ ॥ २ ॥

॥ इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् [२. ४.] ॥

अथ वेदिकरणार्थं स्फ्यादानविधि मनुसृत्य स्फ्यस्य वज्ररूपत्वं वक्तु मितिहासम् आचष्टे[1]— "इन्द्रो हेति। "तस्येत्यादि। 'तस्य' चतुर्द्धाविभक्तस्य वज्रस्य स्फ्यः तृतीयोऽंशः। न्यूनाधिकराहित्येन तृतीयांशत्वज्ञानं दुर्लभ मित्यभिप्रेत्य पचान्तर माह— "यावद्वेति। तृतीयाद्भागात् न्यून मधिकं वा यावदेव किञ्चित् तावानेव स्फ्य इत्यर्थः। एवं यूपस्तृतीय मित्यादौ योजना। चतुर्थभागस्य परि-णामप्रकार माह— "अथ यत्रेति। "तच्छकल इति। 'तत्' तत्र देशे[2] प्रहृतः स वज्रः शकलो भूत्वा 'अशीर्यत' शीर्णोऽभूत्। स च शीर्णो भूमौ पतित्वा शरात्मना परिणत इत्यर्थः। शरशब्दं निर्वक्ति— "तस्मादिति। चतुर्द्धाभवन मुपसंहरति— "एव मिति॥ १॥

---

* 'चतुर्थꣳ'—इति क। 'चतुर्थं'—इति ख, ग।

१—'व्याचष्टे'—इति ज, झ, ढ। २—'तद्देशे'—इति ठ, ड।

तेषां वज्रावयवानां स्फ्यादीनां ब्राह्मणराजन्ययोर्व्यवस्थया विनियोग माह—"तत इति। 'राजन्यबन्धवः' क्षत्रियजातीयाः 'संव्याधे' युद्धे चरन्तीत्यनुषङ्गः। "द्वाभ्या मिति सङ्गृह्योक्तं विभजति—"यूपेन चेति ॥ २ ॥

अथ तस्य स्फ्यादानं विधत्ते—"स यदिति। तच्छब्दयच्छब्दाभ्यां प्रसिद्धिरभिधीयते। 'सः' प्रसिद्धोऽध्वर्युरित्यर्थः। "एव मेवैष इत्यादि। वृत्रवधार्थ मिन्द्रवत् विद्वेषणशीलं पापरूपं शत्रुं हन्तुं स्फ्यलक्षणं वज्र मुद्यच्छतीत्यर्थः ॥ ३ ॥

विहित मादान मनूद्य मन्त्रं[१] विधत्ते—"त मादत्त इति। "देवस्य त्वेतिमन्त्रस्य[१] प्रागाम्नात मपि ब्राह्मणं[२] विधेयविशेषे योजयितुं पुनराम्नायते—"सविता वा इत्यादिना। "न स्वाभ्या मिति। देवसम्बन्धिभ्या मेव बाहुभ्यां स्फ्यादानम्, न तु स्वकीयाभ्याम्।

युक्तञ्चैतदित्याह—"वज्रो वा इति। एष स्फ्यो वज्रः; तत्परिणामत्वात्। न हि मनुष्यस्तद्वज्रं भर्त्तुं शक्नोति, अतो देवस्य त्वेति मन्त्रं प्रयुञ्जानः तं स्फ्यलक्षणं वज्रं सवित्राख्यादिदेवताभिरेव 'आदत्ते' आदानं कृतवान् भवति ॥ ४ ॥

"आदद इति। "अध्वरो वा इति। 'ध्वरः' हिंसाप्रत्यवायो न विद्यतेऽस्मिन्नित्यध्वरशब्दस्य यज्ञोऽर्थः। अध्वरं करोतीति 'अध्वरकृत्'। तथाच यज्ञकृतं देवेभ्य आदद इत्युक्तं भवतीत्यर्थः ॥

---

१, २—वा० सं० १. २४. १। का० श्रौ० सू० २. ६. १३।

३—३८ पृ० ७ पं०, ५४ पृ० २ पं० द्रष्टव्यम्।

"संश्यत्येवैन मिति । वक्ष्यमाणं मन्त्रं[1] जपतीति यत्, 'एतत्' एतेन एनं 'संश्यत्येव' सम्यक् तनूकरोति, तीक्ष्णीकरोतीत्येव। "शो तनूकरणे"-इति[2] धातुः। "ओतः श्यनि[3]"-इत्योकार-लोपः ॥ ५ ॥

विहितं जप मनूद्य मन्त्रं[4] विधत्ते—"स इति। इन्द्रस्य दक्षिणो बाहुरतिशयेन वीर्यवान्; वृत्राख्यासुरवधकारित्वात्। अतः स एव त्व मसीति स्पष्टस्य स्तुतिरिति व्याचष्टे—"एष वा इति।

द्वितीयं भाग मनूद्य व्याचष्टे—"सहस्रभृष्टिरिति। सहस्रं भृष्टयो ऽश्रयः[5]; यद्वा भजनानि हिंसाविशेषा वृत्रवधादिषु येन क्रियन्ते स वज्रः 'सहस्रभृष्टिः'। यः 'शततेजाः' अपरिमितदीप्तिः, तादृशो वज्रः। स एव त्व मसीति स्पष्टस्तुतिः। वज्रस्येमां प्रसिद्धिं द्योतयितुं 'वै'-शब्दः। "यं त मिति। 'तम्' उक्तविधं 'यं' वज्रं वृत्रवधार्थं मिन्द्रः प्राहरत्, 'त मेव' तदात्मक मेव अनेन मन्त्र-भागेन करोतीत्यर्थः ॥ ६ ॥

तृतीयमाग मनूद्य व्याचष्टे—"वायुरसीति। यः 'तिग्मतेजाः' वायुः, स एव त्व मसीति स्तुतिः। वायोस्तिग्मतेजस्त्व मुपपाद-

---

१—इन्द्रस्य बाहुरसीति वा० सं० १. २४. २।

२—दिवा० प० ३८। ३—पा० सू० ७. ३. ७१।

४—प्रथमा टीप्पनी द्रष्टव्या। का० श्रौ० सू० २. ६. १४।

५—"भृष्टिभर्जनं पाको मारण मिति यावत्। सहस्रसङ्ख्याकानां शत्रूणां भृष्टिर्यस्य स सहस्रभृष्टिः"-इति मही०।

यति—"एतद्वा इति। यः 'अयं' वायुः 'पवते' अन्तरिक्षे चरति, एतत् खलु तेजसां मध्ये तेजस्वितमं तेजः। इम मेवातिशय मुपपादयति—"एष ह्येति। अग्न्यादितेजोऽन्तरं हि कुत्रचिदेव परिच्छिन्नम्, 'एष हि' वायुः इमान् सर्वान् लोकान् 'अनु'क्रमेण 'तिर्यग्'वृत्तिः 'पवते' युगपद्व्याप्नोतीत्यर्थः॥

अस्य प्रयोजन माह—"स्ऽश्यतीति। 'एतत्' एतेन उक्तविध-वायुतादात्म्यप्रतिपादनेनेत्यर्थः। "अमुष्य वध इति। अभिचारप्रयोगे "द्विषतो वधः[१]"-इत्यस्य स्थाने 'अमुष्य' देवदत्तस्य वध इति शत्रोर्नाम निर्दिशेदित्यर्थः॥

एतेन मन्त्रजपात्तीक्ष्णीकृतेन स्फ्येनात्मनोऽन्यस्य च संस्पर्शं निषेधति—"तेनेति। 'हिनसानि' हिंसितं करवाणीत्यर्थः। "हिसि हिंसायाम्[२]"-इत्यस्माल्लोटि रूपम्॥ ७॥

अथ स्तम्बयजुर्हरणं विधित्सुस्तस्यासुरनिर्हरणलक्षणं प्रयोजनं वक्तु माख्यायिका माह—"देवाश्चेति। प्रजापतेर्हि द्वे स्त्रियौ,—दितिरदितिश्च। तत्रादितेः पुत्रा देवाः; दितेः पुत्रा असुराः; अतः 'उभये'ऽपि 'प्राजापत्याः' प्रजापतेः पुत्राः। ते 'पस्पृधिरे' स्पर्द्धां कृतवन्तः। यदा खलु 'ते' देवाः असुरान् जयन्ति, 'ततः' अनन्तरक्षण मेव 'एनान्' देवानभिलक्ष्य पुनरसुरा उत्तिष्ठन्ति।

---

१—अत्र हि हन्तेर्वधादेशे रूपं वध इति। वधादेशस्तु अन्तस्थादिः (पा० सू० २. ४. ४२.)। अतो यत्र क्वचिदपि हिंसार्थः पवर्गीयादिर्बधो दृश्यते, न स समीचीनः; अपि बन्धनार्थो बधधातुस्तु पवर्गीयादिरिति विवेकः। २—रुधा० प० १९।

"उदोऽनूर्ध्वकर्म्मणि"-इति[1] पर्युदासादिह चोर्ध्वकर्मत्वादात्मनेपदा-भावः ॥ ८ ॥

अथ देवैः कृतं जयोपायचिन्तन मुपन्यस्यति— "ते हेति। 'अनपजय्यं' जेतु मशक्यम् 'एनान्' असुरान् केन खलु प्रकारेण पुनरुत्थानरहितं जयेमेत्येवं विचारितवन्त इत्यर्थः। "क्षय्यजय्यौ शक्यार्थे"-इति[2] जयतेर्यति निपात्यते ॥ ९ ॥

अथाग्निनोपदिष्टं जयप्रकारं दर्शयति— "स हेति। 'नः' अस्माकं सकाशात् उदङ्मुखाः सन्तः 'पलाय्य' पलायनं कृत्वा "अय गतौ[3]"-इत्यस्मात् क्त्वो ल्यप्[4], "उपसर्गस्यायतौ"-इति[5] लत्वम्। अग्निनोक्तं वाक्यं सत्य मिति श्रुतिः स्वय मेवानुवदति— "उदञ्चो हेति[6] ॥ १० ॥

एव मुत्तरतोऽवस्थितानसुरान् जेतु मग्निरेवोपायं देवान् प्रत्युपदिशति— "स हेति। "इत इत्यादि। 'इतः' अस्मात् वेदि-लक्षणात्[7] स्थानात् 'उपसंरोत्स्यथ' उपसंरुद्धान् प्रतिबद्धगतानसुरान् करिष्यथ। 'अथ' अनन्तर मेव वयं 'एभिः' पुरोवर्त्तिभिः पृथिव्यादिभिः स्त्रिभिर्लोकैः 'अभिनिधास्यामः' अभितः सर्वतो निरुद्धगतीन् निहितान् करिष्यामः। यद्वा; अभितो नितरान् क्षिप्तान् त्याजितान् करिष्यामः। इमान् लोकान् 'अति' अतिक्रम्य

---

१—पा० सू० १. ३. २४। २—पा० सू० ६. १. ८१।
३—भ्वा० धा० ४७४। ४—पा० सू० ७. १. ३७।
५—पा० सू० ८. २. १९। ६—परराष्ट्राश्रितत्वादिति भावः।
७—आर्यावर्त्तलक्षणादित्यर्थः स्यादितिहासिकाना मिति विवेच्यम्।

यत् चतुर्थं लोकं जात मस्ति[1], अस्माक मप्रत्यक्षम्, तेनापि त्वाजितान् करिष्यामः[2]। 'ततः' अनन्तर मसुराः पुनः 'न संहास्यन्ते' सङ्गता न भविष्यन्ति, विशीर्णा बाधिता एव भवेयुरित्यर्थः। "ओ हाङ् गतौ"–इति[3] धातुः ॥ ११ ॥

इत्थ मग्निनोक्तं वाक्यं श्रुत्वा तथैव तैर्देवैः कृतं श्रुतिरूपवध्नाति– "सोऽग्निरिति। अग्निः 'उत्तरतः' उत्तरस्यां दिशि 'पर्यैत्' पर्यगच्छत्। अग्निवाक्ये हि चिकीर्षितार्थोपदेशनात् भविष्यदर्थवाचिनो लृटः प्रयोगः; श्रुतिवाक्ये तु निर्वृत्तार्थप्रतिपादनात् भूतानद्यतनवाचिनो लङः प्रयोग इत्येतावान् भेदः[4] ॥

"तदेतदित्यादि। यदत्र स्तम्बयजुर्हरणं करिष्यते, एतत् 'निदानेन' मूलकारणेन निरूप्यमाणं सत् देवैः कृतं 'तत्' असुरनिरसनम्। अतो यज्ञविघातकासुरनिर्हरणार्थं स्तम्बयजुर्हरण मिति विधिरुन्नेयः ॥ १२ ॥

"स योऽसाविति। स्तम्बयजुर्हरणसमये 'योऽसौ' आग्नीध्रो वेदेरुत्तरतः परीत्य वर्त्तते। 'एषः' 'निदानेन' मूलकारणेन निरूप्यमाणः सन् 'अग्निरेव'। योऽग्निः पुरा असुरान्निरोद्धु मुदक् पर्यैत्, तदात्मक एवाग्नीध्र इत्यर्थः।

ननु तत्रोपसंरोधका देवाः, तत्स्थानीयश्चत्विजां मध्ये कः?

---

१—'चतुर्थलोकं जात मस्ति'–इति भ, 'चतुर्थलोकजात मस्ति'–इति ड।

२—ऐतिहासिकपक्षे त्वत्रार्थान्तर मूह्यम्। ३—जु० आ० ७।

४—पा० ३. ३. १३, ३. २. १११ सूत्रे द्रष्टव्ये।

इति तं दर्शयति— "तानध्वर्य्युरिति। येनोपायेन पुरा देवा असुरानबाधिषत, तेनैवोपायेन यज्ञानुष्ठानसमये तद्विघातिनोऽसुरा बाधितव्या इति निगमयति— "तस्मादिति ॥ १३ ॥

न केवलं स्तम्बयजुषोऽसुरनिर्हरणं प्रयोजनम्, शत्रुनिर्हरण मपि तत्प्रयोजन मिति प्रतिपादयति— "य उ एवेति। 'अरातीयति' अरातिरिवाचरति। "उपमानादाचारे"-इति[1] क्यच्। यश्च 'एनं' यजमानं साक्षादेव 'द्वेष्टि' बाधते। 'तम्' उभयविधं शत्रुम्। अन्यत् पूर्ववत्[2]।

पृथिव्या एव सकाशात् स्तम्बयजुर्हरणं कर्त्तव्यं, नान्तरिक्षादेरित्यभिप्रेत्याह— "स वा इति। पृथिव्यादिभिस्त्रिभिर्लोकैः तदतिरिक्तेन चान्येन चतुर्थेन लोकेनासुरान्निरस्यन् 'असौ' अध्वर्युः 'अस्याः' पृथिव्या एव सकाशात् 'सर्वं' स्तम्बयजुर्हरति, नान्तरिक्षादेः। 'हि' यस्मात् 'अस्याम्' एव भूम्यां 'इमे' अन्तरिक्षादयः सर्वे लोकाः प्रतिष्ठिताः, तस्मात् स्तम्बयजुर्हरणस्य प्रथमपर्यायवत् द्वितीयादिपर्यायाणा मपि पृथिव्या एव सकाशाद्धरणं युक्त मित्यर्थः।

एतदेव व्यतिरेकमुखेनोपपादयति— "किं हीति। 'यत्' यदि "अन्तरिक्षं हरामि", "दिवं हरामि"—इत्येवं स्तम्बयजुर्हरेत्, तदा 'किं' नाम 'हरेत् ?' अन्तरिक्षद्युलोकयोः हर्त्तव्यस्य स्तम्बस्याभावात् न तत्र तद्धरणं सम्भवतीत्यर्थः। "तस्मादिति। प्रागुक्तनिगमनं स्तम्बयजुर्हरणार्थम् ॥ १४ ॥

---

१—पा० सू० ३. १. १०। २—१४३ पृ० १५ पं० द्रष्टव्यम्।

तृणान्तर्द्धानविशिष्टं स्फ्येन प्रहरणं विधत्ते— “अथेति। तृणान्तर्द्धानस्य प्रयोजन माह— “न हिनसानीति। तृणानन्तर्द्धाने हि तीक्ष्णेन स्फ्य-रूपापन्नेन वज्रेण पृथिवी हिंसिता स्यात्, तद्धिंसानिवृत्तये प्रहरणसमये तृण मन्तर्द्धाय तस्योपरि प्रहर्त्तव्य मित्यर्थः ॥ १५ ॥

विहितं प्रहरण मनूद्य मन्त्रं[1] विधत्ते— “स प्रहरतीति। ओषध्यास्त इति मन्त्रभागं व्याचष्टे— “उत्तरमूला मिति। स्फ्य मादादानोऽध्वर्युः ‘एनां’ पृथिवीम् ‘उत्तरमूलाम्’ उपरिभागाव-स्थितमूलयुक्ता मिव खल्वेतत् करोति। अत उत्तरमूलत्वेन प्रहरणात् तद्धिंसाशङ्कायां तदभावो ऽनेन प्रार्थ्यत इत्यर्थः। मन्त्रगतौषधिशब्दस्य जात्यभिप्रायेणैकवचनान्तता[2] इत्यभिप्रेत्य व्याचष्टे— “ओषधीना मिति ॥

प्रहरणनिष्पन्नस्य सतृणस्य पांशो[3]रादानमन्त्र मनूद्य व्याचष्टे— “व्रजङ्गच्छेति[4]। ‘अभिनिधास्यन्’ अभितो निक्षेप्स्यन् खल्वध्वर्युः ‘एतत्’ असुरजातम् ‘अनपक्रमि’ अपक्रमणरहित मितस्ततो गमन-रहितं कुरुते। तत् खल्वनपक्रमि यद् ‘व्रजे’ गोष्ठेऽन्तर्निरुध्यते, अतोऽस्य मन्त्रप्रयोगस्य अपक्रमणाभावः प्रयोजन मित्यर्थः ॥

---

१— वा० सं० १. २५. १। का० श्रौ० सू० २. ६. १५, १६। अत्रास्ति मतान्तरविचारः, स चास्य टीकायां (या० दे०) द्रष्टव्यम्।

२— पा० सू० १. २. ५८ द्रष्टव्यम्। ३—‘पांसो’ इति आदिषु।

४— वा० सं० १. २५. २। का० श्रौ० सू० २. ६. १७।

वेदिप्रेक्षणमन्त्र मनूद्य तात्पर्य माह— "वर्षन्निति[1]। 'अस्यै' षष्ठ्यर्थे चतुर्थी[2]। 'अस्याः' पृथिव्याः सम्बन्धिनि 'यत्र' स्थाने वेद्यर्थं खनन्तः[3] 'क्रूरं' निष्ठुरं कुर्वन्ति; तेन च तां पृथिवीम् 'अपघ्नन्ति' हिंसन्ति; अतः खननजनितां हिंसा मनेन मन्त्रप्रयोगेण शान्तिरूपाभिरेवाद्भिः पुनः प्रशमय्य सन्दधातीत्यर्थः॥

व्रजङ्गच्छेत्यादिमन्त्राणां कात्यायनः स्पष्टं विनियोग मसूत्रयत्— "व्रजङ्गच्छेति पुरीष मादत्ते, वर्षतु न इति वेदिं प्रेक्षते, वधानेत्युत्करोति"-इति[4]।

उत्करे निधानमन्त्रस्य[5] अभिप्राय माविष्करोति— "देव मेवैतदित्यादिना। "पर मस्यां पृथिव्याम्"-इत्यस्य व्याख्यानम्— "अन्धे तमसीति। सर्वप्रकाशरहितेऽतिशयिते तमसि, यस्मिन् बद्धो न पुनरावर्त्तते, तादृशे स्थान इत्यर्थः। 'अमुचे'-इति, अमोचनायेत्यर्थः; न हि शतसङ्ख्याकैः पाशैर्बद्धः स्वात्मानं मोचयितु मीष्ट इत्यभिप्रायः॥

अभिचरतः प्रयोगे विशेष माह— "यद्यु"-इति। अनभिचरतः प्रयोगे मन्त्रगतस्त मिति यः शब्दः, तस्य स्थाने 'अभिचरतः' यजमानस्य शत्रुनाम द्वितीयया निर्दिश्य मन्त्रः प्रयोक्तव्य इत्यर्थः॥ १६॥

एवं स्तम्बयजुर्हरणस्य प्रथमपर्याय मभिधाय द्वितीयपर्यायार्थं

---

१— वा० सं० १. २५. ३। का० श्रौ० सू० २. ६. १८।

२— पा० २. ३. ६२ सू० वा० १५०६। ३—'खननं, तत्'—इति ठ।

४— का० श्रौ० सू० २. ६. १७, १८, १९।

५— वा० सं० १. २५. ४। का० श्रौ० सू० २. ६. १९।

प्रहरणादिकं समन्त्रकं[1] विधत्ते— "अथेति। मन्त्रप्रतिपादित मररुवधप्रार्थन मुपपादयति— "अररुर्हेति। 'अररुः' नाम असुर-रक्षसम्, सुराणां विरोधि रक्षो बभूव। 'रक्षः'-शब्दात् "अनसन्ता-दित्यकारः[2] समासान्तः। देववदेव इदानीन्तनोऽध्वर्युरप्यपाररु मित्यनेन मन्त्रेण पृथिव्याः सकाशादपहन्ति। "व्रजङ्गच्छेत्यादिकस्य सर्वस्य द्वितीयपर्याये प्रयोज्यस्यापि प्रागुक्त एवार्थ इत्यभिप्रेत्यानु-वदति— "व्रजङ्गच्छेति ॥ १७ ॥

उत्करे न्युप्तस्य स्तम्बयजुषोऽभिधानं समन्त्रकं[3] विधत्ते— "त मिति। 'अभिनिदधाति' उपरि हस्तनिधानेन अधस्तात् क्षिपती-त्यर्थः। 'मा पप्तः'-इति[4] पतनाभावप्रार्थनं समर्थयितुं पुरावृत्त मुदाहरति— "यत्र वा इति। "स दिव मिति। 'सः' देवैरप-हतोऽररुः 'अपिपतिषत्' दिवं पतितुं गन्तु मैच्छत्। 'तं' तथाविधं पिपतिषु मररुम्, उत्तरतः परिगतः 'अग्निः' 'अभिन्यदधात्' उपरि हस्तनिधानेनाधस्तात् प्रेरितवान्। किं ब्रुवन्? हे अररो! 'दिवं' द्युलोकं 'मा पप्तः' मा प्राप्नुहीति। "पत्लृ गतौ[4]"-इत्यस्माल्लुङि ऌदित्वादङ्[5], "पतः पु मिति[6] पुमागमः। एव मग्निनाभिनिधाने

---

१— वा० सं० १. २६. १। का० श्रौ० सू० २. ६. २१। अस्ति चात्र विचारः शाखान्तरघटितः (या० दे० टीका द्रष्टव्या)।

२— पा० सू० ५. ४. १०३।

३— वा० सं० १. २६. २। का० श्रौ० सू० २. ६. २२।

४—भ्वा० प० ८४५। ५— पा० सू० ३. १. ५५।

६— पा० सू० ७. ४. १९।

कृते सति, सोऽसुरर्दिवं न प्राप्नोत् । तद्वदेवेदानी मप्यध्वर्युः स्तम्बयजुर्हरन् 'अस्माद्' भूलोकात् 'एनम्' असुरम् 'अन्तरेति' अन्तरितं व्यवहितं करोति । आग्नीध्रस्त्वेतन्मन्त्रकरणकेनोत्कराभिनिधानेन 'दिवः' अन्तरिक्षात् त मसुर मन्तरितं[1] करोतीत्यर्थः ॥ १८ ॥

अथ तृतीयपर्यायं विधत्ते— "अथेति । मन्त्रं[2] व्याचष्टे— "अयं वा इति । 'अस्याः' पृथिव्याः सम्बन्धिनं 'य मिमं' मधुरादिरसं सर्वाः प्रजा उपजीवन्ति, अयं खल्वस्याः पृथिव्याः 'द्रप्सः' । तथाच हे पृथिवि ! 'ते' त्वदीयः 'एषः' रसः 'दिवं' द्युलोकं 'मा पप्तत्' मा पतत्विति 'इमम्' अर्थम् 'एषः' मन्त्रो ब्रूत इत्यर्थः । अस्मिन् तृतीयेऽपि पर्याये व्रजङ्गच्छेत्यादिकं सर्वं पूर्ववत् प्रयोक्तव्य मित्यभिप्रेत्य तत् पठति— "व्रज मिति ॥ १९ ॥

उक्तं समन्त्रकं त्रिर्हरण[3] मनूद्य प्रशंसति— "स वा इति । 'इमे' पृथिव्यादयः प्रसिद्धाः त्रयो लोकाः । तथा च त्रिष्कृत्वो हरणेन 'एभिः' त्रिभिरेव लोकैः 'एनम्' असुरम् 'अभिनिदधाति' अभितो निक्षिपति, बाधत[4] इति यावत् ॥

यजुर्मन्त्रेण हरणस्य लोकत्रयस्य च साम्य माह— "अद्धा वा इति । 'इमे' पृथिव्यादयः 'लोकाः' इति यत्, तत् 'अद्धा वै' प्रत्यक्ष मेव खलु । यदेतद्धरणसाधनं यजुः, तदपि 'अद्धो' अद्धैव प्रत्यक्ष मेव ; अनुष्ठेयार्थस्य साक्षात् प्रतिपादकत्वात् । अतो यजुषो

---

१— व्यवहित मित्यादिर्ग्रन्थो भ-ठाभ्या मन्यत्र न दृश्यते ।

२— वा० सं० १. २५. ३ । का० श्रौ० सू० २. ६. २३ ।

३— 'त्रिर्हरणा'–इति ठ, ड । ४—'प्रतिबाधत'–इति ठ, ड ।

लोकानाञ्च प्रत्यक्षत्वसाम्यात्, त्रिवारं यजुषा हरणेन लोकत्रयाद्देवास्यासुररोर्बाधो युक्त इति निगमयति— "तस्मादिति ॥ २० ॥

अमन्त्रकं चतुर्थं पर्यायं विधत्ते— "तूष्णी मिति[1]। तस्य प्रयोजन माह— "स यदिति। 'इमान्' प्रागुक्तान् त्रीन् लोकान् अतिक्रम्य, यत् 'चतुर्थं' लोकजातम्, तत् 'अस्ति वा न वा'-इति सन्दिग्धम्; अत्यन्तविप्रकृष्टत्वेनानुभवपथानवतारात्। एतच्चतुर्थ-हरणात्तेनैव सन्दिह्यमानेन लोकजातेन विद्वेषणं कुर्वन्तं शत्रु मववाधते।

एतदुपपादयितुं तूष्णीं-हरणस्य लोकत्रयव्यतिरिक्तस्य चतुर्थ-स्थानस्य च साम्य माह— "अनद्धा वा इति। 'अनद्धा' अप्रत्यक्ष मित्यर्थः। तूष्णीं-हरण मप्यनुष्ठेयार्थप्रतिपादकमन्त्रप्रयोगाभावाद-स्पष्टत्वेन 'अनद्धः' अप्रत्यक्ष मेवेति ॥ २१ ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथभाष्ये
प्रथमकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम्[2] ॥

---

१— "सहैव शाखान्तरात्"—इति का० श्रौ० २. ६. २४ सू० टीकायाम्।

२— इह हि ब्राह्मणे पुरीषादानं, वेदिप्रेक्षणं, पुरीषनिरसनञ्चेति त्रीणि कर्माणि विहितानि। तत्र प्रथमं तावत् पुरीषादानार्थं मेव अध्वर्युः तृणसहितं स्फ्य मादाय सव्ये हस्ते सहैव तं निधाय दक्षिणेन हस्तेनालभ्य हस्तमार्जनेन तिर्यक्करोति। ततस्तत्तृणं वेद्या मुदगग्रं निधाय तृणस्याधस्ताद् भुवि स्फ्येन प्रहरति, तेन प्रहरणेनोत्खातं पुरीषं हस्तेन गृह्णाति। इत्थं पुरीषादानं सम्पाद्य ततो वेदि-प्रेक्षते। गृहीतं च तत् पुरीष मुत्करे निक्षिपति। एव मुत्तरोत्तरं चतुः कर्त्तव्यम्; तत्र मन्त्रेण त्रिः, तूष्णीं सकृदिति विवेकः। प्रकृतप्रदेशादुद्धृतस्तृणधूल्यादिराशिरुत्कर उच्यते ॥

देवाश्च वा ऽअसुराश्च। उभये प्राजापत्याः पस्पृधिरे ततो देवा ऽअनुव्य मिवासुरथ हासुरा मेनिरेऽस्माक मेवेदं खलु भुवन मिति ॥ १ ॥

ते होचुः। हन्तेमां पृथिवीं व्विभजामहै तां व्विभज्योपजीवामेति ता मौक्ष्णैश्चर्म्मभिः पश्चात् प्राञ्चो व्विभजमाना ऽअभीयुः ॥ २ ॥

तद्वै देवाः शुश्रुवुः। व्विभजन्ते ह वा ऽइमा मसुराः पृथिवीं प्रेत तद्रेष्यामो यत्रेमा मसुरा व्विभजन्ते के ततः स्याम यदस्यै न भजेमहीति ते यज्ञ मेव व्विष्णुं पुरस्कृत्येयुः ॥ ३ ॥

ते होचुः। अनु नोऽस्यां पृथिव्या माभजतास्त्वेव नोऽप्यस्यां भाग ऽइति ते हासुरा ऽअसूयन्त ऽइवोचुर्यावदेवैष व्विष्णुरभिशेते तावद्वो दद्म ऽइति ॥ ४ ॥

व्वामनो ह व्विष्णुरास। तद्देवा न जिहीडिरे महद्वै नो ऽदुर्य्ये नो यज्ञसम्मित* मदुरिति ॥ ५ ॥

ते प्राञ्चं व्विष्णुं निपाद्य। छन्दोभिरभितः पर्य्यगृह्णन् गायत्रेण त्वाच्छन्दसा परिगृह्णामीति दक्षिणतस्त्रैष्टुभेन त्वाच्छन्दसा परिगृह्णामीति पश्चाज्जागतेन त्वाच्छन्दसा परिगृह्णामीत्युत्तरतः ॥ ६ ॥

---

* 'यज्ञसम्मिता'—इति क, ख।

तं छन्दोभिरभितः परिगृह्य। अग्निं पुरस्तात् समाधाय तेनार्चन्तः श्राम्यन्तश्चेरुस्तेनेमाᳬ सर्व्वाम् पृथिवीᳬ समविन्दन्त* तद्यदेनेनेमाᳬ सर्व्वाᳬ समविन्दन्त तस्माद् वेदिर्नाम तस्मादाहुर्य्यावती व्वेदिस्तावती पृथिवीत्येतया हीमाᳬ सर्व्वाᳬ समविन्दन्तैवᳬ ह वा ऽइमाᳬ सर्व्वाᳬ सपत्नानाᳬ† संवृङ्क्ते निर्भजत्यस्यै सपत्नान्य ऽएव मेतद्वेद ॥ ७ ॥

सोऽयं व्विष्णुर्ग्लानः। छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमण मास स तत ऽएवौषधीनां मूलान्युपमुम्लोच ॥ ८ ॥

ते ह देवा ऽऊचुः। क्व नु व्विष्णुरभूत् क्व नु यज्ञोऽभूदिति ते होचुश्छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमण मस्त्यत्रैवान्विच्छतेति तं खनन्त इवान्वीषुस्तं त्र्यङ्गुलेऽन्वविन्दंस्तस्मात् त्र्यङ्गुला व्वेदिः स्यात्तदु हापि पाञ्चिस्त्र्यङ्गुला मेव सौम्यस्याध्वरस्य व्वेदिं चक्रे ॥ ९ ॥

तदु तथा न कुर्यात्। ओषधीनां वै स मूलान्युपाम्लोचत्तस्मादोषधीना मेव मूलान्युच्छेत्तवै ब्रूयाद्यन्वेवात्र व्विष्णु मन्वविन्दंस्तस्माद्वेदिर्नाम ॥ १० ॥

त मनुविद्योत्तरेण परिग्रहेण पर्यगृह्णन्। सुक्ष्मा चासि शिवा चासीति दक्षिणत ऽइमा मेवैतत् पृथिवीᳬ

---

* 'सुमविन्दन्त'—इति ग, च। † 'सपत्नाᳬ'—इति क।

संविद्य सुक्ष्माꣳ शिवा मकुर्वत स्योना चासि सुषदा चासीति पश्चादिमा मेवैतत् पृथिवीꣳ संविद्य स्योनाꣳ सुषदा मकुर्व्वतोर्ज्जस्वती चासि पयस्वती चेत्युत्तरत इमा मेवैतत् पृथिवीꣳ संविद्य रसवती मुपजीवनीया मकुर्वत ॥ ११ ॥

स वै त्रिः पूर्व्वं परिग्रहं परिगृह्णाति। त्रिरुत्तरं तत् षट् कृत्वः षड् वा ऽऋतवः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्त मेवैतत् परिगृह्णाति ॥ १२ ॥

षड्भिर्व्याहृतिभिः। पूर्व्वं परिग्रहं परिगृह्णाति षड्भिरुत्तरं तद् द्वादश कृत्वो द्वादश वै मासाः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्त मेवैतत् परिगृह्णाति ॥ १३ ॥

व्याममात्री पश्चात् स्यादित्याहुः। एतावान्वै पुरुषः पुरुषसम्मिता हि त्र्यरत्निः प्राची तिरश्चि यज्ञो नात्र मात्रास्ति यावती मेव स्वयं मनसा मन्येत तावतीं कुर्यात् ॥ १४ ॥

अभितोऽग्नि मꣳसा ऽउन्नयति। योषा वै वेदिर्व्वृषाग्निः परिगृह्य वै योषा वृषाणꣳ शेते मिथुन मेवैतत् प्रजननं क्रियते तस्मादभितोऽग्नि मꣳसा ऽउन्नयति ॥ १५ ॥

सा वै पश्चाद्वरीयसी स्यात् । मध्ये सꣳह्वारिता पुनः पुरस्तादुर्व्येव मिव हि योषां प्रशꣳसन्ति पृथुश्रोणिर्विमृष्टान्तराꣳसा मध्ये सङ्ग्राह्येति जुष्टा मेवैना मेतद्देवेभ्यः करोति ॥ १६ ॥

सा वै प्राक्प्रवणा स्यात् । प्राची हि देवानां दिगथो ऽउदक्प्रवणोदीची हि मनुष्याणां दिग् दक्षिणतः पुरीषं प्रत्युदूहत्येषा वै दिक् पितृणाꣳ* सा यद्दक्षिणाप्रवणा स्यात् क्षिप्रे ह यजमानोऽमुं लोक मियात्तथो ह यजमानो ज्योग् जीवति तस्माद्दक्षिणतः पुरीषं प्रत्युदूहति पुरीषवतीं कुर्व्वीत पशवो वै पुरीषं पशुमती† मेवैना मेतत् कुरुते ॥ १७ ॥

तां प्रतिमार्ष्टि । देवा ह वै सङ्ग्रामꣳ सन्निधास्यन्तस्ते होचुर्हन्त यदस्यै पृथिव्या ऽअनाम्रतं देवयजनं तच्चन्द्रमसि निदधामहै स यदि न ऽइतोऽसुरा जयेयुस्तत ऽएवार्चन्तः श्राम्यन्तः पुनरभिभवेमेति स यदस्यै पृथिव्या ऽअनाम्रतं देवयजन मासीत्तच्चन्द्रमसि न्यदधत तदेतच्चन्द्रमसि कृष्णं तस्मादाहुश्चन्द्रमस्यस्यै पृथिव्यै देवयजन मित्युपि ह वा ऽअस्यैतस्मिन् देवयजन ऽइष्टं भवति तस्माद्वै प्रतिमार्ष्टि ॥ १८ ॥

---

* 'पितॄणाꣳ'—इति च । † 'पशुमती'—इति च ।

स प्रतिमार्ष्टि। पुरा क्रूरस्य विसृपो विरप्शिन्निति सङ्ग्रामो वै क्रूरः सङ्ग्रामे हि क्रूरं क्रियते हतः पुरुषो हतोऽश्वः शेते पुरा ह्येतत् सङ्ग्रामान्न्यदधत तस्मादाह पुरा क्रूरस्य विसृपो विरप्शिन्नित्युदादाय पृथिवीं जीवदानु मित्युदादाय हि यदस्यै पृथिव्यै जीव मासी-त्तच्चन्द्रमसि न्यदधत तस्मादाहोदादाय पृथिवीं जीवु-दानु मिति या मैरयंश्चन्द्रमसि* स्वधाभिरिति यां चन्द्रमसि ब्रह्मणादधुरित्येवैतदाह ता मु धीरासो ऽअनुदिश्य यजन्त ऽइत्येतेनो ह ता मनुदिश्य यजन्तेऽपि ह वा ऽअस्यैतस्मिन् देवयजन ऽइष्टं भवति य ऽएव मेतद्वेद ॥ १९ ॥

अथाह प्रोक्षणीरासादयेति। वज्रो वै स्फ्यो ब्राह्म-णश्चेमं पुरा यज्ञ मभ्यजूगुपतां वज्रो वा ऽआपस्तद् वज्र मेवैतदभिगुप्त्या ऽआसादयति स वा ऽउपर्युपर्य्येव प्रोक्षणीषु धार्यमाणास्वथ स्फ्य मुद्यच्छत्यथ यन्निहित ऽएव स्फ्ये प्रोक्षणीरासादयेद् वज्रौ ह समृच्छेयातां तयो ह वज्रौ न समृच्छेते तस्मादुपर्युपर्य्येव प्रोक्ष-णीषु धार्य्यमाणास्वथ स्फ्य मुद्यच्छति ॥ २० ॥

---

* 'मैरयंश्चन्द्रमसि'-इति कादरौ, 'मैरयँश्चन्द्रमसि'-इति च-पुस्तके ।

अथैतां व्वाचं व्वदति। प्रोक्षणीरासादयेध्मं बर्हि-
रुपसादय स्रुचः सम्मृड्ढि पत्नीꣳ सन्नह्याज्येनोदेहीति
सम्प्रैष एवैष स यदि कामयेत ब्रूयादेतद्यद्यु कामये-
तापि नाद्रियेत स्वय मु ह्येवैतद्वेद यतः कर्म कर्त्तव्य
मिति ॥ २१ ॥

अथोदञ्चꣳ स्फ्यं प्रहरति। अमुष्मै त्वा व्वज्रं प्रहरा-
मीति यद्यभिचरेद्वज्रो वै स्फ्य स्तृणुते हैवैनेन ॥ २२ ॥

अथ पाणी ऽअवनेनिक्ते। यद्वास्यै क्रूर मभूत्तद्वास्या
ऽएतदहार्षीत् तस्मात्पाणी ऽअवनेनिक्ते ॥ २३ ॥

स ये हाग्र ऽईजिरे। ते ह स्मावमर्शं यजन्ते ते
पापीयाꣳस आसुरथ ये नेजिरे ते श्रेयाꣳस आसुस्ततो
ऽश्रद्धा मनुष्यान्विवेद ये यजन्ते पापीयाꣳसस्ते भवन्ति
य ऽउ न यजन्ते श्रेयाꣳसस्ते भवन्तीति तत ऽइतो देवान्
हविर्न्न जगामेतः प्रदानाद्धि देवा ऽउपजीवन्ति ॥ २४ ॥

ते ह देवा ऽऊचुः। बृहस्पति माङ्गिरस मश्रद्धा वै
मनुष्यानविदत्तेभ्यो व्विधेहि यज्ञ मिति स हेत्योवाच
बृहस्पति राङ्गिरसः कथा नु यजध्व ऽइति ते होचुः
किङ्काम्या यजेमहि ये यजन्ते पापीयाꣳसस्ते भवन्ति य
ऽउ न यजन्ते श्रेयाꣳसस्ते भवन्तीति ॥ २५ ॥

स होवाच। बृहस्पतिराङ्गिरसो यद्वै शुश्रुम देवानां

परिषूतं तदेषु यज्ञो भवति यच्छृतानि हवीꣳषि कृत्वा व्वेदिस्तेनावमर्शं मचारिष्ट तस्मात् पापीयाꣳसो ऽभूत तेनानवमर्शं यजध्वं तथा श्रेयाꣳसो भविष्यथेत्या क्रियत ऽइत्या बर्हिष स्तरणादिति बर्हिषा ह वै खल्वेषा शाम्यति स यदि पुरा बर्हिष स्तरणात् किञ्चिदापद्येत बर्हिरेव तत् स्तृणन्नुपास्येदथ यदा बर्हि स्तृणन्त्यपि पदाभितिष्ठन्ति स यो हैवं व्विद्वाननवमर्शं यजते श्रेयान् हैव भवति तस्मादनवमर्शमेव यजेत ॥ २६ ॥ ३ ॥

॥ इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम्* [२.५.] ॥

इत्थं स्तम्बयजुर्हरणं[1] विधाय वेदिपरिग्रहं वक्तु मितिहास मुपन्यस्यति— "देवाश्चेति । 'पस्पृधिरे' स्पर्द्धां कृतवन्तः । "अपस्पृधेथा मानृचुरानृहुरिति[2] सम्प्रसारणनिपातनस्योपलक्षणत्व मभिप्रेत्य लिट्यपि सम्प्रसारणं कृतम् । स्पर्द्धमानानां तेषां मध्ये 'देवाः' 'ततः' तेभ्यः असुरेभ्यः 'अनुव्यम्' अनुगमनं न्यग्भूतिं[3] प्राप्ता इव

---

* सायणाचार्यमतेऽत्रैव द्वितीयाध्यायपरिसमाप्तिः ॥

१— "यजुर्मन्त्रको दर्भः 'स्तम्बयजुः' । तच्च स्तम्बरूपं स्फ्येन भित्त्वोत्करदेशे हरेत्"—इति तै० ब्रा० ३. २. ९ सा० भा० (तै० सं० १. १. ९.) "यजुषा मन्त्रेण हरणीयः पांसुसहितः स्तम्बः 'स्तम्बयजुः', तस्य हरणं"—इति तै० सं० २. ६. ४. सा० भा० । "वेदिस्थानात् सकृणस्य पांसोर्मन्त्रेणान्यत्र हरणम्"—इति च तत्रैव ।

२— पा० सू० ६. १. ३६ । ३—'न्यक्कृतिं'—इति ठ ।

बभूवुः। 'अथ ह' अनन्तर मेव ते असुराः मन्यन्ते स्म। कि मिति? 'इदं' सर्वं जगदस्माक मेवेति ॥ १ ॥

एव मुक्त्वा कि मुक्तवन्त इति तद्दर्शयति— "ते हेति। 'हन्त'-इति हर्षे। यत एवं देवा न्यग्भूताः[1], अतो निष्प्रत्यूहं वयम् 'इमां' पृथिवीं विभजामहै। विभज्य च तां यथाभाग मुपजीवामेति। एव मुक्त्वा किं कृतवन्त इति तदाह— "ता मिति। 'औक्ष्णैः' उक्ष्णोऽनडुहः सम्बन्धिभिश्चर्मभिः। उक्षन्-शब्दात् "तस्येदम्"-इत्यणि[2] "षपूर्वहन्धृतराज्ञाम्"—इत्यल्लोपः[3]। तैश्चर्मभिः 'पश्चात्' प्रतीचीं दिश मारभ्य 'प्राञ्चः' प्राङ्मुखा विभजमानाः 'अभीयुः' अभिजग्मुरित्यर्थः ॥ २ ॥

असुरेष्वेवं कृतवत्सु देवाः किं कृतवन्त इति, तदाह— "तद्वा इति। "प्रेतेत्यादि। अस्माकं तूष्णी मवस्थान मनुचितम्, अस्माभि-रपि तद्विषये प्रयतितव्य मिति, परस्पर मभिमुखीकृत्येत्यर्थः प्रतिपाद्यते— हे देवाः! यूयं 'प्रेत' गच्छत, प्रोत्सहध्व मिति यावत्। यस्मिन् स्थाने असुराः पृथिवीं विभजन्ते, तत् स्थानं गमिष्यामः। गत्वा च 'यत्' यदि 'अस्यै' षष्ठ्यर्थे चतुर्थी[4] 'अस्याः' पृथिव्याः सम्बन्धि स्थानं न प्राप्नुयामः, 'ततः' तर्हि वय मभागिनो भवेम; यदि तु प्राप्नुयामः, तदा भागिनः 'स्याम' भवेमेत्यर्थः। एव मालोच्य देवैः कृतं दर्शयति— "त इति। यज्ञात्मक मेव 'विष्णुं' पुरतो धारयित्वा 'ईयुः' गतवन्त इत्यर्थः ॥ ३ ॥

---

१— 'न्यक्कृताः'—इति ठ। २— पा० सू० ४. ३. १२०।
३— पा० सू० ६. ४. १३५। ४— पा० २. ३. ६२ सू० वा० १५०९।

गत्वा चासुरान् प्रति किं मुक्तवन्त इति, तदाह—"ते हेति । 'अस्यां' पृथिव्यां 'नः' अस्मान् 'अन्वाभजत' संयोजयत; 'नः' अस्माक मप्यस्यां भागो भवत्विति। असुरैः कृतं प्रतिवचनं दर्शयति—"ते हेति । 'असूयन्त इव' असूयां कुर्वन्त इव, असहमाना इति यावत् । यावन्तं देशं विष्णुर्व्याप्य वर्त्तते, तत्परिमाणं स्थानं युष्मभ्यं प्रयच्छाम इति ॥ ४ ॥

असुरैरभिहिते देवास्तदङ्गीचक्रुरित्याह—"वामनो हेति । विष्णुर्हि तदानीं 'वामनः' खर्वो बभूव । अतएवासुराः तेनाक्रान्तं स्थानं प्रयच्छाम इत्यब्रुवन् । अथापि 'तत्' असुरैरुक्तं देवाः 'न जिहीडिरे' न ह्यनादृतं चक्रुः, किन्तु आद्रियन्ते स्मेत्यर्थः । "हेडृ अनादरे"-इति[1] धातुः । आदरणप्रकार माह—"महदिति । विष्णुर्हि यज्ञः, अतो 'यज्ञसम्मितं' स्थान मस्मभ्यं दत्तवन्त इति यत्, तत् 'नः' अस्माकं 'महत्' अधिकम् ॥ ५ ॥

एवं विचार्य देवैः कृतं दर्शयति—"त इति। यज्ञात्मकं 'विष्णुं' 'प्राञ्चं' प्राक्शिरसं निपात्य, दक्षिणतः, पश्चाद्, उत्तरतश्च गायत्र्यादिच्छन्दोभिः सर्वतः पर्यगृह्णन् ॥ ६ ॥

"त मिति । 'तं' विष्णुं गायत्र्यादिभिश्छन्दोभिः सर्वतः परिगृह्य, पूर्वस्यां दिशि आहवनीयाख्यम् 'अग्निं' प्रज्वाल्य, 'तेन' विष्ण्वात्मकेन यज्ञेन 'अर्चन्तः' पूजयन्तः, 'श्राम्यन्तः' कर्म्मानुष्ठानजनितं श्रमं प्राप्नुवन्तः 'चेरुः' पूर्ववत् ववर्त्तिरे । चरित्वा च 'तेन' यज्ञात्मकस्य

---

१— भ्वा० आ० २८४ । "हेडृ-होडृ अनादरे"—इति ठ ।

विष्णोराधारभूतेन स्थानेन देवाः सर्वा मेवेमां पृथिवीं सम्यगल-भन्त । अतो विद्यते लभ्यते अनेनेति यज्ञस्थानस्य 'वेदि'-नाम-धेयं निर्वक्ति— "तद्यदिति ।

उक्तं वेद्याः सर्वपृथिवीलाभरूपलम्, इदानीं वेदिपृथिव्यो-स्तादात्म्यविषया मभियुक्तप्रसिद्धि मुदाहरति— "तस्मादिति । यत्प-रिमाणविशिष्टा खलु वेदिः, तत्परिमाणैव पृथिवी, कुत इत्यत आह— "एतयेति । 'हि' यस्मात् 'एतया' वेद्या 'इमां' सर्वां पृथिवीम् अलभन्त, अतस्तल्लाभहेतुत्वात् ततोऽनन्येत्यर्थः ॥

इत्थं पुरावृत्त मुदाहृत्य प्रकृते योजयति— "एवं हेति । यथैव हि वेदिपरिग्रहाद्देवा असुरसकाशात् कृत्स्नां पृथिवी मपहृतवन्तः, एव मेवायं यजमानोऽपि शत्रुसम्बन्धिनीं सर्वां भूमि मपहरति; तांश्च शत्रून् 'अस्याः' पृथिव्याः 'निर्भजति' निर्भक्तान् भागरहितान् करोतीत्यर्थः । तस्माद् गायत्रेणेत्यादिभिर्मन्त्रैः[1] स्फ्येन वेदिं दक्षिणतः पश्चादुत्तरतश्च रेखया परिगृह्णीयादित्यर्थः[2] ॥ ७ ॥

अथ वेदेः खननं विधित्सुः प्रकृत मितिहासशेष मनुक्रामति— "सोऽय मिति । 'सः' यज्ञात्मको 'विष्णुः', दक्षिणतः पश्चादुत्तरतश्च छन्दोभिः परिगृहीतत्वात् पूर्वस्यां दिशि चाग्नेरवस्थानात् इतस्तत-श्चलितु मशक्यत्वेन 'ग्लानः' श्रान्तः सन् 'अपक्रमणम्' अपगमनं 'नास' न जगाम । "अस गतिदीप्त्यादानेषु"[3]—इत्यस्माल्लिटि रूपम् ।

---

१—वा० सं० १. २७. १–३. का० श्रौ० सू० २. ६. २५ ।

२— एष एव पूर्वपरिग्रह उच्यते । का० श्रौ० २. ६. २५–२६. सू० ।

३— धा० उ० ८८६ ।

यद्वा अस्तेरेव लिटि छान्दसो भूभावाभावः[1]। ग्रामस्य तस्य विष्णोरपगमनं न बभूवेत्यर्थः। स च सर्वतः परिगृहीतो[2] विष्णुः, 'तत एव' तस्मिन्नेव स्थाने ओषधीनां मूलान्युपेत्य भूम्यन्तर्गतः सन् 'मुम्लोच' अस्तङ्गतः, अदृश्यो बभूव ॥ ८ ॥

अनन्तरञ्च ते देवास्तत्र विष्णु मपश्यन्तो वितर्कितवन्तः, कि मित्याह— "ते ह देवा इति। विष्णुः 'क्व' कुत्राभूत्? तदात्मको यज्ञश्च क्व वाभूदिति। एवं वितर्क्य तैर्निर्णीत मर्थं दर्शयति— "ते होचुरिति। "अत्रैवेति। चतसृष्वपि दिक्षु परिवृतत्वेन गमनासम्भवात् 'अत्रैव' स्थाने तस्य विष्णोरन्वेषणं कुरुतेत्यर्थः। इत्थं[3] परस्परं निश्चित्य भूमिं खनन्त इव 'तं' विष्णु मन्विष्टवन्तः। अन्विष्य तं भूम्यन्तः त्र्यङ्गुले 'अन्वविन्दन्' अलभन्त। यत एवम्, अत इदानी मपि यज्ञलाभाय वेदेस्त्र्यङ्गुलमात्रखननं कर्त्तव्य मिति विधत्ते— "तस्मादिति। त्र्यङ्गुलपरिमाणेन खाता[4] वेदिर्भवेदित्यर्थः।

वेदेस्त्र्यङ्गुलखनन मृषिसंवादेन द्रढयति— "तदु हेति। 'पाञ्चिः' नाम कश्चित्, स खलु सोमयागस्यापि वेदिं त्र्यङ्गुलखाता मेव कृतवान्; अतोऽत्रापि त्र्यङ्गुलखाता वेदिर्युक्तेति भावः ॥ ९ ॥

त मिमं पक्षं निषिध्य पक्षान्तर माह— "तदु तथेति। 'सः' विष्णुः ओषधीनां खलु मूलान्युपेत्यान्तर्हितोऽभवत्; तस्माद्यावति

१— "अस् भुवि"–इति अदा० प० ५५। "आर्द्धधातुके (पा० सू० २. ४. ५२.)"–इत्यधिकृत्य "अस्तेर्भूः"–इति (पा० सू० २. ४. ५२.) भूभावः प्राप्त इति भावः। २— 'प्रतिबद्धो'–इति ठ, ड।
३— 'एवं'–इति ड। ४— 'त्र्यङ्गुलप्रामाण्येन खात्वा'–इति ञ, झ।

देशे भूम्या मन्तरोषधीनां मूलानि प्रसरन्ति, तावत्पर्यन्तं खात्वा तन्मूलान्येवोच्छेत्तुं ब्रूयात्। "तुमर्थे सेसेनिति[1] तवै-प्रत्ययः। पूर्वं कृत्स्नपृथिवीलाभहेतुतया वेदिनाम निरुक्तम्, यज्ञात्मकस्य विष्णो-र्लाभाधिकरणतयापि तन्निर्वक्ति— "यस्वेवेति ॥ १० ॥

अथ वेदेरुत्तरपरिग्रहः[2] कर्त्तव्य इतीतिहासमुखेन विधि मुन्न-यति— "त मित्यादिना। 'तं' विष्णुम् 'अनुविद्य' लब्ध्वा उत्तर-परिग्रहेण पर्यगृह्णन्। गायत्रेण लेत्यादिभिः प्राक् कृतः पूर्वपरि-ग्रहः[3] तदपेक्षयास्योत्तरत्वम्। तस्य स्वरूप माह— "सुक्ष्मा[4] चासी-त्यादिना। 'दक्षिणतः' वेदेर्दक्षिणस्यां दिशि "सुक्ष्मा चासि"-इति[5] यजुषा स्फ्येन लेखया परिगृह्णीयात् ॥

मन्त्रतात्पर्य माह— "इमा मिति। एव मुत्तरत्रापि योज्यम्। तृतीयमन्त्रे 'ऊर्क्'-शब्देन बलकरो रसो विवक्षित इति व्याचष्टे— "रसवती मिति। पयस्वतीत्यस्य व्याख्यानम् "उपजीवनीया मिति। पयस्विनो हि गौर्लोके उपजीव्यते ॥ ११ ॥

पूर्वोत्तरपरिग्रहयोः सङ्ख्यां समुच्चित्य प्रशंसति— "स वा इत्या-दिना। षडृतुसमुदायात्मको यः संवत्सरः, तदात्मकः प्रजापतिः; संवत्सरकालभरणेन जातत्वादभेदोपचारः। आम्नास्यते ह्यग्रे बृहदा-रण्यके— "त मेतावन्तं काल मबिभर्यावान्संवत्सरस्त मेतावतः

---

१— पा० सू० ३. ४. ९।

२— "उत्तरं परिग्रहं परिगृह्णाति"–इत्यादि का०श्रौ० २.६.३१ सू०।

३— १५१ पृ० १७ पं०। ४— शोभना क्ष्मा, सुक्ष्मा।

५— वा० सं० १. २७. ४–६। का०श्रौ० सू० २. ६. ३१।

काशस्य परस्तादसृजत"-इति[1]। यज्ञस्य आश्रावयेत्यादिसप्तदशाक्षर-साध्यत्वात् "एष वै सप्तदशः प्रजापतिर्यज्ञ मन्वायत्त"—इति-श्रुतेः[2] प्राजापत्यात्मकः। एवं 'सः' यज्ञो 'यावान्' यत्परिमाणविशिष्टः, 'अस्य' च यज्ञस्य 'मात्रा' परिमाणं च यावत्, तत्परिमाण-विशिष्ट मेवैतं यज्ञं षट्सङ्ख्यासम्पादनेन 'परिगृह्णाति' स्वीकरो-तीत्यर्थः ॥ १२ ॥

पूर्वोत्तरपरिग्रहयोर्मन्त्रावयवसङ्ख्या मनूद्य समुच्चित्य प्रशंसति—"षड्भिरिति। व्याह्रियन्त इति 'व्याहृतयः' मन्त्रावयवाः, ते च पूर्वपरिग्रहे षट्। "गायत्रेण त्वेत्यादिकास्त्वान्तास्त्रयः, गृह्णाम्यन्तास्त्रयः; उत्तरपरिग्रहे च सुक्ष्मा चासीत्येव मस्यन्ताः षट् व्याहृतयः स्पष्टाः। अन्यत् पूर्ववत्[3] ॥ १३ ॥

गार्हपत्याहवनीययोर्मध्ये सा वेदिरायामतो यजमानमात्री; सा च पश्चाद्विस्तृत्या चतुररत्निः, पुरस्तात् त्र्यरत्निः कार्येति विधत्ते—"व्याममात्रीति। 'व्यामः' प्रसारितकरद्वयान्तरालसक्षणः। 'पश्चात्' प्रत्यग्भागे इत्यर्थः। "त्र्यरत्निः प्राचीति। त्रिभिररत्निभिर्विस्तृता प्राग्भागे वेदिः कार्येत्यर्थः। "त्रिवृद्धीति। सवनत्रयादिरूपेण यज्ञस्य त्रिवृत्त्वम्। पक्षान्तर माह— "नात्रेति। 'अत्र' वेद्यां परिमाणं नैवास्ति। 'यावतीं' यत्परिमाणविशिष्टा मेव वेदिं स्वयं मनसा

---

१— बृह० उप० १. २. ४। उपरिष्टात्—का० १०. अ० ६. ब्रा० ४. क० ४।

२— तै० सं० १. ६. ११। तत्रैव "आश्रावयेति चतुरक्षर मस्तुश्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः"–इति च। ३—१६२ पृ० १५ पं०।

हविरासादनादिकार्यपर्याप्तां मन्येत, तत्परिमाणविशिष्टां वेदिं कुर्यात् । कात्यायनोऽपीमं पक्षद्वय मसूत्रयत्— "व्याममात्री पश्चात् त्र्यरत्नीं प्राची मपरिमितां वा"-इति[१] ॥ १४ ॥

वेद्यंसयोराहवनीयस्य स्पर्शं विधत्ते—"अभित इति । 'अग्निम् अभितः' आहवनीयस्य दक्षिणोत्तरपार्श्वयोः वेद्यंसौ 'उन्नयति' ऊर्द्ध्वं प्रापयति । तदेतत्[२] प्रशंसति— "योषा वा इति । लोके हि योषित् पुमांस मंसाभ्यां परिष्वज्य शेते; अतो वेदेरपि अंसाभ्या मग्नेः परिष्वङ्गो युक्त इति भावः ॥ १५ ॥

"योषा वै"—इति मिद्धवदुक्तं स्त्रीत्वं, लौकिकस्त्रीसाम्येनोपपाद्य प्रशंसति— "सा वा इति । 'वरीयसी' उरुतरा, विस्तीर्णतरा । उक्तं हि[३] "व्याममात्री पश्चात् स्यादिति" । 'मध्ये' प्रत्यग्भागानन्तर-भाविनि मध्यदेशे 'संह्वारिता' सङ्कुचिता; 'पुरः' पूर्वभागे 'उर्वी' विस्तीर्णा; त्र्यरत्निः प्राचीति विधानात् ॥

एवं वेदिस्वरूप मभिधाय तत्साम्यं स्त्रियां योजयति— "एव मिति । "विमृष्टान्तरांसेति । श्रोणितो विमृष्टं न्यून मन्तर मव-काशो ययोः तौ 'विमृष्टान्तरौ' तथाविधावंसौ यस्याः सा तथोक्ता । "सङ्ग्राह्येति । मध्यदेशे हस्तेन सङ्ग्रहीतुं शक्या; कृशोदरीति यावत् । एवम् 'एनां' प्रशस्तयोषिदाकारां वेदिं कुर्वन् देवेभ्यः प्रियां करोति ॥ १६ ॥

---

१— का० श्रौ० सू० २. ५. ३, ४, ५ । २— 'तदेव'-इति ङ ।
३— १५३ पृ० १४ पं० । आ० श्रौ० सू० २. २. ९. १० द्रष्टव्यम् ।

अथ सा वेदिः प्राक्प्रवणोदक्प्रवणा वा कार्येति विधत्ते— "सा वा इति । 'प्राक्' प्राच्यां दिशि 'प्रवणं' निम्नं यस्याः सा तथोक्ता । प्राच्या दिशो देवसम्बन्धित्वम्; दिग्विभजनसमये देवैरात्मीयतया स्वीकारात् । श्रूयते हि तैत्तिरीयके — "देवमनुष्या दिशो व्यभजन्त प्राचीं देवाः"-इति[1] । इमां प्रसिद्धिं द्योतयितु मत्र 'हि'-शब्दः । 'अथो'-इति पक्षान्तरं द्योत्यते । अत एव कात्यायनोऽपि पक्षद्वय मसूत्रयत्— "प्राक्प्रवणा मुदग्वा"-इति[2] । आपस्तम्बस्तु प्रागुदगुत्तरोपजीवनेन विकल्प मसूत्रयत्— "प्राक्प्रवणां प्रागुदक्-प्रवणां वा"-इति[3] । उदीच्या मनुष्यसम्बन्धः; शान्तरूपत्वात् । अत एवान्यत्राम्नायते— "एषा वै देवमनुष्याणाꣳ शान्ता दिक्"-इति[4] ॥

वेदेर्दक्षिणभागस्य पांशुभिरौन्नत्यकरणं विधत्ते— "दक्षिणत इति । 'पुरीषं' खातं पांशुं 'प्रत्युदूहति' प्रतिक्षिपति । विहित मर्थ मुपपादयितुं विपक्षे बाध मुपन्यस्यति— "एषा वा इति । 'एषा' दक्षिणा दिक् पितॄणां स्वभूता । तथा च 'सा' वेदिः यदि 'दक्षिणाप्रवणा स्यात्' दक्षिणतो निम्ना भवेत्, तदा तत्रासिक्तोदकवत् यजमानोऽपि दक्षिणतोऽवस्थितं पितृलोकं 'क्षिप्रे' क्षिप्रम् 'इयात्' प्राप्नुयात् । प्राचीनप्रवणायान्तु वेद्यां नैष दोष इत्याह— "तथो हेति । तथा सति 'सः' यजमानः 'ज्योक्' चिरं जीवेत् ।

---

१— तै० सं० ६. १. १. १. "देवमनुष्या दिशो व्यभजन्त,— प्राचीं देवाः, दक्षिणा पितरः, प्रतीचीं मनुष्याः, उदीचीꣳ रुद्राः"—इति ।

२— का० श्रौ० सू० २. ६. ६ । इहत्यमस्मत्सूत्रटीका द्रष्टव्या ।

३— आ० श्रौ० सू० २. २. ६ ।    ४— तै० ब्रा० २. १. ३. ५ ।

खाता वेदिर्नाद्भिः स्वच्छीकरणीया, किन्तु पांशुलैव कार्येति विधत्ते— "पुरीषवती मिति। तत् प्रशंसति— "पशवो वा इति। पशुप्राप्तिहेतुत्वात् पुरीषस्य पशुत्वम्। 'पुरीषैः' पांशुभिः[1] युक्तां वेदिं कुर्वन् पशुभिर्युक्ता मेवैनां कुरुत इत्यर्थः ॥ १७ ॥

"पुरा क्रूरस्येति[2] मन्त्रेण यद्वेदेः मार्जनं, तद् विधत्ते— "ता मिति। एतत्प्रशंसार्थं मितिहास माह— "देवा हेति। पुरा खलु देवा असुरैः सह योत्स्यमाना एव मवोचन्। किं मिति। 'अस्याः' पृथिव्याः सम्बन्धि। 'अनामृतम्' आ समन्तात् मृतम्, सर्वदा नश्वरम् 'आमृतम्', तद्विपरीतम् 'अनामृतम्', सर्वदा बाधविधुरम्। ईदृग्विधं यद् 'देवयजनं' देवयागाधिकरणभूतं स्थानम्, तत् 'चन्द्रमसि' चन्द्रमण्डलमध्ये निक्षिपाम। 'सः'-इति व्यत्ययेनैकवचनम्[3]। ते सुराः यदि 'नः' अस्मान् 'इतः' अस्मात् स्थानात् जयेयुः, तदा वय मेतत् स्थानं परित्यज्य 'तत एव' चन्द्रमसि निहिते तस्मिन् स्थाने एव, पुनर्यज्ञं कुर्वाणास्तेन यज्ञेनासुरान् पुनरभिभवेमेति। ईदृग्विधोपायजनितहर्षद्योतको 'हन्त'-शब्दः। एवं विचार्य्य तथैव देवैः कृत मिति दर्शयति— "स यदिति। व्यत्ययेन पुंलिङ्गता[4]। तद्यदस्याः पृथिव्याः सम्बन्धीत्यर्थः। 'न्यदधत' निहितवन्तो निक्षिप्तवन्तः। 'तत्' निहितं देवयजनम्, 'एतद्' इदानीं चन्द्रमसि कृष्णवर्णं सत् कलङ्कात्मतया दृश्यते।

---

१— इह सर्वत्रैव पांशु-पांसु-इति पाठभेदो आदि-ठाद्योः।

२— वा० सं० १. २८. १। का० श्रौ० सू० २. ६. ३२।

३— पा० सू० ३. १. ८५। ४— १२७ पृ० द्वितीयटीप्पनी द्रष्टव्या।

उक्तेऽर्थे लोकप्रसिद्धि मुदाहरति— "तस्मादिति। यस्मादेवं पृथिव्याः अनाप्तं देवयजनं चन्द्रमसि निक्षिप्तम्, तस्मादेव कारणादस्याः पृथिव्याः सम्बन्ध्युदीरितलक्षणं देवयजनं चन्द्रमसि विद्यत इत्यभिज्ञाः कथयन्तीत्यर्थः। यदीदृग्विधं देवयजनम्, एतस्मिन्नेव "पुरा क्रूरस्य"-इति[1]मन्त्रेण प्रतिमार्जनं कुर्वतः 'अस्य' यजमानस्यापि यज्ञेनेष्टं भवतीत्यर्थः॥ १८॥

विहितं प्रतिमार्जन मनूद्य मन्त्रं[2] विधत्ते— "स इति। मन्त्रगतक्रूरपदस्यार्थ माह— "सङ्ग्रामो वै क्रूर मिति। कथं सङ्ग्रामस्य क्रूरशब्दाभिधेयतेत्याशङ्क्योपपादयति— "सङ्ग्रामे हीति। क्रूरकरण मपि कथं सङ्ग्रामे विद्यत इत्यत आह— "हतः पुरुष इति। पुरुषाश्वादेस्तुरङ्गबलस्य तत्र हननलक्षणात् क्रूरकरणात् तदधिकरणभूतः सङ्ग्रामोऽप्यत्र क्रूरशब्देन प्रतिपाद्यत इत्यर्थः॥

पदार्थ मुक्त्वा वाक्यार्थ मुपपादयति—"पुरा हीति। 'क्रूरस्य' सङ्ग्रामस्य 'विसृपः' विसर्पणादागमनात्पुरेति मन्त्रवाक्यार्थ इत्यभिप्रायः। मन्त्रस्य द्वितीयं भाग मनूद्य 'जीवदानु'-पदस्य विवक्षित मर्थं दर्शयन् व्याचष्टे— "उदादायेति। 'अस्याः' पृथिव्याः 'जीवं' जीवनरूपं जीवात्मभूतं वा यदनाप्तं देवयजन मासीत्, तदित्यर्थः। तथा च 'जीवदानुं' जीवनप्रदां जीवभूतां पृथिवी मिति मन्त्रपदाभिप्रायो वर्णितो भवति[3]। वैयाकरणास्तु "जीवेरदानुक्"-इति[4]

---

१, २— वा० सं० १. २८. १। का० श्रौ० सू० २. ६ ३२।

३, ४— तदेवं जीवं ददातीति विग्रहोऽत्रास्य ब्राह्मणकारस्येष्टः। "आकेमाणं जीरदानुरिति वर्णलोपात्"-इति पा० ६. १. ६६ सू० वा०।

जीवदानुपदं व्युत्पादयन्ति । तथैव तैत्तिरीयकैराम्नातम्[1] । मन्त्रस्य भागान्तर मनूद्य व्याचष्टे— "या मिति । 'ब्रह्मणा' मन्त्रेण । एतच्च स्वधाभिरित्यस्य व्याख्यानम् । मन्त्रस्यान्तिमं भाग मनूद्य व्याचष्टे— "ता मिति । 'एतेन' इदानीन्तनेन देवयजनेन 'तां' चन्द्रमस्यवस्थिताम्, अनाम्नतां पृथिवीम् 'अनुदिश्य' तदेव मिति तादात्म्येनानुसन्धायेत्यर्थः ॥

एतद्वेदनं प्रशंसति— "अपि स्वेति ॥ १९ ॥

वेदिकरणानन्तरं कर्त्तव्यं विधत्ते— "अथेति । प्रोक्षणीरासादयेत्यादिकं सम्प्रैषं ब्रूयादित्यर्थः । प्रोक्षत्याभिरिति 'प्रोक्षण्यः' आपः, तासा मासादनं यज्ञरक्षार्थ मिति व्याचष्टे— "वज्रो वा इति । स्फ्यस्तावद् वज्रः ; तदंशपरिणामरूपत्वात् । तथैव प्रागाम्नातम्— "तस्य स्फ्यस्तृतीयं वा यावद् वा"-इति[2] । ब्राह्मणोऽपि वज्रात्मकः ; तद्वन्मन्त्रसामर्थ्येन रक्षसां हन्तृत्वात् । तौ खलु पुरेमं यज्ञम् 'अभ्यजूगुपताम्' अभितोऽरक्षिष्टाम् । "गुपू रक्षणे[3]"-इत्यस्माल्लुङि "गुपेश्छन्दसि"-इति[4] चङि रूपम् । तत्र हि "आयादय आर्द्धधातुके वा[5]"-इत्याय-प्रत्ययो विकल्प्यते । "वज्रो वा इत्यादि । "तस्माद् येनैता यन्ति निम्नं कुर्वन्ति"-इत्यपां वज्रत्वं प्रागेव[6] श्रुत्या

---

१— तै० सं० १. ५. १० । "जीरं जीवनं पुरोडाशद्वारेण यज्ञस्य ददातीति जीरदानुः"—इति तत्र सा० भा० । जीवदानुशब्दोऽप्येवमर्थकः ।

२— १३४ पृ० २ पं०, १३६ पृ० १० पं० च द्रष्टव्यम् ।

३— भ्वा० पं ३९५ । ४— पा० सू० ३. १. ५० ।

५— पा० सू० ३. १. ३१ । ६— ९ पृ० २ पं०, २९ पृ० ८ पं० ।

प्रतिपादितम् । वज्ररूपाणां तासा मासादनं यज्ञस्याभितो रक्षार्थे सम्पद्यत इत्यर्थः ॥

प्रोक्षणीना मासादनसमये आग्नीध्रकर्तृकं स्फ्यस्योद्यमनं[1] विधत्ते— "स वा इति । "उपर्यध्यधसः सामीप्ये[2]"-इत्युपरिशब्दस्य द्विर्वचनम् । 'उपर्युपरि' समीपे उपरि देशे । आसाद्यमानासु 'प्रोक्षणीषु' 'धार्यमाणासु' सतीषु 'अथ' अनन्तर मासादनसमकाल मेवाग्नीध्रः स्फ्यम् 'उद्यच्छति' धारयति । विपक्षे बाध माह— "अथ यदिति । उद्यमन मकृत्वा पूर्वं वेदिमध्ये निहितस्य स्फ्यस्योपरि सादने स्फ्याब्लक्षणौ 'वज्रौ' सङ्गतौ भवेताम् । तथा च वज्रद्वयसङ्गमाद् यजमानस्य बाधः स्यादित्याशयः । 'समो गम्यृच्छि'-इत्यात्मनेपदम्[3] । अस्य दोषस्याभावं स्वपक्षे दर्शयति— "तथो हेति । 'तथो' तथा च स्फ्यस्य[4] वेदेः सकाशादुद्यमने सतीत्यर्थः । "तस्मादिति प्रतिपादितार्थनिगमनम् ॥ २० ॥

प्रतीकग्रहणेन विहितं[5] सम्प्रैषमन्त्रं[6] साकल्येनानुवदति— "अथैता मिति । हे आग्नीध्र ! प्रोक्षणार्था अप आसादय । अग्निसमिन्धनार्थम् 'इध्मं', वेदिस्तरणार्थम् 'बर्हिः' च, आहवनीयसमीपे आसादय । जुह्वाद्याः 'स्रुचः' सम्मार्जनसंस्कारेण संस्कुरु । यजमानस्य या पत्नी, तां योक्त्रेण 'सन्नह्य', यत् प्रागग्रावधिश्रित माज्यम्, तेन

---

१— स्फ्यलक्षणं ४८ पृ० द्रष्टव्यम् । २— पा० सू० ८. १. ७ ।
३— पा० सू० १. ३. २९ । ४— 'स्फ्यस्यास्याः'—इति ज, झ ।
५— 'विवक्षितं'—इति ड । ६— वा० सं० १. २८. २ ।

'उदेहि' आगच्छेति सम्प्रेषमन्त्रार्थः। एव मेष मन्त्रः परप्रत्याय-नार्थप्रयुक्तत्वात् सम्प्रैष एव; न तु मन्त्रान्तरवददृष्टैकप्रयोजन इत्याह—"सम्प्रैष इति ॥

"स यदीत्यादि। प्रोक्षणासादनादिकम् आग्नीध्रेण कारयितुं यदि कामयेत, तदा 'एतत्' सम्प्रैषवाक्यं ब्रूयात्; यदि च तथा न कामयेत, स्वय मेव कुर्या मित्येव मेव कामयेत, तदा 'तत्' सम्प्रैषवचनं नाद्रियेतापि, तद्विषय मादर मपि न कुर्यात्। तच्चो-पपत्ति माह— "स्वय मिति। 'अतः' अस्मात् कर्मणोऽनन्तर मिदं कर्म कर्त्तव्य मिति 'हि' यस्मात् स्वय मेवैतद्वेद, तस्मात्परं प्रति अज्ञानज्ञापनार्थः सम्प्रैषो निरर्थक इत्यर्थः ॥ २१ ॥

"द्विषतो बधः"-इति[1] मन्त्रेण स्फ्यस्य बहिर्वेद्युदङ् निरसनं विधत्ते— "अथेति। अभिचरतो विशेष माह— "अमुष्मा इति। अस्मिन् मन्त्रे "अमुष्मै"—इति शत्रोर्नाम चतुर्थ्या निर्दिशेदि-त्यर्थः ॥ २२ ॥

हस्तप्रक्षालनं विधत्ते— "अथेति। 'अवनेनिक्ते' शोधयति, प्रक्षा-लयेदित्यर्थः। "णिजिर् शौचपोषणयोः"-इति[2] धातुः। "निजां त्रयाणाम्[3]"-इत्यभ्यासस्य गुणः। अवनेजनस्य प्रयोजन माह— "यद्वीति। यत् खलु 'अस्याः' वेदेः खननादिकं 'क्रूरं' कर्माभूत्। तदनेन स्फ्यस्योदङ्निरसनेन 'अस्याः' वेदेः 'अहार्षीत्' निरास्यत्। 'तस्मात्' पाण्योः क्रूरकर्मसंश्लेषात् अवनेजनेन शुद्धिः कार्येत्यर्थः॥ २३॥

---

१— वा० सं० १. २८. ३। का० श्रौ० सू० २. ६. ४२।

२— जु० उ० ११। ३— पा० सू० ७. ४. ७५।

मृतानां हविषां यागात् प्राक् निर्मिताया वेदेश्च बर्हिस्त-रणात् पूर्वं स्पर्शनिषेधं विधित्सुः तत्सिद्ध्यर्थ मितिहास माचष्टे– "स ये हेति । पूर्ववद् बहुवचनस्थाने स इत्येकवचनम्[1], ते । 'ये' प्रसिद्धा यजमानाः 'अग्रे' पुरा ह 'ईजिरे' इष्टवन्तः, 'ते' खलु याग-समये मृतानि हवींषि क्लृप्तां वेदिं च 'अवमर्शम्' अवमृश्य संस्पृश्य यजन्ते; 'ते' च तेनावमर्शजनितेन दोषेण 'पापीयांसः' पापिष्ठाः निकृष्टा बभूवुः । याग मकुर्वाणास्तु अवमर्शजनितदोष-विरहात् श्रेष्ठा एव बभूवुः। 'ततः' अनन्तर मेव अवमर्शनस्य दोषहेतुत्व मजानानान् 'मनुष्यान्' 'अश्रद्धा' यागविषया अरुचिः 'विवेद' प्राप्नोति[2] । ता मेवाश्रद्धां दर्शयति– "य इति । यागस्य अनर्थहेतुता मज्ञासिषुरित्यर्थः ।

"तत इत्यादि । 'ततः' अश्रद्धाप्राप्त्यनन्तरं केनचिदपि यागस्य अननुष्ठानात् 'इतः' अस्माल्लोकात् देवान् प्रति चरुपुरोडाशा-दिकं 'हविः' न जगाम । ननु मागमद्धविः; अमृतोपजी-विनां देवाना मनेन किं प्रयोजन मित्यत आह– "इतः प्रदाना-द्धीति । 'इतः' अस्माल्लोकात् प्रदीयमानं यद्धविः, तस्मादि-त्यर्थः । "कृत्यल्युटो बहुलम्"-इति[3] प्रपूर्वाद् ददातेः कर्मणि ल्युट् ॥ २४ ॥

तच्चेतिहास माह– "ते हेति। हविरागमनाभावेन निराहाराः

---

१— १२७ पृ० टीप्पनी द्रष्टव्या । २— 'प्राप्नोत्'-इति ठ, ड ।

३— पा० सू० ३. ३. ११३ ।

'ते' देवाः अङ्गिरसः पुत्रं बृहस्पति मुक्तवन्तः। कि मिति, 'अश्रद्धा' यागविषया मनुष्यान् प्राप्नोति[1], तत्[2] तां निरस्य तेभ्यो 'यज्ञं विधेहि' यजध्व मिति विधिं कुर्या इत्यर्थः।

स च बृहस्पतिः आगत्योक्तवान्— हे मनुष्याः! 'कथा' कथं कस्माद्धेतोः न यजध्वे इति। "था हेतौ च च्छन्दसि"—इति[3] था-प्रत्ययः। एवं पृष्टैस्तैरुक्तं यागाननुष्ठानकारण मुपन्यस्यति— 'किङ्काम्या' किङ्कामनया? कस्य फलस्येच्छयेत्यर्थः ॥ २५ ॥

एवं यागानुष्ठानत्यागकारण मुक्तवत्सु तेषु बृहस्पतिरयथानुष्ठानजनित मेव तत् पापीयस्त्वम्, न तु सम्यग्यागानुष्ठानज मिति बोधयंस्तेषां विपर्यस्ततां[4] निरस्यति— "स होवाचेति। "यद्वै शुश्रुमेति। 'यत्' खलु वस्तु देवाना मर्थं 'परिषूतं' परिगृहीतं शुश्रुम, 'तत्' एतदात्मक एष यज्ञः; तत्साध्यत्वात्। सामान्योक्तं विशिनष्टि— "यच्छृतानीति। 'शृतानि' पक्वानि पुरोडाशादीनि 'हवींषि', पूर्वपरिग्रहादिभिः 'क्लृप्ता' निर्मिता वेदिरिति यदस्ति, एतत्साध्यो हि देवार्थो यज्ञः, 'तेन' एवंविधेन यज्ञेन हे मनुष्याः! यूयम् 'अवमर्शं' अवमृश्य यागात् प्राक् पक्वानि हवींषि, बर्हिःस्तरणात्[5] पूर्वं वेदिं च संस्पृश्य, 'अचारिष्ट' आचरणं कृतवन्तः; यागसाधनस्य च मनुष्यसंस्पर्शो न युक्तः; अतस्तस्मादेवावमर्शनात् हे मनुष्याः! यूयं पापीयांसोऽभूत, न तु यागात्। अतोऽवमर्शं परित्यज्य तेन यज्ञेन

---

१— 'प्राप्नोत्'—इति ठ, ड। २— नास्त्येतत् पदं ठ-ड-पुस्तकयोः।
३— पा० सू० ५. ३. २६। ४— 'विपर्ययग्रस्ततां'—इति ठ।
५— एवंविधस्थानेषु सविसर्गनिर्विसर्गपाठौ सर्वत्रैव ज्ञेयौ।

यजध्वम्; तथा च श्रैष्ठ्यं वो भविष्यतीति बृहस्पतिना बोधिते अवमर्शनपरित्यागस्यावधिं पृच्छति— "आ कियत इति। कियत्कालपर्यन्त मेव अवमर्शनपरित्याग इत्यर्थः। तस्योत्तर माह— "बर्हिष इति। बर्हिःस्तरणपर्यन्तं, संस्कृतां वेदिं न स्पृशेदित्यर्थः[१] ॥

एतच्च हविषा मप्युपलक्षणम्; अतः पक्वानि हवींष्यपि यागात् पूर्वं न स्प्रष्टव्यानीति द्रष्टव्यम्। अत एव सूचितं कात्यायनेन — "प्राक् स्तरणाद् वेदिं नावमृशेत्कृतानि च हवीꣳष्या प्रचरणादिति[२]। युक्तञ्चैतदित्याह— "बर्हिषेति। बर्हिषः स्तरणात्[३] पूर्व मशान्ता सती सा वेदिः स्तीर्यमाणेन 'बर्हिषा' खलु शान्ता भवति; अतोऽशान्तायाः स्पृष्टौ प्रागुक्तो दोषो युज्यत इत्यर्थः ॥

"स यदीत्यादि। बर्हिषः स्तरणात्[४] पूर्वं यदि वेदिमध्ये 'किञ्चित्' तृणादिक मापद्येत, तदा तन्निरासार्थ मपि न स्पृशेत्; किन्तु 'बर्हिः स्तृणन्' स्तरणसमये बर्हिषः स्तरणं[५] कुर्वन्नेव 'तत्' तृणादिकं निरस्येत। स्तरणप्रभृति वेदिस्पर्शो न दोषायेत्यभिप्रेत्याह— "अथेति। 'यदा' यस्मिन् काले बर्हिर्मुष्टिं स्तृणन्त्यध्वर्यवः, तदानीं 'पदा' पादेनाप्यभितिष्ठन्ति, अतस्तस्मिन् समये स्पर्शो न दुष्यतीति भावः। एव मितिहासमुखेन प्रतिपादित मर्थ मिदानी मप्यनुष्ठेयत्वेन विधत्ते— "स य इति। 'एवं विद्वान्' उक्त मितिहासं जानन्नित्यर्थः ॥ २६ ॥ ३ [२.५.] ॥

---

१— 'वेदिं नावमृशेदित्यर्थः'–इति ठ।

२— का० श्रौ० सू० २. ६. ३८, ३९।

३,४— 'बर्हिःस्तरणात्'–इति ठ।		५—'बर्हिःस्तरणं'–इति ठ।

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथभाष्ये द्वितीयाध्याये
पञ्चमं ब्राह्मणम्[1] ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ २ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहा-
राजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये
वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथम-
काण्डे द्वितीयाध्यायः समाप्तः ॥ २ ॥

---

१— इह हि ब्राह्मणे वेदिपरिग्रहं "प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः सम्मृड्ढि पत्नीँ सन्नह्याज्येनोदेहि"-इति प्रैषमन्त्रं च विधाय, स्फ्यप्रहरणं चोक्तम् । तत्र अध्वर्युः, ब्रह्मन् पूर्वं परिग्रहं ग्रहीष्यामीति ब्रह्माणं पृच्छति । ततो ब्रह्मा बृहस्पते परिगृहाणेतीमं मन्त्र मुपांशु पठित्वा ॐ३ परिगृहाणेत्युच्चैरध्वर्यु मनुजानाति । अनुज्ञातस्ताध्वर्युः स्फ्येन श्रोणेरारभ्य दक्षिणतो 'वेदिं परिगृह्णाति' रेखां करोति । ततो हर चिरिति अग्नीधं प्रति ब्रूयात् । ततोऽग्नीत् ताभ्यो लेखाभ्यः पांसूनुद्धृत्योत्करे प्रक्षिप्य ता लेखाः 'सम्मृशेत्' मार्जनेन स्फोटयेत् । ततोऽभ्रि मादाय प्रदक्षिणं सर्वतो वेदिं खनति त्र्यङ्गुल मोषधिमूलोच्छेदपर्यन्तं वा । एव मेव स्फ्येन दक्षिणपश्चिमोत्तरपार्श्वेषु उत्तरवेदिं परिगृह्णाति । ततः स्फ्येन दक्षिणां दिशं प्रति वेदिपुरीष्य मुद्धृत्यानुमार्ष्टि । अनुमार्जनं चात्र खननेन विषमस्य समीकरणम् । ततोऽग्नीत् प्रोक्षणीर्गृहीत्वा वेदेरुपरिष्टात् समीपे एव धारयति, अध्वर्युस्तु स्फ्य मुद्यम्य प्रोक्षणीरासादयेत्यादि प्रैषजातं ब्रूयात् । समाप्तेषु च प्रैषेषु स्फ्यं 'प्रहरति' उदगग्र मुत्करे प्रक्षिपतीति शम् ।

[ अथ तृतीयाध्याये प्रथमं ब्राह्मणम् ]

स वै स्रुचः सम्मार्ष्टि । तद्यत् स्रुचः सम्मार्ष्टि यथा वै देवानां चरणं तद्वा ऽअनु मनुष्याणां तस्माद् यदा मनुष्याणां परिवेषण मुपक्लृप्तं भवति* ॥ १ ॥

अथ पात्राणि निर्णेनिजति । तैर्निर्णिज्य परिवेविषत्येवं वा ऽएष देवानां यज्ञो भवति यच्छृतानि हवीꣳषि क्लृप्ता व्वेदिस्तेषा मेतान्येव पात्राणि यत् स्रुचः ॥ २ ॥

स यत् सम्मार्ष्टि । निर्णेनेक्त्येवैना ऽएतन्निर्णिक्ताभिः प्रचराणीति तद्वै द्वयेनैव देवेभ्यो निर्णेनिजत्येकेन मनुष्येभ्योऽद्भिश्च ब्रह्मणा च देवेभ्य ऽआपो हि कुशा ब्रह्म यजुरेकेनैव मनुष्येभ्योऽद्भिरेवैवम्वेतन्नाना भवति† ॥ ३ ॥

अथ स्रुव मादत्ते । तम्प्रतपति प्रत्युष्टꣳ रक्षः प्रत्युष्टा ऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ता ऽअरातय ऽइति वा ॥ ४ ॥

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य ऽआस-

* 'भवति'—इति ख, ग ।  † 'भवति'—इति ख, घ ।

ङ्गाद् बिभयाञ्चक्रुस्तद् यज्ञमुखादेवैतन्नाष्ट्रा रक्षाᳬस्यतो ऽपहन्ति ॥ ५ ॥

स वा ऽइत्यग्रैरन्तरतः सम्मार्ष्टि। अनिशितोऽसि सपत्नक्षिदिति यथानुपरतो यजमानस्य सपत्नान् क्षिणुयादेवमेतदाह वाजिनन्त्वा वाजेध्यायै सम्माज्मीति यज्ञियन्त्वा यज्ञाय सम्माज्मीत्येवैतदाहैतेनैव सर्व्वाः स्रुचः सम्मार्ष्टि वाजिनीन्त्वेति स्रुचं तूष्णीं प्राशित्रहरणम्* ॥ ६ ॥

स वा ऽइत्यग्रैरन्तरतः सम्माष्टींति†। मूलैर्बाह्यत ऽइतीव वा ऽअयं प्राण ऽइतीवोदानः प्राणोदानावेवैतद्दधाति तस्मादितीवेमानि लोमानीतीवेमानि ॥ ७ ॥

स वै सम्मृज्य सम्मृज्य प्रतप्य प्रतप्य प्रयच्छति। यथावमर्शं निर्णिज्यानवमर्शं मुत्तमं परिक्षालयेदेवं तत्तस्मात् प्रतप्य प्रतप्य प्रयच्छति ॥ ८ ॥

स वै स्रुव मेवाग्रे सम्मार्ष्टि। अथेतराः स्रुचो योषा वै स्रुग् वृषा स्रुवस्तस्माद् यद्यपि बह्व्य इव स्त्रियः सार्द्धं यन्ति य ऽएव तास्वपि कुमारक ऽइव पुमान् भवति स ऽएव तत्र प्रथम ऽएत्यनूच्य ऽइतरास्तस्मात् स्रुव मेवाग्रे सम्मार्ष्ट्यथेतराः स्रुचः ॥ ९ ॥

---

* 'प्राशित्रहरणᳬ'–इति च। † '०रतः सम्माष्टींति'–इति च-B।

स वै तथैव सम्मृज्यात्। यथाग्निं नाभिव्युक्षेद् यथा यस्मा ऽअशन माहरिष्यन्त्स्यात्तं पाचननिर्णेजनेनाभिव्युक्षेदेवं तत् तस्माद् तथैव सम्मृज्याद् यथाग्निं नाभिव्युक्षेत् प्राङिवैवोत्क्रम्य ॥ १० ॥

तद्धैके। स्रुक्सम्मार्जनान्यग्नावभ्यादधति व्वेदस्याह्याभूवन्त्स्रुच एभिः सममार्ज्जिषुरिदं वै किञ्चिद् यज्ञस्य नेदिदं बहिर्द्धा यज्ञाद् भवदिति* तद् तथा न कुर्याद् यथा यस्मा ऽअशन माहरेत् तं पाचननिर्णेजनं पाययेदेवं तत् तस्माद् पुरास्येदेवैतानि† ॥ ११ ॥

अथ पत्नीं सन्नह्यति। जघनार्द्धो वा ऽएष यज्ञस्य यत् पत्नी प्राङ्मे यज्ञस्तायमानो यादिति युनक्त्येवैना मेतद् युक्ता मे यज्ञ मन्वासाता ऽइति ॥ १२ ॥

योक्त्रेण सन्नह्यति। योक्त्रेण हि योग्यं युञ्जन्त्यस्ति वै पत्न्या ऽअमेध्यं यदवाचीनं नाभेरथैतदाज्य मवेक्षिष्यमाणा भवति तदेवास्या ऽएतद्योक्त्रेणान्तर्द्धात्यथ मेध्येनैवोत्तरार्द्धेनाज्य मवेक्षते तस्मात् पत्नीं सन्नह्यति ॥ १३ ॥

* 'भवेदिति'—इति सायणसम्मत इति च।

† 'देवैतानि'—इति ख, घ।

स वा ऽअभिवासः सुन्नह्यति । ओषधयो व्वै व्वासो व्वरुण्या रुज्जुस्तदोषधीरेवैतदन्तर्दधाति तथो हैना मेषा व्वरुण्या रुज्जुर्न्न हिनस्ति तस्मादभिवासः सुन्नह्यति ॥ १४ ॥

स सुन्नह्यति । अदित्यै रास्नासीतीयं वै पृथिव्यदितिः सेयं देवानां पत्न्येषा वा ऽएतस्य पत्नी भवति तदस्या ऽएतद्रास्ना मेव करोति न रज्जुꣳ हिरो वै रास्ना ता मेवास्या ऽएतत्करोति ॥ १५ ॥

स वै न ग्रन्थिं कुर्यात् । व्वरुण्यो वै ग्रन्थिर्व्वरुणो ह पत्नीं गृह्णीयाद् यद् ग्रन्थिं कुर्यात् तस्मान्न ग्रन्थिं करोति ॥ १६ ॥

ऊर्ध्वं मेवोद्गूहति । व्विष्णोर्व्वेष्योऽसीति सा वै न पश्चात् प्राची देवानां यज्ञ मन्वासीतेयं वै पृथिव्यदितिः सेयं देवानां पत्नी सा पश्चात् प्राची देवानां यज्ञ मन्वास्ते तद्वेमा मभ्यारोहेत् सा पत्नी क्षिप्रेऽमुं लोक मियात् तथो ह पत्नी ज्योग् जीवति तदस्या ऽएवैतन्निह्नुते तथो हैना मियं न हिनस्ति तस्माद् दक्षिणत ऽइवैवान्वासीत ॥ १७ ॥

अथाज्य मवेक्षते । योषा वै पत्नी रेत ऽआज्यं मिथुन मेवैतत् प्रजननं क्रियते तस्मादाज्य मवेक्षते ॥ १८ ॥

सावेक्षते । *अदब्धेन त्वा चक्षुषावपश्यामीत्युनार्त्तेन त्वा चक्षुषावपश्यामीत्येवैतदाहाग्नेर्जिह्वासीति यदा वा ऽएतदग्नौ जुह्वत्यथाग्नेर्जिह्वा ऽइवोत्तिष्ठन्ति तस्मादाहाग्नेर्जिह्वासीति सुहूर्द्देवेभ्य ऽइति साधु देवेभ्य ऽइत्येवैतदाह धाम्ने धाम्ने मे भव यजुषे यजुष ऽइति सर्व्वस्मै मे यज्ञायैधीत्येवैतदाह ॥ १९ ॥

अथाज्य मादाय प्राङुदाद्रवति† । तदाहवनीयेऽधिश्रयति यस्याहवनीये हवीᳬंषि श्रपयन्ति सर्व्वो मे यज्ञ ऽआहवनीये शृतोऽसदित्यथ यदमुत्राग्रेऽधिश्रयति पत्नीᳬं ह्यवकाशयिष्यन् भवति न हि तदवकल्पते यत्साग्नि प्रत्यग् घरेत् पत्नी मवकाशयिष्यामीत्यथ यत् पत्नीं‡ नावकाशयेदन्तरियाद्ध यज्ञात् पत्नीं तथो ह यज्ञात् पत्नीं§ नान्तरेति तस्माद् सार्द्धं मेव विलाप्य प्रागुदाहरत्यवकाश्य पत्नीं यस्यो पत्नी न भवत्यग्र ऽएव तस्याहवनीये ऽधिश्रयति ततत ऽआदत्ते तदन्तर्व्वेद्या सादयति ॥ २० ॥

तदाहुः । नान्तर्व्वेद्या सादयेदतो वै देवानां पत्नीः

---

* 'ऽदब्धेन'—इति घ ।

† 'प्राङुदाद्रवति'—इति ग, 'प्राङुदाहरति'—इति घ ।

‡ 'पत्नी'—इति ख । § 'पत्नी'—इति ख, ग ।

संयाजयन्त्युवसभा ऽग्रह देवानां पत्नीः करोति परः-
पुंसो हास्य पत्नी भवतीति तदु होवाच याज्ञवल्क्यो
यथादिष्टं पत्न्या ऽअस्तु कस्तदाद्रियेत यत्परःपुंसा
वा पत्नी स्याद् यथा वा यज्ञो वेदिर्य्यज्ञ ऽआज्यं यज्ञाद्
यज्ञं निर्म्मिमा ऽइति तस्मादन्तर्व्वेद्येवासादयेत् ॥ २१ ॥

प्रोक्षणीषु पवित्रे भवतः । ते तत ऽआदत्ते ताभ्या
माज्य मुत्पुनात्येको वा ऽउत्पवनस्य बन्धुर्मेध्य मेवैतत्क-
रोति ॥ २२ ॥

स ऽउत्पुनाति । सवितुस्त्वा प्रसव ऽउत्पुनाम्यच्छिद्रेण
पवित्रेण सूर्य्यस्य रश्मिभिरिति सोऽसावेव बन्धुः ॥ २३*॥

अथाज्यलिप्ताभ्यां पवित्राभ्याम् । प्रोक्षणीरुत्पुनाति
सवितुर्व्वः प्रसव ऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य
रश्मिभिरिति सोऽसावेव बन्धुः ॥ २४ ॥

तद्यदाज्यलिप्ताभ्यां पवित्राभ्याम् । प्रोक्षणीरुत्पुनाति
तदप्सु पयो दधाति तदिद मप्सु पयो हित मिदं हि
यदा व्वर्षत्यथौषधयो जायन्त ऽओषधीर्ज्जग्ध्वापः पीत्वा
तत ऽएष रसः सम्भवति तस्माद रसस्यो चैव सर्व-
त्वाय ॥ २५ ॥

अथाज्य मवेक्षते । तद्धैके यजमान मवख्यापयन्ति

---

* इतोऽनन्तरं "शतं २००"–इति ख, च ।

तद् होवाच याज्ञवल्क्यः कथन्नु न स्वय मध्वर्य्युर्वो भवन्ति कथꣳ स्वयं नान्वाहुर्य्युंच भूयस्य ऽइवाशिषः क्रियन्ते कथं न्वेषा मचैव श्रद्धा भवतीति यां वै कां च यज्ञ ऽऋत्विज ऽआशिष माशासते यजमानस्यैव सा तस्मादध्वर्युरेवावेक्षेत ॥ २६ ॥

सो ऽवेक्षते। सत्यं वै चक्षुः सत्यꣳ हि वै चक्षुस्तस्माद्य-दिदानीं द्वौ व्विवदमानावेयाता मह मदर्श मह मश्रौष मिति य ऽएव ब्रूयादह मदर्श मिति तस्मा ऽएव श्रद्दध्याम तत्सत्येनैवैतत्समर्द्धयति ॥ २७ ॥

सो ऽवेक्षते। तेजोऽसि शुक्र मस्यमृत मसीति स ऽएष सत्य एव मन्त्रस्तेजो ह्येतच्छुक्रꣳ ह्येतदमृतꣳ ह्येतत्तत्स-त्येनैवैतत्समर्द्धयति ॥ २८ ॥ ४ ॥

॥ इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम्[१] [३.१.] ॥

---

१— एतस्य भाष्यस्यारम्भतः प्रागिमौ श्लोकौ दृश्येते ठ-पुस्तके—

"ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन् पञ्च सीरीन् त्रिदशशतलता धेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणाः सिङ्गयार्यो,
व्यश्राणीद् विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ १ ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलस्वर्णजं स्वर्णमुख्यः,
कार्पासं यं कृपावान् गुडकृत मजड़ो राजतं राजपूज्यः।
आज्योत्थं प्राज्यबुद्धिर्लवणज मटणः शार्करं चार्कतेजाः,
रत्नाद्यो (रत्न)-रूपं गिरि मकृत मुदा पात्रसात् सिङ्गयार्यः ॥ २ ॥"

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥

प्रोक्षणीरासादयेतिप्रैषमन्त्रानुसारेण प्रथमं प्रोक्षणीना मासादन मुक्तम्[1]; इध्माबर्हिषो[2]रुपसादनम् अपि[3] विशेषवक्तव्याभावात् सिद्ध मित्यभिप्रेत्य क्रमप्राप्तं स्रुक्सम्मार्जनं[4] विधत्ते— "स वा इति। "यथा वा इत्यादि। 'यत्' खलु देवानां वर्त्तनम्, 'तदनु'सार्यैव मनुष्यवर्त्तनम्; तत्कार्यत्वात्। मनुष्याणां च भोज्यान्नसूपशाकादौ[5] पक्के सति भोजनस्थाने च शोधिते, तत्परिवेषणसाधनानि दर्व्यादीनि पात्राणि अद्भिः प्रक्षालनेन शोध्यन्ते। अतो मानुषव्यवहारनिदानत्वाद् देवव्यवहारस्य[6] देवाना मन्ने[7] हविषि पक्के वेद्याश्च

---

१— १५५ पृ० १२ पं०, १६८ पृ० ८ पं० द्रष्टव्यम्।

२— दधिपयआदिगणपाठनिपातनात् दीर्घः (पा० सू० २. ४. १४.)।

३— 'इति'–इति ठ-पुस्तकातिरिक्तेषु सर्वत्र; ढ-पुस्तके तु नैव।

४— "बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिला हंसमुखप्रसेका मूलदण्डाः"–इति का० श्रौ० सू० १. ३. ३७। स्रुचस्तिस्रः—जुहूपभृद्ध्रुवाः। तत्र "पालाशी जुहूः"-इति, "आश्वत्थी उपभृत्"–इति च का० श्रौ० सू० १. ३. ३४, ३५। ध्रुवा तु वैकङ्कती भवति (का० श्रौ० सू० १. ३. ३१.)।

५— 'भोज्येऽन्नसूपशाकादौ'–इति ठ।

६— '०विदानत्वादेव व्यवहारस्य'–इति ज, झ, ञ, ट, ढ।

७— 'मन्ने'–इति ज, झ, ञ, ट, ढ।

संस्कृतायां तत्परिवेषणसाधनानां स्रुचां सम्मार्जनं युक्त मिति "यत् स्रुचः"-इत्येवमन्तस्य[1] वाक्यसन्दर्भस्याभिप्रेतोऽर्थः ॥ १ ॥

"अथेति । "निर्णेनिजतीति । "अदभ्यस्तात्"-इति[2] झस्य अदादेशः । "परिवेविषति"-इत्यत्राप्येवम् ॥ २ ॥

ननु मानुष[3]पात्रवद् देवपात्राणां स्रुचा मप्यद्भिः प्रक्षालनेन भवितव्यम्, किं मनेन सम्मार्जनेनेत्याह— "स यदिति[4] । 'निर्णिक्ताभिः' प्रक्षालिताभिः स्रुग्भिः प्रचराणीत्यनेनाभिप्रायेण सम्मार्जनेन प्रक्षालन मेव करोतीत्यर्थः ॥

देवपात्रस्य शोधने मानुष[5]पात्राद् विशेष माह— "तद्वा इति । "द्वयेनैकेनेति सामान्योक्तं विवृणोति— "अद्भिश्च ब्रह्मणा चेति । "आपो हि कुशा इति । अपां यज्ञियांशपरिणामरूपा हि कुशाः । तथैव हि प्रागाम्नातम्— "ता उपर्युपर्यतिपुप्लुविरेऽत इमे दर्भास्ता हैता अनापूयिता आपः"-इति[6] । अतः कुशैः सम्मार्जनाद्[7] यज्ञियाभिरद्भिरेव प्रक्षालनं कृतवान् भवतीत्यर्थः ॥

"एवम्वेतदिति । द्वयेनैकेनेत्येवं साधनभेदकृतं दैवमानुषपात्रसंस्काराणां[8] नानात्वं भवतीत्यर्थः ॥ ३ ॥

---

१— 'यत् स्रुचः'-इतीहत्यद्वितीयकण्डिकान्तपदम् ।

२— पा० सू० ७. १. ४ ।    ३, ५— 'मनुष्य०'-इति ठ ।

४— 'देवपात्राणां स्रुचां न मानुषपात्रवत् अद्भिः प्रक्षालनं केवलं करोति किन्तु सम्मार्जनेनैव सहितं प्रक्षालनम्'-इति ठ ।

६— ६० पृ० १५ पं० द्रष्टव्यम् ।    ७— 'सम्मार्जनं'-इति ड ।

८— 'देवमनुष्यपात्राणां संस्काराणां'-इति ज, झ, ञ, ट, ड ।

प्रथमं स्रुवस्य[1] सम्मार्जनं विधातुं तस्यादानप्रतपने विधत्ते—"अथेति ॥ ४ ॥

"देवा इति । "देवा ह वा इत्यादिकं समन्त्रकस्य प्रतपनस्य प्रयोजनप्रतिपादकम् । तच्च निर्वापप्रकरणे प्रागेव व्याख्यातम्[2] ॥ ५ ॥

अथ तस्य प्रतप्तस्य स्रुवस्य समन्त्रकं[3] सम्मार्जनं विधत्ते—"स वा इतीति । स्रुवस्यान्तरतो बिलमध्ये वेदाग्रैरिति (प्राक्[4]) सम्मार्ष्टि । सम्मार्जनप्रकाराभिनयार्थः 'इति'-शब्दः । स च प्रकारः कात्यायनेन सूचितः—"वेदाग्रैरन्तरतः प्राक् सम्मार्ष्टीति[5] ।

मन्त्रस्य प्रयोजन माह—"यथेति । यथा खलु अयं स्रुवः 'अनुपरतः' उपरति मप्राप्तः सन् यजमानस्य शत्रून् 'क्षिणुयात्' हिंस्यात् । "रि क्षि०—०हिंसायाम्"-इति[6] धातुः । एव मेवैतत् ॥

मन्त्रवाक्य माह—"सपत्नानिति । सपत्नान् क्षिणोतीति 'सपत्नक्षित्'—इति मन्त्रपदस्याभिप्राय इति भावः । मन्त्रशेष मनूद्य व्याचष्टे—"वाजिनं त्वेति । 'वाजः' हविर्लक्षण मन्नम्, तदेव यज्ञः तद्वत्त्वेन; तद्वन्तं त्वां 'वाजेध्यायै' वाजस्य अन्न-स्येन्धनं दीपनम्, भूयःकरण मनेन क्रियत इति 'वाजेध्या'

---

१— "खादिरः स्रुवः"–इति, "अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः"–इति च का० श्रौ० सू० १. ३. ३२, ३८ ।

२— ३५ पृ० ८ पं०, ४३ पृ० ९ पं० द्रष्टव्यम् ।

३— वा० सं० २. २९. २ । का० श्रौ० सू० २. ६. ४६ ।

४— नास्त्येतत् पदं C-पुस्तकादन्यत्र ।

५— का० श्रौ० सू० २. ६. ४६ ।

६— स्वा० प० ३० ।

यज्ञः, तस्मै सम्मार्ज्मीति मन्त्रशेषस्यार्थः । तदेतदाह— "यज्ञियन्त्वेति । यज्ञ मर्हतीति यज्ञियः । "यज्ञर्त्विग्भ्याम्"-इति घः[१] ।

जुह्वादीनां स्रुचां सम्मार्जनं विधत्ते— "एतेनैवेति । अग्निमितोऽसीति योऽयं स्रुवसम्मार्जने मन्त्रः[२], 'एतेनैव' अग्निमितासीति[३] स्त्रीलिङ्गत्वेन विपरिणमितेनेत्यर्थः । अतएव सूत्रकृतोक्तम्— "अग्निमितेति स्रुचः"-इति[४] । स्रुचः स्त्रीत्वेन तत्प्रकाशनाय वाजिनं त्वेत्यस्यापि पुंलिङ्गशब्दस्य स्थाने वाजिनीं त्वेति स्त्रीलिङ्गतया प्रयोक्तव्य मित्याह— "वाजिनीं त्वेति । सम्मार्जनक्रियापेक्षया 'स्रुचम्'-इति द्वितीया । जुह्वादिवत् समन्त्रकसम्मार्जनस्य प्रसक्तस्य निवृत्त्यर्थ माह— "तूष्णी मिति । प्राशित्राख्यो यो भागः, स ह्रियते अनेनेति 'प्राशित्रहरणं' गोकर्णाकृति पात्रम्[५], तत् तूष्णीं सम्मार्ष्टीत्यर्थः । तदुक्तं कात्यायनेनापि— "तूष्णीं प्राशित्रहरणम्"-इति[६] । आपस्तम्बस्तु समन्त्रकपक्ष मप्यसूचयत्[७]— "प्राशित्रहरणं तूष्णीं वा"-इति[८] ॥ ६ ॥

---

१— पा० सू० ५. १. ७१ । २ — 'स्रुवसम्मार्जनमन्त्रः'—इति ठ ।

३— वा० सं० १. २६. ३ । का० श्रौ० सू० २. ६. ४७ ।

४— का० श्रौ० सू० २. ६. ४७ ।

५— प्राशित्रहरणं वारणं, प्रादेशमात्रं, आदर्शाकृति ( वर्त्तुलं ), चमसाकृति (चतुरस्रं) वा भवति । का० श्रौ० १. ३. ३६, ४०, ४१ ।

६— का० श्रौ० २. ६. ४८ । ७— आप० श्रौ० सू० २. ४. ८ ।

८— तन्मन्त्रश्च तत्रैव— "रूपं वर्णं पशूनां मा निर्मृक्षं वाजि त्वा सपत्नसाहं सम्मार्ज्मीति"—इति ।

स्रुचां सम्मार्जनप्रकार मभिनयेन दर्शयति— "स वा इति। 'इति' अनेन प्रकारेण 'प्रागपवर्गं' वेदाग्रैर्बिलमध्ये सम्मार्जनम्। 'इति' अनेन प्रकारेण 'प्रत्यगपवर्गम्' आत्माभिमुखं 'बाह्यतः' पृष्ठभागे वेदाग्रमूलैः सम्मार्जनं कार्य मित्यर्थः। तथैव सूत्रितम्— "वेदाग्रै-रन्तरतः प्राक्सम्मार्ष्ठ्यनिमित इति, विपर्य्यस्य बहिर्मूलैरिति[1]। यदेतदन्तरतो बाह्यतश्च द्विविधं सम्मार्जनम्, तत् प्राणोदानात्मना प्रशंसति— "इतीवेति। 'इति'-शब्दोऽत्राप्यभिनयार्थः। 'अयं' प्राणवृत्त्यात्मको वायुः 'इतीव' अनेनैव खलु प्रकारेण प्राङ् सञ्च-रति। उदानशब्दस्यापानवृत्त्यभिधायकत्वं प्राक् प्रतिपादितम्[2]। अपानवृत्त्यात्मको वायुः[3] 'इतीव' अनेन प्रकारेण प्रत्यङ् सञ्चरति। अतः प्राक्-प्रत्यक्-सम्मार्जनाभ्यां स्रुचु प्राणापानावेव स्थापयतीत्यर्थः॥

"तस्मादित्यादि। यस्मात् स्रुचा मुपरिभागस्य सम्मार्जनं प्राचीनम्, पृष्ठभागस्य च प्रतीचीनम्; 'तस्मात्' अरत्नेः उपरि-भागस्य लोमानि 'इतीव' एवमेव प्राचीनानि भवन्ति, पृष्ठभागस्य च लोमानि 'इतीव' इत्थं प्रतीचीनानि भवन्तीत्यर्थः। अथ मर्थस्तैत्तिरीयके विस्पष्ट माम्नायते— "तस्मादरत्नौ प्राञ्च्युपरि-ष्टाल्लोमानि प्रत्यञ्च्यधस्तात्"-इति[4] ॥ ७ ॥

---

१— का० श्रौ० २. ६. ४६।

२— १०६ पृ० १२ पं० द्रष्टव्यम्। नास्त्येतद्वाक्यं ठ-पुस्तके।

३— 'उदानवृत्त्यात्मकस्य'—इति ठ।

४— तै० ब्रा० ३. ३. १. ४. (तै० सं० १. १. १०. सा० भा०)।

सम्मार्जनानन्तरं प्रतपनपुरस्सरं प्रदानं विधत्ते—"स वा इति। 'सः' खल्वाग्नीध्रः तत्तत्सम्मार्गानन्तर मेव सम्मृष्टं पात्रं पुनरग्नौ प्रताप्य अध्वर्यवे दद्यादित्यर्थः ॥

तदेतत्पुनः प्रतपनं लौकिकदृष्टान्तेनोपपादयति—"यथेति। यथा खलु कांस्यादिकं लौकिकं पात्र मवमृश्यावमृश्य निर्णिज्य प्रक्षाल्य, 'उत्तमं' चरमं क्रियाविशेषण मेतत्; अन्ततः 'अनवमर्शं' अवमर्शन मकृत्वैव केवल मुदकेनैव 'परितः' अन्तरतो बाह्यतश्च सर्वतः चालयेत्, एवं तत्सम्मार्जनानन्तरं पुनः[१] प्रतपनमित्यर्थः॥ ८ ॥

स्रुवसम्मार्जनस्य प्राथम्यं स्रुक्सम्मार्जनस्य तदानन्तर्यञ्च प्रागुक्तं लौकिकदृष्टान्तेन प्रशंसितु मनुवदति— "स वा इति। "योषा वा इत्यादि। स्रुक् स्त्रीलिङ्गत्वाद् योषित्; स्रुवस्तु पुंलिङ्गत्वात् सेचनसमर्थः पुमान्। यस्मादेवं 'वृष्णः' स्रुवस्य सम्मार्जने प्राथम्यं, 'तस्मात्' एव कारणात् बह्व्योऽपि स्त्रियः सम्भूय गच्छन्त्यो बाल मपि पुमांसं पुरस्कृत्य तस्य पश्चात् प्रयन्ति। तस्मात् दृष्टानुसारेण स्रुवस्य प्रथमं सम्मार्जनं युक्तम्[२], पश्चाच्च स्रुचा मित्येतत् युक्त मित्यर्थः ॥ ९ ॥

सम्मार्जने धर्मविशेष माह—"स वा इति। 'यथा' येन प्रकारेण सम्मार्जनसमये[३] 'अग्निम् अभि न व्युचेत्' अग्नेरुपरि सम्मार्जनसाधनं कुशोदकादिकं न पतेत्, तथैव सम्मृज्यात्। तदे-

---

१— 'पुनः-पुनः'-इति आदिषु। "प्रतप्य-प्रतप्य"—इति का० २. ६. ४७।

२— 'सम्मार्जन मुक्तम्'—इति ठ।

३— 'सम्मार्जनस्य समये'—इति ठ।

तल्लौकिकदृष्टान्तेनोपपादयति— "यथेति। यस्य खलु भोजनार्थ मन्न माहरति, तं भुक्त्यर्थपात्रप्रक्षालनोदकेन यथाभ्युक्षेत्[१], एवमेव तदग्नेरभ्युक्षणम्। अग्नेर्होमार्थं हि हविः; स्रुक्स्रुवादीनि च पात्राणि तत्साधनानि; अतस्तत्प्रक्षालनोदकेन तस्याभ्युक्षणं तादृगेव स्यात्। न हि लोके पात्रप्रक्षालनोदकेन भोक्ताभ्युक्षते। अतः पात्रसम्मार्जनो-दकेन[२] अग्नेरभ्युक्षणं न कार्य मित्यर्थः॥

कथं तर्हि सम्मार्जनं कार्य मित्याह— "प्राङिवेति। प्राङ्मुख एवाग्नेः[३] सकाशादुत्क्रम्य गत्वा अग्नेरुपरि यथा न पतति तथा सम्मृजीतेत्यर्थः॥ १०॥

स्रुक्सम्मार्जनानां वेदाग्राणा माहवनीये प्रहरणं शाखान्तराभि-मत मुपन्यस्यति— "तद्धैक इति। स्रुचः सम्मृज्यन्ते एभिरिति 'स्रुक्सम्मार्जनानि' वेदाग्राणि अग्नावभ्यादधाति। दधता मभिप्राय माह[४]— "वेदस्येति। यज्ञसाधनो हि 'वेदः'; वेदस्य सम्मार्ज-नादावुपयुक्तत्वात्। एतानि च (वेदाग्राणि[५]) तस्यावयवा अभूवन्। 'अह'-इत्यवधारणे। न केवलं वेदावयवत्वादेव वेदाग्राणां यज्ञि-यत्वम्, अपि तु एभिर्वेदाग्रैः स्रुचः 'सममार्जिषुः' सम्मृष्टवन्त ऋत्विजः, अत इदं वेदाग्रजातं[६] यज्ञसम्बन्धि किञ्चिदङ्गम्। यदि

---

१— 'यथा व्युक्षेत्'-इति ञ, झ।

२— 'पात्रसम्मार्गोदकेन'-इति ठ। ३ — 'इवाग्नेः'-इति ञ, झ।

४— 'अग्नावभ्यादधतीति तेषां मिम मभिप्राय माह'-इति ञ, झ, ड।

५— पद मिदं ढ-पुस्तकमात्रे विद्यते।

६— 'वेदाग्रपरिजातं'-इति ञ, झ।

'चेत्'[1] अग्नेरन्यत्र निरस्येत्, तदा तद्यज्ञाद् 'बहिर्धा' बाह्यतो भवेत्; अग्नौ प्रक्षिप्तं हि यज्ञेऽन्तर्भवति, नैवेत्थं भवेदित्यनेनाभिप्रायेणाग्नौ प्रक्षिपन्तीत्यर्थः ॥

स्वमतं दर्शयितु मैकीयं मतं निषेधति— "तदु तथेति। एतल्लौकिकदृष्टान्तेनोपपादयति— "यथेति। यथा खलु भोजनायोपविष्टं भोक्तारं ततः प्रागेव पात्रप्रक्षालनोदकं पाययेत्, एव मेव तद्धोमात् प्राक् सम्मार्जनतृणाना मग्नौ प्रहरणम्; अतो नैतद्युक्त मित्यर्थः। स्वमत मुपन्यस्यति— "तस्मादिति। यस्मादैकीयमते उक्तरीत्या दोषः, 'तस्मात्' एतानि सम्मार्जनानि तृणानि उत्करे प्रक्षिपेदित्यर्थः। पक्षद्वय मपि कात्यायनः सूत्रयामास— "सम्मार्जनान्यपास्यत्याहवनीये प्रासन मेक इति[2] ॥ ११ ॥

प्रैषक्रमप्राप्तं पत्नीसन्नहनं विधत्ते— "अथेति। "जघनार्द्धो वा इत्यादि। गार्हपत्यानुष्ठेयेषु[3] पत्नीसंयाजादिषु पत्न्याः सम्बन्धात् सा यज्ञस्यापरार्द्धः। किं ततः? इत्याह— "प्रागिति। मदीयो यज्ञः प्रागपवर्गं 'तायमानः' विस्तार्यमाणो 'यात्' गच्छेत्। अतः परार्द्ध मारभ्य यज्ञो विस्तारयितव्य इत्यनेनाभिप्रायेण पत्नीं सन्नह्येदित्यर्थः[4] ॥

यदेतत्सन्नहनं तदेतत् रथे अश्वादीना मिव पत्न्या यज्ञेन सार्द्धं योजनं बन्धन मित्याह— "युनक्तीति। "युक्ताम इति।

---

१— 'यदि च'—इति ड। 'यदि'—एतन्मात्र मेव ढ-पुस्तके।

२— का०श्रौ०सू० २. ६. ५०, ५१। ३— 'गार्हपत्येऽनुष्ठेयेषु'—इति ठ।

४— "पत्नीसन्नहन मेके पूर्वम्"—इति च आप० श्रौ० सू० २. ४. १।

योक्त्रुरभिप्रायाविष्करणम् । युक्ता च सा मदीयं यज्ञम् 'अनु'लक्ष्य यज्ञसमाप्तिपर्यन्तम् 'आसाते' आसीत; न ह्ययुक्तोऽश्वादी रथे नियमेनास्त इत्यर्थः ॥ १२ ॥

एवं विहितं सन्नहनं प्रशस्य, तत्साधनं विधत्ते— "योक्त्रेणेति । रथाद्यवयवस्य युगस्य धुरि बलीवर्दादियोजनार्थं दाम 'योक्त्रम्', तेन सन्नह्येदित्यर्थः । लौकिकोदाहरणेनैतद् द्रढयति । "योक्त्रे-णेति । 'योग्यं' योजनीयम् अनडुदश्वादिक मित्यर्थः ॥

तच्च सन्नहनं नाभिप्रदेशे कार्य मित्यभिप्रेत्याह— "अस्ति वा इति । 'अयज्ञियस्य' पत्न्या नाभेरधोभागस्य, 'यज्ञियस्य' उपरि-भागस्य च मध्ये सन्नहनेन साङ्कर्यनिवारणात् यज्ञियेनैवोपरिभागेन विधास्यमान माज्यावेक्षणं[1] साधुकृतं भविष्यतीत्यर्थः ॥ १३ ॥

परिहितस्य वाससः उपरि तत्सन्नहनं कार्य मिति विधत्ते— "स वा इति । योक्त्र-पत्नीशरीरयोः वाससा व्यवधानं प्रशंसति— "ओषधय इति । ओषधिकार्यत्वाद् वाससः तत्तादात्म्यव्यपदेशः । "वरुण्येति । वरुणसम्बन्धिनी, वरुणपाशात्मिका रज्जुः । स च वरुणपाशो निग्रहहेतुरिति तस्य व्यवधानेन केनचिद्भवितव्य मिति वासोलक्षणौषधिभिरन्तर्द्धानं युक्त मित्यर्थः ॥

तस्य प्रयोजन माह— "तथो हैति ॥ १४ ॥

विहितं सन्नहन मनूद्य मन्त्रं[2] विधत्ते— "स इति । मन्त्रं व्याचष्टे— "इयं वा इति । 'अदितिः' अखण्डनीया देवानां पत्नी

---

१— इहैवोपरिष्टाद् द्रष्टव्यम् (१८ का० १६२ पृ० १२ पं०) ।

२— वा० सं० १. ३०. १ । का० श्रौ० सू० २. ७. १ ।

या पृथिवी, 'सा' च[1] एषापि 'योषित्', यजमानस्य पत्नी भवति। 'तत्' तस्मात् पृथिव्या इवास्याः 'रास्नां' रशनाम् अलङ्कारार्थां मणिमुक्तादिखचितां मेखला मेव बध्नाति; न रज्जु मिति मन्त्रप्रयोगाभिप्रायः। उक्तार्थपरतां 'रास्ना'-शब्दस्य दर्शयति— "इिर इति। 'इिर'-शब्दो मेखलापर्य्यायः ॥ १ ५ ॥

योक्त्रस्य सन्नहनसमये ग्रन्थिकरणं निषेधति[2]— "स वा इति।

विपक्षे बाध माह— "वरुण्य इति। वरुणपाशो हि ग्रन्थिमान्, अतो ग्रन्थिरपि वरुणसम्बन्धी; तत्करणे वरुणः पत्नीं गृह्णीयाद्, बाधेतेत्यर्थः ॥ १ ६ ॥

ननु ग्रन्थिकरणाभावे योक्त्रं विस्रस्तं स्यादित्यत आह— "ऊर्द्ध मिति। योक्त्रस्य मूलाग्रे संयोज्यैकीकृत्य 'ऊर्द्ध मुद्गूहेत्' उपरिष्टात् लम्बयेदित्यर्थः[3]। तथा चोक्तं सूत्रकृता— "दक्षिणं पाश मुत्तरे प्रतिमुच्योर्द्ध मुद्गूहति"-इति[4] ॥

सन्नहनसमये गार्हपत्यस्य नैर्ऋत्यां दिशि पत्न्या अन्वासनं विधित्सुः साक्षात् पश्चात् प्राङ्मुखोपवेशनं निषेधति— "सा वा इति। तदुपपादयति— "इयं वा इति। 'इयं' हि पृथिवी देवानां पत्नी; सा गार्हपत्यस्य पश्चात् प्राङ्मुखी सर्वदा उपविशति; अतः तत्रासीना[5] इमा मेव देवपत्नी मभ्यारोहेत् ॥

---

१— 'सैव'-इति ठ।

२— "न ग्रन्थिं करोति"-इति का० श्रौ० सू० २. ७. ३ द्रष्टव्यम्।

३— उद्गूहनमन्त्रस्तु वा० सं० १. ३०. १।

४— का० श्रौ० सू० २. ७. २। ५—'तत्रान्वासीना'-इति जादिषु।

तथा च यो बाधस्तं दर्शयति— "क्षेति । 'क्षिप्रे' अल्पकाले इत्यर्थः । "तयो हेति । पश्चादुपवेशनपरित्यागे सति उक्तदोषाभावात् चिरकालं पत्नी जीवेत् । तेन पश्चादासनपरित्यागेन 'अस्याः' देवपत्न्याः यदुपवेशनस्थानं तत् 'निह्नुते' अपलपति, तत्स्थानवर्जनेन तां प्रीणयतीत्यर्थः। तथा चेयं पृथिव्यपि 'एनां' पत्नीं 'न हिनस्ति' न बाधते ॥

इदानीं स्थानविशेषे तस्या उपवेशनं विधत्ते— "तस्मादिति । 'तस्माद्' देवपत्नीस्थानाद् 'दक्षिणतः' दक्षिणभागे, गार्हपत्यस्य नैर्ऋत्यां दिशीत्यर्थः । अत एव सूत्रितं कात्यायनेन— "पत्नीं सन्नह्यति प्रत्यग् दक्षिणत उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण"— इति[1] ॥ १७ ॥

पत्न्या आज्यावेक्षणं विधत्ते[2]— "अथेति । रेतसः पुरुषोपभुक्ताज्यपरिणामत्वात् कारणकार्ययोरभेदोपचारात्तादात्म्यम् ॥ १८ ॥

विहित मवेक्षण मनूद्य मन्त्रं[3] विधत्ते— "सेति ॥

मन्त्रगत मदब्धेनेति पदं व्याचष्टे— "अनार्त्तेनेति । आर्त्तिर्हिंसा, तद्रहितेनेत्यर्थः । "अग्नेर्जिह्वासि"-इतिप्रतिपादित माज्यस्य जिह्वारूपत्व मुपपादयति— "यदा वा इति । जिह्वासदृशज्वालाहेतुत्वात् आज्यं जिह्वेत्युच्यते इत्यर्थः । मन्त्रगतं सुहूरिति पदं

---

१— का० श्रौ० सू० २. ७. १ । "अनेकपत्नीके सर्वासाम्"-इति या० दे० ।

२— आज्यावेक्षणात् प्राक् आज्योद्वासनं कार्यं विहितम् । का० श्रौ० सू० ३. ७. ४ । तत्र मन्त्रः ऊर्जे त्वेति वा० सं० १. ३०. ३ ।

३— वा० सं० १. ३०. ४ । का० श्रौ० सू० २. ७. ४ ।

| | | |
|---|---|---|
| Nyayabindutīkā, (Text) ... ... ... ... | Rs. 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–3 @ /6/ each ... ... ... ... ... | 3 | 6 |
| Padumawati Fasc. 1–3 @ 2/ ... ... ... ... | 6 | 0 |
| Pariçista Parvan. (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1–2 @ /6/ each ... ... ... | 0 | 12 |
| Prithivirāj Rāsa, (Text) Part II, Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |
| Ditto (English) Part II, Fasc. 1 ... ... ... | 0 | 12 |
| Prākrta Lakṣaṇam, (Text) Fasc. 1 ... ... ... ... | 1 | 8 |
| Parāçara Smrti, (Text) Vol. I, Fasc. 1–8; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6 @ /6/ each ... ... ... ... | 7 | 8 |
| Parāçara, Institutes of (English) ... ... ... ... | 0 | 12 |
| Prabandhacintāmaṇi (English) Fasc. 1–3 @ /12/ each ... ... | 2 | 4 |
| *Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5–10; II, 1–6; III, 1–7; IV, 1–6; V, 1–8, @ /6/ each Fasc. ... ... | 12 | 6 |
| Sāṅkhya Sūtra Vṛtti, (Text) Fasc. 1–4 @ /6/ each .. ... | 1 | 8 |
| Ditto (English) Fasc. 1–3 @ /12/ each ... ... | 2 | 4 |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ /12/ ... ... ... | 0 | 12 |
| *Taittereya Saṁhitā, (Text) Fasc. 14–45 @ /6/ each ... ... | 12 | 0 |
| Tāṇḍya Brāhmaṇa, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Tattva Cintāmani, (Text) Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–10, Vol. III. Fasc. 1–2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1–5, Part IV, Vol. II, Fasc. 1–10 @ /6/ each ... ... ... ... | 13 | 14 |
| Trikāṇḍa-Maṇḍanam, (Text) Fasc. 1–2 @ /6/ ... ... .. | 0 | 12 |
| Tul'si Sat'sai. (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Upamita-bhava-prapañca-kathā (Text) Fasc. 1–3 @ /6/ each ... | 1 | 2 |
| Uvāsagadasāo, (Text and English) Fasc. 1–6 @ /12/ ... ... | 4 | 8 |
| Varāha Purāṇa, (Text) Fasc. 1–14 @ /6/ each ... ... ... | 5 | 4 |
| *Vāyu Purāṇa, (Text) Vol. I, Fasc. 2–6; Vol. II, Fasc. 1–7, @ /6/ each ... ... ... ... ... ... | 4 | |
| Viṣṇu Smṛti, (Text) Fasc. 1–2 @ /6/ each ... ... ... | 0 | 12 |
| Vivādaratnākara, (Text) Fasc. 1–7 @ /6/ each ... ... ... | 2 | 10 |
| Vṛhannāradīya Purāṇa, (Text) Fasc. 1–6 @ /6/ ... ... | 2 | 4 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1–6 ... ... ... | 2 | 4 |
| *Tibetan Series.* | | |
| Pag-Sam Thi S'iñ, Fasc. 1–4 @ 1/ each ... ... ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1–5, @ 1/ each ... ... ... ... ... ... | 13 | 0 |
| Rtogs brjod dpag hkhri S'iñ (Tib. & Sans.) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... ... | 10 | 0 |
| *Arabic and Persian Series.* | | |
| 'Ālamgīrnāmah, with Index, (Text) Fasc. 1–13 @ /6/ each... - ... | 4 | 14 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1–2 @ /12/ ... ... | 1 | 8 |
| Āīn-i-Akbarī, (Text) Fasc. 1–22 @ 1/ each ... ... ... | 22 | 0 |
| Ditto (English) Vol. I, Fasc. 1–7, Vol. II, Fasc. 1–5, Vol. III, Fasc. 1–5, @ 1/12/ each ... ... ... ... | 29 | 12 |
| Akbarnāmah, with Index, (Text) Fasc. 1–37 @ 1/ each ... ... | 37 | 0 |
| Ditto English Fasc, 1–5 @ 1/ each ... ... ... | 5 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger ... ... ... | 0 | 6 |
| Bādshāhnāmah, with Index, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Catalogue of Arabic Books and Manuscripts ... ... ... | 1 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1–3 @ 1/ each ... ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1–21 @ 1/ each ... ... ... ... ... ... | 21 | 0 |
| Farhang-i-Rashīdī, (Text) Fasc. 1–14 @ 1/ each ... ... | 14 | 0 |
| Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1–4 @ /12/ each ... ... ... ... ... ... | 3 | 0 |
| Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1–9 @ /6/ each ... ... | 3 | 6 |
| Ditto of Āzādī, (Text) Fasc. 1–4 @ /6/ each ... ... | 1 | 8 |
| Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1–6 @ /12/ each ... ... | 4 | 8 |
| Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1–3 @ /6/ each ... ... | 1 | 2 |
| Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... ... | 38 | 4 |
| Maāṣir-ul-Umarā, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–9; Vol. III, 1–10; Index to Vol. I, Fasc. 10–11; Index to Vol. III, Fasc. 11–12; Index to Vol. II, Fasc. 10–12 @ /6/ each ... ... | 13 | 2 |
| Maghāzi of Wāqidi, (Text) Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

| | | | |
|---|---|---|---|
| **Muntakhabu-t-Tawārīkh, (Text) Fasc. 1–15 @ /6/ each ...** | Rs. | 5 | 10 |
| **Muntakhabu-t-Tawārīkh, (English) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5 and Index; Vol. III, Fasc. 1 @ /12/ each ... ...** | | 12 | 0 |
| **Muntakhabu-l-Lubāb, (Text) Fasc. 1–19 @ /6/ each ... ...** | | 7 | 2 |
| **Ma'āṣir-i-'Ālamgīrī, (Text), Fasc. 1–6 @ /6/ each ... ...** | | 2 | 4 |
| **Nukhbatu-l-Fikr, (Text) Fasc. 1 ... ... ... ...** | | 0 | 6 |
| **Nīzāmī's Khiradnāmah-i-Iskandarī, (Text) Fasc. 1-2 @ /12/ each** | | 1 | 8 |
| **Riyāzu-s-Salāṭīn, (Text) Fasc. 1–5 @ /6/ each ... ... ...** | | 1 | 14 |
| ***Suyūty's Itqān, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. 7–10 @ 1/ each ... ... ...** | | 4 | 0 |
| **Ṭabaqāt-i-Nāṣirī, (Text) Fasc. 1–5 @ /6/ each ... ... ...** | | 1 | 14 |
| **Ditto (English) Fasc. 1–14 @ /12/ each ... ...** | | 10 | 8 |
| **Ditto Index .. .. ... ...** | | 1 | 0 |
| **Tārīkh-i-Fīrūz Shāhī of Ẓiyāu-d-dīn Barnī (Text) Fasc. 1–7 @ /6/ each...** | | 2 | 10 |
| **Tārīkh-i-Fīrūzshāhī, of Shams-i-Sirāj Aif, (Text) Fasc. 1–6 @ /6/ each...** | | 2 | 4 |
| **Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ...** | | 3 | 0 |
| **Wis o Rāmīn. (Text) Fasc. 1–5 @ /6/ each ... ... ...** | | 1 | 14 |
| **Ẓafarnāmah, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–8 @ /6/ each ..** | | 6 | 6 |
| **Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 ... ... ... ...** | | 0 | 12 |

## ASIATIC SOCIETY'S PUBLICATIONS.

1. **Asiatic Researches.** Vol. VII, Vols. XI and XVII, and Vols. XIX and XX @ 10/ each ... ... .. 50 0
2. **Proceedings** of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No.
3. **Journal** of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

| | | | |
|---|---|---|---|
| 4. | Centenary Review of the Researches of the Society from 1784–1883 ... | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) .. . | 4 | 0 |
| | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J.A.S.B.*, 1868) ... ... ... ... | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... .. ... | 4 | 0 |
| | Introduction to the Maithilī Language of North Bihār, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J.A.S.B.*. 1882) ... ... ... ... ... | 4 | 0 |
| 5. | Anīs-ul-Musharraḥīn ... ... ... ... ... | 3 | 0 |
| 6. | Catalogue of Fossil Vertebrata ... ... ... ... | 3 | 0 |
| 7. | Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion | 3 | 8 |
| 8. | Ināyah, a Commentary on the Hídâyah, Vols. II and IV, @ 16/ each... | 32 | 0 |
| 9. | Jawāmiu-l-'ilm ir-riyāẓī, 168 pages with 17 plates, 4to. Part I ... | 2 | 0 |
| 10. | Khizānatu-l-'ilm ... ... ... ... | 4 | 0 |
| 11. | Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... | 40 | 0 |
| 12. | Moore and Hewitson's Descriptions of New Indian Lepidopters, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ... | 18 | 0 |
| 13. | Sharaya-ool-Islām ... ... ... ... ... | 4 | 0 |
| 14. | Tibetan Dictionary, by Csoma de Kŏrŏs ... ... ... | 10 | 0 |
| 15. | Ditto Grammar " " ... ... ... | 8 | 0 |
| 16. | Kaçmīraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... | 3 | 0 |
| 17. | A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal by C. R. Wilson... ... ... | 1 | 0 |
| 18. | Memoir on maps illustrating the Ancient Geography of Kaśmīr by M. A. Stein Ph.D., Jl Extra No. 2 of 1899 ... ... ... | 4 | 0 |

| | | |
|---|---|---|
| **Notices of Sanskrit Manuscripts, Fasc. 1–29 @ 1/ each ... ...** | 29 | 0 |
| **Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ....** | 5 | 0 |

***N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.**

24-10-1900.

**Books are supplied by V-P.P.**

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NO. 984.



## ॥ शतपथब्राह्मणम् ॥

॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRĀHMAṆA

OF THE WHITE YAJURVEDA,

WITH THE

COMMENTARY OF SĀYAṆA ĀCĀRYA.

EDITED BY

ĀCĀRYA SATYAVRATA SĀMAS'RAMĪ.

VOL. I, FASCICULUS III.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1901.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.,

46, GREAT RUSSELL STREET, LONDON, W. C., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | | |
|---|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each ... | Rs. | 1 | 8 |
| Advaitacinta Kaustubha, Fasc. 1 ... ... ... ... | | 0 | 6 |
| *Agni Purāna, (Text) Fasc. 4–14 @ /6/ each ... .. .. | | 4 | 2 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5 and Vol. II, Fasc. 1–5 Vol. III, Fasc. 1–5 Vol. IV, Fasc. 1–5 @ /6/ ... ... ... | | 7 | 8 |
| Aṇu Bhāṣyam, (Text) Fasc. 1–5 @ /6/ each ... ... .. | | 1 | 14 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... ... ... | | 0 | 12 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1–6 @ /6/ each ... | | 2 | 4 |
| Açvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... ... ... | | 1 | 14 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... ... | | 10 | 0 |
| *Bhāmatī, (Text) Fasc. 4–8 @ /6/ each . ... .. | | 1 | 14 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1–2 ... ... ... .. | | 0 | 12 |
| Bṛhaddēvatā (Text) Fasc. 1–4 @ /6/ each ... . .. | | 1 | 8 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1–6 @ /6/ each ... ... | | 2 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–3 @ 2/ each ... | | 6 | 0 |
| Çatapatha Brāhmaṇa, Fasc. 1–3 ... ... ... | | 1 | 2 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–10 @ /6/ each ... ... .. ... | | 19 | 14 |
| Çlokavartika, (English) Fasc. 1 ... ... .. ... | | 0 | 12 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 4–15 @ /6/ each ... | | 4 | 8 |
| Ditto Çānkhāyana, (Text) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4, Vol. III, Fasc. 1–4 @ /6/ each .. ... | | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1–3 @ /6/ each ... ... ... | | 1 | 2 |
| Gadadhara Paddhati Kālasāra Vol I. Fasc. 1–2 ... ... ... | | 0 | 12 |
| Kāla Mādhava, (Text) Fasc. 1–4 @ /6/ each ... ... ... | | 1 | 8 |
| Kāla Viveka, Fasc 1–4 ... ... ... .. | | 1 | 8 |
| Kātantra, (Text) Fasc. 1–6 @ /12/ each ... .. .. | | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1–14 @ /12/ each ... ... | | 10 | 8 |
| Kūrma Purāṇa, (Text) Fasc. 1–9 @ /6/ each ... . .. | | 3 | 6 |
| Lalita-Vistara, (English) Fasc. 1–3 @ /12/ each .. ... | | 2 | 4 |
| Madana Pārijāta, (Text) Fasc. 1–11 @ /6/ each... .. ... | | 4 | 2 |
| Mahā-bhāṣya-pradīpōdyōta, (Text) Fasc. 1–8 @ /6/ each ... ... | | 3 | 0 |
| Manutīkā Saṅgraha, (Text) Fasc. 1–3 @ /6/ each ... ... | | 1 | 2 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1–6 @ /12 each ... ... | | 4 | 8 |
| *Mimāṁsā Darçana, (Text) Fasc. 7–19 @ /6/ each ... ... | | 4 | 14 |
| Nārada Smṛti. (Text) Fasc. 1–3 @ /6/ ... .. ... | | 1 | 2 |
| Nyāyavārtika. Text) Fasc. 1–4 @ /6/ ... .. ... | | 1 | 8 |
| *Nirukta, (Text) Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each ... | | 5 | 4 |
| Nyayabinduṭīka, (Text) ... ... ... ... ... | | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–3 @ /6/ each ... ... ... ... ... | | 3 | 6 |
| Padumawati Fasc. 1–3 @ 2/ ... ... ... ... | | 6 | 0 |

व्याचष्टे— "साध्विति। सुष्ठु हूयमानत्वात् 'सुहुः'। अनेन च होमानुगुण्येन साधुत्वं लक्ष्यत इत्यर्थः। "धाम्ने-धाम्ने"-इति मन्त्रशेषं व्याचष्टे— "सर्वस्मा इति। 'धाम्ने-धाम्ने' तत्तद्देवताशरीराय, यजुषे-यजुषे, तत्तद्ग्रहणमन्त्राय च पर्याप्तं भवेति मन्त्रार्थः। अतः सर्वस्मै यज्ञाय 'एधि' भवेति तदर्थप्रतिपादनं ब्राह्मणेन क्रियते ॥ १९ ॥

पुरस्ताद्धरणं विधत्ते— "अथेति[1]। पत्न्यवेक्षणानन्तर्य्यम् 'अथ'-शब्दार्थः।

पुन[2]स्तस्याहवनीयेऽधिश्रयणं विधत्ते— "तदिति। हविःश्रपणं हि आहवनीय-गार्हपत्ययोर्विकल्पितम्[3]। तत्राहवनीये श्रपणपक्षे पत्न्यवेक्षणानन्तर मेवाज्यं पुरस्ताद्धृत्वा आहवनीये अधिश्रयेदित्यर्थः। एवं कुर्वतोऽभिप्राय माह— "सर्व इति। यागसाधनत्वात् हविरत्र 'यज्ञ'-शब्दार्थः। आज्यपुरोडाशादिलक्षणं सर्व मपि मदीयं 'हविः' आहवनीये संस्कृतं भवेदित्यनेनाभिप्रायेणेत्यर्थः। अस्मिन्नपि पक्षे प्रथमतो गार्हपत्याधिश्रयणे कारण माह— "अथ यदमुत्रेति। 'अमुत्र' गार्हपत्ये, 'अग्रे' पशुपुरोडाशाधिश्रयणकाले[4] 'पत्नीम् अवकाशयिष्यन्' पत्न्यवेक्षणाद्धेतोस्तत्सन्निधानाय गार्हपत्येऽधिश्रयणं कर्त्तव्य मित्यर्थः॥

प्रथमत एवाज्यस्याहवनीयेऽधिश्रयणे दोष माह— "न होति। पुरोडाशाधिश्रयणकाले एव आहवनीये यद्याज्य मधिश्रयेत्, तदा

---

१— नास्त्येतद् वाक्यं ङ-पुस्तके।

२— 'पुर'-इति ङ। ३— १. २. २१. १९ ए०।

४— 'पुरोडाशाधिश्रयणकाले'-इत्येव ठ।

गार्हपत्यसमीपे अन्वासीनायाः पत्न्यास्तदवेक्षणं न घटते ; भिन्नदेश-त्वात्। यदि च पत्नीम् 'अवकाशयिष्यामि' अवेक्षयिष्यामि 'इति' तदर्थं 'यामि' संस्कारमध्ये तत् 'प्रत्यक्'[1] पश्चात् पत्न्याः समीपं हरेत्, तदा संस्कारविघातः स्यादिति तदपि न युज्यते। अथै-तद्दोषपरिजिहीर्षया पत्नीं नावेक्षयेत्, तस्याः पत्न्या यज्ञादन्तरायो भवति। एतदुक्तं भवति। गार्हपत्ये हविःश्रपणपक्षे[2] हि आज्य मपि तत्रैवाधिश्रीयत इति तत्समीपोपविष्टायाः पत्न्यास्तदवेक्षणं घटत इति न काप्यनुपपत्तिः ; आहवनीयश्रपणपक्षे प्रथमत एवाज्यस्यापि तत्रैवाधिश्रयणे हीदृग्विधो दोषः प्रसज्जेत[3] इति। कथं तर्हि तस्मिन् पक्षे कार्य मिति चेत्,— उच्यते। प्रथमतो गार्हपत्ये अधिश्रित्य पत्न्यवेक्षणानन्तर[4] माहवनीयसमीपं नीत्वा तत्राधिश्रयेत्। तथा सत्युक्तदोषाभाव माह— "तयो इति।

"तस्मादित्यादि। यस्मादेव माहवनीये प्रथमतोऽधिश्रयणे दोषः, 'तस्मात्' पत्न्या सार्द्धं गार्हपत्ये प्रथम माज्यस्य विलापन मित्यर्थः॥

यस्य तु पत्न्या रजोदर्शनादिनिमित्तवशेन असन्निधानात् तदीय-कर्माण्याज्यावेक्षणादीनि न क्रियन्ते, तस्योक्तदोषाभावात् प्रथमत एवाहवनीये आज्याधिश्रयणं कार्य मित्याह— "यस्यो इति॥२०॥

---

१— 'प्राक्'–इति ज, झ।

२— 'गार्हपत्यहविःश्रपणपक्षे'–इति ज ; 'गार्हपत्यहविःश्रपणे'–इति झ।

३— 'प्रसज्यते'–इति जादिषु ; 'प्रसज्जते'–इति ड।

४— "पत्नी मवेक्षयत्यदब्धेनेति"–इति का० श्रौ० सू० २. ७. ५.।

तस्याज्यस्यान्तर्वेद्यासादनं केषाञ्चिन्मतेन निषेधति— "तदाहुरिति। निषेधाभिप्राय माह— "अत इति। 'अतः' अस्मादेव खल्वाज्याद् देवपत्नीनां यागः, अतस्तत्सम्बद्धस्याज्यस्यान्तर्वेद्यासादने सति तदैव देवपत्नीः 'अवसभाः' अवगतजनसमूहाः करोति; यष्टव्यदेवसङ्घस्य वेद्या मवस्थानात्। 'अह'-इति निपातो विनिग्रहे। अस्तु तथात्वं देवपत्नीनाम्, किं तत इत्यत आह— "पर इति। देवपत्नीनां सभाप्रापणात् 'अस्य' यजमानस्य पत्न्यपि 'परःपुंसा' भवति। 'परस्'-इत्ययं सकारान्तः, परस्तादित्यर्थः। स्वपुरुषादन्यत्र राजवीथ्यादौ पुरुषसमूहं प्राप्ता 'परःपुंसा'-इत्युच्यते। "अचतुरादिसूत्रे[1] स्त्रीपुंसेति निपातितत्वात् परःपुंसेत्युपपदान्तरेऽपि समासान्तोऽच्प्रत्ययो द्रष्टव्यः। 'इति'-शब्द एकीयमतसमाप्त्यर्थः॥

याज्ञवल्क्यमतेनान्तर्वेद्यासादन मेव निगमयति— "तदिति। 'यथादिष्टं' यथादेशनं यथाशास्त्रम्, 'पत्न्याः' सम्बन्धि कार्यम्, 'अस्तु' भवतु; अतः पत्नीसंयाजार्थम् अन्तर्वेद्यनासादन मिति न युक्तम्। पत्न्यपि 'परःपुंसा वा' भवतु, अयाता 'यथा तथा वा' भवतु, तथापि[2] किं प्रयोजनम्? अतः परःपुंसेत्येतदपि दूषणं को वा आद्रियेतेत्यर्थः॥

एव मुक्तदूषणं निरस्य वेद्यासादनपक्ष मुपपादयति— "यज्ञो वेदिरिति। वेदिराज्यं चोभय मपि यज्ञसाधनत्वाद् 'यज्ञः'; तथाच वेद्यासादने वेदिरूपाद् यज्ञाद् आज्यरूपं यज्ञं 'निर्मिमै' निर्मित-

---

१— पा० सू० ५. ४. ७७। २— 'तथापि' इति आदिषु।

वान् भवतीत्यनेनाभिप्रायेण तच्चैवासादयेदित्यर्थः। 'तस्मात्'-इति उक्तार्थनिगमनम् ॥ २१ ॥

तस्याज्यस्योत्पवनं विधत्ते—"प्रोक्षणीष्विति[1]। प्रोक्षण्युत्पवनं याभ्यां पवित्राभ्यां कृतम्, ते तत आदाय ताभ्या मेवाज्यस्योत्पवनं कार्यं मित्यर्थः। उत्पवनविधिस्तावकं "वृत्रो ह वा इदं सर्वं मित्यादिकं प्रागाम्नातं[2] ब्राह्मणम्, आज्योत्पवनस्यापि समान मित्यत आह—"एको वा इत्यादि।

उत्पवनसंस्कारेण पर्यवसित मर्थ माह— "मेध्य मिति ॥ २२ ॥

विहित मुत्पवन मनूद्य मन्त्रं विधत्ते—"स उत्पुनाति"-इति। आज्यस्यैकत्वात् 'त्वा'-इत्येकवचनान्ततैव प्रोक्षण्युत्पवनमन्त्रतोऽस्य विशेषः; अतस्तन्मन्त्रव्याख्यानरूपं "सविता वै देवानां प्रसवितेत्यादिकं[3] ब्राह्मण मत्रातिदिशति—"सोऽसाविति ॥ २३ ॥

आज्योत्पवनानन्तरं ताभ्या मेव लेपसहिताभ्यां पवित्राभ्यां पुनः प्रोक्षण्युत्पवनं विधत्ते—"अथेति ॥

प्रागाम्नात मेव मन्त्रं[4] पठित्वा तद्ब्राह्मण मप्यतिदिशति—"सवितुर्व इति ॥ २४ ॥

आज्यलेपसहिताभ्यां[5] पवित्राभ्यां[6] प्रोक्षण्युत्पवन मुत्पादयति—

---

१— का० श्रौ० सू० २. ७. ७। तत्र मन्त्रः वा० सं० १. ३१. १।
२— १. ३. ४; ६० ए० १० पं०, ६४ ए० १६ पं०।
३— १. ३. ६; ६१ ए० २ पं०, ६६ ए० १० पं।
४— १. ३. ६; ६१ ए०।
५— 'आज्यस्य सहिताभ्यां'—इति आदिषु।
६— नास्त्येतत् पदं आदिपुस्तकेषु।

"तद्यदिति[1]। 'तत्' तत्र 'यत्' इदम् आज्यलिप्ताभ्यां पवित्राभ्या मपा मुत्पवनम्, तेन पय एवाप्सु 'दधाति' स्थापयति संयोजयति; आज्यस्य पयःकार्यत्वात्। अप्सु हि परम्परया तत्कार्यत्वात् पयः प्रतिष्ठितम्।

एतदेव पारम्पर्येणोपपादयति—"इदं हीति। 'जग्ध्वा' भक्षयित्वा। "अदो जग्धिर्ल्यप्तिकिति"–इत्यदेर्जग्धादेशः[2]।

"तस्मादिति। यस्मादेवं गव्यं पयः परम्परया उदकरसपरिणामरूपम्, 'तस्मात्' कारणात् तत्कार्यस्याज्यस्यापाश्च यदुत्पवने संसर्जनम्, तत् रसस्यैव 'सर्वत्वाय' सम्पूर्णत्वाय कात्स्न्र्याय भवतीत्यर्थः ॥२५॥

अध्वर्योराज्यावेक्षणं विधत्ते—"अथेति[3]। एकीयमत मुपन्यस्य निरस्यति— "तद्धैक इति। 'अवख्यापयन्ति' ख्यातिरत्र पश्यतिकर्मा[4]; अवेक्षयन्तीत्यर्थः ॥

याज्ञवल्क्यस्य मत मुपन्यस्यति—"तदिति। य एवं यजमान मवेक्षयन्ति, ते स्वकीये यज्ञे 'कथं' कस्मादेव 'स्वयं' यजमाना एव सन्तोऽध्वर्यवो न भवन्ति? कथं वा स्वय मेव होतारो भूत्वा

---

१— का० श्रौ० सू० २. ७. ८। अत्र मन्त्रः वा० सं० १. ३१. २।

२— पा० सू० २. ४. ३६।

३— का० श्रौ० सू० २. ७. ९। अत्र मन्त्रः वा० सं० १. ३१. ३।

४— निघ० ३. ११. १–५। निरु० ३ भा० ३६६ पृ०, ४ भा० ११२, २६२ पृ०।

याज्यानुवाक्यादीनि नानुब्रुयुः?। तेषा माध्वर्यवादिकरणे हेतु माह—"यत्रेति। 'यत्र' खल्वाध्वर्यवादौ तत्करणमन्त्रैर्बहुतरा इव 'आशिषः' फलप्रार्थनाः क्रियन्ते, तादृक्फलप्रतिपादकमन्त्र-विशिष्ट माध्वर्यवादिकं कस्मान्न कुर्युः?। तत्परित्यज्य 'एषाम्' एकेषां शाखिना मत्रैवावेक्षणं यजमानेनैव कर्त्तव्य मिति कस्मात् कारणात् श्रद्धा जातेत्यर्थः।

एवं यजमानावेक्षणादि प्रहस्य अध्वर्युणैव तदवेक्षणं कार्य मिति प्रतिपादयति—"यां वा इति। दक्षिणाभिः परिक्रीतत्वादृत्विग्भिः यत् फल माशास्यते, तद् यजमानस्यैवेति न तेन पृथगाशासनं कार्यम्। अतोऽध्वर्युरेवाज्य मवेक्षेतेत्यर्थः॥ २६॥

तदवेक्षण मनूद्य प्रशंसति—"स इति। अवेक्षणस्य करणं हि चक्षुः; तच्च यथाभूत मेव वस्तु विषयीकरोतीति 'सत्यम्'। एतदेव लोकव्यवहारेण संवादयन् द्रढयति—"तस्मादिति। यस्मादेवं चक्षुः सत्यम्, तस्मादेव कारणात् विवदमानयोर्मध्ये यश्चक्षुषा दृष्टवान-स्मीति वदति, तद्वचन मेव श्रद्धार्हम्, न त्वितरस्य श्रुतवानस्मीति वचन मित्यर्थः॥ २७॥

विहित मवेक्षण मनूद्य मन्त्रं विधत्ते—"स इति। योऽयं "तेजोऽसीति[१] मन्त्रः, 'स एषः' 'सत्यः' यथार्थ एव। कुत इत्यत आह—"तेजो हीति। 'हि' यस्मात् 'एतत्' आज्यं 'तेजः' तद्धेतु-त्वात्, तथा 'शुक्रं' निर्मलम्, 'अमृतं' यागादिद्वारा अमरण-

---

१— वा० सं० १. ३१. २।

साधनम्; यद्वा अमृतवत्पुष्टिकरम्। 'एवम्' आज्यस्यैवंरूपत्वात्, विद्यमानार्थप्रकाशकत्वान्मन्त्रः सत्य इत्यर्थः ॥२८॥ ४ [३. १.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथभाष्ये तृतीयाध्याये
प्रथमं ब्राह्मणम्[1] ॥

---

१— इह हि ब्राह्मणे स्रुक्सम्मार्जनम्, पत्नीसन्नहनम्, आज्यावेक्षणम्, आज्याधिश्रयणम्, आज्यासादनम्, आज्योत्पवनम्, प्रोक्षण्युत्पवनम्, अध्वर्योराज्यावेक्षणञ्चेति कर्माणि विहितानि। तत्रेयं पद्धतिः— अध्वर्युः स्फ्यं गृहीत्वा उत्करे पाणी प्रक्षाल्य प्रणीतानां पश्चात् प्रागग्र मुदगग्रं वा स्फ्यं निदधाति। ततोऽग्नीद् वेदिमध्ये उदगग्रा मग्निहोत्रहवणी मासाद्य प्रणीतानां पश्चात् स्फ्यस्योत्तरतः प्रागग्र मिध्म मासाद्य इध्मादुत्तरतो बर्हिः प्रागग्र मासादयति। तत आग्नीध्रः स्रुव मादाय गार्हपत्ये प्रतप्य अप उपस्पृश्य अग्नेः प्राच्यां गत्वा वेदाग्रैरन्तरतः प्राञ्चं सम्मार्ष्टि मूलादारभ्याग्रपर्यन्तम्, अपि वेदमूलैर्बहिः प्रत्यञ्चं सम्मार्ष्टि अग्रादारभ्य मूलपर्यन्तम्, पुनरग्नौ गत्वा प्रतप्याप उपस्पृश्याध्वर्यवे समर्पयति। ततो जुहूपभृद्ध्रुवाणां स्रुचा मप्येव मेव सम्मार्जनम्। किन्त्वोत्ताना एव धारयमाणाः स्रुचः सम्मार्ष्टीत्यपि स्मर्त्तव्यम्। ततस्तूष्णीं प्राशित्रहरणे षडवत्तावदानं पुरोडाशप श्रीं च सम्मृज्याग्नौ प्रतप्याध्वर्यवे समर्पयति। ततः पत्नीसन्नहनम्। तद्यथा— अग्नीद् योक्त्र मादाय गार्हपत्यान्नैर्ऋत्यां दिश्यैशानाभिमुखी मुर्ध्वज्ञु मुपविष्टां पत्नीं परिहितवस्त्राद् बहिः योक्त्रेण द्विर्वेष्टयति। अनेकासु पत्नीषु सर्वासां योक्त्रबन्धनम्। ततः कर्त्तव्यानि आज्यावेक्षणादीनि मूले एव विस्पष्टानि।

पुरुषो वै यज्ञः। पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुत ऽएष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः ॥ १ ॥

तस्येयु मेव जुहूः। इय* मुपभृदात्मैव ध्रुवा तद्वा ऽआत्मन ऽएवेमानि सर्व्वाण्यङ्गानि प्रभवन्ति तस्माद् ध्रुवाया एव सर्व्वो यज्ञः प्रभवति ॥ २ ॥

प्राण ऽएव स्रुवः। सोऽयं प्राणः सर्व्वाण्यङ्गान्यनुसञ्चरति तस्माद् स्रुवः सर्व्वा ऽअनु स्रुचः सञ्चरति ॥ ३ ॥

तस्यासावेव द्यौर्जुहूः। अथेद† मन्तरिक्ष मुपभृदियु मेव ध्रुवा तद्वा ऽअस्या ऽएवेमे सर्व्वे लोकाः प्रभवन्ति तस्माद् ध्रुवाया एव सर्व्वो यज्ञः प्रभवति ॥ ४ ॥

अयु मेव स्रुवो योऽयं पवते। सोऽयु मिमान्सर्व्वांल्लोका‡ननुपवते तस्माद् स्रुवः सर्व्वा अनु स्रुचः सञ्चरति ॥ ५ ॥

स ऽएष यज्ञस्तायमानः§। देवेभ्यस्तायत ऽऋतुभ्यश्छन्दोभ्यो यद्धविस्तद्देवानां यत्सोमो राजा यत्पुरोडाशस्तत्तदादिश्य गृह्णात्यमुष्मै त्वा जुष्टं गृह्णामीत्येव मु हैतेषाम् ॥ ६ ॥

---

* 'जुहू। रियु'–इति ख, च। † 'जुहू। रथेद'–इति ख।

‡ 'सर्व्वांलोका'–इति क, 'सर्वांल्लोका'–इति ख, ग। § 'नो'–इति ख, च।

अथ यान्याज्यानि गृह्यन्ते। ऋतुभ्यश्चैव तानि छन्दोभ्यश्च गृह्यन्ते तत्तदनादिश्याज्यस्यैव रूपेण गृह्णाति स वै चतुर्जुह्वां गृह्णात्यष्टौ कृत्व उपभृति ॥ ७ ॥

स यच्चतुर्जुह्वां गृह्णाति। ऋतु*भ्यस्तद्गृह्णाति प्रयाजेभ्यो हि तद्गृह्णात्यृतवो हि प्रयाजास्तत्तदनादिश्याज्यस्यैव रूपेण गृह्णात्यजामितायै जामि ह कुर्याद्यद्वसन्ताय त्वा ग्रीष्माय त्वेति गृह्णीयात्तस्मादनादिश्याज्यस्यैव रूपेण गृह्णाति ॥ ८ ॥

अथ यदष्टौ कृत्व ऽउपभृति गृह्णाति। छन्दोभ्यस्तद्गृह्णात्यनुयाजेभ्यो हि तद्गृह्णाति छन्दांꣳसि ह्यनुयाजास्तत्तदनादिश्याज्यस्यैव रूपेण गृह्णात्यजामितायै जामि ह कुर्याद्यद्गायत्र्यै त्वा त्रिष्टुभे† त्वेति गृह्णीयात्तस्मादनादिश्याज्यस्यैव रूपेण गृह्णाति ॥ ९ ॥

अथ यच्चतुर्ध्रुवायां गृह्णाति। सर्व्वस्मै तद्यज्ञाय गृह्णाति तत्तदनादिश्याज्यस्यैव रूपेण गृह्णाति कस्मा ऽउ ह्यादिशेद्यतः सर्व्वाभ्य ऽएव देवताभ्योऽवद्यति तस्मादनादिश्याज्यस्यैव रूपेण गृह्णाति ॥ १० ॥

यजमान एव जुहू मनु। योऽस्मा ऽअरातीयति स

---

* 'गृह्णा । त्यृतु'–इति ग ।  † 'त्रिष्टुभे'–इति च ।

ऽउपभृत मन्वक्तैव जुह्व मन्वाद्य ऽउपभृतमन्वक्तैव जुहूराद्य ऽउपभृत्स वै चतुर्जुह्वां गृह्णा*त्यष्टौ कृत्व ऽउपभृति ॥ ११ ॥

स यच्चतुर्जुह्वां गृह्णाति । अत्तार† मेवैतत्परिमिततरं कनीयाꣳसं करोत्यथ यदष्टौ कृत्व ऽउपभृति गृह्णात्याद्य मेवैतदपरिमिततरं भूयाꣳसं करोति तद्धि समृद्धं यत्रात्ता कनीयानाद्यो भूयान् ॥ १२ ॥

स वै चतुर्जुह्वां गृह्णन् । भूय ऽआज्यं गृह्णात्यष्टौ कृत्व ऽउपभृति गृह्णन् कनीय ऽआज्यं गृह्णाति ॥ १३ ॥

स यच्चतुर्जुह्वां गृह्णन् । भूय ऽआज्यं गृह्णात्यत्तार मेवैतत्परिमिततरं कनीयाꣳसं कुर्वꣳस्तस्मिन्वीर्यं बलं दधात्यथ यदष्टौ कृत्व ऽउपभृति गृह्णन् कनीय ऽआज्यं गृह्णात्याद्य मेवैतदपरिमिततरं भूयाꣳसं कुर्वꣳस्त मवीर्य मबलीयाꣳसं करोति तस्मादुत राजापारां विशं प्रावसायाप्येकवेश्मनैव जिनाति त्वद्यथा त्वत्कामयते तथा सचत ऽएतेनो ह तद्वीर्येण यज्जुह्वां भूय ऽआज्यं गृह्णाति स यज्जुह्वां गृह्णाति जुह्वैव तज्जुहोति यदुपभृति गृह्णाति जुह्वैव तज्जुहोति ॥ १४ ॥

तदाहुः । कस्मा ऽउ तर्ह्युपभृति गृह्णीयाद्यदुपभृता न जुहोतीति स यद्धोपभृता जुहुयात् पृथग्घैवेमाः प्रजाः

---

* 'गृह्णा'—इति ख, च । † 'गृह्णा । त्यत्तार'—इति ख, ग ।

स्युर्न्नैवात्ता स्यान्नाद्यः स्यादथ यत्तज्जुह्वैव समानीय जुहोति तस्मादिमा व्विशः क्षत्रियाय बलिꣳ हरन्त्यथ यदुपभृति गृह्णाति तस्माद् क्षत्रियस्यैव व्वशे सति व्वैश्यं पशव उउपतिष्ठन्तेऽथ यत्तज्जुह्वैव समानीय जुहोति तस्माद्यदैव क्षत्रियः कामयतेऽथाह व्वैश्य मपि यत्ते परो निहितं तदाहरेति तं जिनाति लब्ध्यथा त्वत्कामयते तथा सचत ऽएतेनो ह तद्वीर्येण ॥ १५ ॥

तानि वा ऽएतानि। छन्दोभ्य ऽआज्यानि गृह्यन्ते स यच्चतुर्जुह्वां गृह्णाति गायत्र्यै तद्गृह्णात्यथ यदष्टौ कृत्व ऽउपभृति गृह्णाति त्रिष्टुब्जगतीभ्यां तद्गृह्णात्यथ यच्चतुर्ध्रुवायां गृह्णात्यनुष्टुभे तद्गृह्णाति व्वाग्वा ऽअनुष्टुब्वाचो वा ऽइदꣳ सर्व्वं प्रभवति तस्माद् ध्रुवाया ऽएव सर्व्वो यज्ञः प्रभवतीयं व्वा ऽअनुष्टुबस्यै वा ऽइदꣳ सर्व्वं प्रभवति तस्माद् ध्रुवाया ऽएव सर्व्वो यज्ञः प्रभवति ॥ १६ ॥

स गृह्णाति। धाम नामासि प्रियं देवाना मित्येतद्वै देवानां प्रियतमं धाम यदाज्यं तस्मादाह धाम नामासि प्रियं देवाना मित्यनाधृष्टं देवयजन मसीति व्वज्रो ह्याज्यं तस्मादाहानाधृष्टं देवयजन मसीति ॥ १७ ॥

स एतेन यजुषा। सकृज्जुह्वां गृह्णाति त्रिस्तूष्णी मेतेनैव यजुषा सकृदुपभृति गृह्णाति सप्त कृत्वस्तूष्णी

मेतेनैव यजुषा सकृद् ध्रुवायां गृह्णाति त्रिस्तूष्णीं तदाहुस्त्रिस्त्रिरेव यजुषा गृह्णीयात् त्रिवृद्धि यज्ञ इति तदु नु सकृत्सकृदेवाचो ह्येव त्रिर्गृहीतꣳ सम्पद्यते ॥ १८ ॥ ५ ॥

॥ इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् [ ३. २. ] ॥

अथ जूहूपभृद्ध्रुवास्वेतस्याज्यस्य स्रुवेण[1] ग्रहणं विधित्सुस्तत्समुदायस्य पुरुषावयवकल्पनया स्तुत्यर्थं तत्साध्यस्य यज्ञस्य पुरुषतादात्म्य माह—"पुरुषो वा इति। तादात्म्य मुपपादयति—"पुरुषस्तेनेति। पुरुषप्रयत्ननिर्वर्त्यत्वाद्यज्ञस्य पुरुषत्व मित्यर्थः।

"एष वा इत्यादि। यत एवं यज्ञः पुरुषः, अतः 'एषः'[2] यज्ञो विस्तार्यमाणः, यदवयवपरिमाणविशिष्टः पुरुषः, तादृगवयवपरिमाणविशिष्ट एव विधीयते ॥ १ ॥

तादृगवयवक्लृप्ति मभिनयेन दर्शयति—"तस्येति। या 'जुहूः', सा 'इयम्' अयम्, दक्षिणो बाहुरित्यर्थः। तथा या 'उपभृत्', सा 'इयम्' वामबाहुः। ध्रुवा 'आत्मा' मध्यदेह[3] इत्यर्थः। अत एव तैत्तिरीयके विस्पष्ट माम्नायते—"जुहूर्दक्षिणो हस्त, उपभृत् सव्य, आत्मा ध्रुवेति[4]। ध्रुवाया आत्मत्व मुपपादयति—"तद्वा इति। 'आत्मनः'

---

१— "खादिरः स्रुवः०—०पर्णमयी जुहूः०—०आश्वत्थी उपभृत्०—० वैकङ्कती ध्रुवा०—०एतद्वै स्रुचाꣳ रूपम्"—इति तै०सं० ३.५.७।

२— 'एव'—इति ठ।

३— 'देहमध्य'—इति जादिषु।

४— तै० ब्रा० ३. ३. १। अस्य "प्राणो वै स्रुवः"—इत्यारम्भः।

मध्यदेशादेव 'इमानि' परितो वर्त्तमानानि हस्तपादादीन्यङ्गानि सर्वाणि 'प्रभवन्ति' उत्पद्यन्ते। यस्मादेवं लोके 'तस्माद्' ध्रुवाया आत्मत्वात्, तस्या एव सकाशात् कृत्स्नोऽपि यज्ञः 'प्रभवति' उत्पद्यते। ध्रुवास्थस्याज्यस्य सर्वयागसाधारण्य मनेन प्रतिदितं भवति[1] ॥ २ ॥

जुह्वादिषु सर्वासु स्रुचु स्रुवस्य सञ्चरण मुपपादयितुं तस्य प्राणरूपता माह—"प्राण ऽएवेति। देहमध्येऽवस्थितः प्राणवायुः यस्मात् सर्वाण्यङ्गानि नाडीभिः क्रमेण व्याप्नोति, तस्मात् तदात्मकः स्रुवोऽपि जुह्वाद्याः सर्वाः 'स्रुचः' 'अनु'लक्ष्य क्रमेण सञ्चरति ॥ ३ ॥

एवं पुरुषावयवादिकल्पनया[2] जुह्वादिसमुदायं प्रशस्य, लोकतादात्म्यप्रतिपादनेनापि तं प्रशंसति—"तस्येति। 'तस्य' यज्ञस्य 'असौ' दूरदेशेऽवस्थिता द्यौरेव जुहूः; इद मेवान्तरिक्ष मुपभृत्; 'इय मेव' भूमिर्ध्रुवा; जुह्वादयो लोकत्रयात्मिका इत्यर्थः[3] ।

अस्त्वेवं किं तत इत्याह—"तद्वा इति। 'तत्' तथा सति 'अस्याः' भूम्या एव सकाशात् यस्मादिमे सर्वे लोकाः 'प्रभवन्ति' उत्पद्यन्ते, तस्मादेव कारणात् पृथिव्यात्मिकाया ध्रुवाया एव सर्वो यज्ञः प्रभवति। इतोऽपि ध्रुवास्थ माज्यं सर्वयागसाधारण मित्यर्थः ॥ ४ ॥

अस्मिन्नपि पक्षे स्रुवस्य सर्वासु स्रुचु सञ्चरण मुपपादयति—"अय मेवेति। 'योऽयं' लोकत्रये वायुः 'पवते' वाति, तदात्मक एव स्रुवः। 'सः' च बाह्यो वायुः, यथा सर्वान् लोकान् 'अनु'लक्ष्य

---

१— नास्त्येतद्वाक्यं ङ-पुस्तके।

२— आध्यात्मिकभावेनेत्यर्थः। का० उ० १. २ द्रष्टव्यम्।

३— इदं व्याख्यान माधिदैविकम्। का० उ० १. ३ द्रष्टव्यम्।

सञ्चरति, तथैव तदात्मकस्य स्रुवस्यापि लोकत्रयात्मिकासु स्रुचु सञ्चरणं युक्त मित्यर्थः ॥ ५ ॥

अथ तासु स्रुचु आज्यग्रहणं विधित्सुः तस्य पुरोडाशादि-हविरन्तरवत्प्रसक्तं देवतादेशनपूर्वकत्वं निवारयितु माह— "स एष इति । 'तायमानः' विस्तार्यमाणो यज्ञः, प्रथम मग्न्यादिभ्यः प्रधान-भूतेभ्यो 'देवेभ्यः' तादर्थ्ये चतुर्थी[1] देवतार्थं 'तायते' विस्तार्यते । "तनु विस्तारे"[2]-इत्यस्मात् कर्मणि यकि[3] "तनोतेर्यकि"-इत्यात्त्वम्[4] । ततः 'ऋतुभ्यः' वसन्तादिभ्यः प्रयाजदेवताभ्यः, 'छन्दोभ्यः' गाय-त्र्यादिभ्योऽनुयाजदेवताभ्यश्च ; तायत इति शेषः । तच्च पुरोडाशादि-लक्षणं 'यत् हविः', तत् देवानां स्वभूतम्, अतस्तत् देवताना मादेशपुरःसरं ग्रहीतव्यम् ।

कुत एतदित्यत आह— "एव मिति । एव मेव हि 'तेषाम्' अग्न्यादिदेवतानां दर्शपूर्णमासादिषु सोमयागादिषु च नामादेश-विशिष्टा मन्त्राः समाम्नाताः । "अग्नये त्वा जुष्टं गृह्णामि"-इति[5], "अग्नीषोमाभ्यां त्वा जुष्टं गृह्णामि"-इति[6] पुरोडाशनिर्वापे ; सोमरसग्रहणेष्वैन्द्रवायवादिषु "उपयामगृहीतोऽसि वायव इन्द्र-वायुभ्यां त्वा"-इति[7] ॥ ६ ॥

---

१— पा० सू० १. ४. ४४. वा० १ । २— धा० पा० त० प० १ ।
३ — पा० सू० ३. १. ६७ । ४— पा० सू० ६. ४. ४३ ।
५— वा० सं० १. १०. २ (इहापि ३८ पृ० ७ पं०, ५५ पृ० १ पं०) ।
६— वा० सं० १ १०. ३ (इहापि ५६ पृ० १ पं०) ।
७— वा० सं० ७. ८. १, २ । तै० सं० १. ४. ४ ; ब्रा० ६. ४. ७ ।

"अथेति। अथ तस्मिन् यज्ञे यदाज्यग्रहणम्, तत्प्रयाजानुयाज-देवतार्थम्; 'च'-शब्दादेव स्विष्टकृद्यागार्थञ्च[1]। 'तत्' तथा सति 'तत्' आज्यं देवतानाम 'अनादिश्य' अनुक्त्वा आज्यसम्बन्धिनैव[2] रूपेण गृह्णाति। आज्यसम्बन्धि रूपञ्च देवताया अनादेशनम्; "न वा एतत्कस्यैचन देवतायै हविर्गृह्णन्नादिशति यदाज्यम्"-इति अनादेशनस्य तद्धर्मतया प्रागाम्नातत्वात्[3]।

अथ जुहूपभृतोराज्यग्रहणं विधत्ते— "स वा इति। जुह्वां चतुर्वारं स्रुवेणाज्यं गृह्णीयात्; उपभृत्यष्टवारम् ॥ ७ ॥

तत्र जुह्वस्थ माज्यं किमर्थ मित्याशङ्क्य तत्प्रयोजन माह— "स यदिति। के पुनस्त ऋतवः, येभ्यो जुह्वस्थ माज्यं भाग इत्यत आह— "प्रयाजेभ्य इति। प्रयाजदेवता हि ऋतवो वसन्ताद्याः, तेषां च नामादेशनरहित मेवाज्यं ग्रहीतव्य मित्युक्तम्[4]; तदिदानी मनूद्य तस्य प्रयोजन माह— "तदिति। 'तत्' तथा सति 'तत्' अनादिश्य ग्रहणम् 'अजामितायै' जामितादोषराहित्याय सम्पद्यते; हविर्ग्रहणाज्यग्रहणयोर्देवतादेशने सत्येकरूपेणाजामिता स्यात्। त मिमं दोषं विपक्षे दर्शयति— "जामि हेति ॥ ८ ॥

औपभृताज्यस्य विनियोग माह— "अथेति। अत्र छन्दसां कः प्रसङ्ग इत्यत आह— "अनुयाजेभ्य इति। गायत्र्यादिच्छन्दोरूपा

---

१— 'अवशिष्टकृतत्त्वयज्ञार्थञ्च'-इति ठ, ड।

२— 'आज्यस्वरूपसम्बन्धिनैव'-इति जादिषु।

३— ६७ पृ० १३ पं०, १०८ पृ० १२ पं०।

४— २०१ पृ० २ पं०।

ह्यनूयाजदेवताः ; अतोऽनुयाजेभ्य एवोपभृति तदाज्यग्रहणम् । अत्रापि देवतानादेशनं पूर्ववज्जामितादोषराहित्यायेत्याह— "तदिति । पूर्ववद्विपक्षे बाध मुपन्यस्यानादेशन मुपपादयति— "जामि हेति ॥ ९ ॥

ध्रुवायां चतुर्ग्रहणविधिपुरःसरं तत्प्रयोजन माह— "अथेति । ध्रौवाज्यग्रहण मप्याज्यधर्मेण देवतानादेशनलक्षणेन कर्त्तव्य मित्युक्त्वा[1] अत्र देवतादेशनस्य प्रसक्तिरेव नास्तीत्याह— "कस्मा उ ह्यादिशेदिति । 'यतः' यस्मात् कारणात् ध्रुवास्थ माज्यं यज्ञे यावत्यो देवताः सन्ति, तावतीभ्यः सर्वाभ्य एव देवताभ्यः 'अवद्यति' विभज्य गृह्णाति, 'अतः' सर्वदेवतासाधारण्यात् देवताविशेषस्य उद्देशनं न सम्भवतीत्यर्थः । अत एव तैत्तिरीयके समाम्नायते— "यज् जुह्वां गृह्णाति प्रयाजेभ्यस्तद् यदुपभृति प्रयाजानुयाजेभ्यस्तत्, सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवाया माज्यम्"–इति[2] ॥ १० ॥

अथ जुहूपभृतोराज्यग्रहणस्य चतुर्ष्टादिसङ्ख्याविशेष मुपपादयितु माह— "यजमान एवेति । 'यजमान एव जुहू म'भागी, तस्य जुहूर्भाग इत्यर्थः । "लक्षणेत्थम्भूताख्यानभागवीप्सासु[3]"–इत्यनोः कर्मप्रवचनीयत्वम् ; "कर्मप्रवचनीययुक्ते"–इति[4] द्वितीया । तथा यश्च 'अस्मै' यजमानाय 'अरातीयति' अरातिः शत्रुरिवाचरति, सः 'उपभृत मनु' उपभृत् तस्य भाग इत्यर्थः । अत एव

---

१— ९७, १०८, २०७ पृ० ४ पं० । २— तै० ब्रा० ३. ३. ५. ५ ।
३— पा० सू० १. ४. ९० । ४— पा० सू० २. ३. ८ ।

तैत्तिरीयकम्— "यजमानदेवत्या वै जुहूः भ्रातृव्यदेवत्योपभृत्"— इति[1]।

तथा भोक्तुः भोग्यस्य[2] च क्रमेण जुहूपभृतौ भागावित्याह— "अत्तैव जुहू मिति। तद्भागत्वेन तत्तादात्म्य माह— "अत्तैव जुहूरिति।

प्राग् विहितं तयोराज्यग्रहणं[3] स्तुत्यर्थं मनुवदितु मनुसन्धत्ते— "स वा इति ॥ ११ ॥

तत्र जुह्वां चतुर्ग्रहण मनूद्य सङ्ख्याल्पीयस्त्वं प्रशंसति— "स यदिति। जुह्वा अत्तृरूपत्वाद् अष्टसङ्ख्यातः चतुस्सङ्ख्याया अल्पीयस्त्वेनात्तार मेव परिमिततरम्, अत एव 'कनीयांसम्' अल्पीयांसं करोति।

उपभृति आज्यग्रहणसङ्ख्या मनूद्य तद्भूयस्त्वं प्रशंसति— "अथ यदिति। आद्यरूपा ह्युपभृत्, तत्र भोक्तृरूपजुह्वतः सङ्ख्याबाहुल्यात् 'आद्यं' भोग्यवस्तुजात मेव 'अपरिमिततरम्' अधिकतरम्; अत एव 'भूयांसम्' बहुतरम्, अतिशयेन बहुलं करोति।

"तद्धि समृद्ध मित्यादि। यत् खलु भोक्तृणा मल्पीयस्त्वम्, भोग्यवस्तुजातस्य च भूयस्त्वम्, तत् खलु समृद्ध मित्यर्थः ॥ १२ ॥

जुहूपभृतोराज्यग्रहणे प्रतिनियतं धर्मविशेषं विधत्ते— "स वा

---

१— तै० ब्रा० ३. ३. ५. ४।

२— 'भोक्तृभोग्यस्य'—इति जादिषु, ढ च। 'भोक्तुर्भोज्यस्य'—इति ङ।

३— इहैव अष्टमनवमकण्डिकाभ्या मिति शेषः (२०१ पृ०)।

इति। 'भूयः' बहुतर मधिक माज्यं जुह्वां यथा भवति तथा सम्यक् पूर्णेन स्रुवेण कर्त्तव्यम्; 'कनीयः' अल्पतरम् उपभृति गृह्यमाण माज्यं यथा भवति तथा अर्द्धपूर्णस्रुवेण कार्य मित्यर्थः ॥ १२ ॥

जौहवाज्यस्य विहितं भूयस्त्व मनूद्य प्रशंसति— "स यदिति। ग्रहणसङ्ख्याह्रासेन भोक्तारं भोग्यजातात्[1] अल्पीयांसं[2] कुर्वन् भूयोग्रहणेन 'तस्मिन्' भोक्तरि अधिकं 'वीर्यं' सामर्थ्यं तद्धेतुभूतं 'बलं' च स्थापयति।

औपभृताज्यस्य विहित मल्पीयस्त्व मनूद्य प्रशंसति— "अथ यदिति। सङ्ख्याधिक्येन भोग्यपदार्थ मपरिमितं कुर्वन्, अल्पीयस आज्यस्य ग्रहणेन 'तम्' आद्यम् 'अवीर्यं' वीर्यरहितं बलरहितं च करोति। "तस्मादिति। यस्मादेव माद्यवर्गो बलरहितः 'अबलीयान्,' तस्मादेव कारणात्, सार्वभौमो 'राजा', 'अपारां' निरवधिकां 'विशं' राज्यं 'प्रावसाय' प्राप्यापि 'एकवेश्मनैव' एकगृहात्मनैव 'जिनाति' जयति, स्वाधीनं करोति। तत्र च 'त्वत्-त्वत्' एकमेकं वस्तु यथा कामयते, तथा 'सचते' समवैति, प्राप्नोति। 'त्वत्'-शब्दः एकशब्द-समानार्थः; "उत त्वः पश्यन्न ददर्श वाचम्"-इत्यादौ[3] तथा दृष्टत्वात्। यद्वा त्वदिति निपातस्त्वार्थे[4]; 'जिनाति च, यथा च कामयते'-इति योज्यम्। तदेतद्राज्ञः सामर्थ्यम्, एतेनैव वीर्येण जनितम्; 'यद्' वीर्यं जुह्वां भूयोग्रहणेन भोक्तुर्निष्पन्न

---

१— 'भोज्यजाताद्'-इति ठ। २— 'बलीयांसं'-इति ठ।

३— ऋ० सं० १०. ७१. ४। ४— निरु० १. २. ५।

मित्यर्थः । जुहूपभृद्धृतयोराज्ययोर्जुह्वैव होमः कर्त्तव्य इति विधत्ते— "स यदिति ॥ १४ ॥

उपभृतो होमसाधनत्वाभावे तत्राज्यग्रहणं किमर्थं मित्याक्षिपति— "तदाहुरिति । उपभृति ग्रहणं समर्थयिष्यंस्तावत्तस्या होमसाधनत्वे दोष माह— "स यद्धोपभृतेति । होमसाधनत्वे जुहूवदुपभृतोऽपि स्वातन्त्र्यात्तत्स्थानीयाः 'इमाः' सर्वाः प्रजाः, राज्ञः[1] सकाशात् 'पृथक्' स्वतन्त्रा एव भवेयुः ; तथा च राजा नैवात्ता स्यात्, राज्य मपि नैव भोग्यं[2] भवेदित्यर्थः ।

औपभृत माज्यं जुह्वा मानीय, तयैव होमे तु नोक्तदोष इत्याह— "अथ यदिति ।

होमाभावे च उपभृति कस्माद् ग्रहण मित्यस्योत्तर माह— "अथ यदिति । यस्मादेव होमाय जुहू मपेक्षमाणाया मुपभृत्याज्यं गृह्यते, तस्मादेव कारणात् 'क्षत्रियस्य वशे' रक्षार्थं क्षत्रियाधीनत्वे सत्येव, वैश्यं 'पशवः' गवाद्याः 'उपतिष्ठन्ते' । उपभृति ग्रहणाद्वैश्यस्य धनसमृद्धिर्भवतीत्यर्थः ।

"अथ यदित्यादि । यस्मादौपभृत माज्यं समानीय जुह्वैव जुहोति, नोपभृता ; तस्माद्यदैव स क्षत्रियः कामयते, 'अथ' अनन्तर मेतं वैश्यं ब्रूते । कथ मिति । हे वैश्य ! 'ते' तव 'परः' परस्तादन्यत्र गोप्यस्थाने निहितं 'यत्' धन मस्ति, तदाहरेति । एव मुक्त्वा 'तं' वैश्यं 'जिनाति' धनापहारेण हीनं करोति । अन्यत्पूर्ववत् ।

---

१— 'अत्तृराज्ञः'–इति जादिषु, ढ च । २— 'भोज्यं'–इति ठ ।

"एतेनो ह तद्वीर्येण"-इति। औपभृताज्यस्य[1] जुह्वामानयनजनितवीर्येणेत्यर्थः ॥ १५॥

ध्रौवस्याज्यस्य प्रागुक्तं[2] सर्वयज्ञसाधारण्यं द्रढयितुं जुह्वादिष्वाज्यग्रहणं प्रकारान्तरेण प्रशंसति—"तानि वा इति।

सामान्योक्तं विवृणोति—"स यदिति। प्राथम्यसाम्यात् पादचतुष्टयोपेतत्वेन चतुस्सङ्ख्यासाम्याच्च जुह्वां ग्रहणं गायत्र्यर्थ मित्यर्थः।

ननु त्रिपदा गायत्री, कथ मस्याश्चतुस्सङ्ख्यायोगः? सत्यम्! अष्टाक्षरैः पादैस्त्रिपदा, षडक्षरैः पादैस्तु चतुष्पदापि भवति। अत एवान्यत्राम्नायते—"सैषा चतुष्पदा षड्विधा गायत्री"-इति[3]। त्रिष्टुब्जगत्योर्मिलितयोः पादाना मष्टसङ्ख्या भवति। तथाचोपभृत्यष्टकृत्वो ग्रहणं ताभ्या मर्थं सम्पद्यते, एव मेव पादसङ्ख्यासाम्यात् ध्रुवायां चतुर्ग्रहण मनुष्टुबर्थं भवतीत्यर्थः।

अनेन ध्रुवायाः[4] अनुष्टुबर्थत्वोपजीवनेन तत्स्थस्याज्यस्य सर्वयज्ञसाधारण्य मभिप्रेत्याह—"वाग्वा इति। "अनुष्टुप् च वै सप्तदशश्च समभवतां सानुष्टुप् चतुरुत्तराणि छन्दांस्यसृजत षडुत्तरांस्स्तोमान्सप्तदशः"-इति[5] सामब्राह्मणे सर्वेषां छन्दसा मनुष्टुप्सकाशात् सृष्टेराम्नातत्वात् सा वागात्मिका॥

---

१— "औपभृदाज्यस्य"-इति जादिषु, "उपभृदाज्यस्य"-इति ड।

२— इहैव द्वितीयतृतीयचतुर्थकण्डिकासु द्रष्टव्यम् (२००, २०५ पृ०)।

३— सा० छा० ब्रा० ५. १२. ५।

४— 'ध्रुवायाम्'-इति ज, झ, ञ, ट, ड।

५— सा० ता० ब्रा० १० प्र० २ ख०।

"वाचो वा इत्यादि। 'वाचः' शब्दस्य सकाशात् 'इदं' सर्व मर्थजातं प्रभवति। अत एव जगतः शब्दविवर्त्तत्व माहुः—

"अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरम्।

विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः" इति[1]।

तथान्यत्रापि शब्दानुवेधात्तत्कार्यत्व मर्थप्रपञ्चस्योक्तम्—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।

अनुविद्ध मिव ज्ञानं सर्वं शब्देन गम्यते[2]"-इति।

यस्मादेवं वाचः सर्वजगदुत्पत्तिहेतुत्वम्, तस्मात् तत्सम्बन्धिन्या ध्रुवाया अपि सर्वयज्ञहेतुत्वं युक्त मित्यर्थः।

इतोऽपि ध्रुवायाः सर्वयज्ञहेतुत्व मित्याह—"इयं वा अनुष्टुप्"-इति ॥ १६ ॥

विहित माज्यग्रहण मनूद्य मन्त्रं[3] विधत्ते— "स इति। मन्त्रगतस्य धामशब्दस्य विवक्षित मर्थ माह—"एतद्वा इति। धामशब्दस्तेजोवाची[4]; तद्धेतुत्वादाज्य मपि धामेत्युच्यते इत्यर्थः। मन्त्रशेष मनूद्य तत्रानाधृष्टपदस्य तात्पर्यगम्य मर्थ माह— "अनाधृष्ट मिति। 'हि' यस्मात् 'आज्यं वज्रः' "घृतं खलु वै देवा वज्रं कृत्वा सोम मघ्नन्[5]"-इति[6] श्रुतेः। वज्रस्य धर्षितु मशक्यत्वाद् 'अनाधृष्टः' अतस्तदात्मकत्वादाज्य मप्यनाधृष्ट मित्यर्थः॥ १७ ॥

---

१— हरिकारिकैषा। २— वाक्यपदीयश्लोक एषः।

३— वा० सं० १. ३१. ४। का० श्रौ० सू० २. ७. ११, १२।

४— निरु० ६. ३. ७ द्रष्टव्यम्। अ० को० ३. ४. १८. १०४। "घृते श्रितो घृतम्वस्य धाम"-इति ऋ० सं० २. ३. ११।

५— 'सोम मशमीत्'-इति भा। ६— उपरिष्टादिहैव ४. १. ४. ८।

अनेन मन्त्रेण ग्रहणे विशेष माह—"स एतेनेति।

पक्षान्तर माह—"तदाऊरिति। 'तत्' तत्र ग्रहणविषये ब्रह्म-वादिन 'आऊः' अनेन मन्त्रेण जुह्वादिषु 'त्रिस्त्रिः' गृह्णीयात्[1]। तथा च समन्त्रकग्रहणस्य प्रत्येकं त्रिरावृत्तत्वात् यज्ञस्य त्रिवृत्त्वं सिध्यतीति तेषा माशयः[2]।

सकृत्त्वपक्षं निगमयति— "तदु न्विति। सर्वास्वपि स्रुचु सकृत्सकृदेव मन्त्रेण गृह्णीयात्। अत्र सकृद्ग्रहणपक्षेऽपि हि ग्रहणस्य त्रित्वसङ्ख्या समाहारेण सम्पद्यत इत्यर्थः॥ १८॥ ५ [३.२.]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथभाष्ये तृतीयाध्याये
द्वितीयं ब्राह्मणम्[3]॥

---

१—पक्षापक्षविचारतात्पर्यं का० श्रौ० २. ७. १३–१७ सू० पर्यालोच्यम्।

२— "ध्रुवायाश्च जुह्वत्"–इति का० श्रौ० सू० २. ७. १८।

३— इह तु ब्राह्मणे एकैव कर्म विहित माज्यनिनयनं नाम। तत्रेयं पद्धतिः— अध्वर्युः सव्येन जुहूं वेदं च गृहीत्वा दक्षिणेन स्रुव मादाय, तेनैव स्रुवेणाज्यस्थाल्याः तूष्णी माज्य मादाय मन्त्रेण जुह्वां निनयति। निनयनं ग्रहणम्। जुह्वां चतुरः स्रुवान् गृह्णाति। तत्र मन्त्रेणैकवारं त्रिस्तूष्णीम्, अथवा त्रिर्मन्त्रेण सकृत् तूष्णीम्। तत उपभृति अष्टकृत्वः तथैवाज्यस्य ग्रहणं कर्त्तव्यं भवति। तत्रैकवारं त्रिवारं वा मन्त्र-प्रयोगः; मन्त्रस्तु स एव। ततो ध्रुवायां तथैव चतुर्ग्रहणम्। तत्रापि जुह्वा मिव सकृत् त्रिर्वा मन्त्रप्रयोगः। मन्त्रश्च स एवेति विवेकः।

प्रोक्षणीरध्वर्यु*रादत्ते। स ऽइध्म मेवाग्रे प्रोक्षति कृष्णो ऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामीति तन्मेध्य मेवैतदग्नये करोति† ॥ १ ॥

अथ वेदिं प्रोक्षति। वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामीति‡ तन्मेध्या§ मेवैतद् बर्हिषे करोति ॥ २ ॥

अथास्मै बर्हिः प्रयच्छति॥। तत् पुरस्ताद्ग्रन्थ्या साद-यति तत् प्रोक्षति बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षा-मीति¶ तन्मेध्य मेवैतत् स्रुग्भ्यः करोति ॥ ३ ॥

अथ याः प्रोक्षण्यः परिशिष्यन्ते। ताभिरोषधीनां मूलान्युपनिनयत्यदित्यै व्युन्दन मसीतीयं वै पृथिव्य-दितिस्तदस्या ऽएवैतदोषधीनां मूलान्युपोनत्ति ता ऽइमा आर्द्रमूला ऽओषधयस्तस्माद्यद्यपि शुष्काण्यग्राणि भवन्त्यार्द्राण्येव मूलानि भवन्ति** ॥ ४ ॥

अथ विस्रंस्य ग्रन्थिम्। पुरस्तात्प्रस्तरं गृह्णाति विष्णो स्तुपोऽसीति यज्ञो वै विष्णुस्तस्येय मेव†† शिखा

---

* 'रध्वर्यु'—इति ग। † 'ति'—इति क, ख।

‡ 'प्रोक्षामि'—इत्येव च। § 'तन्मेध्य'—इति क।

|| 'प्रयच्छन्ति'—इति क, ग। ¶ 'प्रोक्षामि'—इत्येव च।

** 'न्ति'—इति क, ख। †† 'यं मे'—इति ख, च।

स्तुप एता मेवास्मिन्नेतद्दधाति पुरस्ताद् गृह्णाति पुरस्ताद्ध्ययुँ स्तुपस्तस्मात्पुरस्ताद् गृह्णाति* ॥ ५ ॥

अथ सन्नहनं व्विस्रꣳसयति। प्रक्लृप्तꣳ हैवास्य स्त्री व्विजायत ऽइति तस्मात् सन्नहनं व्विस्रꣳसयति तद्दक्षिणायाꣳ श्रोणौ निदधाति नीविर्हैवास्यैषा दक्षिणत ऽइव ह्यीयं नीविस्तस्माद्दक्षिणायाꣳ श्रोणौ निदधाति तत्पुनरभिच्छादयत्यभिच्छन्नेव ह्यीयं नीविस्तस्मात्पुनरभिच्छादयति† ॥ ६ ॥

अथ बर्हि स्तृणाति। अयं‡ वै स्तुपः प्रस्तरोऽथ यान्युवाञ्चि लोमानि तान्येवास्य यदितरं बर्हिस्तान्येवास्मिन्नेतद्दधाति तस्माद्बर्हि स्तृणाति ॥ ७ ॥

योषा वै व्वेदिः§। ता|| मेतद्देवाश्च पर्यासते ये चेमे ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्तेष्वेवैना मेतत् पर्यासीनेषुनग्नां करोत्यनग्नताया ऽएव तस्माद्बर्हि स्तृणाति ॥ ८ ॥

यावती वै व्वेदिः¶। तावती** पृथिव्योषधयो बर्हिस्तदास्य मेवैतत् पृथिव्या मोषधीर्दधाति ता ऽइमा

---

* 'ति'–इति क, ख।
† 'ति'–इति क, ख।
‡ 'याव्य। यं'–इति क, ग।
§ 'वै व्वेदिः'–इति क, ग।
|| 'व्वेदि। स्ता'–इति क, ग।
¶ 'वै व्वेदिः'–इति क, ग।
** 'दि। स्तावती'–इति क, ग।

ऽअस्यां पृथिव्या मोषधयः प्रतिष्ठितास्तस्माद्दीर्घं स्तृणाति ॥ ९ ॥

तद्वै बहुलꣳ स्तृणीयादित्याहुः। यत्र वा ऽअस्यै बहुलतमा ऽओषधयस्तदस्या ऽउपजीवनीयतमं तस्माद् बहुलꣳ स्तृणीयादिति तद्वै तदाहर्त्तयैवाधि त्रिवृत् स्तृणाति त्रिवृद्धि यज्ञोऽथो ऽअपि प्रबर्हꣳ* स्तृणीयात् स्तृणन्ति बर्हिरानुषगिति ह्युषि†णाभ्यनूक्त मधरमूलꣳ स्तृणात्यधरमूला‡ ऽइव हीमा ऽअस्यां पृथिव्या मोषधयः प्रतिष्ठितास्तस्मादधरमूलꣳ स्तृणाति§ ॥ १० ॥

स स्तृणाति। ऊर्णम्रदसं|| त्वा स्तृणामि स्वासस्थां¶ देवेभ्य ऽइति साध्वीं देवेभ्य ऽइत्येवैतदाह यदा होर्णम्रदसं त्वेति स्वासस्थां देवेभ्य ऽइति स्वासदां देवेभ्य ऽइत्येवैतदाह** ॥ ११ ॥

अथाग्निं कल्पयति। शिरो वै यज्ञस्याहवनीयः पूर्व्वार्द्धो†† वै शिरः पूर्व्वार्द्ध मेवैतद्यज्ञस्य कल्पयत्युपर्यु-

---

* 'प्रव्वर्हिꣳ'–इति ख, 'प्रवर्हुꣳ'–इति च।

† 'त्वृषि' च, 'न्वृषि'–इति च-शुद्धौ।

‡ 'ला'–इति च। § 'ति'–इति ख।

|| 'स्तृणा। वूर्णम्रदसं'–इति क, ग। ¶ 'स्वासंस्था'–इति क, ग।

** 'ह'–इति ख। †† 'पूर्व्वोऽर्द्धो'–इति च।

परि प्रस्तरं धारयन् कल्पयत्ययं वै स्तुपः प्रस्तर ऽएतु मेवास्मिन्नेतत्प्रतिदधाति तस्मादुपर्युपरि प्रस्तरं धारयन् कल्पयति ॥ १२ ॥

अथ परिधीन्परिदधाति। तद्यत्परिधीन्परिदधाति यत्र वै देवा ऽअग्रेऽग्निं होत्राय प्रावृणत तद्धोवाच न वा अहमिद मुत्सहे यद्वो होता स्यां यद्वो हव्यं व्वहे- यन्त्रीन्पूर्व्वान्प्रावृढं ते प्राधन्विषुस्तानु मेऽवकल्पयताथ वा ऽअहमेतदुत्साक्ष्ये यद्वो होता स्यां यद्वो हव्यं व्वहेय मिति तथेति तानस्मा ऽएतानुवाकल्पयंस्त ऽएते परिधयः ॥ १३ ॥

स होवाच। व्वज्रो वै तान्वषट्कारः प्रावृणग् वज्राद्वै व्वषट्काराद् बिभेमि यन्मा व्वज्रो व्वषट्कारो न प्रवृञ्ज्या- देतैरेव मा परिधत्त तथा मा व्वज्रो व्वषट्कारो न प्रवर्क्ष्यतीति तथेति तमेतैः पर्यदधुस्तन्न व्वज्रो व्वष- ट्कारः प्रावृणक् तद्वस्मैवैतदग्नये नह्यति यदेतैः परि- दधाति ॥ १४ ॥

त ऽउ हैत ऽऊचुः। इद* मु चेदस्मान् यज्ञे युङ्क्थास्त्वेवास्माक मपि यज्ञे भाग ऽइति ॥ १५ ॥

तथेति देवा ऽअब्रुवन्। यद्बहिष्परिधि स्कन्त्स्यति

* 'ऽऊचु रिद'—इति क, ग।

तद्युष्मासु हुत मथ यद्व उपर्युपरि होष्यन्ति तद्वो* ऽविष्यत्यथ यदग्नौ होष्यन्ति तद्वो ऽविष्यतीति स यदग्नौ जुह्वति तदेनानवत्यथ यदेनानुपर्युपरि जुह्वति तदेनानवत्युथ यद्वहिष्परिधि स्कन्दति तदेतेषु हुतं तस्माद्ध ह नाग इव स्कन्नꣳ स्यादिमां वै ते पृथिवीं† प्राविशन् यद्वा ऽइदं किञ्च स्कन्दत्यस्या मेव तत्सर्वं प्रतितिष्ठति ॥ १६ ॥

स स्कन्न मभिमृशति। भुवपतये स्वाहा भुवनपतये स्वाहा भूतानाम्पतये स्वाहेत्येतानि वै तेषा मग्नीनां नामानि यद् भुवपतिर्भुवनपतिर्भूतानाम्पतिस्तद्यथा व्वषट्कृतꣳ हुत मेव मस्यैतेष्वग्निषु भवति ॥ १७ ॥

तद्धैके। इध्मस्यैवैतान्परिधीन्परिदधति। तदु तथा न कुर्यादनवक्लृप्ता ह तस्यैते भवन्ति यानिध्मस्य परिदधात्यभ्याधानाय ह्येवेध्मः क्रियते तस्यो हैवैतेऽवक्लृप्ता भवन्ति यस्यैतानन्यानाहरन्ति परिधय ऽइति तस्मादन्यानेवाहरेयुः ॥ १८ ॥

ते वै पालाशाः स्युः। ब्रह्म वै पलाशो ब्रह्माग्निरग्नयो हि तस्मात्पालाशाः स्युः ॥ १९ ॥

यदि पालाशान् न विन्देत्। अथो‡ ऽअपि व्वैकङ्कताः

---

* इत उत्तरं 'तद्वो'—इत्यन्तो ग्रन्थः च-पुस्तके नास्ति।

† नास्त्येतत् पदं च-पुस्तके।   ‡ 'विन्दे । दथो'—इति क, ग।

स्युर्यदि वैकङ्कतान् न विन्देदथो ऽअपि कार्ष्मर्यमयाः स्युर्यदि कार्ष्मर्यमयान् न विन्देदथो ऽअपि बैल्वाः स्युरथो खादिरा अथो ऽऔदुम्बरा एते हि वृक्षा यज्ञियास्तस्मादेतेषां वृक्षाणां भवन्ति ॥ २० ॥ ६ ॥

॥ इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् [३. ३.] ॥

अथेध्मादीनां प्रोक्षणं विधत्ते— "प्रोक्षणीरध्वर्युरादत्त इत्यादिना। "अग्नये करोतीति। अग्नौ हीध्म आधास्यते, अतोऽग्न्यर्थं प्रोक्षणेनेध्मं[1] मेध्यं कृतवान् भवतीत्यर्थः[2] ॥ १ ॥

"अथ वेदि मिति। "बर्हिषे करोतीति। 'बर्हिषे त्वा'-इति[3] मन्त्रलिङ्गात् स्तरिष्यमाणबर्हिरर्थं वेदिं शुद्धां करोति ; प्रोक्षणेन बर्हिस्तरणयोग्यतां वेदेरापादयतीत्यर्थः ॥ २ ॥

"अथेति। "पुरस्ताद्ग्रन्थीति। 'पुरस्तात्' पूर्वभागे सन्नहन-रज्जोः ग्रन्थिर्यथा भवति तथा आसादयतीत्यर्थः ॥

"स्रुग्भ्यः करोतीति। बर्हिष उपरि स्रुचा मासाद्यमानत्वात् तद्योग्यता मेतन्मन्त्रकरणकेन प्रोक्षणेन बर्हिषः[4] सम्पादयतीत्यर्थः[5] ॥ ३ ॥

---

१— "इध्मः समिन्धनात्"—इति निरु० ८. २. १। "विंशतिकाष्ठक इध्मः"—इति का० प० ५. १। अ० को० १. ४. १३।

२— अत्र मन्त्रः—वा० सं० २. १. १। का० श्रौ०सू० २. ७. १९ क।

३— मन्त्रस्तु— वा० सं० २. १. २। का०श्रौ०सू० २. ७. १९ ख।

४— "त्रेधा बर्हिः सन्नह्य पुनरेकधा"—इति का०श्रौ०सू० ५. १. २५। "बर्हिः परिबर्हणात्"—इति निरु० ८. २. ५।

५— सोऽयं मन्त्रः— वा० सं० २. १. ३। का०श्रौ०सू० २. ७. १९ ग।

अवशिष्टानां प्रोक्षणीनां[1] विनियोग माह— "अथेति। "ओषधीना मिति। स्तरणार्थं माहृतबर्हिर्लक्षणाना मोषधीना मित्यर्थः। सूचितं हि कात्यायनेन—"शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दन मिति[2]। मन्त्रस्य[3] प्रयोजन माह— "इयं वा इति। पृथिव्याः सम्बन्धिन्यो या व्रीहियवाद्या ओषधयः, तासा मेव मूलानि आर्द्रीकरोति। "उन्दी क्लेदने"-इति[4] धातुः। अनेनोदकेन ता इमा ओषधयः आर्द्रमूला भवन्ति; यस्मादेवं तस्मादेव कारणात् ओषधीना मग्रभागेषु शुष्केष्वपि मूलभागा आर्द्रतयैव दृश्यन्त इत्यर्थः॥ ४ ॥

प्रस्तरस्य[5] ग्रहणं विधत्ते— "अथेति। बर्हिस्सन्नहनरज्जोर्ग्रन्थिं विमुच्य 'पुरस्तात्' पूर्वदिग्भागे करोति। "विष्णोः"-इति[6] मन्त्रेण प्रस्तरं गृह्णीयात्। मन्त्रस्य प्रयोजन माह— "यज्ञो वा इति। आहवनीयसाध्यस्य यज्ञात्मकस्य 'विष्णोः' प्रस्तरमुष्टिरेव शिखारूपः 'स्तुपः' केशसङ्घातः। आहवनीयनिकटे तद्ग्रहणात् शिखा मेव तस्मिन् स्थापितवान् भवतीत्यर्थः। पुरस्ताद्ग्रहण मनूद्य प्रशंसति— "पुरस्तादिति। 'अयं' पिण्डीभावेन बद्धो मानुषः 'स्तुपः' केश-

---

१— प्रोक्षण्य आपः ६०—७० पृ० द्रष्टव्यम्।

२— का० श्रौ० सू० २. ७. २०।

३— मन्त्रोऽयम्— वा० सं० २. २. १।        ४— धा० पा० २०।

५— "कुशप्रस्तः प्रस्तर उपसन्नद्धः"-इति का० श्रौ० सू० ५. १. २६। पुष्पिता दर्भमञ्जर्यो बर्हिषः समीपे बद्धः प्रस्तरो भवतीत्यर्थः। "प्रस्तरो दर्भमुष्टिरूपः"-इति वेददीपः। अम० को० ३. ३. १६१।

६— वा० सं० २. २. २। का० श्रौ० सू० २. ७. २१।

सङ्घातः शिरसः पूर्वभागे हि भवति; अतो यज्ञस्यापि पूर्वभागे[1] स्रुपधारणाय पुरस्ताद्ग्रहणं युज्यत इत्यर्थः ॥ ५ ॥

सन्नहनरज्जोर्विस्रंसनं विधाय प्रशंसति— "अथेति। सन्नहनस्य विस्रंसने सति 'अस्य' यजमानस्य स्त्री 'प्रक्लृप्तं' प्रकर्षेण क्लृप्तं दशमाससम्पूर्णावयव मपत्यं 'विजायते' प्रसूयते। 'इति'-शब्दो हेतौ[2]। यस्मादेवं तस्मादित्यर्थः ॥

तस्याः सन्नहनरज्जोर्देशविशेषे स्थापनं विधत्ते— "तदिति। "नीविर्ह्वेति। 'अस्य' यजमानस्य 'एषा' रज्जुर्नीविरेव भवतीत्यर्थः। नीविरूपत्वं दृष्टान्तेनोपपादयति— "दक्षिणत इवेति। लोके हि वाससः परिधाने दक्षिणपार्श्व एव हि नीविः परिकल्प्यते, तस्मात् दक्षिणश्रोणौ सन्नहनरज्जुनिधानं नीविपरिकल्पन मेव भवतीत्यर्थः ॥

सन्नहनस्योपरि दर्भान्तरैश्छादनं विधत्ते— "तत्पुनरिति। तदुपपादयति— "अभिच्छन्नेवेति। उपरि वाससा 'छन्नेव' आवृतेव हि लौकिकी नीविर्भवति, तस्मादभिच्छादनं कार्य मित्यर्थः ॥ ६ ॥

बर्हिषः स्तरणं विधत्ते— "अथेति। 'स्तृणाति' वेदिं छादयतीत्यर्थः। तत्स्तरणं प्रशंसति— "अयं वा इति। यः 'अयं' प्रस्तरः, स ऊर्ध्वबद्धकेशसङ्घातात्मक स्रुपः; अथ तद्व्यतिरिक्तानि श्मश्रुप्रभृतीनि यान्यवाङ्मुखानि लोमानि, स्तीर्यमाणेन बर्हिषा 'अस्य' यज्ञस्य[3] तान्येव सम्पाद्यन्त इत्यर्थः ॥ ७ ॥

---

१— 'पुरोभागे'—इति ठ।

२— अम० को० ३. १. ३२. ७। हे० को० अने० ७. २१, २२। मेदि० को० अव्य० २२, २३।

३— 'यजमानस्य'—इति ठ, ड।

"योषा वा इत्यादि। हविर्ग्रहणाय आगत्य ये देवाः वेद्याः उपरितः[१] उपविशन्ति, ये च 'शुश्रुवांसः' प्रयोगाभिज्ञानाः[२] 'अनूचानाः' अनुष्ठातृरूपाः ऋत्विग्रूपा ब्राह्मणाः समीपे वर्त्तन्ते; स्त्रीरूपा इयं[३] वेदिः स्वय मनानावृता[४] सती तेभ्यो लज्जाविशिष्टा भवति; अतस्तस्या बर्हिषा आच्छादनं अनग्नतायै सम्पद्यत इत्यर्थः ॥ ८ ॥

प्रकारान्तरेण स्तरणं प्रशंसति—"यावती वा इति ॥ ९ ॥

स्तरणस्य श्लक्ष्णतां[५] विधत्ते— "तद्वा इति। 'बहुलं' निरन्तरं यथा भूमिर्न दृश्यते तथा स्तृणीयादित्यभिज्ञाः कथयन्तीत्यर्थः। एवं वदता मभिप्राय माह— "यत्र वा इति। 'अस्यै' षष्ठ्यर्थे चतुर्थी[६]; 'अस्याः' पृथिव्याः सम्बन्धिनि 'यत्र' यस्मिन् स्थाने ओषधीनां बाहुल्य मस्ति, तदेव स्थानं सर्व्वैः प्राणिभिरतिशयेनोपजीवनीयं भवति, तस्मादुपजीवनीयत्वसिद्धये बहुलं स्तरणं कर्त्तव्य मित्यनेनाभिप्रायेणेत्यर्थः ॥

अस्तु भूमेरुपजीवनीयतमत्वम्, तावता यजमानस्य को लाभः? तत्राह— "तद्वा इति। 'तस्य' बर्हिषो यः 'आहर्त्ता' यजमानः, तस्मिन्नेव 'तद्' बहुलस्तरणकृत मुपजीवनीयतमत्वलक्षणं फलं भवति; अनुष्ठेयक्रियाफलस्य कर्त्तृगामित्वात्। अत एव जैमिनिः

---

१— 'परितः'—इति ठ, ड। २— 'प्रयोगाभिज्ञाः'—इति ठ।
३— नास्त्येतत् पदं ठ-पुस्तके। ४— 'मनावृता'—इति ठ।
५— 'लक्षणां'—इति ठ।
६— पा० सू० २. ३. ६. वा० १।

सूत्रयामास— "शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्"–इति[१]। 'आह-र्त्तर्य्येवाधि'-इत्यधिशब्दो विभक्त्यर्थानुवादी ॥

स्तरणस्य त्रिवृत्त्वं विधत्ते—"त्रिवृत् स्तृणातीति। त्रिभिर्मुष्टि-भिर्बर्हिस्त्रिधातु यथा भवति तथा वेदिं छादयेत्। तत्रैकं मुष्टिं वेदेः पूर्वभागे स्तीर्त्वा, द्वितीयं मुष्टिं तन्मध्यमभागे पूर्वमुष्टिना सम्बद्धं स्तृणीयात्; ततस्तृतीयं मुष्टि मपि वेदेरपरार्द्धे द्वितीय-मुष्टिना सम्बद्धं स्तृणीयादिति। एवं स्तरणं[२] प्रत्यक् परिसमाप्ति-रित्येकः पक्षः।

पक्षान्तर माह— "अथो इति। 'प्रबर्हं' प्रवृह्य प्रवृह्य प्रथम-मुष्टिं वेद्यपरार्द्धे स्तीर्त्वा, तस्याश्च मुष्टयाधस्तात् तत्सम्बद्धं[३] द्वितीयं मुष्टिं स्तृणीयात्, एव मेव तृतीय मपि। एवं मुष्टित्रयस्य परस्पर-सम्बन्धं ऋङ्मन्त्रपादोदाहरणेन द्रढ़यति—"स्तृणन्तीति। 'आनुषक्' अनुषक्तं परस्परसम्बद्धं बर्हिरध्वर्यवः स्तृणन्तीति ऋक्पादस्यार्थः[४]। 'अतः' अस्मान्मन्त्रलिङ्गात् पूर्वं मुष्टिं प्रवृह्य तस्याधस्तात् तत्संसक्त मेवापरं मुष्टिं स्तृणीयादिति भावः। अस्मिन्पक्षे स्तरणस्य प्रागप-वर्गता।

कात्यायनः पक्षद्वय मपि सूत्रयामास[५]— "पश्चादपवर्गं प्रवृहन्

१— जै० सू० ३. ७. १८; अ० मा० ३. ७. ८।

२— 'स्तरणस्य'–इति ठ।

३— 'मुष्टस्य तस्याधस्तात् सम्बद्धम्'–इति ठ।

४ – ऋ० सं० ८. ४५. १। निरु० ६. ३. ५ द्रष्टव्यम्।

५— का० श्रौ० सू० २. ७. २६, २७।

वेति । अस्मिन्पत्तद्वयेऽपि बर्हिर्मूलस्याधरत्वं विधाय प्रशंसति— "अधरमूल मिति ॥ १० ॥

विहितं स्तरण मनूद्य मन्त्रं विधत्ते— "स स्तृणातीति । "ऊर्ण-म्रदस मिति[1] । मन्त्रपदस्य पर्यवसित मर्थ माह— "साध्वी मिति । ऊर्णासूत्रनिर्म्मितकम्बलवन्मृदुभूतां त्वां हे वेदे![2] स्तृणामीति हि तस्यार्थः । तथाच 'साध्वीं' शोभनां देवेभ्यः प्रीतिकरी मित्यय मर्थः सम्पद्यत इत्यर्थः । मन्त्रस्य द्वितीयभाग मनूद्य व्याचष्टे— "स्वासस्था मिति । सुखेनासितु मुपवेष्टुं योग्यां 'स्वासस्थाम्' । एतस्य पदस्याभि-प्रायकथनं 'स्वासदाम्'-इति । सुखेन आसितुम्[3], आसदन मुप-वेशनं कर्त्तुं शक्या 'स्वासदा', ता मित्यर्थः ॥ ११ ॥

अग्नेः प्रबलीकरणं विधत्ते— "अथाग्नि मिति । 'कल्पयति' क्लृप्तं हविर्दहनसमर्थं करोतीत्यर्थः । तच्च कल्पन माहवनीयस्यैवेति प्रतिपादयति— "शिरो वा इति । देहस्य पूर्वभागो हि शिरः ; अत आहवनीयोऽपि वेदेः पूर्वभागेऽवस्थानात् 'यज्ञस्य शिरः' । तथाच यज्ञस्य पूर्वार्द्धं माहवनीयं कल्पयन् शिर एव कल्पयति[4] ।

तस्मिन् समये प्रस्तरस्योपरि धारणं विधत्ते— "उपर्युपरीति । अग्नेरत्यन्तसन्निकृष्टोपरिभाग इत्यर्थः । "उपर्यध्यधसः सामीप्ये"-इति[5] द्विर्वचनम् । तद्धारणं प्रशंसति— "अयं वा इति । योऽयं

१— वा० सं० २. २. ३ । का० श्रौ० सू० २. ७. २२ ।

२— 'वेदि !'-इति ड । ३— 'आसत्तुं'-इति ठ ।

४— 'माहवनीयकल्पनं यत्, शिर एव तत् कल्पयति'-इति ड ।

५— पा० सू० ८. १. ७ ।

'स्तुपः' केशसङ्घातः शिरसि दृश्यते, अय मेव खलु प्रस्तरः। यज्ञ-शिरश्च आहवनीयस्योपरि प्रस्तरं धारयन्, 'एत मेव' केशसङ्घातं तस्मिन् 'प्रतिदधाति' सन्दधाति[1] ॥ १२ ॥

परिधिपरिधानं[2] विधत्ते— "अथेति। परितो धीयन्त इति 'परिधयः'। "उपसर्गे घोः किः"-इति[3] कर्म्मणि कि-प्रत्ययः। तदेतत्परिधान मुपपादयितु मनुवदति— "तद्यदिति ॥

इतिहासमुखेनैतत्परिधान मुपपादयति— "यत्र वा इति। यत्र इमम् 'अग्निं' पुरा[4] 'होत्राय' होतृकर्मणे देवाः 'प्रावृणत' प्रवृत-वन्तः, 'तत्' तदानीं सोऽग्निः 'उवाच' उक्तवान्। कथ मिति, तदुच्यते— "न खल्वह मिदानी मुत्साहं करोमि, 'वः' युष्माकं होता स्यां हव्यं च वहेयम्,-इति"। यदेतद्धोतृत्वहव्यवहनादिलक्षणं कार्यं युष्माभिः प्रार्थ्यते, तत् कर्तुं नोत्सह इत्यर्थः ॥

अनुत्साहकारण मुपन्यस्यति— "त्रीन् पूर्वानिति। हे देवाः! यूयं मदीयान् पूर्वपुरुषान् त्रीन् 'प्रावृढ्वम्' प्रवृतवन्तः स्थः; ते च

---

१— "दर्भसङ्घातरूपत्वात् केशसङ्घातरूपा शिखेव"-इति वे० दी०।

२— "परितः समन्ततः स्थाप्यन्ते"-इति परिधयः। "परितः सर्वतः चतुर्दिक्षु निधानात् परिधयः"-इति पक्षे तु परिधित्रित्वे दोषः स्यात्; अस्ति च परिधित्रित्वं परिधिचतुष्ट्वेति सम्प्रदायः। तथाहि— "बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः। त्रयो भवन्त्यशीर्णाग्रा एकेषान्तु चतुर्दिशम्"-इति का०प्र० २. ५. १९।

३— पा० सू० ३. ३. ९२।

४— "यत्र खल्विमं हव्यवाहम् 'अग्निम्' पुरा"-इति ठ।

तत एव प्रवरणात् 'प्राधन्विषुः' प्रागमन्, प्राम्नुवतेत्यर्थः । एतच्च प्रागाम्नातम्— "चतुर्द्धा विहितो ह वा अग्रेऽग्निरास"-इत्यत्र[1] ॥

"तान् न्वित्यादि । प्राग्-गतान्[2] 'तान्' मदीयान् पूर्वम् 'अव-कल्पयत' अवक्लृप्तान्[3] मूर्त्तिसामर्थ्ययुक्तान् कुरुत; 'अथ' अनन्तर मेव होता स्या मित्यादि 'यत् एतत् उत्साच्ये अहम्' एतद्विषय मुत्साहं करिष्ये। ते च देवाः 'तथेति' अङ्गीकृत्य 'एतान् अवाकल्पयन्' समर्थान् मूर्त्त्यादियुक्तानकुर्वन्, 'ते' चेमे 'परिधयः' सञ्जाताः ॥ १ ३ ॥

एव माख्यायिकया परिधीना मुत्पत्तिं प्रतिपाद्य, तैरग्नेः परि-धानं कार्य मित्येतदपि प्रतिपादयति— "स हेति । एतद् देवान् प्रत्यग्निरुवाच[4] । 'प्रावृणक्' प्रकर्षेणावर्जयत् । वषट्काराद्भीतं मां 'यत्' येन परिधानेन हेतुना वषट्कारात्मको वज्रो न हिंस्यात्, तदेतत्परिधानं मम कुरुत ; तथा च वषट्कारात्मको वज्रो मां 'न प्रवर्क्ष्यति' न हिंसिष्यति। एव मग्निनोक्ते देवा अपि 'तथेति' अङ्गीकृत्य तं परिधिभिः पर्यदधुः। 'अतः' देवैः परिधानकरणात् 'तम्' अग्निम् वज्रात्मको वषट्कारो नाबाधिष्ट। अतः परिधि-परिधानं अग्नेः कवचबन्धन मेव भवति । तस्मादवश्यं तत्कर्त्तव्य मिति भावः ॥ १ ४ ॥

---

१— २ प्र० १ ब्रा० १ क० (१२४, १२७ पृ०) ।

२— 'प्रगतान्'–इति ठ, ड । ३— 'प्रवृत्तांस्तान्'–इति ठ, ड ।

४— 'प्रत्यग्निवाक्यम्'–इति ठ ।

अथ प्रसङ्गाद् "भुवपतये[१] स्वाहा"-इत्यादिमन्त्रैः[२] स्कन्नस्य हविषोऽभिमर्शनं विधित्सुः, परिधिरूपेणावस्थितानां भुवपत्यादि[३]-सञ्ज्ञकानां तेषा मग्नीनां स्कन्नद्रव्यभाक्त्वं प्रतिपादयति– "त ऊ हेत्यादिना। 'ते' परिधिरूपेणावस्थिताः पूर्वाग्नयः 'एतद्' वक्ष्यमाणम् 'ऊचुः' उक्तवन्तः। अस्मांश्चेत् 'इदम्' इदानीं यज्ञे (पुनः 'युङ्क्थाः'[४]) युष्मान् कुरुथ, तर्ह्यस्माक मपि यज्ञे कश्चिद्भागोऽस्त्विति ॥ १५ ॥

"तथेत्यादि। देवाश्च 'तथेति' प्रत्यशृण्वन्। प्रतिश्रुत्य चैव मब्रुवन्। कथ मिति। 'बहिष्परिधि' परिधीनां बाह्यदेशे 'यद्' हविः 'स्कन्त्स्यति' स्कन्नं भविष्यति, 'तद् युष्मासु हुतम्' अस्तु; तत् स्कन्नं हविरसाधारणो युष्मद्भागो भवत्वित्यर्थः। अथ च 'वः' युष्माकम् 'उपर्युपरि' अत्यन्तसमीपोपरिभागे 'यद्' हविः होष्यन्ति, तद् 'वः' युष्मान् 'अविष्यति' तृप्तान् करिष्यतीति। अवतिरत्र तृप्त्यर्थः। "अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमेषु[५]"-इतिपठितत्वात्। यच्चाग्नौ होष्यन्ति, तदपि युष्माकं तृप्तिकर मस्त्विति। एवं देवैः तेषा मग्नीनां भागो दत्तः। यस्मादेवं तस्मादिदानी मप्यग्नौ हवनादिक मेनांस्तर्पयतीत्याह– "स यदिति। 'सः'-इति व्यत्ययेन

---

१— 'भूपतये'–इति ठ।

२— ते च मन्त्राः वा० सं० २. २. ४, ५, ६।

३— 'भूपत्यादि'–इति ठ।

४— नास्त्येतत् पदद्वयं ठ-पुस्तकादन्यत्र।

५— धा० पा० ६००।

बह्वर्थे एकवचनम्[1]। तथा च बहिष्परिधि 'यत्' हविः स्कन्दति, तत् 'एतेषु' अग्निषु हुत मेव भवति।

स्कन्नस्य च तद्भागत्वं प्रत्यक्षतो दर्शयति— "तस्माद् हेति। यस्मादेवं परिधिरूपाग्नीनां स्कन्नं हविर्भागत्वेन परिकल्पितम्, तस्मादेव कारणात् हविः स्कन्नं स्यादिति यत्तत् 'आगः' अपराधो[2] न भवति। कुत इत्यत आह— "इमा मिति। 'ते' प्रगता अग्नयः, 'इमां' भूमिं खलु प्रविष्टाः, यच्चाज्यादिकं कि मपि हविः स्कन्दति, तत्सर्वं पृथिव्या मेव प्रतितिष्ठति। एवं च तेन स्कन्नेन तत्रत्याना मग्नीनां सम्बन्धात् तृप्तिर्भविष्यतीति न स्कन्नदोषः॥१६॥

एवम्भूतं स्कन्नं हविः परिधिरूपेणावस्थितानां भूमौ प्रविष्टाना मग्नीनां भाग इत्युपपाद्य तत्तदग्निनामधेययुक्तैर्मन्त्रैस्तस्याभिमर्शनं विधत्ते— "स स्कन्न मिति। 'तत्' तच्च एवं नामोद्देशेन अभिमर्शने कृते सति, यथा 'वषट्कृतं' वषट्कारेण प्रत्तं हविः तस्यै देवतायै हुतं भवति, एव मेव 'अस्य' यजमानस्य 'एतेषु' भुवपत्यादि[3]नामकेषु परिधिरूपाग्निषु तत् स्कन्नं हविः हुत मेव भवतीत्यर्थः॥ १७॥

तेषां परिधीना मिध्मावयवत्वं केचिन्मन्यन्ते, तेषां मत मुपन्यस्य निरस्यति[4]— "तद्धैक इत्यादिना। 'इध्मस्य'-इत्यवयवावयवि-

---

१— पा० सू० १. १. ८५।

२— 'सोऽपराधः'-इति आदिषु, हे च।

३— 'भूपत्यादि'-इति ठ। ४—'मत मुपन्यस्यति'-इति ठ।

सम्बन्धार्था षष्ठी[१]; इध्मस्यावयवभूतानित्यर्थः। अग्निसमिन्धनाय ह्यीध्मः क्रियते, अतस्तदवयवानां समिन्धनसामर्थ्य मेव, न तु परिधानसामर्थ्य मस्तीत्यनवक्लृप्तिः। तदेतदाह– "अनवक्लृप्ता इति।

"तस्यो हैवेत्यादि। 'यस्य' यजमानस्य परिधय इत्येवं रूपेण इध्मात् पृथक्, तानेवाहरन्त्यध्वर्यवः; तस्यैव यजमानस्य एते 'अव-क्लृप्ताः' परिधानलक्षणकार्यक्षमा भवन्तीत्यर्थः। यस्मादेवं 'तस्मात्' इध्मानन्तर्भूतान् 'अन्यान्' एव परिधीनाहरेयुरिति विधत्ते– "तस्मादिति ॥ १८ ॥

परिध्युपादानभूतान् वृक्षान् उत्तरोत्तराननुकल्पतयोपादेयान् विधत्ते–"ते वा इति। 'ते' खलु परिधयः पलाशवृक्षजा भवेयुः। "ब्रह्म वै"-इत्यादि तत्प्रशंसा। ब्रह्मविषयस्य रहस्यस्य[२] श्रवणात् पलाशवृक्षस्तावद् ब्रह्मात्मकः। तथा च तैत्तिरीयकम्– "देवा वै ब्रह्मन्नवदन्त तत् पर्ण उपाशृणोदिति[३]। अग्निवाय्वादित्यरूपेण हिरण्यगर्भस्य ब्रह्मणः[४] एवावस्थानादग्निरपि ब्रह्मात्मकः। तादृग्[५] अग्न्यात्मकत्वं च परिधीनां प्रतिपादितम्। अतोऽग्निरूपब्रह्मात्मकानां परिधीनां पलाशरूपब्रह्मविकारत्वं युक्त मित्यर्थः ॥ १९ ॥

स्पष्ट मन्यत् ॥ २० ॥ ६ [३. ३.] ॥

---

१— पा० २. ३. ५० सू० भा० द्रष्टव्यम्।

२— 'रहस्ये'–इति आदिषु। ३— तै० सं० ३. ५. ७. ३।

४— 'हिरण्यगर्भाख्यब्रह्मणः'–इति ठ।

५— नास्त्येतत् पदं ड-पुस्तके।

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे तृतीयाध्याये तृतीयं ब्राह्मणम्[१] ॥

## ॥ इति प्रथमकाण्डे द्वितीयप्रपाठकः समाप्तः[२] ॥

---

१— अस्मिन् ब्राह्मणे इध्मवेदिबर्हिषां प्रोक्षणम्, बर्हिःस्तरणम्, प्रस्तरस्थापनम्, आहवनीयाग्निकल्पनम्, परिधिपरिधानारम्भश्च। तत्रेयं पद्धतिः— अध्वर्युः वेदित आज्यस्थाली मादायान्यत्र सुगुप्ते संरक्ष्य इध्मकाष्ठान् विस्रंस्य "ब्रह्मन्निध्मं प्रोक्षिष्यामि"—इति ब्रह्माणं पृच्छति। "प्रोक्ष यज्ञम्"—इति च ब्रह्मा तत्रानुजानाति। ततस्तेषां प्रोक्षणं कार्यम्। वेदेः बर्हिषाश्चैव मेव प्रोक्षणम्। ततोऽवशिष्टैर्जलैर्बर्हिर्मूलानां प्रोक्षणञ्च। ततो यथा वेदिभूमिर्न दृश्येतैवं कृत्वा तैरेव बर्हिर्भिः आच्छादयेत्। एतदेव बर्हिस्तरण मुच्यते। तत्स्तरणप्रकारवैविध्यं तु ऋत्विक्कृताभिनयदर्शनत एव सुगमम्। तत इध्मात् समिध मादाय ब्रह्मणो हस्तात् प्रस्तरञ्चादाय आहवनीयस्योपरि धारयन् आहवनीयाग्निं कल्पयेत्। कल्पनं चात्र हविर्दहनसमर्थीकरणम्। परिधिपरिधयस्तूष्णींपूर्वः।

२— इतोऽनन्तरं क-पुस्तके "कण्डिकाः १२२"—इति, ख-पुस्तकेऽपि तथैव, ग-घ-ङ-पुस्तकेषु नास्ति, च-पुस्तके तु "कण्डिकासङ्ख्या १२२"—इति।

## अथ

### तृतीयप्रपाठके प्रथमं ब्राह्मणम्,
### अपि वा
### तृतीयाध्याये चतुर्थं ब्राह्मणम् ।



॥ हरिः ॐ ॥

ते वा ऽआर्द्राः स्युः । ए*तद्ध्येषां जीव मेतेन सतेजस ऽएतेन व्वीर्य्यवन्तस्तस्मादार्द्राः स्युः ॥ १ ॥

स मध्यम मेवाग्रे परिधिं परिदधाति । गन्धर्व्वस्त्वा व्विश्वावसुः परिदधातु व्विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडित ऽइति† ॥ २ ॥

अथ दक्षिणं परिदधाति । इन्द्रस्य‡ बाहुरसि दक्षिणो व्विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ऽईडित ऽइति§ ॥ ३ ॥

अथोत्तरं परिदधाति । मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्म्मणा व्विश्वस्यारिष्ट्यै यजमानस्य

---

* 'स्यु । रे'–इति ग ।  † 'इति'–इति ख, 'इति'–इति च ।

‡ 'परिदधातीन्द्रस्य'–इति ग ।  § 'इति'–इति ख, 'इति'–इति च ।

परिधिरस्यग्निरिड ऽईडित ऽइत्यमुयो हि तस्मादाहाग्नि-रिड ऽईडित ऽइति* ॥ ४ ॥

अथ समिध मभ्यादधाति । स मध्यम मेवाग्रे परिधि मुपस्पृशति तेनैतानग्रे समिन्धे ऽथाग्नावभ्यादधाति तेनो ऽअग्निं प्रत्यक्षꣳ समिन्धे ॥ ५ ॥

सोऽभ्यादधाति । व्वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्त मध्वर ऽइत्येतया गायत्र्या गायत्री मेवैतत्समिन्धे सा गायत्री समिद्धान्यानि छन्दाꣳसि समिन्धे छन्दाꣳसि समिद्धानि देवेभ्यो यज्ञं व्वहन्ति ॥ ६ ॥

अथ यां द्वितीयाꣳ समिध मभ्यादधाति । व्वसन्त मेव तया समिन्धे स व्वसन्तः समिद्धोऽन्यानृतून्त्समिन्ध ऽऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति सोऽभ्यादधाति समिदसीति समिद्धि व्वसन्तः† ॥ ७ ॥

अथाभ्याधाय जपति । सूर्य्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्या ऽइति गुप्त्यै वा ऽअभितः परिधयो भवन्त्यथैतत् सूर्य मेव पुरस्ताद्गोप्तारं करोति नेत्

---

* 'इति'–इति ख, 'इति'–इति घ ।

† 'व्वसन्तः'–इति ख, 'न्तः'–इति घ ।

पुरस्तान्नाष्ट्रा रक्षाꣳस्यभ्यवचरानिति सूर्यो हि नाष्ट्राणाꣳ रक्षसा मपहन्ता* ॥ ८ ॥

अथ या मेवामूं तृतीयाꣳ समिध मभ्यादधाति । अनु†याजेषु ब्राह्मण मेव तया समिन्धे स ब्राह्मणः समिद्धो देवेभ्यो यज्ञं व्वहति ॥ ९ ॥

अथ स्तीर्णां व्वेदि मुपावर्त्तते । स द्वे तृणे ऽआदाय तिरश्ची निदधाति सवितुर्बाहू स्थ इत्ययं वै स्तुपः प्रस्तरो ऽथास्यैते भ्रुवावेव तिरश्ची निदधाति तस्मादिमे तिरश्च्यौ भ्रुवौ क्षत्रं व्वै प्रस्तरो व्विश ऽइतरं बर्हिः क्षत्रस्य चैव व्विशश्च व्विधृत्यै तस्मात् तिरश्ची निदधाति तस्माद्वेव व्विधृती नाम ॥ १० ॥

तत् प्रस्तरꣳ स्तृणाति । ऊर्ण‡म्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य ऽइति साधुं देवेभ्य ऽइत्येवैतदाह यदाहोर्णम्रदसं त्वेति स्वासस्थं देवेभ्य ऽइति स्वासदं देवेभ्य इत्येवैतदाह ॥ ११ ॥

त मभिनिदधाति । आ त्वा§ व्वसवो रुद्रा ऽआदित्याः सदन्त्वित्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्या

---

* 'न्ता'–इति ख, 'न्ता'–इति च ।
† 'दधात्य । नु'–इति ग ।
‡ 'स्तृणात्यूर्ण'–इति ग ।
§ 'दधात्या । त्वा'–इति ग ।

ऽएते त्वासीदन्त्वित्युवैतदाहाभिनिहित एव सव्येन पाणिना भवति ॥ १२ ॥

अथ दक्षिणेन जुहूं प्रतिगृह्णाति। नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानिति ब्राह्मणो हि रक्षसा मपहन्ता तस्मादभिनिहित ऽएव सव्येन पाणिना भवति ॥ १३ ॥

अथ जुहूं प्रतिगृह्णाति। घृताच्यसि जुहूर्नाम्नेति घृताची हि जुहूर्हि नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद ऽआसीदेति घृताच्यस्युपभृन्नाम्नेत्युपभृतं घृताची ह्युपभृद्धि नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद ऽआसीदेति घृताच्यसि ध्रुवा नाम्नेति ध्रुवां घृताची हि ध्रुवा हि नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद ऽआसीदेति यदन्यद्धविः* ॥ १४ ॥

स वा ऽउपरि जुहूꣳ सादयति। अध† ऽइतराः स्रुचः क्षत्रं वै जुहूर्विश ऽइतराः स्रुचः क्षत्र मेवैतद् विश ऽउत्तरं करोति तस्मादुपर्य्यासीनं क्षत्रिय मध‡स्तादिमाः प्रजा ऽउपासते तस्मादुपरि जुहूꣳ सादयत्यध इतराः स्रुचः ॥ १५ ॥

सोऽभिमृशति। ध्रुवा ऽअसदन्निति ध्रुवा ह्यसदन्नृतस्य योनाविति यज्ञो वा ऽऋतस्य योनिर्यज्ञे ह्यसदं-

* 'विः'–इति च। † 'दयत्य। ध'–इति ग। ‡ 'मुध'–इति ग, च।

स्त्वा विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिमिति तद्यजमानं माह पाहि मां यज्ञन्यमिति तदध्यात्मानं यज्ञान्नान्तरेति यज्ञो वै विष्णुस्तद्यज्ञायैवैतत्सर्वं परिददाति गुप्त्यै तस्मादाह त्वा विष्णो पाहीति ॥ १६ ॥ १॥

॥ इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् [३. ४.] ॥

अथ परिधीनामार्द्रतां विधाय प्रशंसति— "ते वा इति। 'एतद्' आर्द्रत्वं खलु 'एषां' जीवतां जीवनलिङ्गम्। स्थावरजङ्गमादिशरीरे यच्च खल्वार्द्रत्वमस्ति, 'तेन' ते 'सतेजसः' अवयवकान्तिलक्षणेन तेजसा युक्ताः 'वीर्यवन्तः' बलवन्तश्च भवन्ति। अतः सतेजस्त्वादिसिद्धये 'ते' परिधयोऽपि 'आर्द्राः' भवेयुरित्यर्थः। आर्द्रस्य च सजीवत्वं शुष्कस्य च निर्जीवत्वं छन्दोगैराम्नायते— "अस्य सोम्य! महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद्०—० अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति[१]"-इति ॥ १ ॥

आहवनीयस्य पश्चिमभागे मध्यमपरिधिरेव प्रथमं परिधातव्य इति विधत्ते— "स इति। मन्त्रः[२] स्पष्टार्थ इत्यभिप्रेत्य ब्राह्मणेन न व्याख्यायते। अस्मिन् मन्त्रे, दक्षिणोत्तरपरिधिमन्त्रयोश्च, यद् "अग्निरिड ईडितः"-इति तादात्म्यप्रतिपादनम्, तावन्मात्रं व्याख्या-

---

१— सा० छा० ब्रा० ८. ११. १, २, ३।

२— वा० सं० २. ३. १। का० श्रौ० सू० २. ८. १।

स्यते। अस्माभिस्तु संहिताया मेव मन्त्रा व्याख्याता इति न पुनस्तेऽत्र व्याख्यातव्याः[१] ॥ २ ॥

दक्षिणोत्तरपरिध्योरपि समन्त्रकं[२] परिधानं विधत्ते— "अथ दक्षिण मित्यादिना । "अग्नयो हीत्यादि । यस्मात् प्रागुक्तरीत्या परिधयः 'अग्नयः', 'तस्मात्' कारणाद् "अग्निरिड ईडितः"-इत्यग्निशब्देन परिधिरभिधीयत इत्यर्थः ॥ ३, ४ ॥

पूर्वाघारसमिधोऽभ्याधानं विधत्ते— "अथ समिध मिति । वायव्यां दिश मारभ्य आग्नेयदिग्भागपर्यन्त मविच्छिन्नधारया होमः "पूर्वाघारः" । स च यत्र परिसमाप्यते, तत्रैकां 'समिधम्' आदध्यादित्यर्थः ।

तत्र धर्मविशेष माह— "स मध्यम मेवेति । 'अग्रे' अभ्याधानात्पूर्वं 'मध्यमं परिधिं' तया समिधा संस्पृशेदित्यर्थः ।

तस्य प्रयोजन माह— "तेनैतानिति । 'तेन' उपस्पर्शनेन परिधिरूपान् 'एतान्' अग्नीन् प्रथमं 'समिन्धे' ; 'अग्नौ' अभ्याधानेन 'तेन' आहवनीयरूपेण प्रत्यक्षस्याग्नेः समिन्धन मित्यर्थः ॥ ५ ॥

विहित मभ्याधान मनूद्य मन्त्रं[३] विधत्ते— "स इति । 'अस्य' अभ्याधानसाधनमन्त्रस्य गायत्रीच्छन्दस्कत्वात् छन्दसां मध्ये गाय-

---

१— यद्यपि काण्वसंहितैव सायणाचार्य्येण व्याख्याता (सापि नाद्यापि क्वचिदपि मुद्रिता), इदं तु ब्राह्मणं माध्यन्दिनम् ; तथापि वाजसनेय-सर्वशाखामन्त्राणा मभिन्नत्व मभिप्रेत्यैवोक्त मेव मिति ।

२— वा० सं० २. ३. २, ३ । का० श्रौ० सू० २. ८. १ ।

३— वा० सं० २. ४. १ । का० श्रौ० सू० २. ८. २ ।

ख्य मपि छन्दः प्रथमं 'समिन्धे' सन्दीपयति। समिद्धा च 'सा गायत्री' उष्णिगादीनि 'अन्यानि' चतुरुत्तराणि[1] 'छन्दांसि' सन्दीपयति; समिद्धायाश्चतुर्विंशत्यक्षराया गायत्र्यास्तत्र सर्वत्रानुगमात्। गायत्र्या 'समिद्धानि' तानि च 'छन्दांसि', 'देवेभ्यः' 'यज्ञं' 'वहन्ति' प्रापयन्ति ॥ ६ ॥

अथोत्तराघारसमिधाभ्याधानं विधत्ते— "अथ या मिति। द्वितीयाघारो हि नैर्ऋतीं दिश मारभ्यैशानीं दिशं प्रत्यनवच्छिन्नधारया होमः; स यत्र परिसमाप्यते, तत्रैकां समिध मादध्यात्। पूर्वाघारसमिदपेक्षया 'द्वितीयाम्'-इति व्यपदेशः। 'तया' स समिधा 'वसन्तः' ऋतुः सन्दीप्यते। निगदसिद्ध मन्यत्।

अभ्याधाज मनूच्य मन्त्रं[2] विधत्ते— "स इति। "समिद्धीति। "समिधो यजति"-इति तद्विधानात्[3]। ईदृशी प्रसिद्धि रत्र[4] 'हि'-शब्देन प्रतिपाद्यते ॥ ७ ॥

एव माघारसमिदभ्याधानानन्तरं मन्त्रविशेषस्य जपं विधत्ते— "अथाभ्याधायेति। मन्त्रस्य प्रयोजन माह— "गुप्त्यै वा इति। राक्षसादिसञ्चरणनिरसनं गोपनम्। गुप्त्यर्थं हि परिधिपरिधानम्। पूर्वस्यां दिशि परिधिर्नास्ति, तथा च 'एतत्' एतेन "सूर्यस्त्वा[5]"-इति मन्त्रोच्चारणेन त मुद्यन्तं 'सूर्य मेव' यज्ञस्य रक्षितारं करोति।

---

१— "चतुरस्चतुरः प्राजापत्यायाः"—इति पि० छ० सू० ३. ११।

२— अत्र मन्त्रः—वा० सं० २. ५. १। का० श्रौ० सू० २. ८. ३।

३— तै० सं० २. ६. १।   ४— 'ईदृशीं प्रसिद्धि मत्र'—इति जादिषु।

५— वा० सं० २. ५. २। का० श्रौ० सू० २. ८. ४।

ग्निष्टं स्पष्टम्[१]। इम मर्थं तैत्तिरीयके विस्पष्ट मामनन्ति— "परिधीन् परिदधाति रक्षसा मपहत्यै, संस्पर्शयति रक्षसा मनन्ववचाराय, न पुरस्तात् परिदधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षांऽस्यपहन्ति"-इति[२] ॥ ८ ॥

अनुयाजप्राक्कालेऽभ्याधानायैका समिदवशेषयितव्येत्यभिप्रेत्य तस्याः समिधो ऽभिधास्यमान[३] मभ्याधान मनूद्य प्रसङ्गात्तस्य प्रयोजन माह— "अथ या मिति । "अमू मिति । 'अदः'-शब्दो विप्रकृष्टार्थवाची । विप्रकृष्टेऽनुयाजप्राक्काले अभ्याधान मित्यर्थः । "ब्राह्मण मेव तयेति । "एषा ते अग्ने समित्"-इत्यादिना मन्त्रेण[४] यजमानगामिनो वर्द्धनाप्यायनादिलक्षणफलस्य प्रतिपादनात् तेनाभ्याहितया समिधा यजमानरूपं 'ब्राह्मण मेव' 'समिन्धे' सन्दीपयति । गत मन्यत् ॥९॥

एव माहवनीये कर्त्तव्याः परिधिपरिधानादयो विहिताः; अथ वेद्यां हविरासादनार्थं प्रस्तरस्तरणं विधित्सुस्तदर्थं विधृत्योः सादनं विधत्ते— "अथेति । बर्हिषा 'स्तीर्णां वेदिम्' 'उप'लक्ष्य आहवनीयसमीपादुपावर्त्ततेत्यर्थः । उपावृत्य च बर्हिषः सकाशाद् 'द्वे तृणे आदाय' बर्हिष उपरि 'तिरश्ची' तिर्यगग्रे 'निदधाति' "सवितुः"-इतिमन्त्रेण[५] ॥

तदेतत् तृणनिधानं प्रशंसति— "अयं वा इति । 'प्रस्तरः' हि यज्ञस्य 'स्तुपः' केशसङ्घातः । बर्हींषि श्मश्रुप्रभृतीनि लोमानि । तथा

१— 'गतम्'-इति ठ । २— तै० ब्रा० ३. ३. ७ ।
३— 'विधास्यमान'-इति ठ । ४— तै० सं० २. ६. ९. १ ।
५— वा० सं० २. ५. ३ । का० श्रौ० सू० २. ८. ५ ।

च प्रस्तरबर्हिषोर्मध्ये तिर्यङ्निहिते 'एते' तृणे 'भुवावेव' भ्रूस्थानीये इत्यर्थः। लोकप्रसिद्ध्यैतद् द्रढयति— "तस्मादिति। यस्मादेवं यज्ञे केशश्मश्रुरूपेण संस्तुतयोः प्रस्तरबर्हिषोर्मध्ये संस्थिते तृणे तिर्यङ्नि-धीयेते, 'तस्मात्' कारणात् पुरुषशरीरस्य 'भुवौ' 'तिरश्च्यौ' दृश्येते इत्यर्थः ॥

तिर्यङ्निधानस्य प्रयोजन माह— "क्षत्रं वा इति। क्षत्रियवैश्य-जातिस्थानीये प्रस्तरबर्हिषी; अतस्तयोर्विविधं धारणाय तत्तिर्यक् तृणनिधानं सम्पद्यते; इतरथा हि प्रस्तरबर्हिषोः साङ्कर्यात् क्षत्रिय-वैश्ययोरपि साङ्कर्यं स्यात्। यस्मादेव मेते तृणे तिर्यङ्निहिते विधारणप्रयोजने, तस्माद् अनयोः 'विधृतौ' इति 'नाम' सम्पद्यत इति निर्ब्रूते— "तस्मादिति ॥ १० ॥

प्रस्तरस्य समन्त्रकं स्तरणं विधत्ते— "तदिति। 'तत्' तत्र विधृत्योरुपरीत्यर्थः। प्रस्तरस्तरणमन्त्रस्तु[1] बर्हिस्तरणमन्त्रवत्[2]। तत्र स्तीर्यमाणाया वेदेरभिधेयत्वात् 'साध्वीं देवेभ्यः'—इत्येवं स्त्रीलिङ्ग-तया व्याख्यातः; अत्र तु प्रस्तर एवाभिधेय इति 'साधुं देवेभ्यः'—इति पुंलिङ्गतया व्याख्यायत इत्येतावानेव विशेषः। अन्यत् पूर्ववद् योज्यम्[3] ॥ ११ ॥

स्तीर्णस्य[4] प्रस्तरस्योपरि स्पर्शनं विधत्ते— "त मभीति।

---

१— वा० सं० २. ५. ४। का० श्रौ० सू० २. ८. १०।

२— वा० सं० २. २. ३। पुरस्ताद् (२१७, २२५ पृ०) द्रष्टव्यम्।

३— २२५ पृ० ३–१०पं० द्रष्टव्यम्।

४— 'स्तीर्यस्य'–इति जादिषु, ढ च।

"आ त्वा"-इतिमन्त्रेण[1] प्रस्तरस्योपरि हस्तं निदध्यादित्यर्थः। मन्त्र-व्याख्यानं सुगमम् ॥

जुह्वादीनां सादनपर्यन्तं प्रस्तरस्याभ्यारम्भं विधत्ते— "अभिनिहित एवेति। सव्यहस्तेन प्रस्तरः 'अभिनिहितः' संस्पृष्टः 'एव' भवेत् ॥ १२ ॥

"अथेति। 'अथ' अनन्तर मेव 'दक्षिणेन' हस्तेन 'जुहूं' प्रतिगृह्णीयात्। जुहूसादनपर्यन्तं प्रस्तरविमोको न युक्त इत्यर्थः। तस्य प्रयोजन माह— "नेदिहेति। उक्ताभिप्राय मेतत् ॥ १३ ॥

अथ जुह्वाः सादनं विधत्ते— "अथ जुहू मिति। जुहू मादाय अनेन मन्त्रेण[2] प्रस्तरे सादयेन्न तु ग्रहणमात्रम्; मन्त्रस्य सादनलिङ्गत्वात्। अत एवोक्तं कात्यायनेन— "जुहूं प्रतिगृह्य निदधाति, घृताचीत्येव मितरे उत्तराभ्यां प्रतिमन्त्रम्"-इति[3]। "घृताची होति। घृत मञ्चति प्राप्नोतीति 'घृताची'। घृताचीत्येतत् प्रसिद्ध मिति हेत्यर्थः; 'नाम्ना' नामधेयेन, एषा स्रुक् 'जुहूर्हि' न केवलं होमसाधनत्वादित्यभिप्रायः। मन्त्रशेषो निगदसिद्ध इत्यभिप्रेत्यानुवदति— "सेद मिति।

अथोपभृतः सादनं विधत्ते— "घृताच्यस्युपभृन्नाम्ने[4]त्युपभृत मिति। वाक्यशेषः पूर्ववद्योज्यः ॥

---

१— वा० सं० २. ५. ५। का० श्रौ० सू० २. ८. ११।

२— वा० सं० २. ६. १। का० श्रौ० सू० २. ८. १२।

३— का० श्रौ० सू० २. ८. १३।

४— वा० सं० २. ६. २। का० श्रौ० सू० २. ८. १२।

ध्रुवायाः सादनं विधत्ते— "घृताच्यसि ध्रुवा नाम्नेति[1] ध्रुवा मिति। अन्यत् पूर्ववत् ॥

स्रुग्गताज्यव्यतिरिक्तस्य हविषः सादनं विधत्ते— "प्रियेणेति। 'यद्' आज्यात् 'अन्यद्धविः' पुरोडाशादिकम्, "प्रियेण" इतिमन्त्रेण[2] तत् सादयेदिति शेषः ॥ १४ ॥

जुह्वादीनां सादने विशेष माह— "स वा इति। प्रस्तरस्योपरि जुहू मेव सादयेत्। तस्याधस्ताद् बर्हिषि 'इतराः' उपभृदाद्याः 'स्रुचः' सादयेदित्यर्थः। अत एवोक्तं सूत्रकृता— "बर्हिष्युपभृतं ध्रुवां चेति[3]। तदेतदुपर्यधः सादन मुपपादयति— "क्षत्रं वा इति। स्वातन्त्र्येण होमसाधनत्वात् जुहूः क्षत्रियजातिः। उपभृदादीनां तु जुहूवद्धोमे स्वातन्त्र्याभावात्, प्रत्युत तत्स्थस्याज्यस्य जुह्वा मानेयत्वात् ता वैश्यजातिस्थानीयाः। निगदसिद्धः शेषः ॥ १५ ॥

समन्त्रक मासन्नानां हविषा मभिमर्शनं विधत्ते— "सोऽभिमृशतीति। मन्त्रप्रतीकस्यार्थः[4] प्रसिद्ध इति 'हि'-शब्देन व्याचष्टे— "ध्रुवा हीति। कर्म्मसमाप्तिपर्य्यन्तं नैश्चल्येन वेद्यां जुह्वाद्या उपसन्ना इत्यर्थः ॥

"ऋतस्य योनौ"-इत्यस्य विवक्षित मर्थ माह— "यज्ञो वा इति। 'ऋत'-शब्दः 'सत्य'-शब्दपर्यायः। सत्यफलकारणत्वात् ऋतस्य

---

१— वा० सं० २. ६. ३। का० श्रौ० सू० २. ८. १२।

२— वा० सं० २. ६. ४। का० श्रौ० सू० २. ८. १८।

३— का० श्रौ सू० २. ८. १३।

४— मन्त्रस्तु वा० सं० २. ६. ५। का० श्रौ० सू० २. ८. १९।

योनिः 'यज्ञः'। तादृगर्थपरत्वं युज्यत इत्याह—"यज्ञे होति। 'यज्ञे' खल्वेता जुह्वाद्याः 'असदन्' आसादिताः स्थापिताः; अतः "ऋतस्य योनौ"-इत्यनेन यज्ञप्रतिपादनं युक्त मित्यर्थः।

मन्त्रशेष मनूद्य व्याचष्टे— "ता विष्णो"-इति। फलभोक्तृतया स्वामित्वाद् 'यज्ञपति'-शब्देन यजमानो विवक्षित इत्याह—"तद्यजमान मिति। यज्ञं नयति निष्पादयतीति 'यज्ञनीः' अध्वर्युः; अतो यज्ञन्य मितिपदस्याध्वर्युपरतां व्याचष्टे— "तदध्यात्मान मिति। 'तत्' तेन 'यज्ञन्य मिति' अनेनाध्वर्युः स्वात्मानं यज्ञप्रकाशात् 'मान्तरेति' अन्तरितं वियुक्तं न करोति। सिद्धप्राय मन्यत् ॥ १६ ॥ १ [२.४.]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथभाष्ये तृतीयाध्याये
चतुर्थं ब्राह्मणम्[१] ॥

---

१— प्रथमं तावदिह परिधिपरिधानं विहितम्। तच्चैवम्— आर्द्रान् एकवत्तीयान् बाहुमात्रान् पालाशवैकङ्कतकार्ष्मर्यबैल्वखादिरौदुम्बरान्यतमान् त्रीन् काष्ठखण्डान् सङ्गृह्य तेषु यत् स्थूलतमं तदेव मध्यमं परिधिं परिकल्प्य आहवनीयस्य पश्चात् उदगग्रं प्रथमं परिदध्यात्। ततो ऽणिष्ठं द्वितीयं परिधिं दक्षिणतः प्रागग्रं परिदध्यात्। तत उत्तरतोऽपि प्रागग्र मेव अणिष्ठतर मवशिष्टं परिधिं परिदध्यात्। अथैकविंशतिकाष्ठकादिध्माद् गृहीतया समिधा तूष्णीं प्रथमपरिधिं स्पृष्ट्वोत्थाय तां समिध माहवनीयेऽभ्यादध्यात्। इध्मस्यैकविंशतिकाष्ठत्वं चाम्नातं तैत्तिरीयकैः— "एकविंशति मिध्मदारूणि भवन्ति"– इति तै० ब्रा० ३. ३. ७. २। ततस्तस्मादेवेध्मात् द्वितीयां

इन्धे ह वा ऽएतदध्वर्युः। इध्मेनाग्निं तस्मादिध्मो नाम समिन्धे सामिधेनीभिर्होता तस्मात् सामिधेन्यो नाम ॥ १ ॥

स ऽआह। अग्नये* समिध्यमानायानुब्रूहीत्यग्नये ह्येतत् समिध्यमानायान्वाह ॥ २ ॥

तदु हैक ऽआहुः। अग्नये† समिध्यमानाय होतरनुब्रूहीति तदु तथा न ब्रूयादहोता वा ऽएष पुरा भवति यदेवैनं प्रवृणीतेऽथ होता तस्माद् ब्रूया‡दग्नये समिध्यमानायानुब्रूहीत्येव§ ॥ ३ ॥

---

समिध मादाय परिधि मस्पृष्ट्वैव तत्रैवादध्यादिति समिदाधानम्। अथ उपविश्य आहवनीय मीक्षमाणो सस्वरं मन्त्रं जपेत्। ततः प्रादक्षिण्येन वेदिं प्रत्याहृत्यागत्य स्तीर्णाया एव वेदे रुपरि मध्ये अरत्निमात्रे उत्तराग्रे साग्रे द्वे तृणे समन्तपाठं निदध्यात्। तयोस्तृणयोरुपरि मूलभागे प्रागग्रं प्रस्तरं स्तृणीयात्; बर्हिर्मूलेभ्यः प्रस्तरमूलानि अभिहृततराणि कुर्यादित्यर्थः। तत उभाभ्यां हस्ताभ्यां प्रस्तर मभिनिदध्याच्चेति प्रस्तराभिनिधानम्। अभिनिधानं चेहाधःपीडनम्। अथाग्नीधा समर्पितां जुहूं दक्षिणेन पाणिना प्रतिगृह्य सव्यहस्तेनाविमुक्ते प्रस्तरे प्रागग्रां सादयेत्। ततः सव्येन वेदं गृहीत्वोपभृतं तथैव प्रतिगृह्य जुह्वा उत्तरत्र बर्हिष्येवासादयेत्। जुहूतोऽवक्रष्टां पश्चाद्वर्त्तमाना मसंस्पृष्टां ध्रुवा मुपभृत उत्तरतो विधृत्यग्रयोरुपर्य्यासादयेदिति स्रुगासादनम् ॥

* 'ऽआहाग्नये'—इति क, ग। † 'ऽआहुरग्नये'—इति क, ग।

‡ 'ब्रूया'—इति ग। § 'ब्रूहीत्येव'—इति घ।

आग्नेयीरन्वाह। स्वयैवैन मेतद्देवतया समिन्धे गायत्रीरन्वाह गायत्रं वा ऽअग्नेश्छन्दः स्वेनैवैन मेतच्छन्दसा समिन्धे वीर्यं गायत्री ब्रह्म गायत्री वीर्येणैवैन मेतत्समिन्धे ॥ ४ ॥

एकादशान्वाह। एका*दशाक्षरा वै त्रिष्टुब् ब्रह्म गायत्री क्षत्रं त्रिष्टुबेताभ्या मेवैन मेतदुभाभ्यां वीर्याभ्याᳲ समिन्धे तस्मादेकादशान्वाह ॥ ५ ॥

स वै त्रिः प्रथमा मन्वाह। त्रिरुत्तमां त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनास्तस्मात् त्रिः प्रथमा मन्वाह त्रिरुत्तमाम् ॥ ६ ॥

ताः पञ्चदश सामिधेन्यः सम्पद्यन्ते। पञ्चदशो वै वज्रो वीर्यं वज्रो वीर्य मेवैतत्सामिधेनीरभि सम्पादयति तस्मादेतास्वनूच्यमानासु यं द्विष्यात्त मङ्गुष्ठाभ्या मवबाधेतेद महममु मवबाध ऽइति तदेन मेतेन वज्रेणावबाधते ॥ ७ ॥

पञ्चदश वा ऽअर्द्धमासस्य रात्रयः। अर्द्ध॑मासशो वै संवत्सरो भवन्नेति तद्रात्रीराप्नोति ॥ ८ ॥

पञ्चदशाना मु वै गायत्रीणाम्। त्रीणि च शतानि

---

* 'न्वाहैका'–इति क, ग। ' 'रात्र्योऽर्द्ध'–इति क, ग।

षष्टिश्चाक्षराणि त्रीणि च वै शतानि षष्टिश्च संवत्सर स्याहानि तदहान्याप्नोति तद्देव संवत्सर माप्नोति॥ ६ ॥

सप्तदश सामिधेनीः*। इष्ट्या† ऽअनुब्रूयादुपाᳪशु तस्यै देवतायै यजति यस्या ऽइष्टिं निर्व्वपति द्वादश वै मासाः संवत्सरस्य पञ्चर्त्तव ऽएष ऽएव प्रजापतिः सप्तदशः सर्व्वं व्वै प्रजापतिस्तत्सर्व्वेणैव तं काम मनपराधᳪ राध्नोति यस्मै कामायेष्टिं निर्व्वपत्युपाᳪशु देवतां यजत्यनिरुक्तं वा ऽउपाᳪशु सर्व्वं व्वा ऽअनिरुक्तं तत्सर्व्वेणैव तं काम मनपराधᳪ राध्नोति यस्मै कामायेष्टिं निर्व्वपत्येष इष्टेरुपचारः‡॥ १० ॥

एकविᳪशतिᳪ सामिधेनीः। अपि§ दर्शपूर्णमासयोरनुब्रूयादित्याहुर्द्वादश वै मासाः संवत्सरस्य पञ्चर्त्तवस्त्रयो लोकास्तद्विᳪशतिरेष ऽएवैकविᳪशो य ऽएष तपति सैषा गतिरेषा प्रतिष्ठा तदेतां गति मेतां प्रतिष्ठां गच्छति तस्मादेकविᳪशति मनुब्रूयात् ॥ ११ ॥

ता हैता गतश्रेरेवानुब्रूयाद्। य इच्छेन्न श्रेयान्स्यान्न पापीयानिति याद्दशाय हैव स ते‖ऽन्वाहुस्ता-

---

* 'नीः'—इति ख। † 'नी। हिष्ट्या'—इति क, ग।

‡ 'रः'—इति च। § 'नी। हपि'—इति क, ग।

‖ 'हैव सते'—इति, 'हैव सते'—इति, 'हैव स ते'—इति च पाठाः च।

हुड्वा हैव भवति पापीयान्वा यस्यैवं विदुष एता अन्वाहुः सो ऽएषा मीमाꣳसैव न त्वेवैता अनूच्यन्ते ॥ १२ ॥

त्रिरेव प्रथमां त्रिरुत्तमा मनवानन्ननुब्रूयात् । त्रयो वा ऽइमे लोकास्तदिमानेवैतल्लोकान्सन्तनोतीमांल्लोकान्स्पृणुते त्रय ऽइमे पुरुषे प्राणा ऽएत मेवास्मिन्नेतत्सन्तत मव्यवच्छिन्नं दधात्येतदनुवचनम्* ॥ १३ ॥

स यावदस्य वशः स्यात् । एव मेवानुविवक्षेत्तस्यैतस्य परिचक्षीत साम्यवान्यादनवानन्ननुविवक्षंस्तत्कर्म विष्टह्येत सा परिचक्षा ॥ १४ ॥

स यद्येतन्नोदाशꣳसेत । अप्यु†कैका मेवानवानन्ननुब्रूयात्तदेकैकयैवेमांल्लोकान्सन्तनोत्येकैकयेमांल्लोकान्स्पृणुतेऽथ यत् प्राणं दधाति गायत्री वै प्राणः स यत् कृत्स्नां गायत्री मन्वाह तत् कृत्स्नं प्राणं दधाति तस्मादेकैका मेवानवानन्ननुब्रूयात् ॥ १५ ॥

ता वै सन्तता अव्यवच्छिन्ना ऽअन्वाह । संवत्सरस्यैवैतदहोरात्राणि सन्तनोति तानीमानि संवत्सरस्याहोरात्राणि सन्ततान्यव्यवच्छिन्नानि परिप्लवन्ते द्विषत ऽउ चैवैतद् भ्रातृव्याय नोपस्थानं करोत्युपस्थानꣳ

* 'वचनꣳ'—इति ग, च । † 'से । ताप्ये'—इति क, ग ।

ह कुर्याद्यदसन्तता अनुब्रूयात् तस्माद्वै सन्तता अव्यवच्छिन्ना अन्वाह ॥ १६ ॥ २ ॥

॥ इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् [३. ५.] ॥

अथेध्माधानाग्नि[1]समिन्धनहेतुभूताः सामिधेनीर्विधास्यन् तासां नाम निर्वक्ति— "इन्धे ह वा इति। पञ्चदशसमिदात्मकेनानेन 'इध्मेन' अध्वर्युः 'अग्निम्' 'इन्धे ह वै' सन्दीपयति खलु। 'एतत्' -इति क्रियाविशेषणम्। 'तस्मात्' इन्धनसाधनत्वात्, तस्य 'इध्मः'— इति 'नाम' सम्पन्नम्। 'होता' च 'सामिधेनीभिः' "प्र वो वाजा"— इत्यादिभिर्ऋग्भिः[2] अग्निं 'समिन्धे'; अतः समिन्धनसाधनत्वात् तासा मपि 'सामिन्धेन्यः'-इति 'नाम' निष्पन्नम्। एवं नामनिर्वचनव्याजेनेध्मेन सामिधेनीभिश्च अग्निसमिन्धनं कार्य मिति प्रतिपादितं भवति ॥ १ ॥

अथ सामिधेनीर्वाचयितुरध्वर्योः सम्प्रेषमन्त्रोच्चारणं विधत्ते— "स आहेति। इध्मेन सन्दीप्यमानाय 'अग्नये' तत्समिन्धनार्था या ऋचो वक्तव्याः, ताः सामिधेनीः 'अनुब्रूहि' इति[3] सम्प्रेषार्थः[4]। त मिम मर्थं श्रुतिः स्वयं दर्शयति— "अग्नये ह्येतदिति ॥ २ ॥

---

१— "अथेध्मेनाग्नि"—इति ढ।

२— ३ ब्रा० ७–६। तै० ब्रा० ३. ५. २. १–१२ (तै० सं० २. ५. ७. २.)।

३— तै० सं० ६. ३. ५. ६। पुनस्तत्रैव ७. १। एवम् ऐ० ब्रा० १. ३. ५।

४— प्रैषपरिचयस्तु ऐ० ब्रा० ३. १. ६ द्रष्टव्यः।

एकीयं मत मुपन्यस्य निरस्यति— "तदु हैक इति। एकेषां मते "होतः! अनुब्रूहि"—'इति' कर्त्तुरुपादानं विशेषः ॥

ननु युक्त मेवैतत् किं मिति "न ब्रुयादिति" निषिध्यते? तत्राह— "अहोतेति। प्रवरणात्[१] पूर्वं सामिधेनीरनुब्रुवाणस्य होतृत्वं नास्ति; यदा खल्वेनं प्रवृणीते— "अग्निर्देवो दैव्यो होता"-इति[२], 'अथ' अनन्तर मेव असौ 'होता' भवति; अतः सामिधेन्यनुवचन-समये होतृत्वाभावात् "होतरनुब्रूहि"—'इति' अपार्थकम् ॥ २ ॥

देवताविशेषविशिष्टानां सामिधेनीना मनुवचनं विधत्ते— "आग्नेयीरिति। अग्निदेवत्या ऋचः[३] सामिधेनीरनुब्रूयादित्यर्थः। तदेतदग्निदेवत्यत्वं प्रशंसति— "स्वयैवैन मिति। विहित मनुवचन मनूद्य छन्दोविशेषं विधाय प्रशंसति— "गायत्रीरिति। अग्नेर्गाय-त्र्याश्च प्रजापतिमुखादुत्पन्नत्वादग्निसम्बन्धिच्छन्दो 'गायत्रम्'। प्रजा-पतिमुखात् सहोत्पत्तिश्च तैत्तिरीयकैराम्नाता— "त मग्निर्देवताऽन्व-सृज्यत गायत्रच्छन्दः"-इति[४]। प्रकारान्तरेण प्रशंसति— "वीर्यं गायत्रीति। त्रिष्टुब्जगतीभ्यां कर्त्तु मशक्यस्य सोमाहरणलक्षणस्य वीर्यस्य करणाद्[५] 'गायत्री' वीर्यात्मिका। तथा सा 'गायत्री'

---

१— 'प्रवरात्'—इति जादिषु, ढ च।

२— सोऽयं मन्त्र इहैवोपरिष्टात् (४ प्र० २ ब्रा० ५ क०) द्रष्टव्यः।

३— "सास्य देवता (४. २. २४.)"—इत्यधिकारे "अग्नेर्ढक् (४. २. ३३.)"—इति ढकि रूप माग्नेयीत्युच्यते अग्निदेवत्या इति।

४— तै० सं० ७. १. १. ४। ५— ऐ० ब्रा० ३. १. १ द्रष्टव्यम्।

ब्रह्मरूपा। ब्रह्मशब्देन ब्राह्मणजातिर्विवक्षिता। तस्याश्च गायत्री-च्छन्दसश्च प्रजापतिमुखादुत्पत्तिसाधारण्यात्तादात्म्यम्[1] ॥ ४ ॥

सामिधेनीनां सङ्ख्याविशेषं विधाय प्रशंसति—"एकादशेति। "उभाभ्यां वीर्याभ्या मिति। छन्दोद्वारा ये निर्द्दिष्टे ब्रह्मक्षत्रे, तयोर्यद् ब्राह्मं क्षात्रं चोभे वीर्ये, ताभ्या मित्यर्थः ॥ ५ ॥

प्रथमोत्तमयोस्त्रिरुच्चारणं विधत्ते—"स वै त्रिरिति। विहितं त्रिरुच्चारणं स्तौति—"त्रिवृत्प्रायणा हि"-इत्यादि। "त्रिषत्या[2] हि देवाः"—इति[3] श्रुतेः, तदीया यज्ञाः प्रारम्भपरिसमाप्त्योस्त्रिरा-वृत्तियुक्ताः। अत एव ज्योतिष्टोमस्याज्यप्रउगादिशस्त्रेषु प्रथमोत्त-मयोः त्रिरावृत्तिर्दृश्यते। प्रारम्भपरिसमाप्त्योस्त्रिरावर्त्तनस्य[4] यज्ञ-लिङ्गत्वात् अत्रापि प्रथमोत्तमयोस्त्रिरावृत्तिः कार्येत्यभिप्रायः ॥ ६ ॥

"ताः पञ्चदशेति। "पञ्चदशो वै वज्र इति। पञ्चदशस्तोमस्ये-न्द्रस्य च सह प्रजापतिबाहुसकाशादुत्पत्तेरिन्द्रसम्बन्धात्[5] वज्रोऽपि पञ्चदशस्तोमात्मकः। "सामिधेनीरभीति। "अभिरभागे"-इति[6] लक्षणे अभेः कर्मप्रवचनीयत्वात् "कर्मप्रवचनीययुक्ते"-इति[7] द्वितीया। शिष्टं सुगमम् ॥

अङ्गुष्ठाभ्या मवबाधेतेति। द्वेष्यं मनसा स्मृत्वा "इद मह मिति[8]

---

१— ऐ० ब्रा० ५. ५. ७। २— 'त्रिवृता'—इति आदिषु, ढ च।

३— तै० सं० ६. ३. १०. ३। तै० ब्रा० ३. २. ३. ८।

४— 'अत एव'—इत्यादिः 'वर्त्तनस्य'—इत्यन्तो ग्रन्थः आदिषु, ढ च नास्ति।

५— ऐ० ब्रा० ५. ५. ७। ६—पा० सू० १. ४. ९१।

७— पा० सू० २. ३. ८। ८— तै० सं० १. ६. ६. ३।

मन्त्रेण पादाङ्गुष्ठाभ्यां भूमौ पीडयेदित्यर्थः। 'असुम्'-इत्यदःशब्दस्य स्थाने द्वितीयया तन्नाम निर्द्देष्टव्यम् ॥ ७ ॥

पञ्चदशसङ्ख्यां प्रकारान्तरेण प्रशंसति—"पञ्चदश वा इति। "अर्द्धमासशो वा इत्यादि। एकैकेनैवार्द्धमासेन हि 'संवत्सरः' 'भवन्' वर्द्धमानः 'एति' आगच्छति। एव मर्द्धमासराशिद्वारा संवत्सरसम्बन्धिन्यो या रात्रयः, ताः सर्वा आप्नोतीत्यर्थः ॥ ८ ॥

सामिधेनीना मक्षरसङ्ख्योपजीवनेन संवत्सरसम्बन्धिना मह्नां प्राप्तिं दर्शयति—"पञ्चदशाना मिति। एवं सामिधेनीभिः संवत्सरसम्बन्धिना महोरात्राणां प्राप्तत्वात् तत्समुदायात्मकः कृत्स्न एव संवत्सरः प्राप्तो भवतीत्याह—"तद्वेति ॥ ९ ॥

साप्तदश्यं विधत्ते—"सप्तदश सामिधेनीरिष्ट्या अनुब्रूयादिति। उपरिष्टाद्[१] "दर्शपूर्णमासयोः"-इति विशेषणात्, वाक्यशेषे च "तं काम मनपराधं राध्नोति"-इति कामप्राप्तिश्रवणात्[२] तद्विकृतिभूता काम्येष्टिरत्र 'इष्टि'-शब्देन विवक्षिता। अत एव आपस्तम्बो दर्श-पूर्णमासव्यतिरिक्तेष्टिपशुबन्धानां सामिधेनी-साप्तदश्यं सूत्रयामास—"पञ्चदश सामिधेन्यो दर्शपूर्णमासयोः, सप्तदशेष्टिपशुबन्धानाम्"-इति[३]॥ अथ तासां काम्येष्टीनां प्रधानयागस्योपांशुत्वं विधत्ते—"उपांश्विति ॥ सामिधेनी-साप्तदश्यस्य कामप्राप्तिसाधनता मुप-

---

१ — इहैवैकादशकण्डिकायाम्। २— २४६पृ० ६पं० द्रष्टव्यम्।

३— य० प० सू० ११३, ११४। श्रौ० सू० २. १९. २; ५. २२. २; ६. २९. ६; ८. २. १३ सूत्राणि चैवमर्थकानि। "सामिधेनी-विवृद्धौ काष्ठानि विवर्द्धन्ते, प्रतिक्रमसमानासु प्रकृतिवत्"-इति च तत्रैव।

पादयति— "द्वादश वा इत्यादिना। हेमन्तशिशिरयोरेकीकरणेन[1] 'संवत्सरस्य पञ्चर्त्तवः'। एवं मासर्त्वात्मको यः संवत्सरः 'एष एव प्रजापतिः'; कथ मनयोरैक्य मित्यत आह— "सप्तदश इति। यतो मासर्त्तुरूपेण सप्तदशावयवसमुदायात्मकः संवत्सरः, प्रजापतिश्च "आश्रावय"-इत्यादि[2]-सप्तदशाक्षरसमुदायात्मकः; अतस्तयोः सप्तदशावयवोपेतत्वसाम्यात्तादात्म्यम्। अस्त्वेवं किं तत इत्याह— "सर्वं वा इति। 'अनपराधम्' अविकलम्।

एवं साप्तदश्यं प्रशस्य विहितं यागस्योपांशुत्व मप्यनूद्य प्रशंसन्ति— "उपांश्विति। उपांशूच्चारणस्य पार्श्वस्थाना मर्थविशेषाप्रत्यायकत्वाद् अनिरुक्तत्वम्। अनिरुक्तञ्च विशेषनिरुक्तिविरहात् सर्वात्मकम्। तेन च सर्वात्मकेनानिरुक्तेनोपांशुत्वेन कार्त्स्न्येन कामप्राप्तिर्भवतीत्यर्थः॥

प्रतिपादितस्यार्थस्य सर्वेष्टिसाधारण्य मभिप्रेत्याह— "एष इति। यत् सामिधेनी-साप्तदश्य मुपांशुयजनञ्च 'एषः' सर्वस्याः 'इष्टेः' धर्म इत्यर्थः॥ १०॥

दर्शपूर्णमासयोरेव पक्षान्तरं विधाय प्रशंसति— "एकविंशति मिति।

"सैषा गतिरित्यादि। मासाद्यपेक्षया 'यः' 'एकविंशः' सूर्यः, 'एषः' एव 'सा' प्रसिद्धा 'गतिः'; यागदानादिभिर्धर्मैर्यद्गन्तव्यतया

---

१— "हेमन्तशिशिरयोः समासेन"—इति च ऐ० ब्रा० १. १. १।

२— "आश्रावयेति चतुरक्षरम्, अस्तुश्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामहे इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः; एष वै सप्तदशः प्रजापतिः"—इति तै० सं० १. ५. ११।

प्रतिपाद्यते, तदात्मक इत्यर्थः। तथा 'एषा' एव 'प्रतिष्ठा'; सर्वस्यापि लोकस्याश्रयभूत इत्यर्थः। तथा च सामिधेनीना मेकविंशतिसङ्ख्यया गतिप्रतिष्ठारूपं सूर्य मेव प्राप्नोतीत्यर्थः[१] ॥ ११ ॥

इमं पक्ष मधिकारिविशेषे नियच्छति—"ता हैता इति। गता प्राप्ता यस्य श्रीः, तस्यैव यजमानस्य एकविंशतिसामिधेनीः 'अनुब्रूयात्', नान्यस्येत्यर्थः ॥

गतश्रीव्यतिरिक्तस्यापीमं पक्षं कर्त्तव्यत्वेनाशङ्क्य निरस्यति—"य इच्छेदिति। 'यः' यजमानः श्रैष्ठ्यं नैकृष्ट्यञ्च न कामयेत, 'सः' यजमानः 'तादृङ् वा भवति'; 'यादृशाय' यथोपलब्धप्रकारेण नियतेन[२] 'ते' होतारः सामिधेनीः 'अन्वाहुः', तत्प्रकारविशिष्ट एव भवतीत्यर्थः। तादृक्-शब्देन सामान्येन प्रतिपादितं विशिनष्टि—"पापीयान्वेति। 'यस्य' खलु 'एवम्' अनियत मनुवचनप्रकारं 'विदुषः' यजमानस्य 'एताः' एकविंशतिसामिधेनीः 'अन्वाहुः', 'सः' 'पापीयान् वा' श्रेयान् वा भवतीत्यर्थः। "य इच्छेन्न श्रेयानित्यादिना योऽर्थः प्रतिपादितः, सा 'एषा' 'मीमांसैव' विचार एव केवलं, न तु तथानुवचनं कार्य मित्यर्थः ॥ १२ ॥

कथं तर्ह्यनुवक्तव्य मित्यत आह—"त्रिरेव प्रथमा मिति। 'एव'-शब्दो भिन्नक्रमः। प्रथमोत्तमयोः 'त्रिः' अनुवचनं कुर्वन् 'अनवान मेव' अनुच्छ्वसन्नेव 'अनुब्रूयात्'।

---

१— 'मासापेक्षया य एकविंशः सूर्यः, त मेव गतिप्रतिष्ठारूपं सामिधेनीनां मेकविंशतिसङ्ख्यया प्राप्नोति'—इति ढ।

२— 'नियमेन'—इति ठ, ड।

तत्तिसृणा मृचां सन्तानं लोकत्रयसन्तत्यै भवतीति स्तौति— "त्रयो वा इति। 'सन्तनोति' सन्दधाति। ततश्च 'इमान् लोकान्' परस्परसंयुक्तान् 'स्पृणुते' प्रीणयति, बलयति वा। "स्पृ प्रीतिबलयोः"-इति[1] धातुः। तिसृणां सन्ततानुवचनं प्रकारान्तरेण स्तौति— "त्रय इमे"-इति। प्राणापानव्यानात्मकाः 'त्रयः' प्राणभेदाः, प्राणापानव्यानलक्षणवृत्तित्रयविशिष्टं प्राण मेव अनवान मनुब्रुवन् 'सन्ततं' परस्परसम्बद्धम्, 'अव्यवच्छिन्नं' विच्छेदरहितं 'दधाति'। एव मेवानुवचनं कर्त्तव्य मित्यभिप्रेत्य निगमयति— "एतदिति ॥ १ ३ ॥

तिस्र ऋचः सन्तत मनुवक्तुं यो न शक्नोति, तेन कथ मनुवक्तव्य मिति, तदाह— "स यावदिति। 'अस्य' होतुः 'यावत्' अनुवक्तुं 'स वशः[2] स्यात्', सा अनुवचनशक्तिः यावती, तावदित्यर्थः। 'एव मेव' 'अनुविवचेत्' अनुवक्तु मिच्छेत्। शक्त्यनुरूप मेवानुच्छ्वसनम्; शक्त्यभावे हि ऋङ्मध्येऽवसाने चोच्छ्वासे नास्ति दोष इत्यभिप्रायः ॥

तदेतत्पक्षं निरस्यति— "तस्येति। 'तस्यैतस्य' पक्षस्य 'परिचक्षा' निन्दा विद्यते। ता मेव दर्शयति— "उत साम्यवान्यादिति। 'अनवानम्' अनुच्छ्वसन्, 'अनुविवचन्' अनुवक्तु मिच्छन्, होता 'उत' अपि 'सामि' ऋङ्मध्ये 'अवान्यात्' उच्छ्वासङ्कुर्यात्; तदा 'तत्कर्म' 'विवृह्येत' विश्लिष्येत, शिथिलं भवतीत्यर्थः। "सा परिचक्षेति। यथाशक्त्यनुवचनपक्षे एषैव निन्देत्यर्थः ॥ १ ४ ॥

---

१— "स्पृ प्रीतिपालनयोः"-इति स्वा० प० १३। २— 'स्ववशः'-इति ड।

तिस्र ऋचः सन्तत मनुवक्तु मशक्तस्य कस्तत्रोपाय इति तं दर्शयति— "स यदीति । 'एतद्' अनन्तरोक्तं यथाशक्त्यनुवचनं भिन्दायुक्तत्वात् 'सः' होता 'न' कामयेत, तदा 'एकैकाम्' ऋच मनुच्छ्रसन्ननुब्रूयात् ।

अस्मिन्नपि पक्षे पूर्वोक्तलोकत्रय-प्राणत्रय-सन्तान मुपपादयति— "तदेकैकयेति । त्रिपदा ह्येताः सामिधेन्यः ; अत एकैकस्या मृचि पादत्रयस्य सन्ततत्वात् 'एकैकयैव' ऋचा त्रीन् 'लोकान्' सन्तनोति । "गायत्री वै प्राण इति । गायत्र्यास्त्रिपात्त्वात्, प्राणस्य च प्राणापानव्यानलक्षणवृत्तित्रयात्मकत्वात्, त्रित्वसङ्ख्यायोगसाम्यात् तादात्म्यम् । तथा च कृत्स्नगायत्र्याः सन्ततानुवचनात्[1] कृत्स्नप्राणसन्तान मपि विद्यातीत्यर्थः ॥ १५ ॥

एव मनुवचनस्यानवानलक्षणं धर्मविशेषं[2] विधाय सान्तत्यादिकं विधत्ते— "ता वै सन्तता इति । 'ताः' एताः सामिधेनीः 'सन्तताः' परस्परसम्बद्धाः ; अत एव 'अव्यच्छिन्नाः' विच्छेदरहिताः 'अन्वाह' ।

"संवत्सरस्येत्यादि । सामिधेनीनां संवत्सरसम्बन्ध्यहोरात्ररूपता प्राक् प्रतिपादिता ; अतस्तत्सान्तत्येन 'अहोरात्राणि' अप्येवं 'सन्तानि' परस्परसम्बद्धानि कृतवान् भवतीत्यर्थः । तदेतद् दृष्टानुसारेण द्रढयति— "तानीमानीति । यस्मादेवं सामिधेनीसान्तत्येन संवत्सरसम्बधीनि 'अहोरात्राणि सन्ततानि', तस्मादिदानी मपि 'तानि सन्ततानि अव्यवच्छिन्नानि' पर्यावर्त्तन्त इत्यर्थः ।

---

१— 'सन्ततानुवचनेन'–इति ङ । २— 'धर्मं'–इति ङ ।

मन्त्रतानुवचनस्य प्रयोजनान्तर माह— "द्विषत इति। 'द्विषते' द्वेषणं कुर्वते शत्रवे 'उपस्थानं न करोति'; मन्त्रतानुवचनेन छिद्ररहितत्वात्। छिद्रान्वेषणशीलाय राक्षसादये प्रवेशोपायभूतं द्वारं न प्रयच्छतीत्यर्थः॥

विपक्षे बाध माह— "उपस्थानं हेति। उपतिष्ठते प्राप्नोति अनेनेति 'उपस्थानं' प्राप्तिसाधनद्वारम्॥ १६॥ २ [३.५.]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे तृतीयाध्याये पञ्चमं ब्राह्मणम्[1]॥

---

१— इह हि ब्राह्मणे सामिधेनीसङ्ख्यादिकमात्रं विहितम्। वस्तुतः संहिताब्राह्मणयोः सामिधेन्य ऋच एकादशैवाम्नाताः। तासु प्रथमाया अन्तिमायाश्च त्रिस्त्रिः पाठेन पञ्चदशसङ्ख्या पूरणीया भवति (ऐ० ब्रा० १. ५. २.)। सप्तदशसङ्ख्यायाः पूरणीयत्वे तु पृथुपाजेत्याद्यपरर्ग्द्वयस्य तासु प्रक्षेपोऽपि विधीयते (ऐ० ब्रा० १. १. १. टीप्प०) एकविंशसङ्ख्यायाः पूरणीयत्वे षसा मप्यृचां प्रक्षेपणीयता विहिता (ऐ०ब्रा० ४. ५. ५.)। ताः प्रक्षेपणीयर्च्च एव धाय्या उच्यन्ते (ऐ० ब्रा० ३.२.७.)। तत्र धाय्ययोर्धाय्यानां वा प्रक्षेपः खलु समिद्ध्यमान-समिद्धवत्योर्मध्ये एव भवति। ते च ऋचौ दशम्येकादश्यौ। मी० द० ३अ० ६पा० ६,१० सूत्रयोः, द्वितीयतृतीयाधिकरणयोस्तत्रैवाधिकरणमालायाश्चैतद्विचारः सम्यगुक्तो द्रष्टव्यः। सामिधेनीप्रयोगारम्भस्त्वेवम्— "अध्वर्युर्होतुरासनं दर्भास्तृतं गार्हपत्याहवनीययोरन्तरालेऽंशस्य मध्यभागे वेदेः पश्चात् स्थापयित्वा 'एहि होतः'–इति होतुरामन्त्रणं करोति। ततो होतरि आचम्यागते सति अध्वर्युरिध्मादेकां समिध मादाय होतारं प्रति 'अग्नये समिध्यमानायानुब्रूहि'–इति ब्रवीति। होता च 'ब्रह्मन् सामिधेनीरनुवक्ष्यामि'–इति ब्रह्माणं पृच्छति। ब्रह्मा च 'प्रजापतयेऽनुब्रूहि, धेहि'–इत्यन्त मुपांशु पठित्वा

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन्[1] पञ्चसीरीं[2]स्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो[3] राजतं राजपूज्यः।
आज्योत्थं प्राज्यजन्मा[4] लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पाचसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहा-
राजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये
वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथम-
काण्डे तृतीयाध्यायः समाप्तः ॥ ३ ॥

---

'ओ३ मनुब्रूहि'–इति होतारं प्रसौति। ततो होता 'कं प्रपद्ये'–इत्यादि जपति। अस्यान्ते यजमानः स्फ्यं गृहीत्वा 'सन्तन्वन्निव मेऽनुब्रूहि'–इति होतारं प्रेष्यति"–इति पद्धतिः। अस्मिन् कर्मणि आदित आरभ्य स्विष्टकृतः प्राक् सर्वं मन्त्रजातं प्रथमस्थानेन प्रयोज्यम्; स्विष्टकृत आरभ्येडामार्जनान्तं मध्यमस्वरेण, ततः शेषं समाप्तिपर्यन्त मुत्तमेन स्वरेणेति तन्त्रटीकायाम्।

१— 'पञ्चाब्धीन्'–इति ठ। २— 'सप्तसीरीं'–इति ठ।
३— 'मजडं'–इति ठ। ४— 'प्राज्यबुद्धिर्'–इति ठ।
५— युग्मकश्चैतत् ज-झ-ठ-पुस्तकेषु; १८१ पृष्ठेऽपि मुद्रितं द्रष्टव्यम्।

[ अथ चतुर्थाध्याये प्रथमं ब्राह्मणम् ]



हिङ्कृत्यान्वाह । नासामा यज्ञोऽस्तीति वा ऽआहुर्न्न वा ऽअहिङ्कृत्य साम गीयते स यद्धिङ्करोति तद्धिङ्कारस्य रूपं क्रियते प्रणवेनैव साम्नो रूप मुपगच्छत्योऽम् ओ३* मित्येतेनो हास्यैष सर्व एव ससामा यज्ञो भवति ॥ १ ॥

यद्देव हिङ्करोति । प्राणो वै हिङ्कारः प्राणो हि वै हिङ्कारस्तस्मादपिगृह्य नासिके न हिङ्कर्तुं शक्नोति व्वाचा वा ऽऋच मन्वाह व्वाक् च वै प्राणश्च मिथुनं तदेतत्पुरस्तान्मिथुनं प्रजननं क्रियते सामिधेनीनां तस्माद्वै हिङ्कृत्यान्वाह ॥ २ ॥

स वा ऽउपांशु हिङ्करोति । अथ यदुच्चैर्हिङ्कुर्यादन्यतरदेव कुर्याद्वाच मेव तस्मादुपांशु हिङ्करोति ॥ ३ ॥

स वा ऽएति च प्रेति चान्वाह । गायत्री मेवैतदर्वाचीञ्च पराचीञ्च युनक्ति पराच्यह देवेभ्यो यज्ञं व्वहत्यर्वाची मनुष्यानवति तस्माद्वा ऽएति च प्रेति चान्वाह ॥ ४ ॥

---

* 'त्यो३ श्रो३'–इति क, 'त्यों३ श्रो३'–इति ख, ग, ङ ।

युद्वेवेति च प्रेति चान्वाह। प्रेति वै प्राण एत्युदानः प्राणोदानावेवैतद्दधाति तस्माद्वा ऽएति च प्रेति चान्वाह ॥ ५ ॥

युद्वेवेति च प्रेति चान्वाह। प्रेति वै रेतः सिच्यत ऽएति प्रजायते प्रेति पशवो व्वितिष्ठन्त ऽएति समावर्त्तन्ते सर्वं वा ऽइद मेति च प्रेति च तस्माद्वा ऽएति च प्रेति चान्वाह ॥ ६ ॥

सोऽन्वाह। प्र वो व्वाजा अभिद्यव इति तन्नु प्रेति भवत्यग्न ऽआ याहि व्वीतय ऽइति तद्वेति भवति ॥ ७ ॥

तदु हैक ऽआहुः। उभयं* वा ऽएतत्प्रेति सम्पद्यत ऽइति तदु तदातिविज्ञान्य मिव प्र वो व्वाजा अभिद्यव ऽइति तन्नु प्रेत्यग्न ऽआ याहि व्वीतय ऽइति तद्वेति॥ ८॥

सोऽन्वाह। प्र वो व्वाजा अभिद्यव ऽइति तन्नु प्रेति भवति व्वाजा इत्यन्नं वै व्वाजा अन्न मेवैतदभ्यनूक्त मभिद्यव ऽइत्यर्द्धमासा वा ऽअभिद्यवोऽर्द्धमासानेवैतदभ्यनूक्तᳩं हविष्मन्त ऽइति पशवो वै हविष्मन्तः पशूनेवैतदभ्यनूक्तम् ॥ ९ ॥

घृताच्येति। व्विदेघो* ह माथवो† ऽग्निं वैश्वानरं मुखे बभार तस्य गोतमो राहूगण ऋषिः पुरोहित

* 'ऊ। रुभयं'—इति क, ग।  † 'माधवो'—इति छ, सायणसम्मतश्च।

आस तस्मै ह स्मामन्त्र्यमाणो न प्रतिशृणोति नेन्मेऽग्नि-र्वैश्वानरो मुखान्निष्पद्याता इति ॥ १० ॥

त मृग्भिर्ह्वयितुं दध्रे। वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमहि अग्ने बृहन्त मध्वरे विदेघेति ॥ ११ ॥

स न प्रतिशुश्राव। उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते तव ज्योतीꣳष्यर्चयो विदेघा३ इति ॥ १२ ॥

स ह नैव प्रतिशुश्राव। तन्त्वा घृतस्नवीमह इत्ये-वाभिव्याहरदथास्य घृतकीर्त्तावेवाग्निर्वैश्वानरो मुखा-दुज्जज्वाल तं न शशाक धारयितुꣳ सोऽस्य मुखान्निष्पेदे* स इमां पृथिवीं प्रापादः ॥ १३ ॥

तर्हि विदेघो माथव आस। सरस्वत्याꣳ स तत एव प्राङ् दहन्नभीयायेमां पृथिवीं तं गोतमश्च राहूगणो विदेघश्च माथवः पश्चाद्दहन्त मन्वीयतुः स इमाः सर्वा नदीरतिददाह सदानीरेत्युत्तराद् गिरेर्निर्द्धावति ताꣳ-हैव नातिददाह ताꣳ ह स्म तां† पुरा ब्राह्मणा न तरन्त्युनतिदग्धाग्निना वैश्वानरेणेति ॥ १४ ॥

तत एतर्हि। प्राचीनं बहवो ब्राह्मणास्तद्धा क्षेत्रतर मिवास स्रावितर मिवास्वदित मग्निना वैश्वानरे-णेति ॥ १५ ॥

---

* 'निष्पेदे'–इति क, च–M। † 'स्नैतां'–इति च-शुद्धौ।

तदु हैतर्हि। क्षेत्रतर मिव ब्राह्मणा उ हि नून मेनद्यज्ञैरसिष्वदन्त्सापि जघन्ये नैदाघे समिवैव कोपयति तावच्छीतानतिदग्धा ह्यग्निना वैश्वानरेण॥ १६ ॥

स होवाच। विदेघो माथवः* क्वाहं भवानीत्यत एव ते प्राचीनं भुवन मिति होवाच सैषाप्येतर्हि कोसलविदेहानां मर्यादा ते हि माथवाः† ॥ १७ ॥

अथ होवाच। गोतमो राहूगणः कथन्नु म ऽआमन्त्यमाणो न प्रत्यश्रौषीरिति स होवाचाग्निर्मे वैश्वानरो मुखे ऽभूत्स नेन्मे मुखान्निष्पद्याता इति तस्मात्ते न प्रत्यश्रौष मिति ॥ १८ ॥

तदु कथ मभूदिति। यत्रैव त्वं घृतस्नवीमहे ऽइत्यभिव्याहार्षीस्तदेव मे घृतकीर्त्तावग्निर्वैश्वानरो मुखादुदज्वालीत् तं नाशकं धारयितुꣳ स मे मुखान्निरपादीति ॥ १९ ॥

स यत् सामिधेनीषु घृतवत्। सामिधेन्य मेव तत्समेत्यैनं तेनेन्धे वीर्यं मेवास्मिन् दधाति ॥ २० ॥

तदु घृताच्येति। देवाञ्जिगाति‡ सुम्नयुरिति यजमानो वै सुम्नयुः स हि देवाञ्जिगीषति§ स हि देवान्||-

* 'विदेघो माधवः'–इति क। † 'माधवाः'–इति क, सा०–स०।

‡, § 'देवान् जि–'इति क। || 'देवान्'–इति क।

जिघाꣳसति* तस्मादाह देवाञ्† जिगाति‡ सुम्नयुरिति सैषाग्नेयी सत्यनिरुक्ता सर्वं वा ऽअनिरुक्तꣳ सर्वेणैवैतत्प्रतिपद्यते ॥ २१ ॥

अग्न ऽआ याहि वीतय इति। तद्वेति भवति वीतय ऽइति समन्तिक मिव ह वा ऽइमेऽग्रे लोका आसुरित्युन्मृश्या हैव द्यौरास ॥ २२ ॥

ते देवा ऽअकामयन्त। कथन्नु न इमे लोका वितराꣳ स्युः कथन्न इदं वरीय इव स्यादिति तानेतैरेव त्रिभिरक्षरैर्व्यनयन्वीतय ऽइति त ऽइमे विदूरं लोकास्ततो देवेभ्यो वरीयो ऽभवद्वरीयो ह वा ऽअस्मै भवति यस्यैवं विदुष एता मन्वाहुर्वीतय ऽइति ॥ २३ ॥

गृणानो हव्यदातय ऽइति। यजमानो वै हव्यदातिर्गृणानो§ यजमानायेत्येवैतदाह नि होता सत्सि बर्हिषीत्यग्निर्वै होतायं लोको बर्हिरस्मिन्नेवैतल्लोकेऽग्निं दधाति सोऽय मस्मिंल्लोके||ऽग्निर्हितः सैषेम मेव लोक मभ्यनूक्ते ममेवैतया लोकं जयति यस्यैवं विदुष एता मन्वाहुः ॥ २४ ॥

---

* 'जिगाꣳसति'–इति क, ख, ग, च-M। † 'देवान्'–इति छ।

‡ 'जिगाति'–इति ग। § 'गृणानो'–इति च।

|| 'मस्मिल्लोके'–इति क, 'मस्मिन् लोके'–इति छ।

तन्त्वा समिद्भिरङ्गिर इति। समिद्भिर्ह्येत मङ्गिरस ऐन्धताङ्गिर ऽइत्यङ्गिरा उ ह्यग्निर्घृतेन व्वर्द्धयामसीति तत्सामिधेनं पदᳪ स मेवैनं तेनेन्धे व्वीर्य मेवास्मिन् दधाति ॥ २५ ॥*

बृहच्छोचा यविष्ठ्येति। बृहद्ध्येष शोचति समिद्धो यविष्ठ्येति यविष्ठो ह्यग्निस्तस्मादाह यविष्ठ्येति सैषैत मेव लोक मभ्यनूक्तान्तरिक्षलोक मेव तस्मादाग्नेयी सत्यनिरुक्तानिरुक्तो ह्येष लोक एत मेवैतया लोकं जयति यस्यैवं व्विदुष एता मन्वाहुः ॥ २६ ॥

स नः पृथु श्रवाय्य मिति। अदो† वै पृथु यस्मिन् देवा एतच्छ्रवाय्यं यस्मिन् देवा अच्छा देव व्विवास-सीत्यच्छ देव व्विवासस्येतन्नो गमयेत्येवैतदाह ॥ २७ ॥

बृहदग्ने सुवीर्य मिति। अदो‡ वै बृहद्यस्मिन् देवा एतत्सुवीर्यं यस्मिन् देवाः सैषैत मेव लोक मभ्यनूक्तादिव मेवैत मेवैतया लोकं जयति यस्यैवं व्विदुष एता मन्वाहुः ॥ २८ ॥

सोऽन्वाह। ईडेन्यो नमस्य इतीडेन्यो ह्येष नमस्यो ह्येष तिरस्तमाᳪसि दर्शत इति तिर इव ह्येष तमाᳪसि

---

* इतोऽनन्तर मिह "शतम् ३००"—इति च-पुस्तके।

†, ‡ 'मित्यदो'—इति क।

समिद्धो दहशे स मग्निरिध्यते वृषेति सꣳ हीध्यते वृषा वृषो अग्निः समिध्यत ऽइति सꣳ हीध्यते ॥ २९ ॥

अश्वो न देववाहन इति । अश्वो ह वा ऽएष भूत्वा देवेभ्यो यज्ञं वहति यद्वै नेत्यृच्यो मिति तत्तस्मादा-हाश्वो न देववाहन इति ॥ ३० ॥

तꣳ हविष्मन्त ईडत ऽइति*। हविष्मन्तो ह्येतं मनुष्या ईडते तस्मादाह तꣳ हविष्मन्त ईडत ऽइति ॥ ३१ ॥

वृषणं त्वा वयं वृषन् वृषणः समिधीमहीति । सꣳ ह्येन मिन्धतेऽग्ने दीद्यतं बृहदिति दीदयेव ह्येष बृहत् समिद्धः ॥ ३२ ॥†

तं वा एतम् । वृषण्वन्तं त्रिच‡ मन्वाहाग्नेय्यो वा ऽएताः सर्वाः सामिधेन्यो भवन्तीन्द्रो वै यज्ञस्य देवतेन्द्रो वृषैतेनो हास्यैताः सेन्द्राः सामिधेन्यो भवन्ति तस्माद्वृषण्वन्तं त्रिच§ मन्वाह ॥ ३३ ॥

सोऽन्वाह । अग्निन्दूतं वृणीमह ऽइति देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे तान्त्सर्द्धमानान् गायत्र्यन्तरा तस्थौ या वै सा गायत्र्यासीदियं वै सा

---

* 'ईडत ऽइति'—इति ग । † इतोऽनन्तर मिह "अर्द्ध प्र० ६४"—इति ख।

‡, § 'तृच'—इति सायणीयपाठः, कात्यायनवार्त्तिकसम्मतश्च (पा० ६. १. ३४ वा० १)। वस्तुतः शतपथे कातीयश्रौते च सर्वत्रैव 'त्रिच'—इत्येव।

पृथिवीयुँ हैव तुदन्तरा तस्थौ तु ऽउभय ऽएव् व्विदाञ्च-क्रुर्यंतरान् वै न ऽइयु मुपावर्त्स्यंति ते भविष्युन्ति परेतरे भविष्यन्तीति ता मुभय ऽएवोपमन्त्रयाञ्चक्रिरेऽग्निरेव देवानां दूत ऽआस सन्दुरक्षा ऽइत्यसुररक्षस मसुराणाँ साग्नि मेवानुप्रेयाय तुस्मादुन्वाहाग्निं दूतं वृणीमह ऽइति स हि देवानां दूत ऽआसीद्धोतारं व्विश्ववेदस मिति ॥ ३४ ॥

तदु हैकेऽन्वाहुः । होता यो व्विश्ववेदस ऽइति नेदर मित्यात्मानं ब्रवाणीति तदु तुथा नु ब्रूयान्मानुषुँ ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तुस्माद्यथैवऽर्चा*नूक्त मेव† मेवानुब्रूयाद्धो-तारं व्विश्ववेदस मित्येवास्य यज्ञस्य सुक्रतु मित्येष हि यज्ञस्य सुक्रतुर्य‡दग्निस्तुस्मादाहास्य यज्ञस्य सुक्रतु मिति सेयं देवानुपाववर्त्त तुतो देवा ऽअभवन् परासुरा भुवति ह वा ऽआत्मना परास्य सपत्ना भवन्ति यस्यैवं व्विदुष एता मन्वाहुः ॥ ३५ ॥

तां वा ऽअष्टमी मनुब्रूयात् । गायत्री वा ऽएषा निदा-नेनाष्टाक्षरा वै गायत्री तुस्मादष्टमी मनुब्रूयात् ॥ ३६ ॥

---

* 'वर्चा'–इति क, ख । † नैतत् पदं च-पुस्तके ।

‡ 'सुक्रतुर्य'–इति, 'सुक्रतुर्य'–इति च पाठौ च-पुस्तके ।

तद्धैके। पुरस्ताद्धाय्ये दधत्यन्नं धाय्ये मुखत इद-मन्नाद्यं दध्म इति वदन्तस्तद् तथा न कुर्यादनवक्लृप्ता ह तस्यैषा भवति यः पुरस्ताद्धाय्ये दधाति दशमी वा हि तर्ह्येकादशी वा सम्पद्यते तस्यो हैवैषावक्लृप्ता भवति यस्यैता मष्टमी मन्वाहुस्तस्मादुपरिष्टादेव धाय्ये दध्यात् ॥ ३७ ॥

समिध्यमानो ऽअध्वर ऽइति। अध्वरो वै यज्ञः समिध्यमानो यज्ञ इत्येवैतदाहाग्निः पावक ईड्य इति पावको ह्येष ईड्यो ह्येष शोचिष्केशस्त मीमह ऽइति शोचन्तीव ह्येतस्य केशाः समिद्धस्य समिद्धो ऽअग्न ऽआहुतेत्यतः प्राचीनꣳ सर्वं मिध्म मभ्यादध्याद्यदन्यत्स-मिधोपहृक्त इव ह्येतद्धोता यद्वा ऽअन्यत्समिध इध्म-स्यातिरिच्यतेऽतिरिक्तं तद्यद्वै यज्ञस्यातिरिक्तं द्विषन्तꣳ हास्य तद् भ्रातृव्य मभ्यतिरिच्यते तस्मादतः प्राचीनꣳ सर्वं मिध्म मभ्यादध्याद्यदन्यत्समिधः ॥ ३८ ॥

देवान्यक्षि स्वध्वरेति। अध्वरो वै यज्ञो देवान्यक्षि सुयज्ञियेत्येवैतदाह त्वꣳ हि हव्यवाडसीत्येष हि हव्यवाड् यदग्निस्तस्मादाह त्वꣳ हि हव्यवाडसीत्या जुहोता दुव-स्यताग्निं प्रयत्यध्वरे वृणीध्वꣳ हव्यवाहन मिति सम्प्रेष्यत्येवैतया जुहुत च यजत च यस्मै कामाय

समैन्धिद्वं* तत् कुरुतेत्येवैतदाहाग्निं प्रयत्यध्वर इत्यध्वरो वै यज्ञोऽग्निं प्रयति यज्ञ इत्येवैतदाह व्वृणीध्वꣳ हव्य-वाहन मित्येष हि हव्यवाहनो यदग्निस्तस्मादाह व्वृणीध्वꣳ हव्यवाहन मिति ॥ ३९ ॥

तं वा एतम्। अध्वरवन्तं चिच† मन्वाह देवान् ह वै यज्ञेन यजमानान्त्सपत्ना असुरा दुधूर्षाञ्चक्रुस्ते दुधूर्षन्त एव न शेकुर्धूर्वितुं ते पराबभूवुस्तस्माद्यज्ञो ऽध्वरो नाम दुधूर्षन् ह वा एनꣳ सपत्नः पराभवति यस्यैवं व्विदुषोऽध्वरवन्तं चिच‡ मन्वाहुर्यावद्देव सौम्ये-नाध्वरेणेष्ट्वा जयति तावज्जयति ॥ ४० ॥ ३ ॥

॥ इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् [४. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ ४ ॥

अथ तस्मिन् सामिधेन्यनुवचने धर्मविशेषं विधत्ते— "हिङ्कृत्येति। 'हिं'–इति शब्द मुच्चार्येत्यर्थः[१]। "नासामेत्यादि। सामरहितस्य

* 'न्धिद्दृ'–इति च पाठः च-पुस्तके। † २६४पृ० ‡–§ टीप्पन्यौ द्रष्टव्ये।

१—" 'हूरम्'–इति स हिङ्कारः"–इति सा० छा० ब्रा० ४. ८. १।

अवयवत्वात्, हिङ्कारप्रणवयोः सामावयवत्वात्[१], सामिधेनीषु तत्कर-णेन सामिधेनीयुक्तः सर्वोऽपि सामवान् यज्ञः सम्पद्यत इत्यर्थः। 'ओ३म्-ओ३म्'—इति वीप्सया सर्वासु सामिधेनीषु स्थितस्य प्रणवस्यानुकरणम् ॥ १ ॥

"यद्वेवेत्यादिः हिङ्कारस्तुतिः। तस्य प्रतिज्ञातं प्राणात्मकत्व मुपपादयति— "प्राणो वा इति[१]। हिङ्कृत्यानुवचनम्। मिथुन-सम्पत्त्या स्तौति— "वाचा वा इत्यादिना। नासिकास्थप्राणात्मको हिङ्कारः, तन्निर्वर्त्यत्वात्; ऋक् च वागात्मिका, तया उच्चार्यमाण-त्वात्। 'प्राणश्च वाक् च' 'एतत्' एकं 'मिथुनम्'; स्त्रीपुंस्वरूपत्वात्। अतः सामिधेनीनां 'पुरस्ताद्' यजमानस्य पुत्रपौत्रादिप्रजनन-निमित्तं 'हिङ्कृत्य' अनुवचनेन 'मिथुन मेव क्रियते' इत्यर्थः[२] ॥ २ ॥

"अन्यतरदेवेति। उच्चैर्हिङ्कारस्योच्चारणे हि सोऽपि वाचैव निर्वर्त्येत इति तदात्मक एव स्यान्न प्राणात्मकः; तथा च मिथुन-सम्पत्तिर्न स्यादित्यर्थः ॥ ३ ॥

सामिधेनीनां लिङ्गविशेषं विधत्ते— "स वा एति चेति। आ इति 'एति'; प्र इति 'प्रेति'। अत्र 'इति'-शब्देन प्रकृत-विपर्यासकृता एतौ शब्दावर्थपरत्वात् प्रच्याव्य 'अर्वाची'-शब्दपरतया

---

१— तथाहि "लोकेषु पञ्चविधं सामोपासीत"—इत्यादि (४ प्र० २–७ ख०), "अथ सप्तविधस्य; वाचि सप्तविधं सामोपासीत"—इत्यादि च (४ प्र० ८–२१ ख०) सा० छा० ब्रा०।

२— "प्राणो हिङ्कारः"—इत्यादि सा० छा० ब्रा० ४. ७. १।

३— सा० छा० ब्रा० ४. १२. १, २ द्रष्टव्यम्।

व्यवस्थाप्येते । तथा च आङुपसर्गयुक्ताः प्रोपसर्गयुक्ताश्च ऋचोऽनुब्रूयादित्यर्थः ॥

तदेतल्लिङ्गद्वयं प्रयोजनकथनेन प्रशंसति— "गायत्री मेवेति । आङुपसर्गो ह्याभिमुख्ये वर्त्तते[1], अतस्तेन 'अर्वाचीम्' अभिमुखीं युनक्ति । परेतः प्रेत इति पर्यायतया दर्शनात् 'प्र'-शब्दस्य पराङ्मुखत्वेऽपि वृत्तिरस्ति[2], अतोऽत्र 'प्र'-शब्देन पराङ्मुखत्ववाचिना पराङ्मुखी मेव तां 'युनक्ति' इत्यर्थः ।

एव मुभयथा योजनस्य प्रयोजन माह— "पराच्यहेति । यतो देवयजनान्निष्क्रम्य 'पराची' पराङ्मुखी, अनिवर्त्तमानैव गायत्री द्युलोकं प्रति 'यज्ञं' वोढुं शक्नोति ; सा तु सन्निधानात् 'मनुष्यान्' रक्षितुं शक्नोति ; अतो लिङ्गद्वययुक्ता एवानुवक्तव्याः ॥ ४ ॥

तदेतल्लिङ्गद्वयं विधाय प्रशंसति— "यद्वेवेत्यादिना । "प्रेति वै प्राण इति । 'प्र'-शब्दस्य परागञ्चनार्थत्वात्, प्राणस्य च परागवृत्तित्वादुभयोस्तादात्म्यम् । "एत्युदान इति । आकारस्याभिमुख्यार्थत्वात् उदानस्य अन्तःप्रवेशवृत्ति[3]रूपत्वात्तादात्म्यम् ॥ ५ ॥

"यद्वेवेति षेति । "प्रेति वै रेतः सिच्यत इति । सिच्यमानस्य रेतसः पराङ्मुखप्रवृत्तेः 'प्र'-शब्दस्य तस्य च तादात्म्यम् । अपत्यरूपेण जायमानस्य अभिमुख मावर्त्तनादाभिमुख्यवाचिन आकारस्य

---

१— निरु० १. १. ५ ; १. २. ३ ; ३. ३. ४ ; ५. १. ६ ।

२— "प्रपरेत्येतस्य प्रातिलोम्यम्"—इति निरु० १. १. ५ ।

३— 'अन्तःप्रविष्टवृत्ति'—इति ङ ।

तादात्म्यम्। "प्रेति पशव इत्यादि। पशूनां तृणादिभक्षणाय यदिदं प्रति पराग् गमनम्, तत् 'प्र'-शब्दार्थः[1] ; यच्च सायं समागमनम्, तदाकारस्यार्थः[2]। किं बहुना 'सर्वम्' अपि 'इदं' जगत् प्रगमन-स्वभाव मावर्त्तनस्वभावञ्च; तस्मादेतल्लिङ्गद्वय मनुवचने सम्पादनीय मित्यर्थः ॥ ६ ॥

तदेतदुदाहरणेन दर्शयति— "सोऽन्वाहेति। "प्र वो वाजा इति। एषा 'प्र'-शब्दलिङ्गयुक्ता सामिधेनी[3]। "अग्न आ याहीत्या-ङुपसर्गलिङ्गयुक्ता[4] ॥ ७ ॥

अनयोर्लिङ्गयोरैक्य माशङ्क्य निरस्यति— "तदु हेति। "आया-हि"-इत्यनेन यदस्मात् प्रत्याभिमुख्यगमनं प्रतिपादितम्, 'तत्' स्वर्गवासि-देवापेक्षया परागमन मेवेति 'एति'-लिङ्ग मपि 'प्रेति'-लिङ्गं 'सम्पद्यत इति' एकीयमताभिप्रायः। 'तत्' एतत् 'अति-विज्ञान्यं' (न[5]) ज्ञानपथातिवर्त्ति। "आयाहि"-इत्युक्ते यस्मादागमन मेव शीघ्रं बुद्धावारोहति, न तु प्रगमनम्; तस्मात् 'प्रेति'-सम्पत्तिः[6] दुरधिगमेत्यर्थः। लिङ्गद्वयं तथैव व्यवस्थित मित्यभि-प्रेत्याहुवदति— "प्र व इति ॥ ८ ॥

विहित मनुवचन मनूद्य प्रथमतोऽनुवक्तव्या मृचं विधाय तत्प-दानि व्याचष्टे— "सोऽन्वाहेत्यादिना। अत्र 'वाजाः'-'इति' पदेन

---

१— निरु० १. १. ५। २— निघ० ४. २. ३२।

३— तै० ब्रा० ३. ५. २. १ ; सं० २. ५. ७. २।

४— तै० ब्रा० ३. ५. २. २ ; सं० २. ५. ८. १–११।

५— 'न'-इति पदं ठ-ड-पुस्तकयोर्नास्ति।

६— 'सप्रतिपत्तिः'-इति ज, झ, ढ, ।

'अन्नं' विवक्षितम्; वाजयति बलयतीति तच्छब्दव्युत्पत्तेः। अतः एतत्पदोच्चारणेन 'अन्न मेव' 'अभ्यनूक्तम्' अभिलक्ष्यानुवचनं कृतं भवति। "वस्तोः, द्यौः, भानुः, वासरम्"-इत्यहर्नामसु पाठात्[१] 'द्यु'-शब्दो दिनवचनः। द्यून् दिवसान् अभिगता इति व्युत्पत्त्या 'अभिद्यवः', 'इति' अनेन 'अर्द्धमासाः' उच्यन्त इति व्याचष्टे— "अर्द्धमासा वा अभिद्यवः"-इति। "पशवो वै हविश्चन्तः"-इति। क्षीरदध्याज्यादिहविर्जनकत्वाद् भाविना हविषा तद्वन्त इत्यर्थः ॥९॥

"घृताच्येति। 'घृत'-शब्दोच्चारणस्याग्निसमिन्धनेऽतिशयित मानुकूल्य माख्यायिकया दर्शयति— "विदेघो ह माधव इत्यादिना। 'माधवः'[२] मधुनाम्नः पुत्रो 'विदेघः'[३] नाम राजा; स च स्वमुखे विश्वनरहितम् 'अग्निं' धारयामास। रहूगणस्य पुत्रो 'गोतमः' नाम ऋषिः, तस्य राज्ञः 'पुरोहितः'। स च राजा तेन ऋषिणा आह्वयमानः 'तस्मै' न प्रत्युत्तरं ददौ। केनाभिप्रायेणेति चेत्, उच्यते— यद्यहं वदिष्यामि, मदीयात् 'मुखात्' सोऽग्निर्निष्पद्येत ? नैव निष्पद्यता मित्यनेनाभिप्रायेणेत्यर्थः ॥ १० ॥

"त मृग्भिरित्यादि। स च ऋषिः ऋङ्मन्त्रैस्तस्य मुखगत मग्निं स्तुवन् 'तं' विदेघ माह्वातुं निश्चितवान्। निश्चित्य च

---

१— निघ० १ अ० ९ ख० १, २, ३, ४।

२— क्वातिरिक्तमूलपुस्तकेषु 'माथवः'-इत्येव पाठो दृश्यते, तथैव दृष्टो वेबरेणापि सर्वत्रैव; तन्न जाने माधवपाठः कुतो लब्धः सायणाचार्येणेति।

३— शतपथेऽन्यत्र तु सर्वत्रैव 'विदेह'-शब्दः श्रुतः (१. ४. १. १७; १४. ६. ११. ६; ७. २. ३०.) एकत्रैवेह श्रूयते विदेघ इति।

"वीतिहोत्रम्"-इति[1] मन्त्रेण आजुहाव। एवं स्तुतोऽप्यग्निः तन्मुखे तूष्णी मेव स्थितवान् ॥ ११ ॥

"स न इति। 'सः' विदेघोऽपि 'न' प्रत्युवाच। पुनरपि 'सः' ऋषिः "उदग्ने शुचयः"-इति[2] मन्त्रेणाग्निं स्तुवन् क्रोधेन विदेघ माकारयामास। 'विदेघा३'-इति प्लुतिः असूयार्था[3] ॥ १२ ॥

"स ह नैवेति। एव मपि प्रतिश्रवणाभावे "तन्त्वा घृतस्नवी-महे"—'इति' इमा मेव ऋचम्[4] अग्नि मभिलक्ष्योक्तवान्। 'सः' चाग्निः मन्त्रगतघृतशब्दोच्चारणसमये एव माधवस्य मुखसकाशादूर्द्धं ज्वलितोऽभूत्। 'तम्' अग्निं 'धारयितुं' सोऽपि 'न शशाक'; ज्वालाधिक्येन दाहकत्वात्। 'सः' च मुखान्निर्गतः सन् 'पृथिवीं' प्राप्तवान् ॥ १३ ॥

"तर्हीति। तस्मिन् समये माधवस्य तापशमनाय 'सरस्वत्यां' नद्यां निमग्नोऽभूत्। 'सः' अग्निस्तस्मात् स्थानादारभ्य 'प्राङ् दहन्' 'इमां' सर्वां 'पृथिवीम्' अभितो व्याप्नोत्। माधवगोतमावुभावपि 'दहन्तं' 'तम्' अग्निं 'पश्चात्' अनुजग्मतुः। 'सः' च दहन्नग्निः पृथिव्यां यावत्यो नद्यः सन्ति, ताः 'सर्वा नदीः' अतिशयेन 'ददाह' शोषयामास। 'प्राचीनं' दहतोऽस्य पुरस्तात् 'सदानीरा' नाम नदी 'उत्तरात्' उदक्प्रवाहा 'एति' गच्छति। तया च व्यवहितः सोऽग्निः, एनम्

१— वा० सं० २. ४. १; का० श्रौ० सू० २. ८. २।

२ — तै०सं० १. ३. १४. २८; ४. ४६. १३; ५. ५. १२; २. ४. १४. ११।

३— पा० सू० ८. २. १०३।

४— ऋ० सं० ५. २६. २।

अग्निम्, सापि निःशेषेण धारयति, इतस्ततो गमनं निवार्य धारितवतीत्यर्थः। स चाग्निः 'तां' नदी मितरनदीवत् 'नातिददाह'। अत एव 'सदा' सर्वदा 'नीरं' जल मस्या मस्तीति व्युत्पत्त्या 'सदानीरा'-इत्युच्यते। तथा च निघण्टुः(?)— "करतोया सदानीरा बाहुदा सैतवाहिनीति[1]। 'तां ह' नदीं 'पुरा' तद्दहनोत्तरकाले 'ब्राह्मणाः' 'न तरन्ति' न स्पृशन्ति। अग्निदाहाभावेनाविशुद्धत्वादिति हेतु माह— "अनतिदग्धेति ॥ १४ ॥

"तत एतर्हीति। 'ततः' तस्या नद्याः 'प्राचीनं' प्राग्देशम् 'एतर्हि' इदानीं 'बहवो ब्राह्मणाः' निवसन्ति। अत्यन्तसंयोगे द्वितीया[2]। प्राग्देशः सर्वोऽपि ब्राह्मणवास इत्यर्थः। 'तत्' च स्थानम् 'अक्षेत्रतर मिव' अतिशयेन निवासायोग्य मिव 'आस' बभूव। तथा 'स्रावितरं' भग्नभाण्डे निक्षिप्तनीरवत्तद्देशेऽनुष्ठितं यज्ञदानादिक मतिशयेन 'स्रावि' स्रवणशीलं फलप्रदानासमर्थं बभूवेत्यर्थः। तत्र हेतु माह— "अस्वदित मिति। यतो 'वैश्वानरेणाग्निना' 'अस्वदितम्' अनास्वादितम्, अतस्तत्स्थान मपवित्र मित्यर्थः ॥ १५ ॥

अस्य दोषस्य परिहार माह— "तदु हेति। 'एतर्हि' एतस्मिन् समये 'तत्' अपि स्थानं 'क्षेत्रतरं' निवासयोग्य मेव भवति। कुत इत्यत आह— "ब्राह्मणा उ हीति। 'नूनम्' इति निश्चये[3]; 'हि' यस्मात् 'एनत्' स्थानं ब्राह्मणाः 'यज्ञैरसिष्वदन्' यज्ञानुष्ठानैः

---

१— अम० को० १. १०. ३३। २— पा० सू० २. १. २९।

३— "नून मिति विचिकित्सार्थीयः"—इति निरु० १. २. ४।

अग्निना आस्वादित मदृषत, तस्मादित्यर्थः। 'सा' च नदी 'जघन्ये' निकृष्टे सर्वरसवर्जिते 'नैदाघे' ग्रीष्मसम्बन्धिकालेऽपि सम्यक् 'कोपयति' बहुजलतया प्रकुपिता भवति। 'तावत्' पर्यन्ते हि काले 'वैश्वानरेणाग्निना' 'दग्धा'; तदा च तं निवारयितुं तस्याः प्रकोपो जात इत्यर्थः ॥ १६ ॥

"स होवाचेति। एवं सर्वेषु देशेषु दग्धेषु 'सः' च माधवः अग्नि मेव प्रतीच्य 'उवाच'— 'क्व' कुत्र देशे 'अहं भवानि' निवसेयम्? 'इति' पृष्टे सोऽप्यग्निरेनम् 'उवाच'। कि मिति। 'अतः' अस्याः नद्याः 'प्राचीनं' यद् 'भुवनं' भूमिः, एतदेव 'ते' तव निवासोऽस्त्विति। अत एव कारणात् एतस्मिन्नपि काले 'सैषा' सदानीरा नदी कोसलदेशस्य च विदेहदेशस्य च मर्यादात्वेन दृश्यते। 'हि' यस्मादेवं माधवायाग्निरदात्, तस्मात् 'ते' विदेहदेशाः अपि 'माधवाः' इत्युच्यन्ते ॥ १७ ॥

उक्तं वृत्तान्तं गोतमेन पृष्टः सन् विदेहोऽनुवदति— "अथ होवाचेत्यादिना। परोक्षत्वात्पूर्वं श्रुतिवाक्ये लिट्-प्रयोगः[१]। गोतम-माधवयोः प्रश्नप्रतिवचनरूपवाक्ये तु भूताद्यतनत्वाल्लुङ्-प्रयोगो[२] विशेषः ॥ १८,१९ ॥

एवं प्रासङ्गिकं परिसमाप्य प्रकृते योजयति— "स यदिति। यस्माद् घृतशब्दोच्चारणेनाग्निः प्रज्वलितो बभूव, तस्मात् कारणात् 'सामिधेनीषु' 'यद्' 'घृत'-प्रातिपदिकयुक्तं पदम्, 'तत्' 'सामिधेन मेव' अग्निसमिन्धनहेतुर्भवतीत्यर्थः ॥ २० ॥

---

१— पा० सू० ३. २. ११५। २— पा० सू० ३. २. ११०।

तस्माद् घृताच्येतत्पदं सामिधेनीषु युक्ततर मिति निगमयति— "तद्विति। तैत्तिरीयकेऽपि नृमेधपरुच्छेपसंवादोदाहरणे घृतवत्पदस्याग्निजननहेतुत्वं प्रतिपादितम्— "यत्समावद्विद्व कथा त्व मग्नि मजीजनो नाह मिति ; सामिधेनीना मेवाहं वर्णं वेदेत्यब्रवीद् यद्; घृतवत्पद मनूच्यते, स आसां वर्णः"-इति[1]। "यजमानो वा इत्यादि। 'सुम्नं' सुखं स्वर्गादिलक्षण मात्मन इच्छतीति[2] 'सुम्नयुः' यजमानः। जिगातीत्यस्याभिप्राय माह— "जिगीषतीति। जेतु मिच्छतीत्यर्थः।

ननु "गा स्तुतौ"-इति[3] धातुः, कथं तस्य जिगीषतीति व्याख्यान मित्यत आह— "स हीति। 'हि' यस्मात् यजमानो देवान् स्तुत्या 'जिघांसति' 'हन्तुं' प्राप्तु मिच्छति। हन्तिरत्र गत्यर्थः। 'तस्मात्' जिगीषतीति युज्यत इत्यर्थः। "अज्झनगमां सनि"-इति[4] सनि दीर्घत्वम्। "सर्वं वा अनिरुक्त मिति। यन्नामविशेषैरनिरुक्तम्, तत्सर्वात्मक मित्यर्थः ॥ २१ ॥

"अग्न आ याहीति। "वीतये"-इति पदं व्याख्यातु मितिहास माह— "समन्तिक मिवेति। सन्निकृष्टतर मिवेत्यर्थः। सन्निकर्ष मेवाभिनयेन दर्शयति— "इत्युन्मृश्येति। यथोर्ध्वबाहुना शाखाग्रं स्पृश्यते, 'इति' एव मेव द्यौरपि हस्तस्पृश्येव बभूवेत्यर्थः ॥ २२ ॥

"ते देवा इति। "वितरां स्युरिति। अतिशयेन विप्रकृष्टा भवेयुरित्यर्थः। "वरीय इवेति। 'उरुतरं' विस्तीर्णतर मेव एतत्

---

१— तै० सं० २. ५. ८. ५।
२— पा० सू० ३. १. ८।
३— धा० पा० जु० प० २३।
४—पा० सू० ६. ४. १६।

चिद्रूपं स्थानं केन प्रकारेण स्यादित्यर्थः। विश्लिष्टा इतिः 'वीतिः', तथा च 'वीतये'-इत्यस्य विविधमानायेत्यर्थो भवति। एतदक्षरत्रय-प्रयोगात् त्रयः 'इमे लोकाः' परस्परं 'विदूरं' विप्रकर्षं प्राप्ता इत्यर्थः। "एता मन्वाकुरिति। 'वीतये'-इतिपदेन युक्ताम् "अग्न आयाहीत्यादिका मित्यर्थः ॥ २३ ॥

अस्या ऋचो द्वितीयं पाद मनूद्य व्याचष्टे— "गृणान इति। हविषो दानाद् 'हव्यदातिः = यजमानः' ॥

अस्या ऋचोऽनुवचनं भूलोकजयहेतुत्वेन प्रशंसति— "अग्निर्वै होतेत्यादिना ॥ २४ ॥

तृतीयां सामिधेनी मनूद्य व्याचष्टे— "तन्त्वेति[१]। 'अङ्गिरसः' महर्षयो यत् 'समिद्भिः' अग्निम् 'ऐन्धत' समिद्ध मकुर्वन्[२], तस्मादग्निरपि 'अङ्गिर इति' सम्बोध्यते। तदेतन्नाम अग्नेः प्रसिद्ध मित्याह—"अङ्गिरा उ हीति। "इतरे येऽङ्गारा आसंस्तेऽङ्गिरसो-ऽभवन्निति[३] अङ्गिरसा मङ्गारपरिणामरूपत्वात् 'अङ्गिरः'-शब्दाभि-धेयता। अग्निरप्यङ्गाररूप इति युक्तं तस्याप्यङ्गिरस्त्व मित्यर्थः॥ २५॥

"बृहच्छोचेति। "यविष्ठो ह्यग्निरिति। 'यविष्ठः' युवतमः नित्यतरुणः; अजरामरत्वात् ॥

अस्या ऋचोऽनुवचन मन्तरिक्षलोकजयहेतुत्वेन प्रशंसति— "स-

---

१—तै० ब्रा० ३. ५. २. ३; सं० २. ५. ८. १-११।

२— तेषां वर्णनम् ऐ०ब्रा० ६. ५. ८-६-खण्डयोर्द्रष्टव्यम्। वस्तुतस्तु "एत मु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः"-इति सा० छा० ब्रा०३. २. १०।

३— ऐ० ब्रा० ३. ३. ६। निरु० ३. ३. ५। निघ० ५. ५. ११।

षेति। "एत मेव"-इति सामान्योक्तं विवृणोति— "अन्तरिक्षेति। अयचोऽन्तरिक्षलोकस्य साम्य माह— "तस्मादिति ॥ २६ ॥

चतुर्थीं सामिधेनी मनूद्य द्युलोकजयहेतुत्वेन व्याचष्टे— "स न इत्यादिना[1]। 'अदः' विप्रकृष्टं द्युस्थानं खलु 'पृथु' विस्तीर्णम्। तद्विशिनष्टि— "यस्मिन्निति। 'यस्मिन्' लोके 'देवाः' सर्वे वसन्ति, तत् स्थान मत्र 'पृथु'-शब्दवाच्यम्। देवनिवासत्वादेव 'एतत्' 'अवार्य्यं' अवणीयं प्रशस्तम्। पादान्तर मनूद्य व्याचष्टे— "अच्छा देवेति। देवोषितं द्युलोकरूपं स्थानम् 'अच्छ' अभिलक्ष्य 'विवाससि' प्रकाशयेत्यर्थः। प्रकाशनस्य प्राप्त्यर्थ मित्यभिप्रेत्य व्याचष्टे— "एतन्नो गमयेति ॥ २७ ॥

"इहद्य इति। "अदो वा इति। सर्वत्र हि विशेष्यरहितः 'इदं'-शब्दो भूलोकवचनः, 'अदः'-शब्दस्य द्युलोकवचनः ॥ २८ ॥

ऋगन्तरस्य[2] अनुवचनं विधत्ते—"सोऽन्वाहेति। 'ईडेन्यः' स्तोतव्यः, 'नमस्यः' नमस्कर्त्तव्य इत्यय मर्थः। प्रसिद्ध इति हेरर्थः। द्वितीयं पाद मनूद्य व्याचष्टे— "तिरस्तमांसीति। 'एषः' खल्वग्निः समिद्धः सन् 'तमांसि' तिरस्कृत्यैव दृश्यते। अनेन 'दर्शतः'-इतिपदस्य कर्म्मणि व्युत्पत्तिर्दर्शिता। "स मग्निरिध्यते"-इत्यादि निगदसिद्धम् ॥ २९ ॥

"अश्वो नेति। "अश्वो न देववाहनः"-इत्यत्र[3] 'न'-शब्दस्य निषेधार्थत्व माशङ्क्य विवक्षित मर्थं दर्शयति— "यदा इति। 'ऋचि' ऋङ्मन्त्रे 'यत्' 'न-इति' पदम्, तत् 'ओम्-इति' अङ्गीकारार्थतया

---

१— तै० ब्रा० ३. ५. २. ४ ; सं० २. ५. ८. १-११।

२, ३— तै० ब्रा० ३. ५. २. ५, ६ ; सं० २. ५. ८. १-११।

प्रतिपत्तव्यम् । "एवम्परमोम्पदम्"-इति हि निघण्टुः(?)[१] । 'अश्वो ह वा एष भूत्वा' अश्वरूप मास्थायेति यावत् ॥ २० ॥

"तꣳ हविष्मन्त इति । "हविष्मन्तो ह्वीत मित्यादि । चरुपुरोडाशादीनि 'हवींषि' सम्पाद्य, तद्युक्ता ऋत्विग्यजमानाः तानि हवींषि देवान् प्रापयितु मग्निं स्तुवन्तीत्यर्थः । "ईड स्तुतौ"-इति धातुः[२] ॥ २१ ॥

"वृषणन्त्वेत्यादि[३] । निगदसिद्धम् । "दीद्यतं बृहत्"-इत्यत्र दीद्यच्छब्दस्याभिप्राय माह— "दीदयेवेति । "दीदयति" दीप्तिकर्मा, छान्दसो धातुः[४] । पूर्वाभिः समिद्धः स च 'एषः' अग्निरस्मिन् समये 'बृहत्' अधिकं 'दीदयेव' दिदीप इतीव । 'हि' यतो 'दीद्यतं' दीप्यमानं त्वा मित्यग्निविशेषणं युक्त मित्यर्थः ॥ २२ ॥

"ईडेन्यः"-इत्यस्य तृचस्य वृषण्वच्छब्दायात मुपजीव्य प्रशंसति— "तं वा इत्यादि । अग्निविशेषणभूतेनापि 'वृषन्'-शब्देन इन्द्रोऽप्युपस्थाप्यते ; 'वृषन्'-शब्दस्य तन्नामधेयत्वात् । अतो 'वृषन्'-शब्दयुक्तस्य तृचस्यानुवचनादितरयज्ञवत् सामिधेनीना मपीन्द्रसम्बन्धः सिद्ध्यतीत्यर्थः ॥ २३ ॥

---

१—"ओ मेवं परमं मते"-इति अम०को० ३.४.१२। "ओ३ मित्यृचः प्रतिगर एवं तथेति गाथाया ओ मिति वै दैवं तथेति मानुषम्"-इति ऐ०ब्रा० ७.३.६। "प्रणवे चाभ्युपगमे चापाकृतौ च मङ्गले"-इति मे० अव्य० ५१।

२—धा० पा० अदा० आ० ९ ।

३—तै० ब्रा० ३. ५. ३. ७; सं० २. ५. ८. १–११ ।

४—निघ० १. १६. ४ ; निरु० १०. २. ६ ।

सामिधेन्यन्तरस्य[1] अनुवचनं विधत्ते— "सोऽन्वाहेति। अग्नेर्देव-दूतत्व मुपपादयितु मितिहास माह— "देवासुरा वा इति। 'तान्' मिथः 'स्पर्द्धमानान्' देवासुरान् 'अन्तरा' तेषा मुभयेषां मध्यत इत्यर्थः। "अन्तरान्तरेणेति[2] द्वितीया। "इयं वा इत्यादि। योत्स्य-मानांस्तानुभयविधान् निवारयितुं गायत्री मध्ये प्रादुर्भूता 'सेयं पृथिव्येव' इय मेव खलु पृथिवी तेषा मुभयेषां मध्यवर्त्तिनी। युक्तं चैतत्;— मेरोरग्रभागे हि अमरावती नाम नगरी, तस्यां हि देवाः; तथा मेरोरधस्ताद्भागे च यत् इरामुखं नाम नगरम्, तस्मिन् ह्यसुरा निवसन्ति। तयोर्मध्ये पृथिवी वर्त्तत इति। 'ह'-शब्दयोगा-दस्ति शास्त्रप्रसिद्धिः[3]। "यतरास्वा इति। "किं यत्तदोर्निर्द्धारणे"-इति[4] यच्छब्दात् डतरच्। 'उपावर्त्स्यति' उपावृत्ता भविष्यति। 'उपमन्त्रयाञ्चक्रिरे' रहस्यं दूतमुखेनाहूतवन्त इत्यर्थः। "मन्त्रि गुप्तभाषणे"-इति[5] धातुः; लिट्; प्रत्ययान्तत्वादाम् प्रत्ययः[6]।

तस्मिन्नुपमन्त्रणे देवानां को दूतः, को वा असुराणा मित्युभयं विविनक्ति— "अग्निरेवेति। 'सहरक्षाः' नाम यत् 'असुररक्षसम्' असुरविरोधि रक्षः। समासान्तो 'अ'-प्रत्ययः[7]। 'रक्षः'-शब्दस्य

---

१— तै० ब्रा० ३. ५. २. ८; सं० २. ५. ८. १-११।

२—पा० सू० २. ३. ४।

३— अवैदिक मिदं वर्णन मिति सुधीभिः खलूपेक्षणीय मेव।

४— पा० सू० ५. ३. ९२। ५— धा० पा० चु० आ० ४५।

६— पा० सू० ३. १. ३५, ३६।

७— "अनसन्तान्नपुंसकाच्छन्दसि"-इति पा० सू० ५. ४. १०३।

नियतनपुंसकत्वात् समासान्तस्यापि तथात्वम्। “स हि देवाना मिति। ‘हि’ यस्मादुक्तरीत्या ‘अग्निं दूतं वृणीमहे-इति’ अनुवचनं युक्त मित्यर्थः। द्वितीयपाद मनूद्य तत्र पाठान्तर मुपन्यस्य दूषयति— “होतार मित्यादिना ॥ ३ ४ ॥

“तद्विति। “होता यो विश्ववेदस इति” पाठान्तर मनुब्रुवता मभिप्राय माह। यद्यपि होतार मिति ‘होतृ’-शब्दो द्वितीयान्तः, तथापि ‘होता अरम्’ इत्यपि श्रुतिसामान्यात् प्रतीयते। स च ‘अरं’-शब्दः ‘अलं’-शब्दपर्यायः। “वाल-मूल-लघ्वल मङ्गुलीनाम्”-इति[1] लत्वस्य विकल्पितत्वात्। ‘अरं’-शब्दोऽत्र निवारणार्थः। ‘आत्मानं’ निवारणविशिष्टं ‘नेत्’ नैव ‘अवाणि’-इत्यनेनाभिप्रायेणेत्यर्थः। “होता यः”-इति पाठे तु न ईदृशी विरुद्धा प्रतिपत्तिरस्ति ॥

तत्पक्षनिराकरणं “तदु तथेत्यादि। स्पष्टम्। “होतारम्”-इत्यार्षपाठं परित्यज्य “होता यः”-इतिपाठविपरिणामस्य मनुष्यबुद्धिप्रभवतया मानुषत्वम्[2]। यथैव वेदे पठितम्, तथैवानुवक्तव्य मित्युपसंहरति— “तस्मादिति। कीदृग्विधं तर्हि वेदे पठित मिति तदाह— “होतार मिति। ‘एव’कारः पक्षान्तरव्युदासार्थः ॥

प्रकृत मितिहासशेष मुपसंहरति— “सेय मिति। देवासुराणां

---

१— पा० सू० ८. २. १८. वा० २ (“वा लो र मापद्यते”)।

२— तदित्थं मन्त्रेषु स्वाभिप्रेतप्रार्थनादिप्रकाशनायापि वैदिकशब्दानां परिवर्त्तनादिकं सर्वत्रैव निषिद्ध मिति सूचितम्।

मध्ये वर्त्तमाना या गायत्री, 'सेयं' रहस्य माह्वता सती 'देवान्' एव 'उपावर्त्तत' उपाजगाम। 'ततः' गायत्र्या उपावर्त्तनात् 'देवाः' 'अभवन्' अजयन्। 'असुराः' तु तत्सम्बन्धविरहात् 'परा'भूताः ॥

उक्तेतिहासज्ञानपुरःसर मेतां गायत्रीं प्रयुञ्जानस्य फल माह— "भवतीति। 'आत्मना' स्वयं 'भवति' भूष्णुः, समर्थो भवति। 'अस्य' च शत्रवः 'पराभवन्ति' इत्यर्थः ॥ २५ ॥

अष्टसङ्ख्योपजीवनेन प्रशंसति— "तां वा इति। 'निदानेन' मूलकारणेन विचार्यमाणा त्र्यगचरात्मिका 'एषा गायत्री', सापि प्रतिपादम् 'अष्टाक्षरा'; या च अष्टसङ्ख्या, तत्पूर्त्तिहेतुत्वादप्येषा विशेषतो 'गायत्री'-इति। ताम् 'अष्टमी मनुब्रूयात्' इत्यर्थः ॥ २६ ॥

यत्र सप्तदश सामिधेन्यः, तत्र "पृथु पाजाः"-"तं सबाधः"-इति द्वे धाय्याख्ये[1] ऋचौ[2] सामिधेनीषु प्रक्षेप्तव्ये। तयोः स्थानं पूर्वोत्तर-पक्षाभ्यां दर्शयति— "तद्धैक इति। 'पुरस्तात्' अष्टम्याः पूर्व मित्यर्थः।

तथा कुर्वता मभिप्राय माह— "मुखत इति। अन्नञ्च तदाद्यञ्च 'अन्नाद्यम्' 'इदं' धाय्यारूपं 'मुखतः' मुखप्रदेश एव 'दध्मः' धारयामः 'इति वदन्तः' ॥

तदेतदैकीयं मतं दूषयति— "तदु तथेति। 'अनवक्लृप्ता' असमर्था ऊर्द्धं द्वयोर्धाय्ययोः प्रक्षेपात्। "अग्निं दूतम्"-इत्यष्टमी,

---

१— "पाय्य-सान्नाय्य-निकाय्य-धाय्या मानहविर्निवाससामिधेनीषु"-इति पा० सू० ३. १. १२९। 'धीयतेऽनया समिदिति धाय्या ऋक्'-इति तत्र कौ०। ऐ० ब्रा० ३. २. ७, १३; ३. ७। तै० सं० २. २. १०. २। २— ऋ० सं० ३. २७. ५, ६।

'दशमी' सम्पद्यते; तथा चाष्टमीलभङ्गेन "गायत्री वा एषा निदानेन"-इतिप्रतिपादित'गायत्रीतिपदविरहादसमर्थं[1] स्यात्।

तथा समिध्यमानवती-समिद्धवत्योर्मध्ये द्वे धाय्ये प्रक्षेप्तव्ये; सा च समिध्यमानवती सामधेनीनां पाञ्चदश्ये नवमी, सा च साप्तदश्ये तूत्कर्षात् 'एकादशी सम्पद्यते'। उभयत्र 'वा'-शब्दश्चार्थे। कथं तर्हि अवक्लृप्तिरित्यत आह—"तस्यो हेति। 'यस्य' यजमानस्य सा सामिधेनीषु "अग्निं दूतम्"-इत्येषा अष्टमी; 'तस्यैषा' ('अवक्लृप्ता') अवक्लृप्तिः, समर्था 'भवति' इत्यर्थः।

कुत्र तर्हि धाय्ययोः प्रक्षेप इति तदाह—"तस्मादिति। अष्टम्याः 'उपरिष्टात्' समिध्यमानवती-समिद्धवत्योर्मध्ये एव 'धाय्ये' प्रक्षिपेत्। उक्तं ह्यापस्तम्बेन—"समिध्यमानवतीं समिद्धवतीञ्चान्तरेण पृथुपाजवत्यौ धाय्ये दधाति"-इति[3]। आश्वलायनोऽप्यसूत्रयत्—"तृतीयस्यां सामिधेन्यावावपते प्रागुपोत्तमायाः पृथुपाजा अमर्त्य इति द्वे धाय्ये इत्युक्त एते प्रतीयात्"-इति[4] ॥ ३७ ॥

एव मष्टमीं विधाय प्रशंसति—"समिध्यमान इति[5]। निगदसिद्ध मेतत्। "शोचन्तीव ह्येतस्येति। दीप्यमानस्याग्नेः ये ऊर्ध्वमुखा ज्वालाविशेषाः, ते केशाः; ते च 'शोचन्ति' दीप्यन्ते; 'इव'-

---

१— पुरस्तादिहैव द्रष्टव्यम् (२६५ पृ० १७ पं०)।

२— 'गायत्रीति पद्य मसमर्थं'—इति ड।

३— आप० श्रौ० सू० २. १२. ५।

४— आ० श्रौ० सू० २. १. २६. (ऋ० सं० ३. २७. ५, ६.)।

५— तै० ब्रा० ३. ५. २. ६; सं० २. ५. ८. १–११।

शब्दोऽवधारणे ; 'शोचिष:' दीप्यमाना: केशा यस्येति 'शोचिष्केश:' इत्यर्थ: ॥

दशम्या: सामिधेन्या: प्रागेवेध्मशेषस्य सर्वस्य अग्नावभ्याधानं विधत्ते—"समिद्धो अग्न इत्यादिना[1]। तस्या दशम्या: सामिधेन्या: 'प्राचीनं' प्राक्। "विभाषाञ्चेरदिक् स्त्रियाम्"-इति[2] स्वार्थिक: ख-प्रत्यय:। "यदन्यत्समिध: इति। अनुयाजार्थाया: 'समिध:' 'यत् अन्यत् तत्' सर्व मित्यर्थ: ॥

अस्मिन्नेव समये इध्मशेषस्य सर्वस्याभ्याधानं कुतो हेतोरित्याशङ्क्य हेतु माह— "अपवृक्ते इवेति। 'एतत्' एतर्हि, अस्मिन् समये होता 'अपवृक्ते इव' अग्ने: समिन्धनं परिसमापयतीव। "समिद्धो अग्न आहुतेति। समिन्धनस्य भूतत्वप्रतिपत्ते:, समिन्धनहेतुत्वाच्च, सर्वस्येध्मस्य समिद्धावस्थाया: प्रागेवाभ्याधानं युक्त मित्यर्थ: ॥

प्रागनभ्याधानदोष माह— "यद्वा अन्यदिति। अनुयाजसमिद्-व्यतिरिक्तं 'यत्' इध्मसम्बन्धि काष्ठं समिद्धावस्थायां वर्त्तते, 'तत् अतिरिक्तम्'। तच्च शत्रुवर्द्धनहेतुरित्यपि। "समिद्धो अग्न आहुत"-इत्यत: प्रागेवेध्मशेष: सर्वोऽपि प्रक्षेप्य:। अत एव कात्यायनेनोक्तम्— "समिद्ध इति प्रागत: सर्व मिध्म मेकवर्ज मनुयाजार्थेत्"-इति[3] ॥ ३८ ॥

"देवान् यक्षीत्यादि। निगदसिद्धम्।

अन्तिमां सामिधेनी मनूद्य व्याचष्टे—"आ जुहोतेति। "आ

---

१— तै० ब्रा० ३. ५. २. १० ; सं० २. ५. ८. १-११।

२— पा० सू० ५. ४. ८।  ३— का० श्रौ० सू० ३. १. ११।

जुहोत दुवस्यतेति[1] अध्वर्युप्रमुखा ऋत्विजः सम्बोध्य हवनादिकार्ये प्रेर्यन्ते; अतः प्रोक्षणीरासादयेत्यादिवदयं मन्त्रः सम्प्रैषरूप एव ॥

आ जुहोत दुवस्यतेति पदयोरर्थ माह—"जुहुत च यजत चेति। जुहुतेत्यत्र 'त'-शब्दस्य "तप्तनप्तनथनाश्च"-इति[2] तबादेशे गुणे च सति जुहोतेति रूपं भवति। 'दुवस्यतिः' परिचरणार्थः[3] 'दुवस्यत' परिचरत, यजतेत्यर्थः ॥

तात्पर्यार्थ माह— "यस्मै कामायेति। फलसाधनतया काम्यमानाय 'यस्मै' यागहोमादिकर्मणे हे ऋत्विजः! 'समैन्धिढ्वम्' अग्निसमिन्धनम् अकृढ्वम्[4]। सोऽग्निः समिद्धः सम्पन्नः; अतोऽस्मिन् समये 'तत्कुरुतेत्येव' एवंरूप मर्थं मन्त्रो ब्रूत इत्यर्थः। "अग्निं प्रयतीत्यादि स्पष्टम् ॥ ३९ ॥

तृचस्याध्वरशब्दयुक्तत्वं प्रशंसितु मनुवदति— "तं वा इति। "समिद्ध्यमानो अध्वरः"-इत्यादिक मृक्त्रय मध्वरशब्दोपेत मनुब्रूयात्। "दुधूर्षाञ्चक्रुरिति। धूर्वितु मिच्छां कृतवन्त इत्यर्थः। "धुर्वी हिंसायाम्"[5]-इत्यस्मात् सनि, वलोपे, प्रत्ययान्तत्वादाम् प्रत्ययः[6]। 'दुधूर्षन्तः' 'ते' असुराः देवान् 'धूर्वितुं' हिंसितुं 'न शेकुः' न शक्ताः; प्रत्युत 'परा'हता एव 'बभूवुः'। 'तस्मात्' अहिंसाहेतुत्वात् 'अध्वरः'-इति यज्ञस्य नाम सम्पन्नम् ॥

---

१— तै० ब्रा० ३. ५. २. ११; सं० २. ५. ८. १–११।

२— पा० सू० ७. १. ४५।

३— निघ० ३अ० ५ख० ५पदम्।

४— 'अकृषत'–इति ड।

५— धा० पा० भ्वा० प० ५७३।

६— पा० ३. १. ७सू० सन्, ६. १. ६६सू० वलोपः, ३. १. ३५ आम्।

एवं पुरावृत्त मुदाहृत्यैतद्विदुषः फल माह— "दुधूर्षन् हेति। "यावद्देवेति। 'अध्वर'-शब्दो हि सोमयागे रूढः; स चात्र दर्शपूर्ण-मासविषये मन्त्रेण प्रस्तूयत इति सोमयागेन यावदेव फलं प्राप्नोति, तावद्दर्शपूर्णमासयागेनापि प्राप्नोतीत्यर्थः ॥ ४० ॥ २ [४. १.] ॥

इति श्रीसायणार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे चतुर्थाध्याये प्रथमं ब्राह्मणम्[1] ॥

---

एतद्ध वै देवा अग्निं गुरिष्ठे* युञ्जन्। युङ्क्तोत्त्वु इदग्नो हव्यं व्वहेति तु मेतद् गुरिष्ठे† युक्तोपामदन्वीर्य-वान्वै त्वु मस्युलं‡ वै त्वु मेतस्मा असीति व्वीर्यं समा-दधतो यथेद मप्येतर्हि ज्ञातीनां यं गुरिष्ठे§ युञ्जन्ति तु मुपमदन्ति व्वीर्यवान्वै त्वु मस्युलं॥ वै त्वु मेतस्मा

१— अस्मिन् ब्राह्मणे सामिधेनीप्रयोगारम्भप्रकारो विहितः, तन्मन्त्राणां कूटपदादिव्याख्यानानि च ज्ञापितानि। तत्रायं पद्धतिः— होता उपांशु त्रिर्हिङ्कृत्य प्र वो वाजा इत्यासु ऋक्षु मध्यमस्वरेणानूच्यमानासु यजमानः पादाङ्गुष्ठाभ्यां भूमि मधः पीडयति; अध्वर्युस्तु स्फ्य मादाय तिष्ठन् सामिधेनीनां प्रणवे-प्रणवे एकैक मिध्मकाष्ठ माहवनीये ऽभ्यादधाति। 'समिध्यमानो अध्वरे'-इत्यस्या ऋचः प्रणवे 'समिद्धो अग्ने'-इत्यतः प्राक् एक मिध्मकाष्ठं परिशिष्यावशिष्टानां पञ्चानां काष्ठानां सहैव प्रक्षेपं कुर्यात् ॥

*, †, § 'गरिष्ठे'-इति ख, ग। ‡, ॥ 'मस्युलं'-इति क, ग।

ऽअसीति व्वीर्य्यं समादधतः स यदत ऊर्द्ध्वं मन्वाहोप-
स्तौत्येवैन मेतद्वीर्य्य मेवास्मिन् दधाति* ॥ १ ॥

अग्ने महां३॥† ऽअसि ब्राह्मण भारतेति। ब्रह्म
ह्यग्निस्तस्मादाह ब्राह्मणेति भारतेत्येष हि देवेभ्यो हव्यं
भरति तस्माद् भरतोऽग्निरित्याहुरेष उ वा ऽइमाः प्रजाः
प्राणो भूत्वा बिभर्त्ति तस्माद्वेवाह भारतेति‡ ॥ २ ॥

अथार्षेयं प्रवृणीते। ऋषिभ्यश्चैवैन मेतद्देवेभ्यश्च
निवेदयत्ययं महाव्वीर्य्यो यो यज्ञं प्रापदिति तस्मादा-
र्षेयं प्रवृणीते ॥ ३ ॥

परस्तादर्व्वाक् प्रवृणीते। परस्ताद्ध्यर्व्वाच्यः प्रजाः
प्रजायन्ते ज्यायसस्पतय ऽउ चैवैतं निह्नुत ऽइदꣳ हि
पितेवाग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात्परस्तादर्व्वाक् प्रवृ-
णीते ॥ ४ ॥

स ऽआर्षेय मुक्त्वाह। देवेद्धो मन्विद्ध ऽइति। देवा
ह्येत मग्र ऽऐन्धत तस्मादाह देवेद्ध ऽइति मन्विद्ध ऽइति
मनुर्ह्येत मग्र ऽऐन्ध तस्मादाह मन्विद्ध ऽइति§ ॥ ५ ॥

ऋषिष्टुत ऽइति। ऋषयो‖ ह्येत मग्रे स्तुवंस्तस्मादाहु-
ऽर्षिष्टुत ऽइति ॥ ६ ॥

---

* 'ति'—इति ख। † 'मह्वां३'—इति क, ख; 'मह्वाꣳ'—इति ग।

‡ 'ति'—इति ख। § 'ति'—इति ख। ‖ 'ऽइत्यृषयो'—इति ग।

व्विप्रानुमदित ऽइति। एते* वै व्विप्रा यदृषय ऽएते ह्येत मन्वमदंस्तस्मादाह व्विप्रानुमदित ऽइति ॥ ७ ॥

कविशस्त ऽइति। एते† वै कवयो यदृषय ऽएते ह्येत मशꣳसंस्तस्मादाह कविशस्त ऽइति ॥ ८ ॥

ब्रह्मसꣳशित ऽइति। ब्रह्मसꣳशितो ह्येष घृताहवन ऽइति घृताहवनो ह्येषः ॥ ९ ॥

प्रणीर्यज्ञानाꣳ रथीरध्वराणा मिति‡। एतेन§ वै सर्व्वान् यज्ञान् प्रणयन्ति ये च पाकयज्ञा ये चेतरे तस्मादाह प्रणीर्यज्ञाना मिति ॥ १० ॥

रथीरध्वराणा मिति। रथो ह वा एष भूत्वा देवेभ्यो यज्ञं व्वहति तस्मादाह रथीरध्वराणा मिति ॥ ११ ॥

अतूर्त्तो होता तूर्णिर्हव्यवाडिति। न ह्येतꣳ रक्षाꣳसि तरन्ति तस्मादाहातूर्त्तो होतेति तूर्णिर्हव्यवाडिति सर्वꣳ ह्येष पाप्मानं तरति तस्मादाह तूर्णिर्हव्यवाडिति ॥ १२ ॥

आस्पात्रं जुहूर्देवाना मिति। देवपात्रं वा ऽएष यदग्निस्तस्मादग्नौ सर्व्वेभ्यो देवेभ्यो जुह्वति देवपात्रꣳ

---

* 'ऽइत्येते'–इति ग।

† 'ऽइत्येते'–इति ग।

‡ 'ति'–इति ख।

§ 'मित्येतेन'–इति ग।

ह्येष प्राप्नोति ह वै तस्य पात्रं यस्य पात्रं प्रेप्सति* य ऽएव मेतद्वेद ॥ १३ ॥

चमसो देवपान ऽइति। चमसेन ह वा ऽएतेन भूतेन देवा भक्षयन्ति तस्मादाह चमसो देवपान ऽइति ॥ १४ ॥

अरां२॥† ऽइवाग्ने नेमिर्द्देवांस्त्वं परिभूरसीति। यथारान्नेमिः सर्व्वतः परिभूरेवन्त्वं देवान्त्सर्व्वतः परिभूरसीत्येवैतदाह ॥ १५ ॥

आवह देवान्यजमानायेति। तदस्मै यज्ञाय देवानावोढवा ऽआहाग्नि मग्न ऽआवहेति तदाग्नेयायाज्यभागायाग्नि मावोढवा ऽआह सोम मावहेति तत्सौम्यायाज्यभागाय सोम मावोढवा ऽआहाग्नि मावहेति तद्य ऽएष ऽउभयत्राच्युत ऽआग्नेयः पुरोडाशो भवति तस्मा ऽअग्नि मावोढवा ऽआह ॥ १६ ॥

अथ यथादेवतम्। देवां २॥ ऽआज्यपां २॥‡ ऽआवहेति तत्प्रयाजानुयाजानावोढवा ऽआह प्रयाजानुयाजा वै देवा ऽआज्यपा ऽअग्निꣳ होत्रायावहेति तदग्निꣳ

---

* 'प्रेप्स्यति'–इति च। † 'अरां३'–इति क, ख; 'अराꣳ'–इति ग, छ।

‡ 'देवां३ ऽआज्यपां३'–इति क, ख; 'देवाꣳ ऽआज्यपाꣳ'–इति ग; 'देवाँ ऽआज्यपाँ'–इति छ।

| | | |
|---|---|---|
| Pariçiṣta Parvan, (Text) Fasc. 1–5 @ /6/ each ... ... | Rs. 1 | 14 |
| Prākṛita-Paingalam, Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Prithivirāj Rāsa, (Text) Part II, Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |
| Ditto (English) Part II, Fasc. 1 ... ... ... | 0 | 12 |
| ta Lakṣanam, (Text) Fasc. 1 ... ... ... ... | 1 | 8 |
| ara Smṛti, (Text) Vol. I, Fasc. 1–8; Vol. II, Fasc. 1–6; Vol. III, .sc. 1–6 @ /6/ each ... ... ... ... | 7 | 8 |
| Parāçara, Institutes of (English) ... ... ... ... | 0 | 12 |
| Prabandhacintāmaṇi (English) Fasc. 1–2 @ /12/ each ... ... | 1 | 8 |
| *Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5–10; II, 1–6; III, 1–7; IV, 1–6; V, 1–8, @ /6/ each Fasc. ... ... ... | 12 | 6 |
| Sāṅkhya Sūtra Vṛtti, (Text) Fasc. 1–4 @ /6/ each .. ... | 1 | 8 |
| Ditto (English) Fasc. 1–3 @ /12/ each ... ... | 2 | 4 |
| Suçruta Saṁhitá, (Eng.) Fasc. 1 @ /12/ ... ... ... | 0 | 12 |
| *Taittereya Saṁhitā, (Text) Fasc. 14–45 @ /6/ each ... ... | 12 | 0 |
| Tāṇdya Brāhmaṇa, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Tattva Cintāmaṇi, (Text) Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–10, Vol. III, Fasc. 1–2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1–5, Part IV, Vol. II, Fasc. 1–12 @ /6/ each ... ... ... ... | 14 | 10 |
| Trikāṇda-Maṇḍanam, (Text) Fasc. 1-2 @ /6/ ... ... ... | 0 | 12 |
| Tul'si Sat'sai, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Upamita-bhava-prapañca-kathā (Text) Fasc. 1-3 @ /6/ each ... | 1 | 2 |
| Uvāsagadasāo, (Text and English) Fasc. 1–6 @ /12/ ... ... | 4 | 8 |
| Varāha Purāṇa, (Text) Fasc. 1–14 @ /6/ each ... ... .. | 5 | 4 |
| Varsa Krya Kaumudi,* Fasc. I ... ... ... ... | 0 | 6 |
| *Vāyu Purāṇa, (Text) Vol. I, Fasc. 2–6; Vol. II, Fasc. 1–7, @ /6/ each ... ... ... ... ... | 4 | 8 |
| Viṣṇu Smṛti, (Text) Fasc. 1–2 @ /6/ each ... ... ... | 0 | 12 |
| Vivādaratnākara, (Text) Fasc. 1–7 @ /6/ each ... ... ... | 2 | 10 |
| Vṛhannāradīya Purāṇa, (Text) Fasc. 1–6 @ /6/ ... ... | 2 | 4 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1–6 ... ... ... | 2 | 4 |

*Tibetan Series.*

| | | |
|---|---|---|
| Pag-Sam Thi S'iñ, Fasc. 1–4 @ 1/ each ... ... ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1–5, @ 1/ each ... ... ... ... ... ... | 13 | 0 |
| Rtogs brjod dpag hkhri S'iñ (Tib. & Sans.) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... ... | 10 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| 'Ālamgīrnāmah, with Index, (Text) Fasc. 1–13 @ /6/ each... ... | 4 | 14 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1–2 @ /12/ ... ... | 1 | 8 |
| Āīn-i-Akbarī, (Text) Fasc. 1–22 @ 1/ each ... ... ... | 22 | 0 |
| Ditto (English) Vol. I, Fasc. 1–7, Vol. II, Fasc. 1–5, Vol. III, Fasc. 1–5, @ 1/12/ each ... ... ... ... | 29 | 12 |
| Akbarnâmah, with Index, (Text) Fasc. 1–37 @ 1/ each ... ... | 37 | 0 |
| Ditto English Fasc, 1–5 @ 1/ each ... ... ... | 5 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger ... ... ... | 0 | 6 |
| Bādshāhnāmah, with Index, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Catalogue of Arabic Books and Manuscripts ... ... ... | 1 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1–3 @ 1/ each ... ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1–21 @ 1/ each ... ... ... ... ... ... | 21 | 0 |
| Farhang-i-Rashīdī, (Text) Fasc. 1–14 @ 1/ each ... ... | 14 | 0 |
| Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1–4 @ /12/ each ... ... ... ... ... ... | 3 | 0 |
| Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1–9 @ /6/ each ... ... | 3 | 6 |
| Ditto of 'Azādī, (Text) Fasc. 1–4 @ /6/ each ... ... | 1 | 8 |
| Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1–6 @ /12/ each ... ... | 4 | 8 |
| Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1–3 @ /6/ each ... ... | 1 | 2 |
| Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... ... | 38 | 4 |
| Maāṣir-ul-Umarā, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. III, Fasc. 11-12; Index to Vol. II, Fasc. 10–12 @ /6/ each ... ... | 18 | 2 |
| Maghāzi of Wāqidi, (Text) Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

| | | |
|---|---|---|
| Muntakhabu-t-Tawārikh, (Text) Fasc. 1–15 @ /6/ each ... | Rs. 5 | 10 |
| Muntakhabu-t-Tawārikh, (English) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5 and Index; Vol. III, Fasc. 1 @ /12/ each ... ... | 12 | 0 |
| Muntakhabu-l-Lubāb, (Text) Fasc. 1–19 @ /6/ each ... | 7 | 2 |
| Ma'āṣir-i-'Ālamgīrī, (Text), Fasc. 1–6 @ /6/ each ... | | |
| Nukhbatu-l-Fikr, (Text) Fasc. 1 ... ... ... | | |
| Niẓāmī's Khiradnāmah-i-Iskandarī, (Text) Fasc. 1-2 @ /12/ each | | |
| Riyāẓu-s-Salāṭīn, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | |
| Ṭabaqāt-i-Nāṣirī, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Ditto (English) Fasc. 1–14 @ /12/ each ... ... | 10 | 8 |
| Ditto Index ... ... ... ... | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barni (Text) Fasc. 1–7 @ /6/ each... | 2 | 10 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, (Text) Fasc. 1–6 @ /6/ each... | 2 | 4 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... | 3 | 0 |
| Wis o Rāmīn. (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Ẓafarnāmah, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–8 @ /6/ each .. | 6 | 6 |
| Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 ... ... ... ... | 0 | 12 |

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | | |
|---|---|---|---|
| 1. | Asiatic Researches. Vol. VII, Vols. XI and XVII, and Vols. XIX and XX @ 10/ each ... ... ... | 50 | 0 |
| 2. | Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No. | | |
| 3 | Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members | | |
| | *N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.* | | |
| 4. | Centenary Review of the Researches of the Society from 1784–1883 ... | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... .. | 4 | 0 |
| | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J.A.S.B.*, 1868) ... ... ... ... | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... ... | 4 | 0 |
| | Introduction to the Maithilī Language of North Bihār, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J.A.S.B.*, 1882) ... ... ... ... ... | 4 | 0 |
| 5. | Anīs-ul-Musharrahīn ... ... ... ... ... | 3 | 0 |
| 6. | Catalogue of Fossil Vertebrata ... ... ... ... | 3 | 0 |
| 7. | Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion | 3 | 8 |
| 8. | Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... | 32 | 0 |
| 9. | Jawāmlu-l-'ilm ir-riyāẓī, 168 pages with 17 plates, 4to. Part I ... | 2 | 0 |
| 10. | Khizānatu-l-'ilm ... ... ... ... ... | 4 | 0 |
| 11. | Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... | 40 | 0 |
| 12. | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ... | 18 | 0 |
| 13. | Sharaya-ool-Islām ... ... ... ... ... | 4 | 0 |
| 14. | Tibetan Dictionary, by Csoma de Körös ... ... ... | 10 | 0 |
| 15. | Ditto Grammar " " ... ... ... | 8 | 0 |
| 16. | Kaçmīraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... | 3 | 0 |
| 17. | A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal by C. R. Wilson... ... ... | 1 | 0 |
| 18. | Memoir on maps illustrating the Ancient Geography of Kaśmir by M. A. Stein Ph.D., Jl. Extra No. 2 of 1899 ... ... ... | 4 | 0 |

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. 1–29 @ 1/ each ... ... | 29 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... | 5 | 0 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

18-1-1901.

**Books are supplied by V-P.P.**

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NO. 988.



# ॥ शतपथब्राह्मणम् ॥

॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRĀHMAṆA

## OF THE WHITE YAJURVEDA,

WITH THE

COMMENTARY OF SĀYAṆA ĀCĀRYA.

EDITED BY

ĀCĀRYA SATYAVRATA SĀMAS'RAMĪ.

VOL. I, FASCICULUS IV.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1901.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.,

46, GREAT RUSSELL STREET, LONDON, W.C., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

BIBLIOTHECA INDICA.

*Sanskrit Series.*

| | | | |
|---|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each ... | Rs. | 1 | 8 |
| Advaitachinta Kaustubhe, Fasc. 1 ... ... ... ... | | 0 | 6 |
| *Agni Purāṇa, (Text) Fasc. 4–14 @ /6/ each ... .. .. | | 4 | 2 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5 and Vol. II, Fasc. 1–5 Vol. III, Fasc. 1–5 Vol. IV, Fasc. 1–5 @ /6/ ... ... ... | | 7 | 8 |
| Aṇu Bhāṣyam, (Text) Fasc. 1–5 @ /6/ each ... ... ... | | 1 | 14 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... ... ... | | 0 | 12 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1–6 @ /6/ each ... | | 2 | 4 |
| Açvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... ... ... | | 1 | 14 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... ... | | 10 | 0 |
| *Bhāmati, (Text) Fasc. 4–8 @ /6/ each ... ... ... | | 1 | 14 |
| Bhāṭṭa Dipikā Vol. I, Fasc. 1–2 ... ... ... ... | | 0 | 12 |
| Bṛhaddēvatā (Text) Fasc. 1–4 @ /6/ each ... ... ... | | 1 | 8 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1–6 @ /6/ each ... ... | | 2 | 4 |
| Bodhicaryavatara of Cantidevi, Fasc. 1 ... ... . | | 0 | 6 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–3 @ 2/ each ... | | 6 | 0 |
| Çatapatha Brāhmaṇa, Fasc. 1–4 ... ... ... ... | | 1 | 8 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–10 @ /6/ each ... ... ... ... | | 19 | 14 |
| Çlokavartika, (English) Fasc. 1–2 ... ... ... ... | | 1 | 8 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 4–15 @ /6/ each ... | | 4 | 8 |
| Ditto Çāṅkhāyana, (Text) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4, Vol. III, Fasc. 1–4 @ /6/ each ... ... | | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1–3 @ /6/ each ... ... ... | | 1 | 2 |
| Gadadhara Paddhati Kālasāra Vol I. Fasc. 1–2 ... ... ... | | 0 | 12 |
| Kāla Mādhava, (Text) Fasc. 1–4 @ /6/ each ... ... ... | | 1 | 8 |
| Kāla Viveka, Fasc. 1–4 ... ... ... ... | | 1 | 8 |
| Kātantra, (Text) Fasc. 1–6 @ /12/ each ... ... ... | | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1–14 @ /12/ each ... ... | | 10 | 8 |
| Kūrma Purāṇa, (Text) Fasc. 1–9 @ /6/ each ... ... ... | | 3 | 6 |
| Lalita-Vistara, (English) Fasc. 1–3 @ /12/ each ... ... | | 2 | 4 |
| Madana Pārijāta, (Text) Fasc. 1–11 @ /6/ each... ... ... | | 4 | 2 |
| Mahā-bhāṣya-pradīpōdyōta, (Text) Fasc. 1–8 @ /6/ each ... ... | | 3 | 0 |
| Manuṭīkā Saṅgraha, (Text) Fasc. 1–3 @ /6/ each ... ... | | 1 | 2 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1–6 @ /12 each ... ... | | 4 | 8 |
| *Mīmāṁsā Darçana, (Text) Fasc. 7–19 @ /6/ each ... ... | | 4 | 14 |
| Nārada Smṛti, (Text) Fasc. 1–3 @ /6/ ... ... ... | | 1 | 2 |
| Nyāyavārtika, (Text) Fasc. 1–4 @ /6/ ... ... ... | | 1 | 8 |
| *Nirukta, (Text) Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each ... | | 5 | 4 |
| Nyayabinduṭīkā, (Text) ... ... ... ... ... | | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–3 @ /6/ each ... ... ... ... | | 3 | 6 |
| Padumawati Fasc. 1–3 @ 2/ ... ... ... ... | | 6 | 0 |

होत्रायावोढवा ऽआह स्वं महिमान मावहेति तत्स्वं महिमान मावोढवा ऽआह व्याग्वा ऽअस्य स्वो महिमा तद्वाच मावोढवा ऽआहा च वह जातवेदः सुयजा च यजेति तद्या ऽएवैतद्देवता ऽआवोढवा ऽआह ता ऽएवैतदाहा चैना वहानुष्ठ्या* च यजेति यदाह सुयजा च यजेति ॥ १७ ॥

स वै तिष्ठन्नन्वाह । अन्वाह† ह्येतदसौ ह्यनुवाक्या तदसावेवैतद्भूत्वान्वाह तस्मात्तिष्ठन्नन्वाह ॥ १८ ॥

आसीनो याज्यां यजति । इयᳪ‡ हि याज्या तस्मान्न कश्चन तिष्ठन् याज्यां यजतीयᳪ हि याज्या तदियमेवैतद्भूत्वा यजति तस्मादासीनो याज्यां यजति ॥ १९ ॥ ४ ॥

॥ इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् [४. २.]॥

सामिधेन्यनुवचनानन्तरमग्ने महाँ असीति[१] निगदस्यानुवचनं[२] विधित्सुस्तत्प्रतिपाद्यायाः प्रशंसायाः कर्त्तव्यतां तदुपोद्घातत्वेन

* 'नुष्ठ्या'—इति ख, सायणीयभाष्यपुस्तकेषु च बहुषु ।

† 'न्वाहान्वाह'—इति ग । ‡ 'यजतीयᳪ'—इति ग ।

१— तै० ब्रा० ३. ५. ३. १ ; सं० २. ५. ६. १ ।

२— निगदानां यजुष्ट्वाधिकरणम्— मी० द० २अ० १पा० ३८—४५ सू० ; न्या० मा० २. १. १२ अधि० द्रष्टव्यम् ।

प्रतिपादयति—"एतद्ध वा इति । 'गरिष्ठे' गुरुतमे । "प्रियस्थि-रेत्यादिना गुरुशब्दस्य गरादेशः[१] । हविर्वहनार्थं गुरुतमे तस्मिन् होतृत्वे योजयित्वा तस्योत्साहं जनयितुम् 'उपामदन्' अस्तुवन् । "वीर्यवान् वै"-इत्यादिः स्तुतिप्रकारः । अनया च स्तुत्या 'तम्' अग्निं 'वीर्ये' सम्यक् स्थापितवन्तः । इदं लौकिकेन दृष्टान्तेन प्रतिपादयति— "यथेद मिति । निगदस्यानुवचनं विधत्ते— "स यदिति । 'अतः' अस्मात्, सामिधेन्यनुवचनादित्यर्थः ॥ १ ॥

अनुवक्तव्यं निगदं पठित्वा पदशो व्याचष्टे— "अग्ने महानित्या-दिना । "स त्रेधात्मानं व्यकुरुताग्निं तृतीयं वायुं तृतीयम्"-इत्यादिश्रुतेः[२] अग्निवाय्वादित्यात्मना ब्रह्मणस्त्रेधावस्थानात् "ब्रह्म ह्यग्निः"-इति तादात्म्यप्रतिपादनम् । 'तस्माद्' ब्रह्मणो जातत्वाद् 'ब्राह्मणेति' अग्निः स्तूयते इत्यर्थः । 'भारत'-इति पद मनूद्य द्वेधा निर्ब्रूते— "एष हीत्यादिना ॥ २ ॥

"अथार्षेय मित्यादि । होतृकर्तृकप्रवरविधिः ॥ ३ ॥

तत्र धर्मविशेष माह— "परस्तादर्वागिति । तस्मिन्नार्षेयप्रवरणे कूटस्थ मृषि मारभ्य तत्पुत्रपौत्रादिक्रमेणार्वाचीनं वरणं कर्त्तव्यम् । यथा आङ्गिरसबार्हस्पत्यभारद्वाजेत्यादि । तथा च 'ज्यायसः' भावपरो निर्देशः; ज्यैष्ठ्यस्य 'पतय एवैतत् निह्नुते' अनेन प्रवरणेन निवेदयति । स्पष्ट मन्यत् ॥ ४ ॥

---

१— पा॰ सू॰ ६. ४. १५७ ।

२— "अग्निः, स त्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयम्"—इति इहैवोपरिष्टात् १०. ६. ५. ३. ।

"देवेद्धः"-इत्यादि-निवित्पदानाम्[1] अनुवचनं विधत्ते— "स आर्षेय मुक्तेति। तानि पदानि क्रमेण व्याचष्टे— "देवा ह्येत मित्यादिना। स्पष्टोऽर्थः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

"आस्यात्र मिति। आस्यरूपं पात्रम् 'आस्यात्रम्'। "देवपात्रं वा इति। अग्नौ प्रक्षिप्तस्य हविषो देवैरद्यमानत्वादग्नेर्देवपात्रत्वम् ॥

एतद्वेदितुः फल माह— "प्राप्नोति हेति। 'यस्य' खलु भोज्यस्य वस्तुनः सम्बन्धि 'पात्रं' 'प्रेप्सति'[2] प्राप्तु मिच्छति, तद्वस्तुसम्बन्धि 'पात्रं' 'प्राप्नोति' एवं वेदितेत्यर्थः ॥ १३ ॥ १४ ॥

"अराँ२॥ऽइवेति। "यथारान्नेमिरिति। (यथा) चक्रस्य नाभौ नेम्याञ्च संयोजिताः कीलकाः 'अराः', तान् 'यथा' 'नेमिः' परितो वर्त्तमानान् व्याप्नोति, तद्वद् 'देवान्' अग्निरपि संव्याप्नोती-त्यर्थः ॥ १५ ॥

निवित्पदानन्तरं वक्तव्य मावाहननिगद मप्यनूद्य पदशो व्याचष्टे— "आवह देवानित्यादिना[3]। "देवानावोढवा इति। आङ्पूर्वाद्वहतेः

---

१— यजुर्निवित्पदान्येकादश, ऋङ्निवित्पदानि तु द्वादश; सन्ति च ऋग्यजुषोः पाठभेदाः। ऋग्वेदीयनिवित्पदानि ऋक्परिशिष्टीयनिविदध्याये पठितानि (१. १-१२), ऐतरेयब्राह्मणे च प्रपञ्च्य विहितानि (२. ५. १, २.)। यजुर्निवित्पदानि तु तैत्तिरीयब्राह्मणे समाम्नातानि (३. ५. ३. १-११), तैत्तिरीयसंहितायाञ्च तानि विहितानि (२. ५. ९. २-१२.); इहापि प्रपञ्च्यैव व्याख्यायन्ते।

२— 'प्रेप्स्यति'-इति ज, झ, ढ। मूलेऽप्येव मेव पाठभेदः।

३— आवाहननिगदमन्त्रास्तु त्रयोदश। आम्नातास्तेऽपि तैत्तिरीयब्राह्मणे ३. ५. ३; विहिताश्च ते तत्संहितायाम् २. ५. ९. ७, ८।

कार्थे तवैन्-प्रत्ययः[१]; यष्टव्यान् देवान् आवोढु मानेतु मित्यर्थः। "आवह देवान्"-इति सामान्योक्तस्य आवाहनस्य विवरणम् "अग्नि मग्न आवह"-इत्यादि निगदमिद्धम् ॥ १६ ॥

"अथ यथादेवत मिति। दर्शपूर्णमासयोरुभयत्र योऽग्निः पुरोडाशदेवता, तदावाहनानन्तरं निर्वापसमये यस्यै-यस्यै देवतायै येन क्रमेण निरुप्तम्, तेनैव क्रमेण तस्याः सर्वस्याः देवतायाः "अग्नीषोमावावह"-इत्यादिवाक्यैरावाहनं कार्य मित्यर्थः॥

"देवाँ२॥ऽआज्यपानिति। प्रयाजानुयाजदेवतावाहनं विवक्षित मिति व्याचष्टे— "तत्प्रयाजानुयाजानिति। कर्म्मवाचिना प्रयाजानुयाजशब्देन तत्सम्बन्धिनो देवा लक्ष्यन्ते। ते हि हविर्भागाङ्गीकाराय वोढव्याः। तेषा माज्य मेव हि भागः; "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तद्, यदुपभृति प्रयाजानुयाजेभ्यस्तत्"-इति[२] जौहवौपभृतयोराज्ययोस्तद्भविष्ट्वश्रवणात्[३]॥

---

१— पा० सू० ३. ४. ९। २— २०१ पृ० ८, ९ कण्डिके द्रष्टव्ये।

३— "त्रयस्त्रिंशद्वै देवाः सोमपाः, त्रयस्त्रिंशदसोमपाः। अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, प्रजापतिश्च, वषट्कारश्चैते देवाः सोमपाः; एकादश प्रयाजाः, एकादशानुयाजाः, एकादशोपयाजाः; एतेऽसोमपाः पशुभाजनाः"-इति ऐ० ब्रा० २. २. ८। तत्र वसूनां अष्ट नामानि तै०आर० १. ९. १, वायूना मेकादश नामानि च तत्रैव १. ९. ४, आदित्यानां द्वादश नामानि बृ० उप० ३. ९. ५, निघ० ५. ६, निरु० १२. ११–३० द्रष्टव्यानि। प्रयाजानां परिचयस्तु तै० ब्रा० ३. ६. २, ३; तथा अनुयाजाना मपि तत्रैव ३. ६. १३, १४; एव मुपयाजानान्तु तै० सं० १. ५. ११, ६. ४. १।

"अग्निं होत्राय"-इत्यनेन स्विष्टकृतोऽग्नेरावाहनं विवक्षितम् ॥

"स्वं महिमान मिति। देवताया अग्नेः स्वभूतो वायुरूपो 'महिमा' ; तस्यावाहनम् "आवह जातवेदः"-इतिवाक्येन ॥

प्राक्प्रतिपादितस्याज्यभागादिदेवतानां सर्वासा मावाहनस्य निगमनम्— "सुयजा च यजेति"-इति। अस्य व्याख्यानम्— "अनुष्ठ्या च यजेति"-इति। 'अनुष्ठ्या'[1] अनुक्रमेण, सम्यगित्यर्थः ॥ १७ ॥

यदेतत्सामिधेन्यादिक मनुवचनादि, तत्सर्वं तिष्ठतैव वक्तव्य मिति विधत्ते— "स वा इति। कुत इत्यत आह— "अन्वाह होतदिति। अनुवाक्या हि द्युलोकरूपा तिष्ठतश्च द्युलोकसम्बन्धो भवति ; अतोऽनुवाक्या[2] तावत्तिष्ठतैवानुवक्तुं योग्या ; अनुवचनसाम्यात्सामिधेन्यादिक मपि तिष्ठतैव पठितुं युक्त मित्यर्थः ॥ १८ ॥

याज्यायां विशेष माह— "आसीनो याज्या मिति। 'हि' यस्मात् 'इयं' पृथिव्यात्मिकैव 'याज्या'[3], तस्मात् याज्यापाठस्तिष्ठता

---

१— 'अनुष्ठ्या'-इति पाठो मद्दृष्टेषु डातिरिक्तेषु सर्वेष्वेव सायणभाष्यपुस्तकेषु; डा० वेवर-दृष्टभाष्यपुस्तकेषु चैव मेव।

२,३— "सर्वेषा मग्रेऽग्रेऽनुवाक्यास्ततो याज्याः"-इति आश्व० श्रौ० सू० ३. ७. ३। "पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति ; जातानेव भ्रातृव्यान् प्रणुदते। उपरिष्टाल्लक्ष्मा याज्या ; जनिष्यमाणानेव प्रतिनुदते"-इति तै० सं० २. ६. २. ३। "मन्त्रप्रतिपाद्याया देवताया नामधेयं लक्ष्म ; तद् यस्या ऋचि पूर्वार्द्धे विद्यते, सा पुरोऽनुवाक्या ; तन्नाम यस्या मुत्तरार्द्धे विद्यते, सा याज्या। तद्यथा— 'अग्निर्मूर्द्धा'-इति पूर्वार्द्धेऽग्निशब्दः, 'जिह्वा मग्ने चकृषे'-इत्युत्तरार्द्धेऽग्निशब्दः"-इति च तत्र सा० भा०। "ह्वयति वा अनुवाक्यया, प्रयच्छति याज्यया •—• सा

न कर्त्तव्यः; 'आसीनस्य' सन्निकर्षविशेषात् पृथिवीरूपापन्नो भवति; तदिय मित्युक्तम्— "इय मेवैतद् भूत्वेति ॥ १९ ॥ ४ [४. २.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे चतुर्थाध्याये द्वितीयं ब्राह्मणम्[1] ॥

---

यो ह वा ऽअग्निः सामिधेनीभिः समिद्धः। अतितराꣳ* ह वै स इतरस्मादग्नेस्तपत्यनवधृष्यो हि भवत्यनवमृश्यः ॥ १ ॥

स यथा हैवाग्निः। सामिधेनीभिः समिद्धस्तपत्येवꣳ हैव ब्राह्मणः सामिधेनीर्व्विद्वाननुब्रुवंस्तपत्यनवधृष्यो हि भवत्यनवमृश्यः ॥ २ ॥

---

या पुरस्ताल्लक्षणा सानुवाक्या स्यात् ०—० अथ योपरिष्टाल्लक्षणा सा याज्या स्यात्"—इति चेहैवोपरिष्टात् ७. २. १७—१९। "पुरोऽनुवाक्या देवतास्मरणार्था, याज्या च हविःप्रदानार्था"—इति हि कात्या० श्रौ० १. ८. ९ सू० वृ०।

१— अस्मिन् ब्राह्मणे प्रवरनिगदमन्त्रपदाना मावाहननिगदमन्त्रपदानाञ्च पाठविधानव्याख्यानान्याम्नातानि, याज्यानुवाक्ययोरासनोपदेशश्चाम्नातः। तत्र चाहवनीयस्योत्तरत उपविश्य दक्षिणं जान्वाच्य "वृणीध्वं हव्यवाहनोऽरम्"—इति ब्रुवतैव होत्रा प्रवरमन्त्रपाठः कार्यः॥

* 'समिद्धोऽतितराꣳ'—इति ख। 'समिद्धो। ऽतितराꣳ'—इति ग।

सोऽन्वाह। प्र व ऽइति प्राणो वै प्रवान् प्राण मेवैतया समिन्धेऽग्न ऽआयाहि व्वीतय ऽइत्यपानो वा ऽएतवानपान मेवैतया समिन्धे बृहच्छोचा यविष्ठ्येत्युदानो वै बृहच्छोचा ऽउदान मेवैतया समिन्धे ॥ ३ ॥

स नः पृथु श्रवाय्य मिति। श्रोत्रं वै पृथु श्रवाय्यꣳ श्रोत्रेण हीद मुरु पृथु शृणोति श्रोत्र मेवैतया समिन्धे ॥ ४ ॥

ईडेन्यो नमस्य ऽइति। व्वाग्वा ईडेन्या* व्वाग्घीदꣳ सर्व्वं मीट्टे व्वाचेदꣳ सर्व्वं मीडितं व्वाच मेवैतया समिन्धे ॥ ५ ॥

अश्वो न देववाहन ऽइति। मनो वै देववाहनं मनो हीदं मनस्विनं भूयिष्ठं व्वनीवाह्यते मन ऽएवैतया समिन्धे ॥ ६ ॥

अग्ने दीद्यतं बृहदिति। चक्षुर्व्वै दीदयेव चक्षुरेवैतया समिन्धे ॥ ७ ॥

अग्निन्दूतं व्वृणीमह ऽइति। य एवायं मध्यमः प्राण ऽएत मेवैतया समिन्धे सा हैषान्तस्था प्राणाना मतो ह्यन्य ऽऊर्द्ध्वाः प्राणा ऽअतोऽन्ये ऽवाञ्चोऽन्तस्था ह भव-

---

* 'ईडेन्यो'–इति क, ग।

त्यन्तस्था मेनं मन्यन्ते य एव मेता मन्तस्थां प्राणानां व्वेद ॥ ८ ॥

शोचिष्केशस्त मीमह ऽइति। शिश्नं वै शोचिष्केशꣳ शिश्नꣳ ह्यीदꣳ शिश्निनं भूयिष्ठꣳ शोचयति शिश्न मेवैतया समिन्धे ॥ ९ ॥

समिद्धो ऽअग्न ऽआहुतेति। य ऽएवाय मवाङ् प्राण एत मेवैतया समिन्ध ऽआजुह्वोता दुवस्यतेति सर्व्व मात्मानꣳ समिन्ध ऽआ नखेभ्योऽथो लोमभ्यः ॥ १० ॥

स यद्येनं प्रथमायाꣳ सामिधेन्या मनुव्याहरेत्। तं प्रति ब्रूयात् प्राणं व्वा ऽएतदात्मनोऽम्रावाधाः प्राणे-नात्मन ऽआर्त्तिं मारिष्यसीति तथा हैव स्यात् ॥ ११ ॥

यदि द्वितीयस्या मनुव्याहरेत्। तं प्रति ब्रूयादपानं व्वा ऽएतदात्मनोऽम्रावाधा अपानेनात्मन ऽआर्त्तिं मारिष्यसीति तथा हैव स्यात् ॥ १२ ॥

यदि तृतीयस्या मनुव्याहरेत्। तं प्रति ब्रूयादुदानं व्वा ऽएतदात्मनोऽम्रावाधा उदानेनात्मन ऽआर्त्तिं मारि-ष्यसीति तथा हैव स्यात् ॥ १३ ॥

यदि चतुर्थ्या मनुव्याहरेत्। तं प्रति ब्रूयाच्छ्रोत्रं व्वा ऽएतदात्मनोऽम्रावाधाः श्रोत्रेणात्मन ऽआर्त्तिं मारि-ष्यसि बधिरो भविष्यसीति तथा हैव स्यात् ॥ १४ ॥

यदि पञ्चम्या मनुव्याहरेत्। तं प्रति ब्रूयाद्वाचं व्वा ऽएतदात्मनोऽमावाधा व्वाचात्मन ऽआर्त्तिं मारिष्यसि मूको भविष्यसीति तथा हैव स्यात् ॥ १५ ॥

यदि षष्ठ्या मनुव्याहरेत्। तं प्रति ब्रूयान्मनो वा ऽएतदात्मनोऽमावाधा मनसात्मन ऽआर्त्तिं मारिष्यसि मनो मुषिगृहीतो मोमुघ*श्चरिष्यसीति तथा हैव स्यात् ॥ १६ ॥

यदि सप्तम्या मनुव्याहरेत्। तं प्रति ब्रूयाच्चक्षुर्व्वा ऽएतदात्मनोऽमावाधाश्चक्षुषात्मन आर्त्तिं मारिष्यस्यन्धो भविष्यसीति तथा हैव स्यात् ॥ १७ ॥

यद्यष्टम्या मनुव्याहरेत्। तं प्रति ब्रूयान्मध्यं व्वा ऽएतत् प्राण मात्मनोऽमावाधा मध्येन प्राणेनात्मन ऽआर्त्तिं मारिष्यस्युद्ध्माय† मरिष्यसीति तथा हैव स्यात् ॥ १८ ॥

यदि नवम्या मनुव्याहरेत्। तं प्रति ब्रूयाच्छिश्नं व्वा ऽएतदात्मनोऽमावाधाः शिश्नेनात्मन ऽआर्त्तिं मारिष्यसि क्लीवो भविष्यसीति तथा हैव स्यात् ॥ १९ ॥

यदि दशम्या मनुव्याहरेत्। तं प्रति ब्रूयादपानं वा

---

* 'मोमुघ'–इति चातिरिक्तेषु ; 'मोमुग'–इति च दृष्टो डा० वेवरेण।

† 'स्युध्माय'–इति चातिरिक्तेषु ; 'स्युद्धाय'–इति च दृष्टो डा० वेवरेण।

ऽएतत् प्राण मात्मनोऽमावाधा ऽस्रवाचा प्राणेनात्मन ऽआर्त्तिं मारिष्यस्यपिनह्यो मरिष्यसीति तथा हैव स्यात् ॥ २० ॥

यद्येकादश्या मनुव्याहरेत् । तं प्रति ब्रूयात् सर्व्वं व्वा ऽएतदात्मान ममावाधाः सर्व्वेणात्मनार्त्तिं मारिष्यसि क्षिप्रेऽमुं लोक मेष्यसीति तथा हैव स्यात् ॥ २१ ॥

स यथा हैवाग्निः । सामिधेनीभिः समिद्ध मापद्यार्त्तिं न्येत्येवं हैव ब्राह्मणः सामिधेनीर्व्विद्वांस मनुब्रुवन्त* मनुव्याहृत्यार्त्तिं न्येति ॥ २२ ॥ ५ ॥

॥ इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् [४. ३.] ॥

सामिधेनीभिर्ऋग्भिः समिद्धस्याग्नेः लौकिकाग्निसकाशादतिशय माह—"यो ह वा इति । यस्मादतिशयेन 'तपति', अतः राक्षसादिभिः 'धर्षितुं' हिंसितुं, (मर्शितुं) स्प्रष्टुं न शक्य इत्यर्थः ॥ १ ॥

समिद्धाग्निदृष्टान्तेन एवंवेदितुर्होतुरपि तद्वदनुवचनं कुर्वतो यथोक्तविशेषापत्तिर्भवतीत्याह— "स यथेति । 'अनवधृष्यः'-'अनवमृश्यः'-इत्युभयत्र धृषेर्मृशेश्च[1] "ऋदुपधाच्चाक्लृपिचृतेः"-इति[2] कर्मणि क्यप् ॥ २ ॥

---

* 'व्विद्वांसं समनुब्रुवन्त'-इति च ।

१— 'मृषेश्च'-इति जादिष्वपपाठः । "धृष प्रसहने"-इति धा० चु० प० ३१५ । "मृश आमर्शने"-इति धा० तु० प० १४२ । 'आमर्शनं स्पर्शः'-इति सि० कौ० । २— पा० सू० ३. १. ११० ।

अथैताः सामिधेनीः प्रत्येकं तत्तल्लिङ्गोपन्यासेन प्राणापान-श्रोत्रादिकरणग्रामविशिष्टात्मसंस्कारहेतुतया प्रशंसति— "सोऽस्याहे-त्यादिना। "प्राणो वै प्रवानिति। प्रगमनयुक्तत्वात्[1] 'प्राणः' 'प्र'-शब्दवान्। प्राणवृत्तिर्हि इड़ापिङ्गलाभ्यां प्राचीनं निर्गच्छति, अतः ( 'एतया' ) प्रशब्दोपेतया प्रथमया सामिधेन्या[2] प्रगमनवन्तं[3] 'प्राण मेव' 'समिन्धे' दीपयति। एव मुत्तरत्रापि योज्यम् ॥

"अपानो वा एतवानिति। बहिर्निर्गतस्य वायोरात्माभिमुखी वृत्तिरपानः; अत आगमनविशिष्टत्वात् 'अपानः' आकारोपसर्ग-वानित्यर्थः[4] ॥

"उदानो वै वृहच्छोचा इति[5]। 'वृहत्' अधिकं 'शोचते' दीप्यत इति 'वृहच्छोचाः' अग्निः; उदानवायुरपि देहस्योत्क्षेपणात् अधिकतेजोयुक्तः; अतो 'वृहच्छोचाः'-इतिशब्देन 'उदानः' उपस्थाप्यते ॥ ३ ॥

---

१— 'प्राग्गमनयुक्तत्वात्'-इति ङ।

२— "प्र वो वाजा अभिद्यवः। हविष्मन्तो घृताच्या। देवाञ्जिगाति सुम्नयुः"-इति प्रथमा सामिधेनी 'प्रवती', 'प्रेतिलिङ्गा' वा। तै० ब्रा० ३. ५. २. १।　　　३— 'प्राग्गमनवन्तं'-इति ङ।

४— "अग्न आ याहि वीतये। गृणानो हव्यदातये। नि होता सत्सि बर्हिषि"-इति द्वितीया सामिधेनी 'आवती', 'एतिलिङ्गा' वा। तै० ब्रा० ३. ५. २. २।

५— "तं त्वा समिद्भिरङ्गिरः। घृतेन वर्द्धयामसि। वृहच्छोचा यविष्ठ्य"-इति तृतीया सामिधेनी 'गीर्वती'। तै० ब्रा० ३. ५. २. ३।

"स न इति। "श्रोत्रं वै पृथु श्रवाय्य मिति[1]। 'पृथु' विस्तीर्णं श्रवणसाधनं 'पृथु श्रवाय्यम्'। अनेन शब्देन श्रोत्रेन्द्रियं विवक्षित मित्याह— "श्रोत्रेण ह्रीति। 'उरु'-इति पृथुशब्दव्याख्यानम् ॥ ४ ॥

"ईडेन्य इति। "वाग्वा ईडेन्येति। "ईडेन्यो नमस्यः"—इत्यृचि[2] 'ईडेन्य'-शब्देन वाग् विवक्षिता। कथ मेतदित्याशङ्क्योपपादयति— "वागिति। 'वाग्' एव खल्विदं 'सर्वं' जगत् 'ईट्टे' स्तौति। "ईड़ स्तुतौ"-इति धातुः[3]। यत्राप्यन्यः स्तोता, तत्रापि वाचैव करण-भूतया सर्व मीड़ितं भवति। ईट्टे ईड्यते अनयेति वा कर्त्तृकरण-व्युत्पत्त्या 'ईड़ेन्य'-शब्दस्य वाग्वाचकत्व मवगन्तव्य मित्यर्थः ॥ ५ ॥

"अश्वो न इति। "मनो वै देववाहन मिति। "अश्वो न देववाहनः"-इति[4] 'देववाहन'-शब्दो मनस उपलक्षकः। 'हि' यस्मात् 'मनः' 'मनस्विनं' पुरुषं 'भूयिष्ठम्' अत्यधिकं 'वनी-वाह्यते' भृशं वहति, देवान् शीघ्रं प्रापयति; अतो देववाहनं मन इत्यर्थः ॥ ६ ॥

"अग्ने दीद्यत मिति। "चक्षुर्वै दीदयेवेति। 'चक्षुः' इन्द्रियं

---

१— "स नः पृथु श्रवाय्यम्। अच्छा देव विवाससि। बृहदग्ने सुवीर्य्यम्"— इति चतुर्थी सामिधेनी 'पृथुवती'। तै० ब्रा० ३. ५. २. ४।

२— "ईडेन्यो नमस्यस्तिरः। तमाꣳसि दर्शतः। समग्निरिध्यते वृषा"— इति पञ्चमी सामिधेनी 'नमस्वती'। तै० ब्रा० ३. ५. २. ५।

३— धा० अदा० आ० ६।

४— "वृषो अग्निः समिध्यते। अश्वो न देववाहनः। तꣳ हविष्मन्त ईडते"—इति षष्ठी सामिधेनी 'हविष्मती'। तै० ब्रा० ३. ५. २. ६।

हि रूपादिप्रकाशकत्वात् "अग्ने दीद्यतम्"-इति[1] दीद्यच्छब्देन दीप्तिवाचिनोपस्थाप्यते ; अतो ऽनया चक्षुःसमिन्धनम् ॥ ७ ॥

"अग्निं दूत मिति[2]। "य एवायं मध्यमः प्राण इति। प्राणापानादिपञ्चवृत्त्याश्रयभूतो 'यः' क्रियाशक्त्यात्मको देहमध्येऽवस्थितः 'प्राणः', तस्य समिन्धनम् "अग्निं दूतम्"-इत्यनया। दूतो ह्यग्निः सर्वेषां देवानां मुखम्, तथा प्राणोऽपीति, तेन समिन्धनस्योपपत्तिः ॥

"सा हैषान्तस्थेत्यादि। 'सैषा' "अग्निं दूतं वृणीमहे"-इति सामिधेनी, मध्यमप्राणरूपेण प्राणापानादिसंस्तुताना मन्यासा मृचाम् 'अन्तस्था' अन्तरवस्थिता भवति। 'अन्ये' हि 'प्राणाः' चक्षुः-श्रोत्रादयः 'अतः' अस्मात्प्राणादारभ्य 'ऊर्द्ध्वाः' चरन्ति ; पायूपस्थादयः 'अन्ये' प्राणाः 'अतः' अस्मान्मध्यमात् प्राणादेवारभ्य 'अवाञ्चः' अवाङ्मुखा अन्तरवस्थिता भवन्ति ॥

एवं वेदितुः फल माह— "अन्तस्था मिति। 'अन्तस्थाम्' अन्तरवस्थितां प्राणदेवता मित्यर्थः ॥ ८ ॥

के पुनरेतेषां मध्येऽवाञ्चोऽन्तस्थाः प्राणा इति, तान् दर्शयति— "शोचिष्केशस्त मीमह इत्यादिना[3]। "शिश्नं वै शोचिष्केश मिति।

---

१— "वृषणं त्वा वयं वृषन्। वृषणः समिधीमहि। अग्ने दीद्यतं बृहत्"-इति सप्तमी सामिधेनी 'वृषण्वती'। तै० ब्रा० ३. ५. २. ७।

२— "अग्निं दूतं वृणीमहे। होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम्"-इति अष्टमी सामिधेनी 'दूतवती'। तै० ब्रा० ३. ५. २. ८।

३— "समिध्यमानो अध्वरे। अग्निः पावक ईड्यः। शोचिष्केशस्तमीमहे"-इति नवमी सामिधेनी 'समिध्यमानवती'। तै० ब्रा० ३. ५. २. ९।

तदुपपादनम्— "शिश्नं होति। अभिलषितस्त्रीविरहे अतिशयेन शोकहेतुत्वात् 'शोचिष्केश'-शब्देन 'शिश्नं' पुंव्यञ्जनं लक्ष्यते। तथा च एतच्छब्दोपेतयर्चा आनन्दनव्यापारस्य उपस्थाख्यस्येन्द्रियस्य समिन्धनं कृतं भवतीत्यर्थः ॥ ९ ॥

"समिद्धो अग्न इति[१]। "य एवायं मवाङ् प्राण इति। 'प्राण'-शब्द इन्द्रियवचनोऽवाङ्मुखः; अपानाख्य मिन्द्रिय मित्यर्थः ॥

"सर्वं मात्मान मिति। उक्तेन्द्रियसङ्घात मापादमस्तकव्याप्तं जीवात्मान मेव उत्तमया सामिधेन्या[२] 'समिन्धे'। तस्या आत्मनश्च उक्तरीत्या सर्वोपरि वर्त्तनं साम्यम् ॥ १० ॥

एव मेकादश सामिधेनीः[३] प्रत्यृचं लिङ्गविशेषोपन्यासेन प्राणापानादीनां समिन्धनहेतुतया प्रशस्य तत्र तदनुवचनसमये शपतो द्वेष्यस्य प्राणापानादिवियोजनहेतुत्वेन प्रशंसति— "स यद्येन मिति। 'प्रथमायां सामिधेन्याम्' अनूच्यमानायाम् 'एनं' होतारं 'यदि' द्वेष्यः 'अनुव्याहरेद्' शपेत्। "अनुव्याहारः शापः"-इति हि धूर्त्तस्वामी भाष्यकारः[४]। 'तम्' अनुव्याहरन्तं 'प्रति' होता

---

१— "समिद्धो अग्न आहुत। देवान् यक्षि स्वध्वर। त्वꣳ हि हव्यवाडसि"-इति दशमी सामिधेनी 'समिद्धवती'। तै० ब्रा० ३. ५. २. १०।

२— "आजुह्वोता दुवस्यत। अग्निं प्रयत्यध्वरे। वृणीध्वꣳ हव्यवाहनम्"-इत्येकादशी सामिधेनी 'उत्तमा'। तै० ब्रा० ३. ५. २. ११।

३— आसा मेव सामिधेनीनां व्याख्यानानि पुरस्तादाम्नातानि (३ ब्रा०)।

४— आपस्तम्बीययज्ञपरिभाषादिश्रौतसूत्रेषु एतत्कृतभाष्याणि लभ्यन्ते, न पापरवान्त एव, शतपथस्याप्येतत्कृतं भाष्यं सायणादिभिरवलोकितं

'ब्रूयात्',— 'एतत्' एतर्हि 'आत्मनः' स्वसम्बन्धिनं 'प्राणं' हे यजो! 'अग्नौ' 'आधाः' निहितवानसि। 'ते' तव 'प्राणेन' निमित्तेन ('आत्मनः') स्वात्मनः ('आर्त्तिं') पीडां प्राप्स्यसीति[१]। एवं होत्रा प्रतिवचने कृते तस्य द्वेष्यस्य यथोक्तं 'तथैव' सत्यं भवेत्। ऋचां च प्राणापानादिप्रतिपादकत्वं प्रागेव प्रतिपादितम्[२]। एव मुत्तरत्रापि योजना। अर्थो निगदसिद्धः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

"यदि षष्ठ्या मिति। "मनो मुषितग्रहीत इति। मनसो मोषणं विपरिलोपः, तेन गृहीतः, अत एव अतिशयेन मूढः चरिष्यसीत्यर्थः ॥ १६ ॥ १७ ॥

"यद्यष्टम्या मिति। "उद्ध्मायेति। 'उद्ध्मानम्' ऊर्द्ध्वं श्वसनम्, तत्प्राप्स्येत्यर्थः ॥ १८ ॥ १९ ॥

"यदि दशम्या मिति। "अपिनद्धो मरिष्यसीतीति। 'अपिनद्धः' बन्धनयुक्त इत्यर्थः ॥ २० ॥

"यद्येकादश्या मिति। "क्षिप्रेऽमुं लोक मिति। 'क्षिप्रे' अल्प एव काले, कालविलम्ब मन्तरेण 'अमुं' द्युलोकं गमिष्यसीत्यर्थः ॥ २१ ॥

---

स्यात्। इहैवोपरिष्टात् पुनरपि ६. १. १८; पुनः ४. ५. २. १३। कातीयश्रौतव्याख्यानेऽप्येव मेव २५. १०. १५।

१— "ऋ गतिप्रापणयोः"—इत्यस्य रूपं मूले श्रुतम् 'आरिष्यसि'—इति; अस्य चेदं प्रतिवचनं प्राप्स्यसीति।

२— २९५ पृ० १–४ पं० द्रष्टव्यम्।

एवं सामिधेनीरनुब्रुवतो होतुरग्निसमानत्वात् तद्दृष्टान्तत्वेन होतृव्यापकारिण: प्रतिपादिता मार्त्तिं निगमयति—"स यथेति। 'सामिधेनीभिः' करणैः 'समिद्ध मग्निं' प्राप्य 'यथा आर्त्तिं' 'न्येति' नितरां प्राप्नोति, तथैव 'सामिधेनीः' विदुषो होतुर्द्वेष्यस्य तदनुव्याहारनिमित्ता मुक्तविधां पीड़ां प्राप्नोतीत्यर्थः ॥२२॥ ५ [४.३.]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे चतुर्थाध्याये तृतीयं ब्राह्मणम्[1] ॥

---

तं व्वा ऽएतु मग्निꣳ सुमैन्धिषत। सुमिद्धे देवेभ्यो जुहवामेति तुस्मिन्नेते ऽएव प्रथमे ऽआहुती जुहोति मुनसे चैव व्वाचे च मुनश्च ह वै* व्वाक् च युजौ देवेभ्यो यज्ञं व्वहतः ॥ १ ॥

स युदुपाꣳशु क्रियते। तन्मुनो देवेभ्यो यज्ञं वहत्यथ युद्वाचा निरुक्तं क्रियते तद्वाग्देवेभ्यो यज्ञं वहत्येतद्वा इदं द्वयं क्रियते तुदेते ऽएवैतत् सुन्तर्प्पयति तृप्ते प्रीते देवेभ्यो यज्ञं व्वहात ऽइति ॥ २ ॥

---

१— अस्मिन् ब्राह्मणे सामिधेनीमन्त्राणां पृथक्-पृथक् पक्षसंवादाः, तत्त्पाठव्याघातकारिणां पृथक्-पृथक् दोषास्साम्नाताः।

* 'चैव'—इति च।

स्रुवेण त माघारयति। यं मनस ऽआघारयति वृषा हि मनो वृषा हि* स्रुवः ॥ ३ ॥

स्रुचा त माघारयति। यं वाच ऽआघारयति योषा हि वाग् योषा हि स्रुक् ॥ ४ ॥

तूष्णीं त माघारयति। यं मनस ऽआघारयति न स्वाहेति चनानिरुक्तꣳ हि मनो ऽनिरुक्तꣳ ह्येतद् यत् तूष्णीम् ॥ ५ ॥

मन्त्रेण त माघारयति। यं वाच ऽआघारयति निरुक्ता हि वाङ् निरुक्तो हि मन्त्रः ॥ ६ ॥

आसीनस्त माघारयति। यं मनस ऽआघारयति तिष्ठꣳस्तं यं वाचे मनश्च ह वै वाक् च युजौ देवेभ्यो यज्ञं वहतो यतरो वै युजोर्ह्रसीयान् भवत्युपवहं वै तस्मै कुर्वन्ति वाग्वै मनसो ह्रसीयस्यपरिमिततर मिव हि मनः परिमिततरेव हि वाक् तद्वाच ऽएवैतदुपवहं करोति ते सयुजौ देवेभ्यो यज्ञं वहतस्तस्मात् तिष्ठन् वाच ऽआघारयति ॥ ७ ॥

देवा ह वै यज्ञं तन्वानाः। ते† ऽसुररक्षसेभ्य ऽआसङ्गाद् बिभयाञ्चक्रुस्त ऽएतद्दक्षिणतः प्रत्युदश्रयन्नुच्छ्रित मिव हि वीर्यं तस्माद्दक्षिणतस्तिष्ठन्नाघारयति

---

* 'हि'–इति घ। † 'तन्वानास्ते'–इति क, ग।

स यदुभयत ऽआघारयति तस्मादिदं मनश्च वाक् च समान मेव सन्नानेव शिरो ह वै यज्ञस्यैतयोरन्यतर आघारयोर्मूल मन्यतरः ॥ ८ ॥

स्रुवेण त माघारयति। यो मूलं यज्ञस्य स्रुचा त माघारयति यः शिरो यज्ञस्य ॥ ९ ॥

तूष्णीं त माघारयति। यो मूलं यज्ञस्य तूष्णी मिव हीदं मूलं नो ह्यत्र वाग्वदति ॥ १० ॥

मन्त्रेण त माघारयति। यः शिरो यज्ञस्य वाग्घि मन्त्रः शीर्ष्णो हीय मधि वाग्वदति ॥ ११ ॥

आसीनस्त माघारयति। यो मूलं यज्ञस्य निषण्ण मिव हीदं मूलं तिष्ठंस्त माघारयति यः शिरो यज्ञस्य तिष्ठतीव हीदꣳ शिरः ॥ १२ ॥

स स्रुवेण पूर्व्व माघार माघार्याह। अग्नि* मग्नीत्सम्मृड्ढीति यथा धुर मध्यूहेदेवं तद्यत्पूर्व माघार माघारयत्यध्यूह्य हि धुरं युञ्जन्ति† ॥ १३ ॥

अथ सम्मार्ष्टि। युनक्त्येवैन मेतद्युक्तो देवेभ्यो यज्ञं व्वहादिति तस्मात् सम्मार्ष्टि परिक्रामꣳ सम्मार्ष्टि परिक्रामꣳ हि योग्यं युञ्जन्ति त्रिस्त्रिः सम्मार्ष्टि त्रिवृद्धि यज्ञः ॥ १४ ॥

---

* 'माघार्याहाग्नि'—इति क, ग।

† 'यञ्जन्ति'—इति, 'यञ्जन्ति'—इति च च-पुस्तके।

स सम्मार्ष्टि। अग्ने व्वाजजिद्वाजं त्वा सरिष्यन्तं (त्वा*) व्वाजजितꣳ सम्मार्ज्मीति यज्ञं त्वा व्वक्ष्यन्तं (व्वा†) यज्ञियꣳ सम्मार्ज्मीत्येवैतदाहाथोपरिष्टात्तूष्णीं चिस्तद्यथा युक्त्वा प्राजेत्प्रेहि व्वहेत्येव मेवैतत् कशयोपक्षिपति प्रेहि देवेभ्यो यज्ञं‡ व्वहेति तस्मादुपरिष्टात्तूष्णीं चिस्त-द्युदेतदन्तरेण कर्म्म क्रियते तस्मादिदं मनश्च व्वाक् च समान मेव सन्नानेव ॥ १५ ॥ ६ ॥

॥ इति तृतीयप्रपाठके षष्ठं ब्राह्मणम् [४. ४.] ॥

अथाघाराख्यौ होमौ विधातुं सिद्ध मर्थ मनुवदति—"तं वा एत मिति। 'तम् एतम्' प्रकृत माहवनीयम् 'अग्निम्' 'समैन्धिषत' सम्यग् दीप्त मकुर्वन्। केनाभिप्रायेणेति त माह— "समिद्ध इति। 'तस्मिन्' सन्दीप्तेऽग्नौ 'एते एव' मुख्ये आघाररूपे 'आहुती' वाङ्मनसयोरर्थे 'जुहोति'। कुतः? 'मनश्च वाक् च' इत्युभौ 'युजौ' मिथुनीभूतौ सन्तौ 'देवेभ्यः' यज्ञसम्बन्धि हविः प्रापयत इति' ॥ १ ॥

---

* च-पुस्तकमात्रेऽत्रैतदधिकं पदम्।

† ख-पुस्तकमात्रेऽत्रैतदधिकं पदम्।

‡ 'यज्ञ'—इति ग, घ।

१—ङ-पुस्तकमात्र मवलम्ब्यैतदिह सायणीयं भाष्यं सम्पादितम्; ज-पुस्तके त्वस्यैवं भाष्यम्— "तं वा एत मिति। 'समैन्धिषत' सन्दीपितवन्तः। यजमानः प्रयोक्तृत्वेन, अध्वर्युरिध्माधानेन, ब्रह्मा सामिधेन्यनुज्ञया, होतानुवचनेन। किमर्थम्? 'समिद्धे' सति आहुती होष्याम इति। 'तस्मिन्' समिद्धे 'एते एव' पूर्वोक्तराघारलक्षणे 'प्रथमे आहुती' 'जुहोति'; न तावदन्यां काञ्चिदन्यदेवत्याम्। आध्यात्मिकाभ्यां

तयोः क्रमेण हविः-प्रापण मुच्यते— "स यदिति। 'यत्' एतत् इदम् 'उपांशु' निरुक्तरूप माहुतिद्वयं 'क्रियते', एतदेव 'तत्' आहुतियुग्मम् 'एते' मनोवाचौ सन्तर्पयति। शेषं सुगमम्[1] ॥ २ ॥

स्रुवस्रुग्भ्यां क्रमेणाघारौ कर्त्तव्याविति विधत्ते— "स्रुवेणेति। मनसो हि कामोत्पत्तिद्वारा वृषत्वम्, इति तयोः साम्यम्; अतो मनःसम्बन्धिन आघारस्य स्रुवसाध्यत्वम्; वाक्स्रुचोः स्त्रीत्वं समानम्, अतो वाक्सम्बन्धिन आघारस्य स्रुक्साध्यत्वं युक्त मित्यर्थः ॥ ३ ॥ ४ ॥

अथैतयोराघारयोः क्रमेण अमन्त्रकत्व-समन्त्रकत्व-लक्षणौ गुणौ विधत्ते— "तूष्णी मित्यादिना। "स्वाहेति चनेति। 'चन'-शब्दो-ऽप्यर्थे[2]; स्वाहेत्यपि शब्दं न ब्रूयादित्यर्थः। मनोदेवत्यस्याघारस्य तूष्णीकत्वं युक्त मिति प्रतिपादयति— "अनिरुक्तं हीति। निगद-सिद्ध मन्यत् ॥ ५ ॥ ६ ॥

---

रूपाभ्यां प्रजापति मिव दर्शयन्नाह— "मनसे चैव वाचे चेति। किं कारणम्? ताभ्यां प्रथम मिति। "मनश्च ह वै वाक् चेति। 'युजौ' युज्येते इति, योक्तव्यौ इत्यर्थः। युक्तौ च तौ अश्वौ वहत इत्यभि-प्रायः ॥ १ ॥ स्यादिदं हरि स्वामिनः?। आदिपुस्तकेषु नास्त्येवात्र भाष्यम्; ठ-पुस्तके त्वितः पूर्वत एव सप्तमाध्यायीयद्वितीयब्राह्मणं यावत् भाष्यं त्रुटितम्; ढ-पुस्तकेऽप्येतद्भाष्याभावः।

१— ज-पुस्तके त्वस्यैवं भाष्यम्— "स यदुपांश्विति। किं पुनर्यच्छस्य, कोऽत्र वहति?। बोढव्यविभागायाह— "एतद्वा इद मिति। द्वित्वावधारणा मिद मेव 'इयं क्रियते' यच्च वाचो — — यच्च तद्विपरीत मिति ॥ २ ॥ अन्यान्यादर्शपुस्तकविवरणन्तु इहापि पूर्ववदेव।

२— 'चनेति निपातो निपातसमाहारो वा'–इति (हरिस्वामिनः?) ज।

उपवेशनावस्थानलक्षणौ गुणौ क्रमेणाघारयोर्विधत्ते— "आसी-नस्त मिति। "तिष्ठंस्तं यं वाच इति। 'आघारयति'—इत्युभयत्रानु-षङ्गः। स्रुवाघारस्य[1] तिष्ठता होतव्यत्व मुपपादयति— "मनश्च ह वै वाक् चेत्यादिना। 'युजौ' रथावयवे युगे अश्वादिवद् युक्तौ भूत्वेत्यर्थः। "यतरो वा इत्यादि। लोके हि रथादिषु युक्तयो-रश्वयोर्मध्ये 'यतरः' खलु 'ह्रसीयान्' अतिशयेन ह्रस्वोऽल्पकायो 'भवति', तस्य साम्येन वहनाय 'उपवर्हं' वहः स्कन्धप्रदेशः तस्योपरि श्लिष्ट मौन्नत्यकरं दारुमयं स्थूलपीठकादिकं लौकिकाः कुर्वन्ति। यस्मादेवं लोके, तस्मादल्पविषयत्वेन अपरिमितविषयान्मनसो ह्रसीयस्या वाचः स्थितिक्रियाविशिष्टाघारेणौन्नत्यकरम् 'उपवर्ह मिव' एतद्भवति। अतः 'ते' वाङ्मनसे उभे अपि 'सयुजौ' समान-वहनप्रदेशे भवत इत्यर्थः॥ ७॥

स्रुग्व्याघारस्य आहवनीय-दक्षिणभाग-स्थितिलक्षण-धर्मविशेषं विदधाति— "देवा ह वा इत्यादिना। "दक्षिणतः प्रतीति। आहवनीयस्य दक्षिणभागे असुरान् प्रत्युच्छ्रितवन्तः। कथ मुच्छ्राय-स्तेषा मित्यत आह— "उच्छ्रित मिव हीति। 'उच्छ्रितं' पर्वतादिकम्, त मिव वीर्य मपि दुरासदम्। तादृशवीर्ययोगात्तेषा मुच्छ्रितत्व मित्यर्थः॥

अथाघारयोर्दक्षिणोत्तरपरिधिसन्धि मारभ्यैव उभयतः करणं विधत्ते— "स यदिति। 'उभयतः' दक्षिणत उत्तरतश्चेत्यर्थः।

---

१— 'स्रुग्व्याघारस्य'–इति आदिषु।

"समान मेव सन्नानेवेति। मनश्च वाक् चेत्येतदुभयं समानविषयं समानाश्रय मेव 'सद्' भवदपि 'नानेव' भिन्न मिव भवतीत्यर्थः ॥

"स्रुवेण त माघारयतीत्यादिकं प्राग्विहितं[1] प्रकारान्तरेण स्तौति— "शिरो ह वै यज्ञस्येत्यादिना। अर्थो निगदसिद्धः ॥ ८ ॥ ९ ॥

मूलत्वेन शिरस्त्वेन स्रुक्स्रुवयोस्तदुपजीवनेन तूष्णीकत्वं निरुक्तत्वं च प्राग्विहितं[2] मनूद्य प्रशंसति— "तूष्णीं त मित्यादिना। "तूष्णी मिव हीति। लोके हि यद्वृक्षादीनां मूलं तत् 'तूष्णी मिव हि' अदृश्यमानत्वात्। एतदेवोपपादयति— "नो ह्यत्रेति। 'न' 'उ' खलु 'अत्र' मूलविषये शब्दव्यापारो ऽप्यस्ति, दूरे दृष्टिविषयत्वम्। अतो मूलभूताघारस्य लौकिकमूलवत् तूष्णीकत्वं युक्त मित्यर्थः ॥ १० ॥

"मन्त्रेणेति। "वाग्घि मन्त्र इत्यादि। वागिन्द्रियसाध्यत्वात् तदात्मको मन्त्रः। सा च वाक् 'शीर्ष्णः' उपरि ताल्वोष्ठपुटादि-व्यापारेण शब्द मुच्चारयति, अतो वागात्मकस्य 'यज्ञस्य' 'शिरः'-श्रुतौ[3] आघारसम्बन्धो युक्त इत्यर्थः ॥ ११ ॥

प्राग्विहितयोरासीनस्थितयोरपि[4] मूलशिरस्त्वोपजीवनेन प्रशंसा क्रियते— "आसीनस्त मित्यादिना। "निषण्ण मिव हीद मिति। 'इदं' वृक्षादिमूलं 'निषण्ण मिव हि' एकत्रोपविष्ट मिव हि भवति ; खातत्वेन चाञ्चल्यविरहात्। अतो मूलभूतस्याघारस्यासन-

---

१— इहैव तृतीयकण्डिकादिकं द्रष्टव्यम् (३०५, ३०८ पृ० )।

२— इहैव पञ्चमकण्डिकादिकं द्रष्टव्यम् (३०५, ३०८ पृ० )।

३— '‘शिरः’-स्तुतौ’—इति ङ। ४— इहैव सप्तमी कण्डिका द्रष्टव्या।

सम्बन्धो युक्त इत्यर्थः। "तिष्ठतीव हीद मिति। 'हि' यतः 'इदं' मनुष्यादीनां 'शिरः' 'तिष्ठतीव' अस्तीति, स्थितिक्रियाविशिष्ट मिवोर्द्ध मिव दृश्यते, अतः शिरस्संस्तुतस्याघारस्य तिष्ठता कर्त्रा निष्पादनं युक्त मित्यर्थः ॥ १ २ ॥

एव माघारयोः प्रतिनियतधर्मान् विधाय अनुष्ठानक्रम माह— "स स्रुवेणेति। पूर्वाघारानन्तरं, नोत्तराघारः; अपि तु "अग्नि मग्नीद्"—इति[1] आग्नीध्रं प्रति सम्प्रैषं ब्रूयात्। तस्य चाय मर्थः— हे 'अग्नीत्' आग्नीध्र! आहवनीयाख्यम् 'अग्निं' 'सम्मृड्ढि' सम्मार्जनं कुर्विति ॥

विधित्सितस्य सम्मार्जनस्याघारानन्तर्य्य मुपपादयति— "यथेति। अनडुहः स्कन्धदेशे 'यथा' 'धुरम्' युगधुरम् 'अध्यूहेत्' योजयेत्, एव मग्नौ धुरोऽध्यूहन मेव पूर्वाघारहोमेन क्रियते। अस्मिन्नर्थे लोकप्रसिद्धि माह— "अध्युह्येति। 'हि' यतः रथादिवहने अनडुदश्वादिकं योक्ष्यमाणास्तदीयस्कन्धस्योपरि युगधुरम् 'अध्युह्य' पश्चात् पाशैः 'युञ्जन्ति' बध्नन्ति; अतो धुरोऽध्युहनस्थानीयः पूर्वाघारहोम इत्यर्थः ॥ १ ३ ॥

अग्निसम्मार्जनं विधाय प्रशंसति— "अथेति। 'एनम्' अग्निं हविर्वहनाय सम्मार्जनेन युनक्तीत्यर्थः। सम्मार्जने धर्मविशेषं विधत्ते— "परिक्राम मिति। परिक्रम्य-परिक्रम्य तत्तत्परिधिदेशं गत्वा तदनुसारेणाग्निं 'सम्मार्ष्टि'। अत एवोक्तं कात्यायनेन— "इध्मसन्नहनैरनु-

---

१— का० श्रौ० सू० ३. १. १२। प्रजापतिर्देवता, तेन स्वाहाकाराभावः।

परिधि सम्मार्ष्ट्यग्ने वाजजिदिति[1] त्रिस्त्रिः परिक्रामम्"— इति[2]। तत्रापि लोकप्रसिद्धि मुदाहरति— "परिक्रामं ह्येति। एकैकस्मिन् परिधौ सम्मार्जनस्य त्रिरावृत्तिं विधाय प्रशंसति— "त्रिस्त्रिरिति। "नित्यवीप्सयोः"—इति[3] द्विर्वचनम् ॥ १४ ॥

विहितं सम्मार्जन मनूद्य मन्त्रं विधत्ते— "स सम्माष्टीति। मन्त्रस्याभिप्राय माह— "यज्ञं त्वेति। यज्ञसाधनत्वाद्धविरत्र यज्ञ-शब्दाभिधेयम्। यज्ञसाधनं हविर्लक्षण मन्नं देवेभ्यो 'वक्ष्यन्तं' वहनं करिष्यन्त मिति, "वाजं सरिष्यन्तम्"-इतिपदद्वयस्यार्थः। 'वाज-जितम्'—इत्यस्य व्याख्या 'यज्ञियम्'—इति। वाजं यज्ञसाधनं हविर्लक्षण मन्नं जयतीति 'वाजजित्'; तथाच 'यज्ञं' यज्ञसाधनं हविरर्हतीति 'यज्ञियम्' इति शब्दार्थः सम्पद्यते ॥

उपरिष्टात् सम्मार्जनं विधत्ते— "अथेति। परिधित्रयानुसारेण परितोऽग्निं सम्मृज्य, तदनन्तरं अग्नेः 'उपरिष्टात्' 'तूष्णीं' 'त्रिः' सम्मृज्यात्। तदेतत् स्तौति— "तद्यथेति। 'तत्' तथा सति 'यथा' खलु लोके युगधुरे अनड्वाहं संयोज्य, 'प्रेहि' प्रगच्छ, वोढव्यं भारं 'वह' इत्येवं वदत् 'कशया' ताड़नेन 'प्राजेत्' प्रेरयेत्। एवं कशयोपक्षेपण मेव तदुपरि सम्मार्जन मित्यर्थः। स्पष्ट मन्यत् ॥

स्रौवस्रुग्व्याघारयोर्मध्येऽनुष्ठानं सम्मार्जनस्य प्रशंसति— "तद्य-दिति। मनोवाक्संस्तुतयोरनयोराघारयोर्मध्ये सम्मार्जनस्य करणात्

---

१— वा० सं० २. ७. १। एतन्मन्त्रस्य महीधरकृतं भाष्यं द्रष्टव्यम्।

२— का० श्रौ० सू० ३. १. १२। सम्मार्जनेन विरजस्का मुज्ज्वलां करोति।

३— पा० सू० ८. १. ४।

तद्यवधाने सति 'मनश्च वाक् च' एतदुभयं ('समान मेव') समानविषयं समानाश्रय मपि 'नानेव' भिन्न मिव भवति ॥ १५॥ ६॥ [४. ४.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे चतुर्थाध्याये चतुर्थं ब्राह्मणम्[१] ॥

॥ इति प्रथमकाण्डे तृतीयप्रपाठकः समाप्तः[२] ॥

---

१— एतस्मिन् ब्राह्मणे पूर्वाघारस्य, ततोऽग्निसम्मार्जनस्य च विधिः। तत्रेयं पद्धतिः।— स्रुवेणाज्यस्थाल्या आज्यं गृहीत्वा उत्तरं परिधि मन्ववहृत्य प्रजापतिं मनसा ध्यायन् अग्नेरुत्तरप्रदेशे ऋजुं दीर्घं सन्ततं प्राञ्चम् "इदं प्रजापतये"–इति पूर्व माघार माघारयति। ततोऽग्नीधे स्फ्य मिध्मसन्नहनं च समर्पयन् "अग्नि मग्नीत् सम्मृड्ढि"–इति अग्नीध्रं प्रेष्यति। ततोऽग्नीत् स्फ्यं सव्ये गृहीत्वा अग्निं प्रदक्षिणीकृत्य दक्षिण-परिधिसन्निधौ स्थित्वा इध्मसन्नहनैर्दक्षिणपरिधिपार्श्वेऽग्निं त्रिः प्राक् सम्मार्ष्टि। तत्र "अग्ने वाजजित्"–इति सकृत्, द्विस्तूष्णीम्। एव मेव मध्यमपरिधिपार्श्वे, उत्तरपरिधिपार्श्वे चेति।

२— इतोऽनन्तरं क-पुस्तके "काण्डो १२८"–इति, ख-पुस्तकेऽपि तथैव, च-पुस्तके तु "कण्डिकासङ्ख्या १२०"–इति। वस्तुतोऽत्र प्रपाठके षट्सु ब्राह्मणेषु सर्वकण्डी-सङ्कलनया १२८ एव सङ्ख्या लभ्यते। तद्यथा— १ ब्रा० १६ क०—२ ब्रा० १६ क०—३ ब्रा० ४० क०—४ ब्रा० १९ क०—५ ब्रा० २२ क०—६ ब्रा० १५ क०=१२८ क०॥

अथ

चतुर्थप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

चतुर्थाध्याये पञ्चमं ब्राह्मणम् ।



॥ हरिः ॐ ॥

स स्रुचोत्तर माघारु माघारयिष्यन् । पूर्व्वेण स्रुचावञ्जलिं निदधाति नमो देवेभ्यः स्वधा पितृभ्य इति तद्देवेभ्यश्चैवैतत् पितृभ्यश्चार्त्विज्यं करिष्यन्निह्नुते सुयमे मे भूयास्त मिति स्रुचावादत्ते सुभरे मे भूयास्तं भर्त्तुं व्वाँ शकेय मित्येवैतदाहास्कन्न मद्य देवेभ्यः आज्यँ सम्भ्रियास मित्यविक्षुब्ध मद्य देवेभ्यो यज्ञं तनवाऽइत्येवैतदाह ॥ १ ॥

अङ्घ्रिणा व्विष्णो मा त्वावक्रमिष मिति । यज्ञो वै व्विष्णुस्तस्माऽएवैतन्निह्नुते मा त्वावक्रमिष मिति व्वसुमती मग्ने ते छाया मुपस्थेष मिति साध्वी मग्ने ते छाया मुपस्थेष मित्येवैतदाह ॥ २ ॥

व्विष्णो स्थान मसीति । यज्ञो वै व्विष्णुस्तस्येव ह्येतदन्तिकं तिष्ठति तस्मादाह व्विष्णो स्थान मसीतीत

ऽइन्द्रो व्वीर्यं मरुत्वतोऽदित्युतो ह्यीन्द्रस्तिष्ठन् दक्षिणतो नाष्ट्रा रक्षाᳬंस्यपाहंस्तस्मादाहेत इन्द्रो व्वीर्यं मरुत्वणो- दित्यूर्द्ध्वोऽध्वर ऽआस्थादित्यध्वरो वै यज्ञ ऽऊर्द्ध्वो यज्ञ ऽआस्थादित्येवैतदाह ॥ ३ ॥

अग्ने व्वेर्होत्रं व्वेर्दूत्य मिति । उभयं* व्वा ऽएतदग्नि- र्द्देवानाᳬं होता च दूतश्च तदुभयं व्विद्धि यद्देवाना मसीत्येवैतदाहावतां त्वां द्यावापृथिवी ऽअव त्वं द्यावा- पृथिवी ऽइति नात्र तिरोहित मिवास्ति स्विष्टकृद् देवेभ्य इन्द्र ऽआज्येन हविषाभूत् स्वाहेतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्र ऽआज्येनेति व्वाचे वा ऽएत माघार माघारयतीन्द्रो व्वागित्यु वा ऽआहुस्तस्मादप्याहेन्द्र ऽआज्येनेति ॥ ४ ॥

अथासᳬंस्पर्शयन्त्स्रुचौ पर्येत्य । ध्रुवया समनक्ति शिरो वै यज्ञस्योत्तर ऽआघार ऽआत्मा वै ध्रुवा तदा- त्मन्येवैतच्छिरः प्रतिदधाति शिरो वै यज्ञस्योत्तर ऽआघारः श्रीर्व्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिर ऽइत्याहुः ॥ ५ ॥

यजमान ऽएव ध्रुवा मनु । योऽस्मा ऽअरातीयति स ऽउपभृत मनु स यद्धोपभृता समञ्ज्याद्यो यजमानाया-

* 'मि । त्युभयं'—इति ग ।

रातीयुति तुस्मिञ्छ्रियं दध्यात् तद्यजमान एुवैतच्छ्रियं दधाति तुस्माद् ध्रुवुया सुमनक्ति ॥ ६ ॥

स सुमनक्ति। सञ्ज्योतिषाज्योतिरिुति ज्योतिर्व्वा ऽइतरस्या माज्यं भुवति ज्योतिरिुतरस्यां ते ह्येतदुभे ज्योतिषी सङ्गुच्छेते तुस्मादेवꣳ सुमनक्ति ॥ ७ ॥

अथातो मुनसश्चैव व्वाचुश्च। अहं भद्र ऽउदितं मुनश्च ह वै व्वाक् चाहं भद्र ऽऊदाते ॥ ८ ॥

तद्ध मुन ऽउवाच। अहु मेव त्वच्छ्रेयोऽस्मि न वै मुया त्वं किञ्चनानभिगतं व्वदसि सा यन्मुम त्वं कृतानुकरानुवर्त्मास्यहु मेव त्वच्छ्रेयोऽस्मीति ॥ ९ ॥

अथ ह व्वागुवाच। अहु मेव त्वच्छ्रेयस्यस्मि। यद्वै त्वं व्वेत्थाहं तद्विज्ञपयाम्यहꣳ सुञ्ज्ञपयामीति ॥ १० ॥

ते प्रजापतिं प्रति प्रश्न* मेयतुः। स प्रजापतिर्मुनस ऽएवानूवाच मुन ऽएव त्वच्छ्रेयो मुनसो वै त्वं कृतानुकरानुवर्त्मासि श्रेयसो वै पापीयान् कृतानुकरो-ऽनुवर्त्मा भवतीति ॥ ११ ॥

सा ह व्वाक् परोक्ता व्विसिष्मिये। तस्यै गुर्भः पपात सा ह व्वाक् प्रजापति मुवाचाहव्यवाडेवाहं तुभ्यं भूयासं यां मा परावोच ऽइति तुस्माद्यत्किञ्च प्राजापत्यं

---

* 'प्रतिप्रश्न'–इति च ( अव्ययीभाव इति डा० वेवरः )।

यन्नु क्रियत ऽउपाꣳश्वेव तत् क्रियतेऽहव्यवाड्ढि* व्वाक् प्रजापतय ऽआसीत् ॥ १२ ॥

तद्वैतद्देवाः । रेतश्चर्मन् वा यस्मिन् वा† बभ्रुस्तद्ध स्म पृच्छन्त्यत्रैव‡ त्याऽइदिति ततोऽग्निः सम्बभूव तस्माद्-प्याग्नेय्या योषित्तेनस्य्येतस्यै हि योषायै व्वाचो देवताया ऽएते सम्भूताः ॥ १३ ॥ १ ॥

॥ इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम्§ [४. ५.] ॥

अथ स्रुच्याघारस्य प्रयोगः प्रतिपाद्यते— "स स्रुचेत्यादिना । "पूर्वेण स्रुचाविति । जुहूपभृतोः पूर्वभाग इत्यर्थः । समन्त्रकस्य¹ अञ्जलिनिधानस्य प्रयोजन माह— "तद्देवेभ्यस्येति । 'आर्त्विज्यं करिष्यन्' तदतिक्रमजनित मपराधं तन्नमस्कारेण 'निह्नुते' शमयतीत्यर्थः ॥

समन्त्रकं जुहूपभृतोरादानं विधत्ते— "स्रुयमे इति²। एतस्य

---

* 'ऽहव्यवाढ्ढि'—इति क, ख, घ ।

† 'श्चर्मन् वान्यस्मिन्'—इति सा०—सम्मतः ।

‡ 'त्रैव'—इति च-पाठः, डा० वेवरेण बङ्गपुस्तकेषु दृष्टस्य ।

§ सायणाचार्यमतेऽत्रैव चतुर्थाध्यायपरिसमाप्तिः ।

१— तत्र मन्त्रः— वा०सं० २.७.२ । का०श्रौ०सू० ३.१.१५ । "तस्मा-दञ्जलिकरणस्थानाद् दक्षिणस्यां द्वितीय मञ्जलि मुत्तानं करोति स्वधा पितृभ्य इति (वा० सं० २. ७. ३.) मन्त्रेण"—इति च तत्र प० ।

२— वा० सं० २. ७. ४ । का० श्रौ० सू० ३. १. १६ क ।

मन्त्रभागस्य विवक्षित मर्थ माह— "सुभरे इति। सुष्ठु मनुनियन्तुं भर्त्तुं शक्ये 'सुयमे' हे जुहूपभृतौ! युवा मीदृश्यौ 'भूयास्तम्'। 'भर्त्तुं वां शकेयम्'—इति तात्पर्यार्थकथनम्। मन्त्रस्य द्वितीय-भाग मनूद्य व्याचष्टे— "अस्कन्न मद्येति[1]। यत् जुहूपभृतोः स्थित माज्यम्, तत् 'अस्कन्नं' यथा भवति तथा 'सम्भ्रियासम्' सम्भर्त्तुं शक्तो भूयास मिति मन्त्रवाक्यस्यार्थः। तदिद माह— "अविक्षुब्ध मद्येति। आज्यस्य स्कन्दने हि यज्ञस्य विक्षोभः स्यात्, स च माभूदित्येवं प्रार्थ्यत इत्यर्थः॥ १ ॥

लिङ्गदेवातिक्रमणे विनियोगः सिद्ध इत्यभिप्रेत्य केवलं मन्त्र मनूद्य व्याचष्टे— "अह्रिणेति[2]। हवीरूपेण वेद्या मवस्थितो यज्ञोऽत्र 'विष्णु'-शब्देन विवक्षितः। दक्षिणातिक्रमवेलायां तस्यातिक्रमशङ्का माभूदिति तदभावः प्रतिपाद्यते— हे 'विष्णो' हवीरूप यज्ञ! 'त्वा' त्वां 'मा अवक्रमिषम्' अवज्ञया त्वां नातिक्रमामि, अपि तु होमार्थं तत्रापराधो यथा न भवति तथैव सञ्चरदेशेनातिक्रमामीत्यर्थः। एतल्लिङ्गकल्पित मेव विनियोगं कात्यायनः सूचयामास— "दक्षिणातिक्रामत्यह्रिणा विष्णविति, परिधीनपरेण सञ्चरः"-इति[3]।

स्रुग्व्याघारहोमार्थं यद्दक्षिणतोऽवस्थानम्, तदपि मन्त्रलिङ्ग-सिद्ध मित्यभिप्रेत्य तं मन्त्र मनूद्य व्याचष्टे— "वसुमती मिति[4]।

---

१— वा० सं० २. ८. १। पूर्वकण्डिकाम्नातस्यैवापरांशोऽयम्।

२— वा० सं० २. ८. २। का० श्रौ० सू० ३. १. १६ ख।

३— का० श्रौ० सू० ३. १. १७। सर्वार्थोऽयं सञ्चरो नोत्तराघारमात्रे।

४— वा० सं० २. ८. ३।

'वसुमतीं' धनवतीं वासयोग्यां 'साध्वीं' त्वदीयां 'छायां' हे अग्ने! 'उपस्थेषम्' उपेत्य तिष्ठेय मित्यर्थः ॥ २ ॥

मन्त्रशेष मनूद्य व्याचष्टे— "विष्णोरिति। "तस्यैव ह्येतदिति। यज्ञात्मको हि विष्णुरित्याहवनीये निष्पद्यते। यत्र स्थित्वा अध्वर्युर्जुहोति, तत्र। तस्यान्तिक मिति नेदीयस्त्वव्यपदेशः। एतल्लिङ्गसिद्ध मवस्थाने मन्त्रस्य विनियोगं कात्यायनः सूचितवान्— "वसुमती मित्यवस्थायेति"-इति[1]।

"इत इन्द्र इत्यादेः स्वाहान्तस्य मन्त्रस्य[2] होमे विनियोगो लिङ्गसिद्ध इत्यभिप्रेत्य तं मन्त्रं भागशो नूद्यऽव्याचष्टे— "इत इन्द्र इति। 'हि' यस्मात् अस्मिन् स्थाने तिष्ठन्निन्द्रः दक्षिणदिगवस्थितान् राक्षसादीन् 'अपाहन्', अतः कारणात् 'इत इन्द्रो वीर्यं मकृणोदिति' मन्त्रभागे इन्द्रस्तुतिः। द्वितीयभाग मनूद्य व्याचष्टे— "ऊर्द्ध्वोऽध्वर इति। इन्द्रवीर्येण राक्षसादीनां बाधितत्वात् निर्विघ्नो 'यज्ञः' ऊर्द्ध्वं प्रवृत्त इत्यर्थः ॥ ३ ॥

भागान्तर मनूद्य व्याचष्टे— "अग्ने वेरिति[3]। हे अग्ने! 'होत्रं' होतृकर्म 'वेः' बुद्ध्यस्व। तथा 'दूत्यं' दूतकर्म 'वेः' बुद्ध्यस्व 'इति' मन्त्रवाक्यार्थः। "विद् ज्ञाने"—इत्यस्मात्[4] छान्दसो लङ्[5] सिपि

---

१— का० श्रौ० सू० ३. १. १९। "ईशानाभिमुखः स्थित्वा"—इति वृ०।

२— वा० सं० द्वितीयाध्यायीयाष्टमकण्डिकायास्तुर्यभागत आरभ्य नवम-कण्डिकाया आद्यभागं यावदयं मन्त्रः। का० श्रौ० सू० ३. २. १।

३— वा० सं० २. ९. १। ४— धा० अदा० प० ५४।

५— पा० सू० ३. ४. ६।

"दश्व[1]"—इति दकारस्य हले वेरिति रूपम्। इम मर्थ माह—"उभयं वा इत्यादिना। 'देवानाम्' अर्थे आत्मनो यद् दूतत्वं होतृत्वं च अङ्गीकृतवान् 'असि', 'तत् उभयं' 'विद्धि' जानीहीत्यर्थः। "अवतान्त्वेत्यादि निगदसिद्धम्।

अन्तिमं भाग मनूद्य व्याचष्टे— "स्विष्टकृदिति। 'देवेभ्यः' देवाना मर्थे सोऽग्निः 'स्विष्टकृत्' शोभनयागस्य कर्त्ता। हे अग्ने! त्वं यस्मादेवं भवसि, तस्मादनेन 'आज्येन हविषा' आहुतेन 'इन्द्रः' सङ्गतः 'अभूत्' भवतु, 'स्वाहा' स्वाहुत मिद माज्य मस्त्विति मन्त्रवाक्यार्थः। "इन्द्रो वै यज्ञस्येत्यादि स्पष्टम्॥

ननु "मनसे चैव वाचे वेति द्वितीयाघारस्य वाग्देवतार्थत्वं प्रागाम्नातम्[2], तदिन्द्रार्थत्वे विरुध्यत इत्याशङ्क्य, तयोस्तादात्म्य माह— "इन्द्रो वागित्यु वा आहुरिति। वाच इन्द्रेण व्याकृतत्वात् तत्तादात्म्यम्। अत एव तैत्तिरीयके "इमां नो वाचं व्याकुर्वित्युपक्रम्याम्नातम्— "ता मिन्द्रो मध्यतोऽवक्रम्य व्याकरोदिति[3]। एषा प्रसिद्धिरत्र 'वै'-शब्देन द्योत्यते। "तस्माद्वेवाहेति। वाच इन्द्रस्य भेदाभावादपीत्यर्थः॥

---

१— पा० सू० ८. २. ७५।

२— एतत्पूर्वब्राह्मणस्य प्रथमकण्डिकायाम् (३०४ पृ०)।

३— तै० सं० ६. ४. ७. ५— "वाग् वै पराच्यव्याकृतावदत्, ते देवा इन्द्र मब्रुवन् इमां नो वाचं व्याकुर्विति, सोऽब्रवीद् वरं वृणै, मह्यं चैवैष वायवे च सह गृह्याता इति, तस्मादैन्द्रवायवः सह गृह्यते, ता मिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्, तस्मादियं व्याकृता वागुच्यते"—इति।

अस्य मन्त्रस्य लिङ्गमिष्टं होमे विनियोग मसूत्रयत् कात्यायनः— "इत इन्द्र इति जुहोतीति"[1] ॥ ४ ॥

होमानन्तरं प्रत्याक्रम्य ध्रुवासमञ्जनं विधत्ते— "अथेति। "ध्रुवयेति। ध्रुवा मित्यर्थः। तदाह कात्यायनः— "असंस्पर्शयन्स्रुवावेत्य जुह्वा ध्रुवाᳪ समनक्तीति"[2]। तदेतत् समञ्जनं प्रशंसति— "शिरो वा इति। उत्तराघारस्य यज्ञशिरस्त्वं प्राक् प्रतिपादितम्[3]। ध्रुवास्थस्याज्यस्य सर्वयज्ञसाधारण्यात् यज्ञस्य मध्यदेह एव ध्रुवा[4]; आघारशेषस्य तस्यां समञ्जनात् 'शिरः' एव तस्मिन् 'प्रतिदधाति' इत्यर्थः ॥

यज्ञशिरस्त्व मुपजीव्य श्रीरूपत्वेन आघारं प्रशंसति— "शिरो वा इति। शिरसः श्रीत्वोपपादनम्— "श्रीर्हि वै"-इति। 'हि'-शब्दद्योतितां प्रसिद्धिं लोके श्री मिति शिरस्त्वं व्यवहारेणाविष्करोति। "तस्मादिति। 'अर्द्धस्य' देशभागस्य ग्रामादेः 'यः श्रेष्ठो भवति', 'अमुष्य' ग्रामादेः 'असौ' देवदत्तः 'शिरः' 'इति' लौकिकाः कथयन्ति ; अतः शिरसः श्रीरूपत्वम् ॥ ५ ॥

किं तत इत्याह— "यजमान एवेत्यादिना। 'ध्रुवा मनु' अनोः कर्मप्रवचनीयत्वम्[5], "कर्मप्रवचनीययुक्ते"-इति द्वितीया[6]। ध्रुवाभागो यजमान इत्यर्थः। 'अस्मै' यजमानाय 'यः' 'अरातीयति' अरातिः

---

१— का० श्रौ० सू० ३. २. १ ("जुहोत्युत्तराघारम्")।

२— का० श्रौ० सू० ३. २. २।

३— पुरस्तादिहैवाध्याये षष्ठे ब्राह्मणे द्वादशी कण्डिका द्रष्टव्या (३०९ पृ०)।

४— 'आत्मा'-इत्यस्यैवार्थो 'मध्यदेहः'-इति ज्ञेयः।

५— पा० सू० १. ४. ८४। ६— पा० सू० २. ३. ८।

शत्रुरिवाचरति, 'सः' उपभृद्भागः। 'उपभृता'-इति द्वितीयार्थे तृतीया[१]। स्पष्ट मन्यत् ॥ ६ ॥

विहितं समञ्जन मनूद्य मन्त्रं विधत्ते— "स समनक्तीति[२]। "सञ्ज्योतिषा ज्योतिरिति[३]। मन्त्रगतज्योतिःशब्दद्वयस्यार्थ माह— "ज्योतिर्वा इति। ध्रुवापेक्षया 'इतरा' जुहूः, तस्यां यत् 'आज्यम्', तत् तृतीयान्तज्योतिःशब्दार्थः; जुह्वपेक्षया 'इतरा' ध्रुवा, तस्यां यत् 'आज्यम्', तत् प्रथमान्तज्योतिःशब्दार्थः। एते चाज्यज्योतिषी क्रमेण सूर्याग्न्यात्मके; तदुभये समञ्जनेन 'सङ्गच्छेते' सङ्गते एव भवत इत्यर्थः[४] ॥ ७ ॥

प्राजापत्यस्य पूर्वाघारस्योपांशुत्वं प्रतिपादयितुं मनोवाग्भ्यां कृतं संवाद मुपन्यसितुं प्रतिजानीते— "अथात इति। 'अथ'-शब्दोऽधिकारार्थः; 'अतः' परम्, 'अहं भद्रे' निमित्ते, अह मेव भद्रः, अह मेव भद्र इति स्व-स्वोत्कर्षविषये, 'मनसो वाचश्च' यदुक्तं वचनम्, तदधिक्रियत इत्यर्थः। त मेवेतिहास मुदाहरति— "मनश्चेति। 'अहं भद्रे' आत्मीयोत्कर्षविषये 'ऊदाते' विवादं चक्रतुः। वदेः किति लिटि यजादित्वात् सम्प्रसारणम्[५] ॥ ८ ॥

---

१— पा० सू० ३. १. ८५।

२— जुह्वा ध्रौवाज्यमध्ये बिन्दुं पातयतीत्यर्थः।

३— वा० सं० २. ९. २। का० श्रौ० सू० ३. २. २।

४— "गच्छता मित्यध्याहारः। 'ज्योतिषा' ध्रुवास्थिताज्यरूपज्योतिषा सह 'ज्योतिः' जुह्वां सिच्यमान माज्यरूपं ज्योतिः 'सं'गच्छताम्"-इति महो० भा०। ५— पा० सू० ६. १. १५।

तत्र मनसो वाक्य मुदाहरति— "तद्धेति । श्रेयस्त्वकारण माह— "न वा इति । हे वाक्! 'त्वं' 'मया' मनसा अविषयीकृतं 'किम्' अपि 'न वदसि'; अतो विषयीकृत मेव वदसि । 'सा त्वं' 'मम' 'कृतानुकरा' मया यत्कृतं तदेवानुकुर्वती 'अनुवर्त्मा' अनुगन्त्री भवसीत्यर्थः ॥ ९ ॥

अथैतस्य प्रत्युत्तर माह— "अथ वागुवाचेति। हे मनः! 'अह मेव' त्वत्तः सकाशात् 'श्रेयसी'। कुतः? 'यत् वै त्वं' यद्वस्तु त्वं 'वेत्थ' जानासि, 'अहं तद् विज्ञपयामि' तदन्तर्गतविषयं परेषां विविधं प्रतिपादयामि; तत् 'सञ्ज्ञपयामि' सम्यक् ज्ञपयामि, प्रतिपादयामि । यतो विज्ञापन-सञ्ज्ञापन-साध्यं ममैव, अतस्त्वत्तः श्रेयसीत्यर्थः ॥ १० ॥

"ते प्रजापति मिति । एवं विवदमाने 'ते' मनश्च वाक् च 'प्रश्नं प्रति प्रजापतिम्' 'एयतुः' जग्मतुः । 'सः' च 'मनस एव' 'अनु'कूलम् 'उवाच'। तद्वाक्य मुदाहरति— "मन एवेति । कृतानुकरत्वस्य निष्कर्षहेतुत्वं लोकप्रसिद्ध्या दर्शयति— "श्रेयसो वा इति ॥ ११ ॥

"सा हेति। एवं प्रजापतिनोक्ते 'सा' वाक् 'परा'जितत्वेन 'उक्ता', 'विसिष्मिये' विगतस्मया भग्नवीर्या बभूव । तस्मात् पराभवात् तस्या वाचो यो 'गर्भः' देवमनुष्यादीना मुत्पत्तिहेतुः, सोऽपि 'पपात'। 'सा वाक्' पराजयेन खिन्ना सती 'प्रजापतिम्' 'उवाच' उक्तवती । किं मिति । हे प्रजापते! 'तुभ्य महम्' 'अहव्यवाड्' हव्यवहनस्य अहेतुभूतैव 'भूयासम्', 'यां मा' 'परा'जितत्वेनोक्तवानसि। यस्मादेवं

वाचोक्तम्, 'तस्मात्' एव कारणात् यज्ञसम्बन्धि 'यत् किम्' अपि प्रजापतिदेवताकं कर्म, 'तत्' सर्वं वाग्व्यापारविरहेण 'उपांश्वेव क्रियते'। 'अहव्यवाड्' -इति प्रागुक्तार्थस्मारणम्[1] ॥ १२ ॥

स पतितो वाचो गर्भः कथ मासीदिति तदिदानीं मनुसन्धत्ते— "तद्धैतदिति। 'तत्' 'ह' खलु 'एतत्' वाचः सकाशात्पतितं 'रेतः', 'चर्मन्' चर्मणि 'अन्यस्मिन् वा' यस्मिन् कस्मिंश्चित्पात्रे देवाः 'बभ्रुः' धृतवन्तः। भृत्वा च 'तत्' प्रतिदिवसं 'पृच्छन्ति'— "अत्रैव त्या३दितीति। 'अत्र' अस्मिन् पात्रे किं 'त्य३त्' एतत्प्रसिद्धं रेतः कथम्भूतम्? विचारयन्त इत्यर्थः। "विचार्यमाणानाम्"—इति[2] श्रुतिः। यस्माद्देवैर्विचारितम्, 'ततः' तस्मात् स गर्भो 'अत्रिः सम्बभूव'; अत्रैव त्यदित्यत्रिरिति शब्दव्युत्पत्तिरित्यर्थः। यतो गर्भाशयात् स्रुतो गर्भः अत्रिः सम्पन्नः, 'तस्मात्' स्रुतगर्भा रजस्वला स्त्री नाम्ना 'आत्रेयी'— इत्याख्यायते[3]। तया 'योषिता' सह सम्भाषणादिकं कुर्वन् पुरुषः 'एनस्वी' भवति। तैत्तिरीयकेऽप्याम्नातम्— "तस्मान्मलवद्वाससा न संवदेत, न सहासीत"-इति[4]।

---

१— "वाक् च मनश्चार्त्तीयेतामहं देवेभ्यो हव्यं वक्ष्यामीति वागब्रवीत्"— इत्यादि वाचोपाख्यान माम्नातम् तै० सं० २. ५. ११।

२— पा० सू० ८. २. ९७।

३— "—अथ रजस्वला। स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि"— इति अम० को० २. ६. २०। मनुव्याख्यायां कुल्लूकभट्टेन तूक्तम्—"आत्रेयी च रजस्वला ऋतुस्नातोच्यते, 'रजस्वला मृतुस्नाता मात्रेयीम्'—इतिवसिष्ठस्मरणात्"—इति।

४— तै० सं० २. ५. १. ५।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ४ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहा-
राजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये
वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथम-
काण्डे चतुर्थाध्यायः समाप्तः ॥ ४ ॥

———

[ अथ पञ्चमाध्याये प्रथमं ब्राह्मणम् ]



स वै प्रवरायाश्रावयति। तद्यत् प्रवरायाश्रावयति यज्ञो वा ऽआश्रावणं यज्ञ मभिव्याहृत्याथ होतारं प्रवृणा ऽइति तस्मात् प्रवरायाश्रावयति ॥ १ ॥

स इध्मसन्नहनान्येवाभिपद्याश्रावयति। स यज्ञा-नारभ्य यज्ञ मध्वर्युराश्रावयेद् वेपनो वा ह स्यादन्यां व्वार्त्ति मार्च्छेत् ॥ २ ॥

तद्धैके। व्वेदेस्तीर्णायै बर्हिरभिपद्याश्रावयन्तीध्मस्य वा शकल मपच्छिद्याभिपद्याश्रावयन्तीदं व्वै किञ्चिद्यज्ञ-स्येदं यज्ञ मभिपद्याश्रावयाम ऽइति व्वदन्तस्तदु तथा न कुर्यादेतद् वै किञ्चिद्यज्ञस्य यैरिध्मः सन्नद्धो भव-त्यग्निꣳ सम्मृजन्ति तदेव खलु यज्ञ मभिपद्याश्रावयति तस्मादिध्मसन्नहनान्येवाभिपद्याश्रावयेत् ॥ ३ ॥

स ऽआश्राव्य। य एव देवानाꣳ होता त मेवाग्रे प्रवृणीतेऽग्नि मेव तदग्नये चैवैतद्देवेभ्यश्च निह्नुते यदहा-ग्रेऽग्निं प्रवृणीते तदग्नये निह्नुते ऽथ यो देवानाꣳ होता त मग्रे प्रवृणीते तदु देवेभ्यो निह्नुते ॥ ४ ॥

स ऽआह। अग्निर्देवो* दैव्यो होतेत्यग्निर्हि देवानाꣳ

* 'ऽआहाग्निर्देवो'—इति ग।

होता तस्मादाहाग्निर्दैवो दैव्यो होतेति तदग्नये चैवै-तद्देवेभ्यश्च* निह्नुते यदहाग्रेऽग्नि माह तदग्नये निह्नुते ऽथ यो देवानाᳬ होता त मग्र ऽआह तदु देवेभ्यो निह्नुते ॥ ५ ॥

देवान्यक्षद्विद्वांश्चिकित्वानिति। एष[†] वै देवाननु-विद्वान् यदग्निः स ऽएनाननुविद्वाननुष्ठ्या[‡] यक्षदित्येवै-तदाह ॥ ६ ॥

मनुष्वद्भरतवदिति। मनुर्ह वा ऽअग्रे यज्ञेनेजे तदनु-कृत्येमाः प्रजा यजन्ते तस्मादाह मनुष्वदिति मनोर्यज्ञ ऽइत्यु वा ऽआहुस्तस्माद्वेवाह मनुष्वदिति ॥ ७ ॥

भरतवदिति। एष[§] हि देवेभ्यो हव्यं भरति तस्मा-द्भरतोऽग्निरित्याहुरेष ऽउ वा ऽइमाः प्रजाः प्राणो भूत्वा बिभर्त्ति तस्माद्वेवाह भरतवदिति ॥ ८ ॥

अथार्षेयं प्रवृणीते। ऋषिभ्य[||]श्चैवैन मेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति तस्मादार्षेयं प्रवृणीते ॥ ९ ॥

परस्तादर्वाक् प्रवृणीते। परस्ताद्ध्यर्वाच्यः प्रजाः

---

* 'चैव देवेभ्यश्च'—इति घ। † 'नित्येष'—इति ग।

‡ 'अनुष्ठ्या'—इति ख, डा०—वेबर-दृष्टे C-पुस्तके च।

§ 'दित्येष'—इति ग। || 'प्रवृणीत ऋषिभ्य'—इति ग।

प्रजायन्ते ज्यायसस्पतय ऽउ चैवैतन्निह्नुत ऽइदꣳ हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात् परस्तादर्व्वाक् प्रवृणीते ॥ १० ॥

स ऽआर्षेयमुक्त्वाह। ब्रह्मण्वदिति ब्रह्म ह्यग्निस्तस्मादाह ब्रह्मण्वदित्या च वक्षदिति तद्या ऽएवैतद्देवता ऽआवोढवा ऽआह ता ऽएवैतदाहा च वक्षदिति ॥ ११ ॥

ब्राह्मणा ऽअस्य यज्ञस्य प्रावितार ऽइति। एते* वै ब्राह्मणा यज्ञस्य प्रावितारो येऽनूचाना ऽएते ह्येनं तन्वत ऽएत ऽएनं जनयन्ति तद् तेभ्यो निह्नुते तस्मादाह ब्राह्मणा ऽअस्य यज्ञस्य प्रावितार ऽइति ॥ १२ ॥

असौ मानुष ऽइति। तदिमं मानुषꣳ होतारं प्रवृणीतेऽहोता हैष पुराथैतर्हि होता ॥ १३ ॥

स प्रवृतो होता जपति। देवता ऽउपधावति यथानुष्ठ्या देवेभ्यो वषट्कुर्याद् यथानुष्ठ्या देवेभ्यो हव्यं वहेद् यथा न ह्वलेदेवं देवता ऽउपधावति ॥ १४ ॥

तत्र जपति। एतत्त्वा† देव सवितर्वृणत ऽइति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविताग्निꣳ होत्रायेति तदग्नये चैवैतद्देवेभ्यश्च निह्नुते यदहाग्नेऽग्नि

---

* 'ऽइत्येते'–इति ग। † 'जपत्येतत्त्वा'–इति ग।

माह तदग्नये निह्नुतेऽथ यो देवानाᳬ होता तमग्र ऽआह तदु देवेभ्यो निह्नुते ॥ १५ ॥

सह पित्रा वैश्वानरेणेति। संवत्सरो वै पिता वैश्वानरः प्रजापतिस्तत्संवत्सरायैवैतत्प्रजापतये निह्नुते ऽग्ने पूषन् बृहस्पते प्र च वद प्र च यजेत्यनुवक्ष्यन्वा ऽएतद् यक्ष्यन् भवति तद्देताभ्य ऽएवैतद्देवताभ्यो निह्नुते यूय मनुब्रूत यूयं यजतेति ॥ १६ ॥*

वसूनाᳬ रातौ स्याम। रुद्राणा मुर्व्यायाᳬ स्वादित्या ऽअदितये स्यामानेहस ऽइत्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्या ऽएतेषा मभिगुप्तौ स्यामेत्येवैतदाह ॥ १७ ॥

जुष्टा मद्य देवेभ्यो वाच मुद्यास मिति। जुष्ट मद्य देवेभ्योऽनूच्यास मित्येवैतदाह तद्धि समृद्धं यो जुष्टं देवेभ्योऽनुब्रवत् ॥ १८ ॥

जुष्टां ब्रह्मभ्य ऽइति। जुष्ट मद्य ब्राह्मणेभ्यो ऽनूच्यास मित्येवैतदाह तद्धि समृद्धं यो जुष्टं ब्राह्मणेभ्योऽनुब्रवत् ॥ १९ ॥

जुष्टां नराशᳬसायेति। प्रजा वै नरस्तत्सर्वाभ्यः प्रजाभ्य ऽआह तद्धि समृद्धं यश्च वद यश्च न साधु-

* इतोऽनन्तरं मिह 'शतम्। ४००'—इति च-पुस्तके।

न्ववोचत्साध्वन्ववोचदित्येव व्विसृज्यन्ते यदग्ने होतृवुर्य्ये* जिह्मं चक्षुः परापतत् अग्निष्टत् पुनराभ्रियाज्जातवेदा विचर्षणिरिति यथा यानग्नेऽग्नीन् होत्राय प्रावृणत ते प्राधन्वन्नेवं यन्मेऽत्र प्रवरेणामायि तन्मे पुनराप्याय-येत्येवैतदाह तथो हास्यैतत् पुनराप्यायते ॥ २० ॥

अथाध्वर्युं चाग्नीधं च सम्मृशति। मनो वा ऽअध्वर्यु-र्व्वाग्घोता तन्मनश्चैवैतद्वाचं च सन्दधाति ॥ २१ ॥

तत्र जपति। षण्मोर्व्वीरंᳬहसस्पान्त्वग्निश्च पृथिवी चापश्च वाजश्चाहश्च रात्रिश्चेत्येता मा देवता ऽआर्त्ते-र्गोपायन्त्वित्येवैतदाह तस्यो हि न ह्वलास्ति य मेता देवता ऽआर्त्तेर्गोपायेयुः ॥ २२ ॥

अथ होतृषदन मुपावर्त्तते। स होतृषदनादेकं तृणं निरस्यति निरस्तः परावसुरिति परावसुर्ह† वै नामा-सुराणाᳬहोता स त मेवैतद्धोतृषदनान्निरस्यति ॥ २३ ॥

अथ होतृषदन ऽउपविशति। इद‡ महमर्व्वावसोः सदने सीदामीत्यर्व्वाव्वसुर्व्वै नाम देवानाᳬहोता तस्यैवैतत् सदने सीदति ॥ २४ ॥

तत्र जपति। व्विश्वकर्म्मंस्तनूपा ऽअसि मा मोदो-

---

* 'होत्रवुर्य्ये'–इति च ष-पुस्तके। † 'पुरावसुर्ह'–इति च।

‡ 'ऽउपविशतीद'–इति ग।

षिष्टं* मा मा हिꣳसिष्ट मेषु वां लोक इत्युदङ्ङ्जत्यन्तरा वा ऽएतदाहवनीयं च गार्हपत्यं चास्ते तद् ताभ्यां निह्नुते मा मोदोषिष्टं* मा मा हिꣳसिष्ट मिति तथा हैन मेतौ न हिꣳस्तः ॥ २५ ॥

अथाग्नि मीक्षमाणो जपति। विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य। प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्य मा वो वहानीति यथा येभ्यः पक्वꣳ स्यात् तान् ब्रूयादनु मा शास्त यथा व ऽआहरिष्यामि यथा वः परिवेक्ष्यामीत्येव मेवैतद्देवेषु प्रशासन मिच्छतेऽनु मा शास्त यथा वोऽनुष्ठा वषट्कुर्यां मनुष्या† हव्यं वहेय मिति तस्मादेवं जपति ॥ २६ ॥ २ ॥

॥ इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् [५. १०] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ ५ ॥
चतुर्थे सामिधेन्यादिराघारान्तः प्रदर्शितः।
प्रयोगः, पञ्चमेऽयाऽस्मिन् प्रवरादिर्निरूप्यते ॥

---

* 'मोदःषिष्टं'–इति च च-पुस्तके। † ३२८ पृ० ‡-टीप्पनी द्रष्टव्या।

तत्र दैवहोत्रार्षेयमानुषहोतॄणां वरणं विवक्षुरादौ तदङ्गतया आश्रावणं विधत्ते— "स वै प्रवरायाश्रावयतीति। 'सः' अध्वर्युः प्रवरार्थम् 'आश्रावयति' आश्रावयेत्। विहित माश्रावणं प्रशंसति— "तद्यत् प्रवरायेत्यादिना। आश्रावणस्य यज्ञनिर्वर्त्तकत्वात् यज्ञत्वम्। "अथ होतार मिति। दैवं होतारम्, अग्नि मित्यर्थः॥ १॥

आश्रावणाङ्गतयेध्मबन्धन-दर्भाणां ग्रहणं विधत्ते— "स इध्म-सन्नहनान्येवेति। 'एव'कारो वक्ष्यमाणपक्षद्वयनिरासार्थः।

विपक्षे बाध माह—"स यद्धेति। यज्ञावयवस्य कस्यचिदनन्वालम्भे सति निरालम्बनत्वेन 'वेपनः' कम्पनशीलो 'वा स्यात्'; 'अन्यां वा' पतनादिलक्षणाम् 'आर्त्तिम्' प्राप्नुयात्॥ २॥

तत्र केषाञ्चित् पक्ष मुपन्यस्यति— "तद्धैक इति। "स्तीर्णाया इति। "षष्ठ्यर्थे चतुर्थी[1]"। तेषा मभिप्राय माविष्करोति— "इदं वा इति। स्तरणसमिन्धनलक्षणस्य कार्यस्य करणात् 'इदं' बर्हिरा-दिकं 'यज्ञस्य' 'किञ्चित्' अङ्गम्। स्पष्ट मन्यत्॥

तन्निराकरोति— "तदु तथेति।

पक्षान्तरादस्य विशेष माह— "एतद्वा इति। इध्मसन्नहनाग्नि-सम्मार्जनलक्षण-कार्यद्वयकरणाद् 'एतत्' इध्मसन्नहनात्मक मेव 'यज्ञस्य' 'किञ्चित्' प्रशस्त मङ्गम्; अतस्तद्धारणपक्ष एव श्रेया-नित्यर्थः। अत एव कात्यायनः आदाविध्मसन्नहनान्येवाभिधाय[2]

---

१— पा० २. ३. ६२ सू० वा० १।

२— का० श्रौ० सू० १. ३. १४, १५, १६, १७ सूत्राणि द्रष्टव्यानि। "अष्टादशेध्मं परिधिवर्जाणाम्, एकविंशतिं वा"—इति च तत्रैव (१८, १९, सू०)। परिधिवर्जास्त्विहैवोक्तपूर्वाः (२प्र० ६ब्रा० १९, २०क०)।

पश्चात् पश्चान्तरं निर्द्दिदेश—"इध्मसन्नहनान्यादायोश्रावयेत्याश्रा-स्तुश्रौषडित्यग्नीद् वेदिबर्हिरिध्मशकल मपच्छिद्यैके"–इति[2] ॥ ३ ॥

अथ देवहोतुरग्नेर्वरणं विधत्ते— "स आश्राव्येति। 'अग्ने' आर्षेय-होतृवरण-मानुषहोतृवरणाभ्यां पूर्वम्। देवहोतारं विशिनष्टि—"अग्नि मेवेति ॥

वरणस्य प्रयोजन माह— "तदग्नय इति। 'निह्नुते' "नि+ह्नुङ् अपनये[3]"। अपनेतव्यश्चात्र तदसत्कारप्रयुक्तोऽपराधः। तस्य क्रिय-माणत्वादग्नेर्निह्नवः। कथं देवानां निह्नवः स्यादिति तं प्रकारं विभज्य दर्शयति— "यदहाग्नेऽग्नि मित्यादिना। अग्नेर्देवहोतृत्वेन देवसम्बन्धात् तद्वरणेन तेषा मपि निह्नव इत्यर्थः ॥ ४ ॥

अत्र मन्त्रपाठ एवाग्नेर्वरण मित्याह— "स आहेति। तथैव कात्यायनोऽप्याह— "अथ प्रवृणीतेऽग्निर्देवो दैव्यो होतेत्यादिना[4]।

---

१— "ब्रह्मन् प्रवरायाश्रावयिष्यामीति ब्रह्माण मामन्त्र्य आश्रावय-ओश्रावय-श्रावय-ओमाश्रावयेति वा ऽऽश्रावयति"–इति आप० श्रौ० सू० २.१५.२। अत एव तै०-सं०-भाष्ये चाह सायणः—"'आश्रावय'–इत्यय मेव पाठोऽत्रत्यः (तैत्तिरीयशाखीयः); 'ओ-श्रावय, श्रावय, ओमाश्रावय' – इति च त्रयं शाखान्तरीयम्"–इति (तै० सं० १.६.११.)।

२— का० श्रौ० ३.२.३, ४, ५ सूत्राणि।

३— अदा० आ० १०७२ धातुर्निपूर्व इत्यर्थः।

४— का० श्रौ० सू० ३.२.७।

प्रवरविधिशेषार्थवादे यो देवानां निह्नवः सङ्क्षेपविवरणाभ्यां सूक्तः, तं मन्त्रपदतात्पर्याभिधानद्वारेणापि प्रतिपादयते— "अग्निर्दै-त्यादिना । अग्नेर्देवहोतृत्वसमर्थनेन[1] ॥ ५ ॥

द्वितीयं मन्त्रभाग मनूद्य व्याचष्टे— "देवान् यक्षदिति । 'विद्वान्'-इत्यनेन यष्टव्यदेवतापरिज्ञानम्, 'चिकित्वान्'-इति परि-ज्ञातस्यार्थस्याविस्मरणम् । अग्नेस्तथाविधज्ञानवत्त्वं "विद्वाँ आ वक्षि विदुषो नि षत्सि"-इत्यादिमन्त्रेषु[2] प्रसिद्धम् । 'अनुष्ठ्या' अनुक्रमे-णेत्यर्थः[3] ॥ ६ ॥

---

१— "अग्निर्देवो दैव्यो होता देवान् यक्षद् विद्वांश्चिकित्वान् मनुष्वद् भरतवदमुवदमुवद् ब्रह्मण्वदा च वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रावि-तारो ऽसौ मानुषः"—इत्येष मन्त्रः प्रवरनिगद उच्यते । वरणार्थो निगदलक्षणो मन्त्र इति तदर्थः । तस्यास्यामुवदित्यन्त आद्यो भाग इह विहितः, उत्तरभागस्त्वनुपद मेवोपरिष्टाद् विधास्यते । तत्रापि भरतवदित्यन्तो देवहोतृवरणे विनियुज्यते, अमुवदित्यादिरार्षेय-वरणे, असाविति मानुषवरणे इति विवेकः । इमे भागाः आप० श्रौ० २. १५. ५-११-१४-सूत्रेषु च प्रपञ्च्य विहिताः ।

२— ऋ०स०३. १४. २ ऋचोऽपरार्द्ध एषः ।

३— " 'अनुष्ठु'-इत्येतदव्ययं सम्यक्-शब्दसमानार्थं सुष्ठिति यथा । सम्यक् अनुक्रमेण । 'अपदुःसुषु स्थः ( उ० १. २५. )'—इति विधीयमानः कु-प्रत्ययो बहुलवचनात् तिष्ठतेरनुपूर्वादपि भवति"—इति ऋ० स० १. ६४. ३ भाष्ये सायणः । " 'अनुष्ठुया' × × × सुपां सुलुगिति ( पा० सू० ७. १. ३९. ) तृतीयाया याजादेशः"—इति च ऋ० स० ४. ४. १५ भाष्ये स एवाह ।

"मनुष्वदिति। तृतीयमन्त्रभागगतस्य 'मनुष्वत्'-पदस्य सामर्थ्यलभ्योऽर्थः "तदनुकृत्येत्यादिः। अय मर्थः।— यथा मनुः स्वकीये यज्ञे देवान् अनुक्रमेणेष्टवान्, एवम् 'इमाः प्रजाः' अपि 'यजन्ते'। तद्वदग्निरपि होता भूत्वा यजत्वित्यर्थः ॥

तस्यैवाभिप्रायान्तर माह— "मनोर्यज्ञ इत्यादिना। 'इति'-शब्दोऽप्यर्थे, 'वै'-शब्दः प्रसिद्धौ। अस्मिन् पक्षे 'मनुष्वत्'-इति "तत्र तस्येव"-इति[1] षष्ठ्यर्थे वतिः। यस्मात् 'मनोर्यज्ञ इति' 'आहुः' सर्वे जनाः, अतो मनोर्यागकर्तृत्वम्; मनोर्यज्ञ इवास्मिन् यज्ञेऽपि देवान् यजत्वित्यर्थः। "नभोऽङ्गिरोमनुषां वत्युपसङ्ख्यानम्"—इति[2] भ-सञ्ज्ञया पदसञ्ज्ञाया रुत्वाभावः ॥ ७ ॥

"भरतवदितीति। भरतशब्दस्याग्न्यभिधायकत्वे द्वेधा व्युत्पत्तिं दर्शयति— "एष हीत्यादिना ॥ ८ ॥

यजमानस्यार्षेयवरणं विधत्ते— "अथार्षेय मिति। 'अथ' दैवहोतृवरणानन्तरम्, 'आर्षेयम्' ऋषीणां सम्बन्धिनं त मध्वर्युः 'वृणीते' वरणं कुर्यात्, "असुवदमुवत्"-इति[3] कीर्त्तयेत्। तत्प्रयोजन माह— "ऋषिभ्यश्चेति। 'यः' यष्टु मुपक्रान्तवान् 'अयं' यजमानः शारीरश्रुताध्ययनसम्पत्त्या हि महासामर्थ्यवानित्येतदमुवदमुवदिति पुरातनप्रसिद्धऋषिदृष्टान्तेन गम्यते, अतस्तेभ्योऽस्य यजमानस्य सामर्थ्य

---

१— पा०सू० ५. १. ११६। २— पा० १. ४. १८ सू०वा० ३।

३— "असुवदमुवदित्यत्र सर्वनामस्थाने यजमानसम्बन्धीनि पूर्वजभूतानि परस्तात् पितृस्थानीयादर्वाञ्चि पितृ-तत्पुत्र-तत्पौत्ररूपाणि त्रीणि आर्षेयाणि ऋषेरपत्यानि वृणीते"—इति का०श्रौ० ३. २. ७ सू०या०वृ०।

मावेदितं भवति। अत्राग्न्याधाने देवतापरिग्रहात् तत्सन्निधानं सिद्ध मित्यभिप्रेत्य 'ऋषिभ्यश्चैवैन मेतद्देवेभ्यश्च'-इत्युक्तम् ॥ ९ ॥

विहित मार्षेयवरण मवरोहेण कर्त्तव्य मिति विधत्ते— "परस्तादर्वागित्यादिना। "ज्यायसस्पतय इति। 'ज्यायान्' वृद्धः, पूर्व मित्यर्थः, तस्य पतिः ततोऽपि ज्येष्ठः, पूर्वपुरुषः। प्रत्येकविवक्षयैकवचनप्रयोगः; यः पूर्वः-पूर्वः तस्मै-तस्मै, तत्तन्नामग्रहणेन निह्नवं कृतवान् भवतीत्यर्थः ॥

परस्तादर्वाग्वरण मुपपादयति— "इदं हीति। पिता, पुत्रः, पौत्रः,—इत्यनेनैव क्रमेणोत्पत्तिरिति यत्, 'इदं हि' लोकसिद्धम्; अतस्तदनुसारेण आर्षे वरणेऽपि पूर्वपूर्वपुरुष मारभ्य अर्वाक्त मेव युक्त मित्यर्थः। तथाच कात्यायनः प्रवराभिधानसमये अवरोहक्रमेणैव वरण माह— "भृगुवच्च्यवनवदप्नवानवदौर्ववज्जमदग्निवदित्यादिना ॥ १० ॥

"स आर्षेय मिति। प्रवरशेषस्य प्रथमभाग मनूद्य व्याचष्टे— "ब्रह्मण्वदिति। 'ब्रह्म' परिवृढं कर्म[1], तत्साधकत्वाद् 'अग्निः' अपि 'ब्रह्म'; स यथा आवहति, तद्वदित्यर्थः। "आ च वक्षदिति। 'या एव देवताः' 'आवोढुम्' आक्रातुम् "अग्नि मग्न आवह"-इत्यादिना 'आह' होता, 'ता एव' आवहत्विति ॥ ११ ॥

तन्मन्त्रवाक्य माह— "ब्राह्मणा इति। साङ्गवेदाध्यायिनः 'अनूचानाः' 'ये' सन्ति, त एवात्र 'ब्राह्मण'-शब्दाभिधेया ऋत्विजः; ते

---

१— "ब्रह्म परिवृढं सर्वतः"-इति निरु० १. ३. ३।

'प्राविताऽरः' कर्त्तारः। अवतिरत्र क्रियावचनः। "तन्वते"-इत्यस्य तात्पर्याभिधानं 'जनयन्ति'—इति। यस्मादेतद्भागपाठात् तेभ्यो निह्नवः कृतो भवति, तस्मादयं मन्त्रभागः पठनीय इत्यर्थः ॥ १२ ॥

आर्षेयवरणानन्तरं मानुषहोतृवरणं कर्त्तव्यम्, तच्च मन्त्रपाठ एव तद्वरण मित्याह— "असाविति। 'तत्' तेन "असौ"-इतिमन्त्रपाठेन। असावित्यत्र होतुर्नाम प्रथमान्तं निर्दिशेत्। तथाच कात्यायनः— "असौ मानुष इति होतृनामग्रहणम्"-इति[१]। 'अहोता'-इति छेदः[२]। 'एतर्हि' एतस्मिन् मन्त्रलक्षणे वरणे सति ॥ १३ ॥

---

१— का० श्रौ० सू० ३. २. १२। अस्यैव वृत्तौ याज्ञिकदेवेन हि विहितस्य कृत्स्नस्य प्रवरमन्त्रस्यैव मर्थः कृतः—" 'अग्निः' अयं 'देवः', न मानुषः, न भूतमात्र मचेतनम्। 'दैव्यः' देवैरपि पुरस्कृतः सम्भावितशक्तिः। 'होता' साधुह्वाता। य ईदृशो होता, सः 'देवान्' 'यक्षत्' यजतु, ('आ च वक्षत्') आवहतु च। त महं होतारं वृणे इत्यर्थः। 'विद्वान्' जानानः। यथा यत्र च यष्टव्यो-ऽनादौ संसारेऽभ्यस्तकर्मेत्यर्थः। कथम्? 'चिकित्वान्' चेतनावान्, अविस्मरणशीलः। सोऽधुनापि अप्रमत्तः सन् 'मनुष्वत्' मनोरिव। यथा स्वायम्भुवादेर्मनोर्यज्ञेऽग्निना देवा इष्टाः, तथास्यापि यजमानस्य यज्ञे यजत्वित्यर्थः। 'भरतवत्' भरतो मानवो वर्षाधिपतिः, तस्येव। वसिष्ठादिर्यजमानस्य पूर्वजो मन्त्रदृक्, तस्येव। ब्रह्मा सर्वेषां पूर्वजः, तस्येव। 'आ च वक्षत्' आवहतु च। यद्यपि चैव मग्निरेवात्र होता, तथापि ब्राह्मणा अस्य यज्ञस्य प्रकर्षेण 'अवितारः' रक्षितारः। × × ×। 'असौ' देवदत्तो यज्ञदत्तो वा 'मानुषः' होता, 'यक्षत्, आ च वक्षत्'—इति वर्त्तते"—इति।

२— मूले "प्रवृणीतेऽहोता"—इत्यत्र बोधम्।

इत्थ मध्वर्युकर्त्तृकं होतृवरण मभिधाय तस्य स्वं जपं विधत्ते—"स प्रवृतो होता जपतीति। "देवता उपधावतीति जपप्रयोजनकथनम्; 'तस्मात्' मन्त्रे सति पितृमग्न्यादीनां श्रवणात्। उपधावनप्रकारं योजयित्वा दर्शयति—"यथानुष्ठ्येति। यथा याज्यासमये होता वषट्कर्त्तव्यदेवता अनुदिश्य-अनुदिश्य वषट्करोति, यथा वा अग्निस्तं तं देव मुद्दिश्य हव्यं वहति, तथाच स यज्ञो यथा 'न ह्वलेत्' न चलेत्, न भ्रंश्येत; एवं स होता देवेभ्य उपधावनं कृतवान् भवति ॥ १४ ॥

"तत्र जपतीति। 'तत्र' तस्मिन् वरणाख्ये कर्मणि। मन्त्रभागस्याय मर्थः— हे 'सवितः' सकलकर्मानुज्ञातः! 'देव!' 'एतत्' एतेन मम वरणेन मद्व्याजेन 'त्वा' त्वा मेव 'वृणते' अध्वर्यवः। 'तत्' तेन मन्त्रपाठेन सवितुरनुज्ञा लब्धा भवति। 'हि'-शब्देन "सविता वै प्रसवाना मीशे"[1]—इत्यादिश्रुतिप्रसिद्धिर्द्योत्यते ॥

"अग्निं होत्रायेतीति। होतुः कर्म 'होत्रं' स्व-स्व-मन्त्रपाठादि; तत् होत्रं कर्त्तुम् 'अग्निं' वृणते; न तु मा मित्यर्थः ॥

मन्त्रगतं यत् 'अग्नि'-पदम्, यच्च तद्विशेषणं 'देवहोतृ'-पदम्, तदुभयं पूर्ववद् विभज्य प्रशंसति— "तदग्नय इत्यादिना ॥ १५ ॥

"सह पित्रेत्यादि। विश्वे च ते नराश्च विश्वनराः, तेषां सम्बन्धी 'वैश्वानरः'; स च पालनात् 'पिता' उच्यते; तेन सह, अग्निं वृणत इति पूर्वत्र सम्बन्धः। वैश्वानरात्मकं देव मग्निं च वृणत इत्यर्थः[2] ॥

---

१— ऐ० ब्रा० १. ३. ५।

२— मन्त्रत्रयमिहैवाम्नातो वाजसनेयिनाम्। एवमुत्तरत्रापीह बहुत्र।

वैश्वानरशब्दस्याग्नौ प्रसिद्धेस्तस्याभिमत मर्थ माह— "संवत्सरो वा इति। "संवत्सरो वै प्रजापतिः"-इतिश्रुतेः[1] संवत्सरस्य प्रजापतित्वम्; तस्यैव सकलमनुष्योत्पादकत्वेन सम्बन्धात् वैश्वानरत्वम् ॥

"अग्ने पूषन्निति मन्त्रभागस्याभिप्राय माह— "अनुवक्ष्यन् वा इति। होता ह्यनुवाक्याः पठिष्यन्, याज्याभिः 'यक्ष्यन्' च 'भवति'; 'तत्' एतदनुवचनं यजनस्यैव 'एताभ्यः' अग्न्यादि-'देवताभ्यः' निह्नवाय भवति। प्र च वद, प्र च यजेति प्रवचनयजनयोस्तेष्वारोपः। इम मेव निह्नुतिं विशदयति— "यूय मिति ॥ १६ ॥

"वसूना मिति। रातिर्दानम्, तस्यां भवेम; धनं लभेमहीत्यर्थः। "रुद्राणाम् उर्वायाम्"-इति। उरुत्वे तेषां यन्महत्वम्, तस्मिन् स्यामेति सम्बन्धः। 'स्वादित्याः' तेषा मुपसदनेन सुप्रीताः आदित्याः वयम् 'अदितये' देवमात्रे, एतन्नामिकायै देवतायै वा 'अनेहसः' अपापिनः, अनपराधिनो भवेम, अथवा दितिः खण्डनं नाशः[2], तदभावाय चिरकालजीवनाय भवेमेत्यर्थः ॥

अत्र मन्त्रविवक्षया "त्रया देवाः"-इत्युक्तम्, पृथक् पृथक् प्रार्थनायाः पर्यवसितं फल माह— "एतेषा मिति ॥ १७ ॥

मन्त्रभागे विशेष्यभूतस्य वाक्शब्दस्य अर्थे 'उद्यासम्' इत्यत्र वदिधातुनैव उपात्त मित्यभिप्रेत्य तद्विशेषणीभूतं 'जुष्टाम्'-इति पदं क्रियाविशेषणतया व्याचष्टे— "जुष्टा मित्यादिना। अत्र केवलोऽपि वदिरुच्चारणार्थे वर्त्तते। कि मनेन वाचो जुष्टत्वप्रार्थनयेति तदुपपादयति— "तद्ब्रवीति। 'यो जुष्टम्' 'अनुब्रवत्' अनु-

---

१— ऐ० ब्रा० ३. २. ७। २— निरु० ४. ४. १, २; ११. ३. १, २।

ब्रूयात्, 'तत्' तदीयं कर्म्म 'समृद्धम्' इत्यर्थः। बुञो लेट्यडागमः[1]। एव मुत्तरवाक्ययोरपि योजना ॥ १८ ॥

'ब्रह्मभ्यः'-इति ब्रह्मशब्दस्य ब्राह्मणजातिरर्थ इति व्याचष्टे— "जुष्टां ब्रह्मभ्य इति ॥१९॥

"जुष्टां नराशंसायेति। यथा सर्वेऽपि नराः 'आ' सर्वतः शंसन्ति, तथाविधशंसनाय 'जुष्टां' प्रिया मित्यर्थः। अत्र साधारणेन नराणां यो जोष आशंसितः, स युक्त एवेत्याह— "प्रजा वै नर इत्यादिना। न केवलं तद्धि होतृणाना मेव संलापोऽपेक्षितः, अपि तु यो जुष्टां वाचं जानाति, यश्च न, स सर्व्वैरप्ययं साधुः उक्तवा-नित्येवंरूपया वाचा 'विसृज्यन्ते' उच्चार्यन्ते तदेव समृद्ध मित्यर्थः ॥

इमानि मन्त्रवाक्यानि व्याख्याय ऋगात्मकं मन्त्रं व्याख्यातुं साकल्येनानुवदति— "यद्द्येति। मन्त्रस्याय मर्थः।— 'होतृवर्य्ये' होतृवरणे निमित्तभूते सति[2] 'यत्' 'चक्षुः' अङ्गम् ('जिह्मं') अंशोपरोधेन कुटिलं ('परापतत्') सन्निपतेत्, 'तत्' विशेषेण द्रष्टा 'अग्निः' पुनराभरतु। चक्षुर्वत्प्रधानं होत्रस्याङ्गं यन्नष्ट मभूत्, तदग्निः समादधात्विति तात्पर्यार्थः। मन्त्रस्य तात्पर्यार्थं प्रदर्श्यते— "यथेत्यादिना। पुरा 'यान् अग्रे अग्नीन् होत्राय' वृतवन्तः, 'ते' 'प्राधन्वन्' प्रगता नष्टा अभवन्; 'एवम्' इदानीं 'मे' मदङ्गं

---

१— धा० अदा० उ० ३४। पा० ३. ४. ७ सू०, ३. ४. ९४ सू०।

२— 'होतृवूर्य्ये'-इति ऋ० सं० १. ३१. ३। "होत्रा व्रियत इति होतृवूर्य्यो यज्ञः"-इति तत्र सा० भा०।

'प्रवरेण' निमित्तेन 'अमायि' हिंसित मभूत्; तत्समाधत्स्वेत्युक्त मिति ॥ २० ॥

अथ वृतस्य होतुः सम्मर्शनं विधत्ते— "अथाध्वर्यु मिति। सम्मर्शनेनेष्टं विवत्तुः अनयोः सम्मर्शने कारण माह— "मनो वा इति। अध्वर्य्योः कर्त्तव्यविषयस्य मनोव्यापारस्य बाहुल्यात् मनो-रूपत्वाभिधानम्। याज्यापुरोनुवाक्यादिकेवलवाग्व्यापारात् होतु-र्वागात्मकता, तदुभयात्मकत्वाद् यज्ञस्य; तयोः सम्मर्शनेन मनोवाचोः सन्धानं कृतं भवति। संस्पर्शनप्रकार माश्वलायन माह— "अंसेऽध्वर्यु मन्वारभेत पार्श्वस्थेन पाणिना आग्नीध्र मङ्कदेशेन"-इति[1] ॥ २१ ॥

तत्र जपतीति। अन्वारम्भेन जपितव्यं मन्त्रं सतात्पर्यं माह— "षण्मोर्वीरित्यादिना। अग्न्यादीना मुरुत्वं लोकसिद्धम्। 'एताः' मां दुरितात् पान्त्विति तस्यार्थः। 'अंहः'-शब्दस्य तात्पर्याभिधानम् "आर्त्तेरिति। आर्त्तिर्नाशः। अग्न्यादीनां प्रत्यक्षदेवतात्वात् तद्रक्षि-तस्य नाशाभावः प्रसिद्ध इत्याह— "तस्यो हीति ॥ २२ ॥

"अथेति। सम्मर्शनदेशात् 'होतृषदनं' प्रत्यागच्छेत्। उत्तर-वेदिश्रोणेर्होतृषदनम्। 'सः' होता तस्मात् सदनात् 'एकं तृणं' "निरस्तः"-इतिमन्त्रेण निरस्येत् ॥

परावस्वोर्निरसने कारण माह— "परावसुर्हेति। 'परा' परागतं 'वसु' यज्ञाख्यं धनं यस्मात्, स तथोक्तः[2] ॥ २३ ॥

"अथ होतृषदन इति। उपवेशनमन्त्र माह— "इद मह

---

१— आश्व० श्रौ० सू० १. ३. २५, २६। सव्येन वेति तच्छेषः।

२— शाङ्खा० श्रौ० सू० १. ६. ६। 'पराग्वसुः'—इति कौषी० ३. १३७।

मिति। 'अर्वा' अर्वाक् अभिमुखं 'वसु' यज्ञाख्यं धनं यस्य, स तथोक्तः[1], 'तस्य'; सीदत्यत्रेति 'सदनं' स्थानम्। तत्र संस्थितिभावनया स्वय मपि तत्सदृशो भवतीत्यभिप्रायः ॥ २४ ॥

तत्रोपविष्टस्य मन्त्रजपं विधत्ते— "तवेति। हे विश्वकर्मन्! कृत्स्नविषयव्यापारं करोतीति विश्वकर्मा, 'तनूपाः' तनोः पाता, महादेव! त्वं शरीरस्य पाता भवसि। उपवेशनस्थानादीषत् उत्तरतः स्खलनं समन्त्रकं विधत्ते— "मा मेति। तस्याय मर्थः।— हे उभावग्नी! युवां 'मा' माम् 'उत्' उत्कृष्ट माधिक्येन 'मा उषिष्टं' दाहं माकार्षम्। "उष दाहे"-इति[2] धातुः। अस्यैव तात्पर्य माह— 'मा हिंसिष्टम्'-इति। यतः 'एषः' 'लोकः' 'वां' सम्बन्धि स्थानम्, अतो हेतोर्मा माहिंसिष्ट मिति प्रार्थना युक्ता। होतृसदनात् 'उदङ्' उदङ्मुखः 'एजति' "एजृ कम्पने[3]", जपन् कम्पते। "अन्तरा वा इत्यादिना दाहप्रसङ्गप्रदर्शनम् ॥ २५ ॥

अथ समन्त्रकं[4] जपं विधत्ते— "अयाग्नि मित्यादिना। मन्त्रस्याय मर्थः।— हे 'विश्वे देवाः!' 'इह' यज्ञे होतृत्वेन 'वृतः' अहं 'यथा' येन प्रकारेण, 'यथा' येन च 'पथा' मार्गेण, 'वः' 'हव्यम्' 'आ' समन्तात् 'वहानि' प्रापयानि; तदुभयं 'मे' अज्ञाय मह्यम्

---

१— वा० सं० १५. १९. 'अर्वाग्वसुः'-इति। "पर्जन्यो वा उपरि तद्यत्त-माहोपरीत्युपरि हि पर्जन्योऽथ यदर्वाग्वसुरित्याहातो ह्यर्वाग्वसुः वृष्टिरन्नं प्रजाभ्यः प्रदीयते"-इतीहैवोपरिष्टात् (८. ३. ६. २०.)।

२— धा० व्वा० प० ६९९। ३— धा० व्वा० प० २३४।

४— ऋ० सं० १०. ५२. १।

'प्रश्रुत'। एतन्मन्त्रस्यार्थं लोकदृष्टान्तप्रदर्शनपुरःसरं विशदयति— "यथा येभ्य इत्यादिना। 'यथा' लोके कश्चित् पाचकः तत्स्वामिनं पृच्छति— 'पक्वम्' अन्नं यथा आनेष्यामि, यथा वा आनीतं पात्रे समर्पयामीति। एवम्प्रकारप्रश्नस्य लोके दृष्टत्वात् उक्त मनुशासन-प्रार्थन मित्यर्थः। दार्ष्टान्तिके योजयति— "एव मेवैतदिति। 'अनुष्ठ्या' आनुपूर्व्येण 'वषट्कुर्याम्' वषडिति शब्दं ब्रूयाम्। 'वषड्'-शब्दो हविःप्रदानसाधनः[१]; "स्वाहाकारेण वा वषट्कारेण वा देवेभ्योऽन्नं प्रदीयते"—इतिश्रुतेः[२]। सिद्ध मन्यत् ॥२६॥२[५.१.]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम्[३] ॥

---

१— "यस्यै देवतायै हविर्गृहीतं स्यात्, तां ध्यायेद् वषट् करिष्यन्"—इत्यादि ऐ० ब्रा० ३. १. ८। उद्धृतञ्चैतद्वचनं निरुक्ते (८. ३. ७.)। "वौऽषडिति वषट्कारः"—इति आश्व० श्रौ० सू० १. ५. १५। अतएव तै० सं० १६. ११ भाष्ये सायणोऽप्याह—"वषट्कारेण वौषडित्येवंरूपो मन्त्रो विवक्षितः"—इति।

२— "यजतिजुहोतीनां को विशेषः? तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतयः, उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः"—इति का० श्रौ० १. २. ५, ६, ७ सू०।

३— अस्मिन् ब्राह्मणे प्रवरविधावाश्रावणादिक माम्नातम्। तत्पद्धति-श्चैवम्।— अध्वर्युर्होतारं प्रादक्षिण्येन मुक्त्वोत्कर मपरेण प्राङ्मुखो ह्यौध्मसन्नहनान्यादाय 'ओऽश्रावय'—इत्याह। ततोऽग्नीत् दक्षिणा-

अग्निर्होता वेत्त्व*ग्निर्होत्र†मिति । अग्नि‡रिदं होता वेत्त्वित्येवैतदाहाग्निर्होत्रमिति तस्यो हि होत्रं वेत्तु प्रावित्रं मिति यज्ञो वै प्रावित्रं वेत्तु यज्ञ मित्येवैतदाह साधु ते यजमान देवतेति साधु ते यजमान देवता यस्य तेऽग्निर्होतेत्येवैतदाह घृतवती मध्वर्यो स्रुच मास्यस्वेति तदध्वर्युं प्रसौति स यद्देका मिवाह ॥ १ ॥

यजमान एव जुह्व मनु । योऽस्मा अरातीयति स उपभृत मनु स यद् द्वे इव ब्रूयाद् यजमानाय द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्यादत्रैव जुह्व मन्वाह उपभृत मनु स यद् द्वे इव ब्रूयादत्त§ आद्यं प्रत्युद्यामिनं कुर्यात् तस्मादेका मिवैवाह ॥ २ ॥

---

मुखोऽध्वर्यु मुत्तरेण स्थितः स्फ्यसन्नहने पाणौ कृत्वा 'अस्तु श्रौ३षट्'–इति प्रत्याह । ततो गृहीतसन्नहन एवाध्वर्युः 'अग्निर्देवो दैव्यः'–इत्यादिराह । ततः परस्तादर्वाञ्चि यजमानस्य त्रीणि प्रवर-नामधेयान्यप्याह । तद्यथा–'कश्यपवदवत्सारवन्नैध्रुववदिति । एतद-नन्तर मेव 'ब्रह्मण्वदा च वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रावितारो-ऽमुकशर्मा होता मानुषः'–इति होतृनामग्रहणं मुच्चैरुपांशु वा कर्त्तव्यम् । ततो होता 'देव सवितरित्यादिकं जपित्वा उत्थाय अध्वर्यु मग्नीधं चांसयोः प्रादेशेन सम्मृशति । होत्रा सम्मृष्टौ तौ चोपविशत इति ॥

* 'वेत्व०'–इति क, ख, ग, डा०-वेबर्-तृष्टस्य । † 'होत्र'–इति सा०-सम्मतः ।
‡ 'मित्यग्नि'–इति ग । § 'दत्तु'–इति च ।

देवयुवं विश्ववारा मिति*। उप†स्तौत्येवैना मेतन्महु-
यत्येव यदाह देवयुवं व्विश्ववारा‡ मितीडामहै देवाँ३§
ऽईडेन्यान् नमस्याम नमस्यान् युजाम यज्ञियानितीडा-
महै तान् देवान् य ऽईडेन्या नमस्याम तान्ये नमस्या
युजाम यज्ञियानिति मनुष्या वा ऽईडेन्याः पितरो
नमस्या देवा यज्ञियाः ॥ ३ ॥

या व्वै प्रजा यज्ञे ऽनन्वाभक्ताः। पराभूता वै ता ऽएव
मेवैतद्या ऽइमाः प्रजा ऽअपराभूतास्ता यज्ञ ऽआभजति
मनुष्याननु पशवो देवाननु व्वयाꣳस्योषधयो व्वनस्पतयो
यदिदं किञ्चैव म तत्सर्व्वं यज्ञ ऽआभक्तम् ॥ ४ ॥

ता वा ऽएताः। नव व्याहृतयो भवन्ति नवेमे पुरुषे
प्राणा ऽएतानेवास्मिन्नेतद्दधाति तस्मान्नव व्याहृतयो
भवन्ति ॥ ५ ॥

यज्ञो ह देवेभ्योऽपचक्राम। तं देवा ऽअन्वमन्त्रयन्ता
नः शृणुप न ऽआवर्त्तस्वेति सोऽस्तु तथेत्येव देवानुपाव-
वर्त्त तेनोपावृत्तेन देवा ऽअयजन्त तेनेष्ट्वैतदभवन्
यदिदं देवाः ॥ ६ ॥

---

*, ‡ 'देवयुवं विश्ववारा मिति'—इति च। † 'मित्युप'—इति ग।
§ 'देवांश्'—इति क, 'देवांश्'—इति ख, 'देवाँ३॥'—इति च।

स यदाश्रावयति। यज्ञ मेवैतदनुमन्त्रयत ऽआ नः शृणूप न ऽआवर्त्तस्वेत्यथ यत्प्रत्याश्रावयति यज्ञ ऽएवैतदुपावर्त्ततेऽस्तु तथेति तेनोपावृत्तेन रेतसा भूतेनऽर्त्विजः सम्प्रदायं चरन्ति यजमानेन परोऽक्षं यथा पूर्वंपात्रेण सम्प्रदायं चरेयुरेव मनेनऽर्त्विजः सम्प्रदायं चरन्ति* तद्वाचैवैतत्सम्प्रदायं चरन्ति व्वाग्घि यज्ञो व्वागु हि रेतस्तदेतेनैवैतत्सम्प्रदायं चरन्ति† ॥ ७ ॥

सोऽनुब्रूहीत्येवोक्त्वाध्वर्युः। नाप‡व्याहरेन्नो ऽएव होतापव्याहरेदाश्रावयत्यध्वर्युस्तदग्नीधं यज्ञ ऽउपावर्त्तते ॥ ८ ॥

सोऽग्नीन्नापव्याहरेत्। आ§ प्रत्याश्रावणात् प्रत्याश्रावयत्यग्नीत् तत्पुनरध्वर्युं यज्ञ ऽउपावर्त्तते ॥ ९|| ॥

सोऽध्वर्युर्नापव्याहरेत्। आ यजेति व्वक्तोर्यजेत्येवाध्वर्युर्होत्रे यज्ञꣳ सम्प्रयच्छति ॥ १० ॥

स होता नापव्याहरेत्। आ¶ वषट्कारात् तं** वषट्कारेणाग्नावेव योनौ रेतो भूतꣳ सिञ्चत्यग्निर्व्वै योनिर्यज्ञस्य स ततः प्रजायत ऽइति नु हविर्यज्ञेऽथ सौम्येऽध्वरे ॥ ११ ॥

---

*, † 'चरन्ति'—इति च। ‡ 'ध्वर्युर्नाप'—इति ग।

|| "काण्डस्यार्द्धम्। ४१९"—इतीह च-पुस्तकेऽधिकः पाठः।

§, ¶ 'हरेदा'—इति ग। ** 'स'—इति सा०-सम्मतः।

स वै ग्रहं गृहीत्वाध्वर्युः। नापव्याहरेदोपाकरणादु-
पावर्त्तध्व मित्येवाध्वर्युरुद्गातृभ्यो यज्ञꣳ सम्प्रयच्छति॥१२॥

त उद्गातारो नापव्याहरेयुः। आत्तमाया एषोत्तमे-
त्येवोद्गातारो होत्रे यज्ञꣳ सम्प्रयच्छन्ति ॥ १३ ॥

स होता नापव्याहरेत्। आ* वषट्कारात्तं व्वषट्कारे-
णाग्नावेव योनौ रेतो भूतꣳ सिञ्चत्यग्निर्व्वै योनिर्यज्ञस्य
स ततः प्रजायते ॥ १४ ॥

स यद्ध सोऽपव्याहरेत्। यं† यज्ञ उपावर्त्तते यथा
पूर्णपात्रं परासिञ्चेदेवꣳ ह स यजमानं परासिञ्चेत्
स यत्र हैव ऋत्विजः संविदाना यज्ञेन चरन्ति सर्व्वं
मेव तत्र कल्पते न मुह्यति तस्मादेव मेव यज्ञो
भर्त्तव्यः ॥ १५ ॥

ता वा एताः। पञ्च व्याहृतयो भवन्त्यो श्रावयास्तु
श्रौषड् यज ये यजामहे व्वौषडिति पाङ्क्तो यज्ञः पाङ्क्तः
पशुः पञ्चर्त्तवः संवत्सरस्यैषैका यज्ञस्य मात्रैषा
सम्पत् ॥ १६ ॥

तासाꣳ सप्तदशाक्षराणि। सप्तदशो वै प्रजापतिः
प्रजापतिर्यज्ञ एषैका यज्ञस्य मात्रैषा सम्पत् ॥ १७ ॥

---

* 'हरेद्'–इति ग। † 'हरेद्यं'–इति ग।

ओ श्रावयेति वै देवाः। पुरोवातꣳ ससृजिरेऽस्तु श्रौषडित्यभ्राणि समप्लावयन् यजेति विद्युतं ये यजामह इति स्तनयित्नुं वषट्कारेणैव प्रावर्षन् ॥ १८ ॥

स यदि वृष्टिकामः स्यात्*। यदीष्ट्या वा यजेत दर्शपूर्णमासयोर्वैव ब्रूयाद् वृष्टिकामो वा अस्मीति तचो ऽध्वर्युं ब्रूयात् पुरोवातञ्च विद्युतञ्च मनसा ध्यायेत्यभ्राणि मनसा ध्यायेत्यग्नीधꣳ स्तनयित्नुञ्च वर्षञ्च मनसा ध्यायेति होतारꣳ सर्व्वाण्येतानि मनसा ध्यायेति ब्रह्माणं वर्षति हैव तत्र यत्रैव ऋत्विजः संविदाना यज्ञेन चरन्ति ॥ १९ ॥

ओ श्रावयेति वै देवाः†। विराज मभ्याजुहुवुरस्तु श्रौषडिति वत्स मुपावासृजन् यजेत्युदनयन्‡ ये यजामह इत्युपासीदन् वषट्कारेणैव विराज मदुहतेयं वै विराड़स्यै वा एष दोह एवꣳ ह वा अस्मा इयं विराट् सर्व्वान् कामान् दुहे य एव मेतं विराजो दोहं वेद ॥ २० ॥ ३ ॥

॥ इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् [५. २.]॥

---

* 'स्याद्'–इति ग। † 'देवा'–इति ग।

‡ 'यजेत्युदजयन्'–इति घ।

अथ स्रुगादापननिगदं नवधा विभज्य व्याचिख्यासुराद्यं भाग मनूद्य तस्यार्थ माह— "अग्निर्होतेति[१]। वेदितव्यस्य मन्त्रे अनिर्देशात् 'इदम्'-इति तत्कर्मप्रदर्शनम्। देव्यो 'होता अग्निः' 'इदम्' अनुष्ठेयं कर्म 'वेत्तु' जानातु। एतन्मन्त्रवाक्यं 'वेत्त्विति' किम्? आह— इदं 'हौत्रं' कर्म। जानात्वित्याह, किं तद्वेदनेनेति तस्य हौत्रेण प्रतिनियतं सम्बन्ध माह— "अग्नेरिति। 'तस्य उ हि' तस्यैव हि। स च सम्बन्धनियम एवकारार्थेन 'उ'-शब्देन द्योत्यते।

द्वितीयभागे 'प्रावित्र'-शब्दार्थ माह— "यज्ञो वा इति। प्रकर्षेणावतीति 'प्रावित्रः' यज्ञः। अवतेरित्रप्रत्ययः[२]। यज्ञापरिज्ञाने हौत्रज्ञान मपि व्यर्थ मिति तज्ज्ञान माशास्यते।

तृतीयभागे सामान्येन निर्दिष्टां यजमानदेवतां विशिष्य व्याचष्टे— "साधु त इति। हे 'यजमान'! 'ते तव 'देवता' 'साधु' साध्वी। कथं साधुत्वम्? कैषा सा? तदाह— "यस्य त इति[३]। होतृत्वगुणकोऽग्निरेव तव देवतेत्याह स्म मन्त्रवाक्यम्।

---

१— "अग्निर्होतेति स्रुगादापनं प्रयाजेषु सन्निधेः"-इति का० श्रौ० सू० ३. २. १५। श्रुतस्त्वेष तैत्तिरीयाम्नाये— तै० ब्रा० ३. ५. ४. १; सं० २. ५. ६। तत्रत्यपाठस्त्वेवम्— "(१) अग्निर्होता वेत्त्वग्निः। (२) होत्रं वेत्तु प्रावित्रम्। (३) स्मो वयम्। (४) साधु ते यजमान देवता। (५) घृतवती मध्वर्यो स्रुच मास्यस्व। (६) देवायुवं विश्ववाराम्। (७) ईडामहै देवाँ ईडेन्यान्। (८) नमस्याम नमस्यान्। (९) यजाम यज्ञियान्"-इति। एष एव मन्त्रः स्रुगादापननिगद उच्यते।

२— "अमित्रादिभ्य इत्रोत्रौ"-इति उ० ४. १७५।

३— तै० सं० २. ५. ६ भाष्ये उक्तम्— "त मिमं शाखान्तरपाठं दूषयतीत्यादि। स च पाठस्तत्रान्यविध एवोद्धृत इति न शतपथीयः।

चतुर्थभागे वाक्यार्थस्य स्पष्टत्वात्तात्पर्य माह— "घृतवती मिति। घृतपूर्णां 'स्रुचम्' 'आस्यस्व' हस्ते धारयेत्यर्थः। अनेन अध्वर्यवे अनुज्ञां दत्तवान् भवति[1]। "उपसर्गादस्यत्यूह्योर्वा वचनम्"-इत्यात्मनेपदम्[2]। मन्त्रे 'स्रुचम्'-इत्येकस्या एव निर्द्देशं द्वित्वनिर्द्देशपक्षनिन्दापुरःसरं द्रढयति— "स यदित्यादिना। 'सः' होता 'एका मिव' स्रुच मित्येका मेव ब्रूयात् ॥ १ ॥

"यजमान एवेति। 'जुह्व मनु' जुह्वा अनुकूलः, तदभिमानीत्यर्थः। 'यः' च यजमानस्य 'अरातीयति' शात्रव मिच्छति, 'सः' 'उपभृत मनु' उपभृतोऽनुकूलः। यत एव मतो होता यदि 'द्वे इव' जुहूपभृतावास्यस्वेत्येवं 'ब्रूयात्', तदा 'यजमानाय' द्वेष्टारं शत्रुं 'प्रत्युद्यामिनं' प्रतिकूलोद्योगवन्तं 'कुर्यात्'। तथा च तैत्तिरीयकम्— "यजमानदेवत्या वै जुहूः, भ्रातृव्यदेवत्योपभृत्"-इति[3]। दोषान्तरोपन्यासेनापि द्विवचनं निषेधति— "अत्तैवेति। 'आद्यः' अदनीयो व्रीहियवादिपदार्थः; तम् 'अत्र' यजमानाय प्रतिकूलं कुर्यात् ॥ २॥

"देवयुव मिति। देवानिच्छतीति 'देवयुः'। "क्याच्छन्दसि"-इत्युप्रत्ययः[4]। विश्वैरपि देवैर्वरणीया 'विश्ववारा'। आभ्यां स्रुग्विशेष्यते। 'एनां' स्रुचम् एतद् 'उपस्तौत्येव' श्लाघयत्येव। अत्र न कश्चिदपूर्वोऽर्थोऽभिधीयत इति सापि किमर्थं स्तूयत इत्यत आह— 'एतत्' 'महयत्येव' पूजयत्येव। 'यदाह' यदेतद्वाक्यं मन्त्र आहेत्यर्थः ॥

---

१— का० श्रौ० सू० ३. ३. १६। २— पा० ७. १. ७ सू० वा० २।
३— तै० सं २. ५. ६. ३। ४— पा० सू० ३. २. १७०।

निगदस्य सप्तमादिभागत्रयं पृथक्-पृथग् व्याख्यातु मनुवदति— "ईडामहा इत्यादि। 'ये' देवाः 'ईडेन्याः' स्तुत्याः, स्तुतिभाजना इत्यर्थः; 'ये' च 'नमस्याः' नमस्कार मिच्छन्ते; ये च ('यज्ञियाः') यष्टव्याः हविर्भाजः; 'तान्' सर्वान् अविशेषेण स्तुति-नमस्कार-यागैः 'ईडामहै' पूजयामहै इति मन्त्रस्यार्थः। 'ईडेन्यान्'-इति "ईड स्तुतौ"-इत्यस्य[1] 'केन्य'-प्रत्ययः। ईडेन्यादीन् प्रशंसति— "मनुष्या वा इत्यादिना। कुशलादिस्तुतिमात्रेण प्रायेण परितुष्यन्त इति[2] 'ईडेन्याः[3] मनुष्याः', "नमस्कारो हि पितॄणा मितिश्रुतेः[4] 'नमस्याः' पितरः, हविःप्रदान मन्तरेणापरितोषाद् 'देवाः यज्ञियाः' ॥ २ ॥

"यजाम यज्ञियानितीतिकीर्त्तने यज्ञस्य शुद्धिस्तुतया यागं तदनुप्रवेशेन प्रशंसति— "या वा इत्यादिना। देवमनुष्यात्मकासु प्रजासु मध्ये 'याः' प्रजाः' यष्टव्यत्वेन यज्ञ मन्वभजन्। तत्प्रकार माह— "मनुष्यानन्विति। 'मनुष्यान्' 'अनु'सृत्य 'पशवः' गवाद्याः क्षीरोधसाधनत्वेनानुप्रविष्टाः। 'देवान्' 'अनु'सृत्य 'वयांसि' पक्षिणोऽनुप्रविष्टाः; "वसन्ताय कपिञ्जलानालभते"-इतिश्रुतेः[5]। अथ वा एकहायनप्रभृति-पञ्चदशहायनान्ताः 'पशवो वयांसि', तान्यनुप्रविष्टानीत्यर्थः। तान्यनुप्रवेशाच्चरुपुरोडाशाः, यूपादियज्ञ-साधनदारेणौषधिवनस्पत्यादयः। किं बहुना 'यत् किं चेदं' प्रतीयमानं वस्तु अस्ति, 'तत्' 'सर्वम् उ' सर्व मप्येत मेव 'दारि'

---

१— धा० अदा० आ० ८। २— 'प्रायेण परितोषात्'—इति ठ।

३— "औणादिक एन्य-प्रत्ययः"—इति ऋ० सं० १. ७९. ५ सा० भा०।

४—तै० ब्रा० ३. ३. १०. ८। ५— वा० सं० २४. २०. १।

द्वारया यज्ञ मनुप्रविष्ट मेव। अतो यज्ञसंस्पर्शवतां न कदाचित् पराभवोऽस्ति, तदसंस्पृष्टं च न किञ्चिदस्तीति यज्ञस्तुतिः ॥ ४ ॥

निगदविभागगतां नवसङ्ख्यां[1] प्रशंसति— "ता वा इति। 'व्याहृतयः' उक्तवाक्यानि। तानि च 'नव'; सप्त शीर्षण्याः[2], द्वाववाञ्चाविति[3]। 'प्राणाः' अपि 'नव'[4]। तदेतेन नवविभागकरणेन 'अस्मिन्' यजमाने 'पुरुषे' 'एतान्' प्राणान् 'एव' स्थापितवान् भवति ॥ ५ ॥

अथाश्रावणप्रत्याश्रावणे विधातु माख्यायिका माह— "यज्ञो हेति। पुरा किल 'यज्ञः' केनचिद्व्याजेन 'देवेभ्यः' अपक्रान्तवान्। 'तं देवाः' 'अन्वमन्त्रयन्त' अनुनयेनाह्वयन्त।— हे यज्ञ! 'नः' अस्माकं वचनं 'शृणु', 'नः' अस्मान् ('उपावर्त्तस्व') प्रतिनिवर्त्तस्व। उपावर्त्तेति गुणश्छान्दसः। यद्वा, उपावर्त्तन मुपावर्त्तः। आवर्त्तनाभावे यागासम्भवात्तस्य साधनत्वव्यपदेशः। 'देवाः' यजमानाः 'अयजन्त'। भाविगत्या तेषां देवत्वव्यवहारः। 'देवाः'-इति 'यदिदं' देवत्व मस्ति, 'एतत्' तस्यानुष्ठानेन 'अभवन्' प्राप्तवन्त इत्यर्थः ॥ ६ ॥

---

१— "अग्निहोता नव"-इति तै० ब्रा० ३. ५. ४।

२— "सप्त वै शीर्षन् प्राणाः"-इति ऐ० ब्रा० १. ३. ६; ३. १. ३।

३— " 'अवाञ्चः' नाभेरधस्ताद् वर्त्तमाना अपानवाय्वादयः"-इति ऐ० ब्रा० १. ३. ६ सा० भा०।

४— "नव वै पुरुषे प्राणाः"-इति तै० सं० ३. ५. १०. ५। "शिरोऽवस्थितेषु सप्तसु छिद्रेषु, अधोऽवस्थितयोश्च द्वयोश्छिद्रयोः सञ्चरन्तः प्राणा नवसङ्ख्याकाः"-इति तत्रैव सा० भा०।

इदानीं माश्रावणं विधत्ते— "स यदिति। यस्मादेवं, तस्मात् 'सः' अध्वर्युराश्रावयेत्[1]। 'एतत्' एतेन यज्ञ मेवानुमन्त्रितवान् भवतीति तत्प्रकारप्रदर्शनम्। "आ न इति। यत एतदेवं, तस्मात्। "आ नः शृणु"—इत्यस्य आश्रावणार्थत्वात्[2]॥

अथ प्रत्याश्रावणं[3] विधत्ते— "अथ यदिति। तेन अग्नीध्रकर्तृकेन प्रत्याश्रावणेन 'तथास्त्विति' प्रतिनिवृत्तिः कृता भवति; प्रत्याश्रवण शब्दा उक्तार्थप्रतीतेः॥

आश्रावणादि वषट्कारान्त मध्वर्य्वादेः स्व-स्व-समये मौनं विधित्सुराह— "तेनेति। 'तेन' प्रत्यावृत्तेन 'रेतसा भूतेन' बीजभूतेन। स्वर्गाख्यफलोदयात् बीजत्वं यज्ञस्य। ('ऋत्विजः') अध्वर्यादयः स्वस्मिन्नाश्रितं यज्ञं 'सम्प्रदायं' सम्यक् प्रदाय-प्रदाय, एकोऽन्यस्मै सोऽप्यन्यस्मा इत्येवम्प्रकारेण 'चरन्ति' अनुतिष्ठन्ति। 'यजमानेन' 'परोक्षं' त मनपेक्ष्य तस्य तत्र व्यापाराभावात्। परस्परसमर्प्पणे दृष्टान्त माह— "यथेति। यथा जलैरापूर्णं घटादि-पात्रं गृहान्तर्गतप्रभूतभाण्डपूरणसमये परस्परहस्तेन सञ्चरन्ति, तद्वत्। एतदेव विशिनष्टि— "तद्वाचैवेति। 'तत्' तदा 'वाचैव' वाग्रूपेणैव, आश्रावणादिवाच मन्तरेण यज्ञासिद्धेस्तस्या यज्ञत्वव्यपदेशः। अस्त्वेवं किं तत आह— "वाग्घीति। वाचा मन्त्रात्मिकया यज्ञस्योत्पत्तेः तस्या रेतस्त्वम्। "तदित्याद्युपसंहारः॥ ७॥

---

१— ओ श्रावयेत्यस्याश्रावणसञ्ज्ञा।

२— इहाम्नात एष एव आश्रावणार्थोऽनुवाक्यामन्त्रः।

३— अस्तु श्रौषडित्यस्य प्रत्याश्रावणसञ्ज्ञा।

अथ मन्त्रेणोक्तं यज्ञसम्प्रदानं विशिंषन्नध्वर्य्वादेः स्व-स्व-कालेषु मौनं विधत्ते— "सोऽनुब्रूहीत्यादिना। 'सोऽध्वर्युः' होतारं प्रति 'अनुब्रूहीत्युक्त्वैव'[१] तत्समनन्तर मेव 'नापव्याहरेत्' प्रस्तुतानुपयोगि वचनं न ब्रूयात्।

'होता' अपि अनुवचनद्वारेण[२] वागूपयज्ञस्य स्वस्मिन् समावेशात् 'नो एव अपव्याहरेत्'।

पुनः 'अग्नीधं' प्रति 'अध्वर्युः' यदा 'आश्रावयति[३]', तदानीं स वाग्यज्ञः तं प्राप्नोति; अतः 'सः' अपि 'न अपव्याहरेत्' स्व-प्रत्याश्रावणावधि।

सः ('अग्नीत्') यदा 'अध्वर्युं' प्रति प्रत्याश्रावयेत्, तदैव 'यज्ञः' पुनः आगच्छेत्; अतः 'सः' अपि 'अध्वर्युः' 'आ यजेति' यजेति[४]वचनावधि 'न अपव्याहरेत्'।

अथ पुनः 'अध्वर्युः' यदा 'यजेति' स्व-वाग्यज्ञं 'होत्रे सम्प्रयच्छति', तदा प्राप्तयज्ञः 'सः' 'होता' वषट्कारपर्यन्तं 'नापव्याहरेत्'।

"स वषट्कारेणेति। 'सोऽध्वर्युः' होतृकृतेन 'वषट्कारेण' हविःप्रदानसाधनेन 'अग्नौ' योनिभूते 'रेतोभूतं' हविः 'सिञ्चति' प्रयच्छति। यस्माद्य उत्पद्यते तत्तस्य योनिरिति प्रसिद्धिः 'वै'-शब्देन उच्यते। उक्तं वाङ्नियमं विषयविशेषे व्यवस्थापयति— "स्विति। अत्र सूत्रम्— "अनुब्रूहीत्युक्त्वा नापव्याहरेद्धोता चाऽऽश्रावणात्,

---

१— अनुब्रूहीति अनुवाक्यापाठार्थो होतृप्रैषः।

२— अनुवाक्यापाठेनेति यावत्। ३— "ओ श्रावयेत्युक्त्वेत्यर्थः।

४— यजेति याज्यावषट्कारपाठार्थो होतृप्रैषः।

आश्राविते ऽग्नीदा प्रत्याश्रावणात्, प्रत्याश्राविते ऽध्वर्युरा होतृप्रैषात्, होता ऽऽवषट्कारादिति[1] ॥

अथ सोमविषयं वाङ्नियमं प्रतिजानीते— "अथ सौम्येऽध्वरे"-इति ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

"स वा इत्यादि। 'अध्वर्युः' ग्रहग्रहणादनन्तरम् 'आ उपाकरणात्'[2] यदा च उद्गातारः स्तोत्रं प्रारभेरन्, तावत् 'नापव्याहरेत्'। यदा 'अध्वर्युः उपावर्त्तध्व मिति' ब्रूयात्, तदानीं तस्य यज्ञस्तान् ('उद्गातॄन्') प्राप्नोति, 'ते उद्गातारः' अपि ('आ उत्तमायाः') 'नापव्याहरेयुः' तत्प्रभृत्युत्तमस्तोत्रीयापर्यन्तं[3] न वदेयुः। यदा च 'एषा' अन्तिमा स्तोत्रीयेति 'उद्गातारः' प्रज्ञापयन्ति, 'होता' अपि तदा प्रभृति 'नापव्याहरेत्' 'आ वषट्कारात्'। "तं वषट्कारेणेत्यादि पूर्ववत्। अत्र सूत्रम्— "सोमे च ग्रहं गृहीत्वोपाकरणात्"-इति[4]। उत्तमस्तोत्रीयां प्रस्तुत्य होतुरेवेति ब्रुवन्त उद्गातारः[5] शंसिष्यते होत्रे यज्ञं प्रयच्छन्ति[6], तदा प्रभृति वषट्कारपर्यन्तं होता नापव्याहरेत्[7] ॥ १२ ॥ १३ ॥ १४ ॥

---

१— का० श्रौ० सू० ३. ३. १३—१६। अपव्याहारो लौकिकवदनम्।

२— ऐ० ब्रा० २. २. ५. ५; तै० सं० ६. ४. ३. १; आप० श्रौ० सू० १२. ३. १४, १५; आश्व० श्रौ० सू० ४. १३. १-६; का० श्रौ० सू० ९. १. १०.-इत्येतेषु प्रातरनुवाकोपाकरणं विहितं द्रष्टव्यम्।

३— तिसृषु ऋक्षु एकं स्तोत्रियं साम गीयते सामगैः। तत्रान्त्या ऋक् उत्तमस्तोत्रीया भवति। विशेषतस्तु छन्दोभाष्यावतरणाम्, ऐ० ब्रा० ३. २. १२ ३. ४. ४ इत्यादौ च द्रष्टव्यम्।

४— का०श्रौ० ३. ३. १७। ५— उद्गातृप्रस्तोतृप्रतिहर्त्तार इत्युद्गातारः।

६— का०श्रौ० ३. ३. १८ द्रष्टव्यम्। ७— का०श्रौ० ३. ३. १९ द्रष्टव्यम्।

उक्तवाङ्नियमाभावे बाध माह— "स यद्धेति । सोमयागे तस्य ग्रहणादि-प्रदानावधि-काले 'यं यज्ञे उपावर्त्तते', 'सः' 'यद्' यदि 'अपव्याहरेत्', 'सः' 'यजमानं परासिञ्चेत्'। अत्र दृष्टान्तः ।— 'यथा' 'पूर्णपात्रम्' अभिमतप्रदेशे घटादिषु प्रक्षेप मकृत्वा अन्यत्र 'परासिञ्चेत्', तादृगेव तत् । अपव्याहारेण यज्ञ-भ्रंशे सति स्वर्गाख्यफलभ्रंशाद् यजमान एव परासिक्तो भवति । उक्तवैपरीत्ये को गुण इत्याह— "स यत्रेति । एवं सर्वेऽध्वर्य्यादयः क्रमेण 'यत्र' यज्ञे 'संविदानाः' ऐकमत्यं प्राप्ताः स्व-स्व-कर्त्तव्य मेकाग्र्येण जानन्तोऽनुतिष्ठन्ति, 'तत्र' तस्मिन् यज्ञे 'सर्व मेव' अङ्ग-जातं 'कल्पते' फलजननसमर्थं भवति । एवं सत्येकोऽप्यृत्विक् 'न मुह्यति' स्वानुष्ठेयं न विस्मरति; अपव्याहारात्मकविक्षेपासम्भवात् ॥

निगमयति— "तस्मादिति । 'एव मेव' अध्वर्य्यादिभिः यज्ञ-सम्प्रदानक्रमेण 'यज्ञः' 'भर्त्तव्यः' पोषयितव्यः ॥ १५ ॥

आश्रावणादिपञ्चक मनूद्य प्रशंसति— "ता वा इति । व्याहयन्त इति 'व्याहृतयः' वाक्यानि । तानि आश्रावयेत्यादिकानि । पञ्चसङ्ख्यास्ति, 'यज्ञोऽपि पाङ्क्तः'; धानाः करम्भ इत्यादिहविर्गत-पञ्चसङ्ख्यायोगात्[1] । अतः सङ्ख्यासाम्यद्वारा व्याहृतिपञ्चको यज्ञः अस्तु । ततः किमित्यत आह— "पाङ्क्तः पशुरित्यादिना । चत्वारः पादाः, शिर एक मिति वा, लोमत्वङ्मांसास्थिमज्जभेदेन वा,

---

१— "धानाः करम्भः परिवापः पुरोळाशः पयस्येत्येष वै यज्ञो हवि-र्पाङ्क्तः"–इति ऐ० ब्रा० २. ३. ९ ।

पशोः पाङ्क्तत्वम्। हेमन्तशिशिरयोरेकत्वेन[1] 'पञ्चर्त्तवः संवत्सरस्य'। अयं यज्ञो व्याहृतिपञ्चकद्वारा पशुसंवत्सररूपाभ्यां शब्दाभ्यां परिमितो भवतीत्यर्थः। 'एषा' पशुसंवत्सरात्मिका 'यज्ञस्य' 'एका' 'मात्रा' इयत्ता। प्रकारान्तर मपेक्ष्योक्तम्— "एषा सम्पदिति। सङ्ख्याद्वारा सम्पादितसमृद्धिर्यज्ञस्य विभुत्व मित्यर्थः॥ १६॥

आश्रवणादिकं स्ववाक्यगतसङ्ख्याद्वारेण प्रशस्य, तद्गताक्षरसङ्ख्यापि प्रशंसति— "तासा मिति। "श्रो श्रावयेति चतुरक्षरम्, श्रस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः"–इति[2] सप्तदशाक्षरता; प्रजापतिरपि मासर्त्तुगतसङ्ख्यया सप्तदशः। यज्ञस्रष्टृत्वात्सोऽपि यज्ञः। 'एषा' अक्षरसङ्ख्याप्राप्ता प्रजापत्यात्मकत्वलक्षणा 'यज्ञस्य सम्पत्' ॥ १७॥

विहितेष्वाश्रावणादिषु वृष्ट्याख्यफलाय तत्र विशेषं विवक्षुस्तदुपोद्घात माह— "श्रो श्रावयेतीति। 'श्रस्तु श्रौषट्'–'इति' अनेन 'अभ्राणि' उदकसञ्चरणसमर्थान् मेघान् 'समश्रावयन्' सर्वत्र व्याप्तानकुर्वन्। 'ससृजिरे'–इति सर्वत्र सम्बन्धः। एव मुत्तरत्रापि उद्देशिना मनुद्देशिनां च पूर्वपूर्वाभाव उत्तरोत्तरानुदयात् कार्यकारणभावाभिधानम्। अत उक्तवैपरीत्ये न तथा शङ्कनीयम्। 'स्तनयित्नु'–शब्दः स्तनयतीति व्युत्पत्त्या मेघवाची[3], तथापि तस्य पृथगभिधानादत्र स्तननमात्र मभिधत्ते॥ १८॥

---

१— "सप्तदशो वै प्रजापतिः द्वादश मासाः पञ्चर्त्तवो हेमन्तशिशिरयोः समासेन, तावान्संवत्सरः; संवत्सरः प्रजापतिः"–इति ऐ०ब्रा० १.१.१।

२— तै० सं० १.६.११.१। 'आश्रावयेति'–इति तत्र पाठः।

३— उ० ३.२९; पा० सू० ६.४.५५। अम० को० १.१.२.८।

अथौपोद्घातिक माह— "स यदीति । 'सः' यजमानो 'यदि वृष्टिकामः स्यात्', स एव 'यदीष्ट्या' सौर्यादिकया फलान्तरसाधनभूतया 'यजेत', तत्र प्रकृतिभूतयोः 'दर्शपूर्णमासयोर्वा एव ब्रूयात्' ऋत्विजः! 'वृष्टिकामः' अहम् 'अस्मीति'। कं प्रति किं ब्रूयादिति तदभिव्याह— "तत्रो इत्यादिना । 'तत्र' तेष्वेव कर्मसु 'अध्वर्युम्' ('ब्रूयात्')— आश्रावणसमये पुरोवातविद्युतोर्ध्यानं 'मनसा कुर्यात्' इति ; मनोव्यतिरेकेण ध्यानासम्भवात्, एकाग्रमना इत्यर्थः । एव मुत्तरवाक्येष्वपि योज्यम् । आग्नीध्रहोत्रोः प्रत्येकस्य व्याहृतिद्वये सम्भवात् एकैकस्य द्वयोर्द्वयोर्ध्यानम् ; "सर्वै ब्रह्मा"-इति[1] ब्रह्मणः सर्वकर्त्तव्यानुसन्धानस्मरणात् सर्वविषयध्यानाभिधानम् । एव मङ्गेषु ध्याने सति वृष्टिफलं नियत मेवेत्याह— "वर्षति हैवेति । 'संविदानाः' फलविषये परस्पर मैकमत्यं प्राप्ताः ॥ १९ ॥

प्रकारान्तरेणाश्रावणादिपञ्चकं प्रशंसति— "ओ श्रावयेतीति । पशुपुरोडाशादिना विशेषेण राजत इति 'विराट्' वेद्यात्मिका पृथिवी[2], सा धेनुत्वेन प्रकल्प्यते ; "सा मे धुक्ष्व यजमानाय कामान्"-इत्यादिमन्त्रेषु दोहनसाधनत्वश्रवणात् । तां विराड्धेनुम् ओ श्रावयेत्यनेन अभिमुख माह्वयन् 'वत्स मुपावासृजन्' स्तनपानाय वत्सस्य कण्ठगतं पाशं व्यस्लेषयन् । 'यजेति' अनेन तम् 'उदनयन्' अपरिवीतं वत्स मूर्द्ध मूधसोऽभिमुख मनयन् । 'उपा-

---

१— य० प० सू० २२ । ऐ० ब्रा० ५. ५. ८ अपि द्रष्टव्यम् ।

२— वा० सं० ११. ४३ कण्डिका आलोच्या ।

सीदन्' दोहाय गोः समीपे स्थितः। 'वषट्कारेण' हविःप्रदान-साधनेन ताम् 'अदुहत' दोहनेनेमं यज्ञ मुदपादयन्नित्यर्थः॥

विराट्शब्द माह— "इयं वा इति। 'इयं' पृथिव्येव खलु 'विराट्'। उक्त मर्थं समर्थयते— "अस्यै वा इति। 'एषः' उक्तो 'दोहः' 'अस्यै वै' अस्या वेद्यात्मिकायाः पृथिव्याः सम्बन्धी खलु; चरुपुरोडाशादियज्ञसाधनानां तस्या एवोत्पत्तेः॥

उक्तार्थवेदनं प्रशंसति— "एवं ह वा इति। 'यः' एतदा-श्रावणादिकम् 'एवं' दोहात्मकतया 'वेद' जानाति 'अस्मै' अस्याः उक्तार्थं वेदित्रे 'इयं विराट्' पृथिवी 'सर्वान्' धनादिकान् 'कामान्' 'दुहे' प्रयच्छतीति॥ २०॥ ३॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम्[1]॥

---

१— अस्मिन् ब्राह्मणे स्रुगादापनमन्त्रस्य विधिव्याख्ये आश्रावणादिपञ्चक-विधिनियमौ च विदधौ। तत्रेयं पद्धतिः— "यदा होता 'अग्निर्होता वेत्त्विति स्रुगादापनं पठति, तदा अध्वर्युरुभाभ्यां पाणिभ्यां जुहू मुप-भृत उपरि पूर्ववन्निधाय, घृतवती मित्यस्मिन् शब्दे होत्रा उक्ते, जुहू-पभृतावादाय हवींष्युत्तरेण परिधीनपरेण सव्येन पादेन वेदेर्दक्षिणे भागे गत्वा, ईशानाभिमुखः स्थित्वा, आश्राव्य, अस्तु श्रौषडिति प्रत्युक्ते, समिधो यजेति होतारं प्रति ब्रूयात्; ततो जुहूं प्राची मवतार्य, वषट्कारेण सह वा, वषट्कारकृते वा, समिद्धतमे वह्नेः प्रदेशे जुह्वस्थ-तृतीयांशं जुहोति"-इति। आश्रावणादिपञ्चकव्याख्यानन्त्वेव

ऋतवो ह वै प्रयाजाः। तस्मात्* पञ्च भवन्ति पञ्च ह्यृतवः ॥ १ ॥

देवाश्च वा ऽअसुराश्च। उभये प्राजापत्याः पस्पृधिर ऽएतस्मिन् यज्ञे प्रजापतौ पितरि संवत्सरेऽस्माक मयं भविष्यत्यस्माक मयं भविष्यतीति ॥ २ ॥

---

माह सायणः— "एतेषु पञ्चसु मन्त्रेषु, आद्यस्य मन्त्रत्रयस्य विनियोग मापस्तम्बोऽध्वर्युकाण्डे दर्शयति— "ब्रह्मन्०—०सार्वत्रिकम्"—इति (श्रौ० सू० १. १५—१८.)। × × × । हे आग्नीध्र! यक्ष्यमाणदेवतां प्रति तुभ्य मिदं दीयत इत्याभिमुख्येन श्रावयेत्यध्वर्युणोक्ते सति, स आग्नीध्रः 'अस्तु'—इत्यङ्गीकृत्य 'श्रौषट्'—इतिशब्देन श्रावयति। हे देवाः! तद्विषय मिदं हविर्दानं शृणुतेत्यर्थः। हे होतः! 'यज' याज्यां पठेत्यर्थः। इतरस्य तु मन्त्रद्वयस्य विनियोग माश्वलायनो होतृकाण्डे दर्शयति— "आगूर्याज्यादिरनूयाजवर्जम्। ये३यजामह इत्यागूः। वषट्कारोऽन्त्यः सर्वत्र"—इति (आश्व० १. ५. ४, ५, ६.)। सर्वे, 'ये' वयं होतारोऽध्वर्युणा यजेति प्रेषिताः, ते वयं 'यजामहे' याज्यां पठामः। वषट्कारशब्देन "वौषट्"—इत्येवंरूपो मन्त्रो विवक्षितः। तच्चाश्वलायन उदाहृत्य दर्शयति— "ये३यजामहे समिधः। समिधो अग्न आज्यस्य व्यन्तु३। वौ३षडिति वषट्कारः"—इति (श्रौ० सू० १. ५. १५.)। हविर्दीयत इति तस्य (वौषडित्यस्य) शब्दस्यार्थः"—इति (तै०सं०१.६.११.२ सा० भा०)। आगूः = प्रतिज्ञा। अम० को० १. ५. ५। आगूःकरणन्तु ऐ० ब्रा० २. ४. ४ द्रष्टव्यम् ॥

* 'प्रयाजास्तस्मात्'—इति ग। गादिषु केषुचित् पुस्तकेषु कण्डिकादिभागपार्थक्यं कृतं न दृश्यते क्वापि; तदेवं पदाविच्छेदकृताः पाठ-

ततो देवाः। अर्चन्तः श्राम्यन्तश्चेरुस्त ऽएतान् प्रयाजान् ददृशुस्तैरयजन्त तैर्ऋतून्त्संवत्सरं प्राजयन्नृतुभ्यः संवत्सरात् सपत्नानन्तरायंस्तस्मात् प्रजयाः प्रजया ह वै नामैतद्यत्प्रयाजा ऽइति तथो ऽएवैष ऽएतैर्ऋतूँन्त्संवत्सरं प्रजयत्यृतुभ्यः संवत्सरात् सपत्नानन्तरेति तस्मात् प्रयाजैर्यजते ॥ ३ ॥

ते वा ऽआज्यहविषो भवन्ति। वज्रो वा ऽआज्यमेतेन वै देवा वज्रेणाज्येनर्तून्त्संवत्सरं प्राजयन्नृतुभ्यः संवत्सरात् सपत्नानन्तरायंस्तथो ऽएवैष ऽएतेन वज्रेणाज्येनर्तून्त्संवत्सरं प्रजयत्यृतुभ्यः संवत्सरात् सपत्नानन्तरेति तस्मादाज्यहविषो भवन्ति ॥ ४ ॥

एतद्वै संवत्सरस्य स्वं पयः। यदाज्यं तत्स्वेनैवैनमेतत्पयसा देवाः स्व्यकुर्वत तथो ऽएवैन मेष ऽएतत् स्वेनैव पयसा स्वीकुरुते तस्मादाज्यहविषो भवन्ति ॥ ५ ॥

स यत्रैव तिष्ठन् प्रयाजेभ्य ऽआश्रावयेत्। तत ऽएव नापक्रामेत् सङ्ग्रामो वा ऽएष सन्निधीयते यः प्रयाजैर्यजते यतरो वै संयत्तयोः* पराजयत ऽप वै स क्राम†त्य-

भेदास्तेषु सन्ति सर्वत्रैव। ते च सुधीभिः स्वय मेवोहनीया इत्यलमिहैदृशपाठप्रदर्शनेनेति।

* 'संगतयोः'—इति, 'संयतयोः'—इति वा स्यात् सा०-सम्मतः।

† 'संक्राम'—इति क, ख, च, M-पुस्तके डा०-वेवर्-दृष्टश्च।

भितरा मु वै जयन् क्रामति तस्मादभितरा मभितरा मेव क्रामे*दभितरा मभितरा माहुतीर्जुहुयात् ॥ ६ ॥

तद् तथा न कुर्यात्। यत्रैव तिष्ठन् प्रयाजेभ्य ऽआश्रावयेत् तत ऽएव नापक्रामेद् यत्रो ऽएव समिद्ध-तमं मन्येत तदाहुतीर्जुहुयात् समिद्धहोमेन ह्येव समृद्धा† ऽआहुतयः ॥ ७ ॥

स ऽआश्राव्याह। समिधो यजेति तद्वसन्तꣳ समिन्धे स व्वसन्तः समिद्धोऽन्यानृतून्त्समिन्ध ऽऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति तद्देव खलु सर्व्वा-नृतून्निराहाथ यज-यजेत्येवोत्तरानाहाजामितायै जामि ह कुर्याद् यत् तनूनपातं यजेडो यजेति ब्रूयात् तस्माद् यज-यजेत्येवोत्तरानाह ॥ ८ ॥

स वै समिधो यजति। व्वसन्तो वै समिद् वसन्त मेव तद्देवा ऽअवृञ्जत व्वसन्तात्सपत्नानन्तरायन् वसन्तम्वेवैष ऽएतद् वृङ्क्ते व्वसन्तात् सपत्नानन्तरेति तस्मात् समिधो यजति ॥ ९ ॥

अथ तनूनपातं यजति। ग्रीष्मो वै तनूनपाद्ग्रीष्मो ह्यासाम्प्रजानां तनूस्तपति ग्रीष्म मेव तद्देवा ऽअवृञ्जत

---

* 'मभितरा माक्रामे'—इति ग, स्यात् सा०-सम्मतश्च।

† 'समिद्धा'—इति स्यात् सा०-सम्मतः पाठः।

ग्रीष्मात् सपत्नानन्तरायन् ग्रीष्मम्वेवैष एतद् वृङ्क्ते ग्रीष्मात् सपत्नानन्तरेति तस्मात्तनूनपातं यजति ॥ १० ॥

अथेडो यजति। व्वर्षा वा ऽइड इति हि व्वर्षा ऽइडो यदिदं क्षुद्रꣳ* सरीसृपं ग्रीष्महेमन्ताभ्यां नित्यक्तं भवति तद्वर्षा ईडित मिवान्न मिच्छमानं चरति तस्माद्वर्षा ऽइडो व्वर्षा ऽएव तद्देवा ऽअवृञ्जत व्वर्षाभ्यः सपत्नानन्तरायन् वर्षा ऽउ ऽएवैष ऽएतद् वृङ्क्ते व्वर्षाभ्यः सपत्नानन्तरेति तस्मादिडो यजति ॥ ११ ॥

अथ बर्हिर्यजति। शरद्वै बर्हिरिति हि शरद्वर्हिर्या ऽइमा ऽओषधयो ग्रीष्महेमन्ताभ्यां नित्यक्ता भवन्ति ता व्वर्षा व्वर्द्धन्ते ताः शरदि बर्हिषो रूपं प्रस्तीर्णाः शेरे तस्माच्छरद्वर्हिः शरद मेव तद्देवा ऽअवृञ्जत शरदः सपत्नानन्तरायञ्छरदम्वेवैष ऽएतद् वृङ्क्ते शरदः सपत्नानन्तरेति तस्माद्बर्हिर्यजति ॥ १२ ॥

अथ स्वाहा-स्वाहेति यजति। अन्तो वै यज्ञस्य स्वाहाकारोऽन्त ऋतूनाꣳ हेमन्तो व्वसन्ताद्धि पराद्ध्यो-ऽन्तेनैव तदन्तं देवा ऽअवृञ्जतान्तेनान्तात् सपत्नानन्तरायन्नन्तेनो ऽएवैष ऽएतदन्तं वृङ्क्ते ऽन्तेनान्तात् सपत्नानन्तरेति तस्मात् स्वाहा-स्वाहेति यजति ॥ १३ ॥

---

* 'क्षुल्लकं'—इति सा०-सम्मत इत्यलिखद् डा-वेवरः।

तद्वा ऽएतत् । व्वसन्त ऽएव हेमन्तात् पुनरसुरेतस्मा- द्धोष पुनर्भवति पुनर्ह वा ऽअस्मिंल्लोके भवति य ऽएव मेतद्वेद ॥ १४ ॥

स वै व्यन्तु व्वेत्विति यजति । अजामितायै जामि ह कुर्याद् यद्यन्तु-व्यन्त्विति वैव यजेद् वेतु-वेत्विति वा व्यन्त्विति वै योषा व्वेत्विति व्वृषा मिथुन मेवैतत् प्रजननं क्रियते तस्माद् व्यन्तु-व्वेत्विति यजति ॥ १५ ॥

अथ चतुर्थे प्रयाजे समानयति बर्हिषि । प्रजा वै बर्ही रेत ऽआज्यं तत्प्रजास्वेवैतद्रेतः सिच्यते तेन रेतसा सिक्तेनेमाः प्रजाः पुनरभ्यावर्त्तम्प्रजायन्ते तस्माच्चतुर्थे प्रयाजे समानयति बर्हिषि ॥ १६ ॥

सङ्ग्रामो वा ऽएष सन्निधीयते । यः प्रयाजैर्यजते यतरं वै संयत्तयोर्म्मित्र मागच्छति* स जयति तदेतदुप- भृतोऽधि जुहूं मित्र मागच्छति तेन प्रजयति तस्माच्चतुर्थे प्रयाजे समानयति बर्हिषि ॥ १७ ॥

यजमान ऽएव जुह्व मनु । योऽस्मा ऽअरातीयति स ऽउपभृत मनु यजमानायैवैतद्द्विषन्तं भ्रातृव्यं बलिं हारयत्यत्तैव जुह्व मन्वाद्य ऽउपभृत मन्वत्र ऽएवैतदाद्यं बलिं हारयति तस्माच्चतुर्थे प्रयाजे समानयति ॥ १८ ॥

---

* 'म्मित्र मागच्छति'—इति क, ग ; 'म्मित्र आगच्छति'—इति च वेवरः ।.

स वा ऽअनवमृशन्त्समानयति । स यद्धावमृशेद् यजमानं द्विषता भ्रातृव्येणावमृशेदत्तार माद्येनावमृशेत् तस्मादनवमृशन्त्समानयति ॥ १९ ॥

अथोत्तरां जुहू मध्यूहति । यजमान मेवैतद् द्विषति भ्रातृव्येऽध्यूहत्यत्तार माद्येऽध्यूहति तस्मादुत्तरां जुहू मध्यूहति ॥ २० ॥

देवा ह वा ऽऊचुः । हन्त विजित मेवानु सर्व्वं यज्ञꣳ सꣳस्थापयाम यदि नोऽसुररक्षसान्यासजेयुः सꣳस्थित ऽएव नो यज्ञः स्यादिति ॥ २१ ॥

त ऽउत्तमे प्रयाजे । स्वाहाकारेणैव सर्व्वं यज्ञꣳ समस्थापयन्त्स्वाहाग्नि मिति तदाग्नेय माज्यभागꣳ समस्थापयन्त्स्वाहा सोम मिति तत्सौम्य माज्यभागꣳ समस्थापयन्त्स्वाहाग्नि मिति तद्य ऽएष ऽउभयत्राच्युत ऽआग्नेयः पुरोडाशो भवति तꣳ समस्थापयन् ॥ २२ ॥

अथ यथादेवतꣳ । स्वाहा देवा ऽआज्यपा ऽइति तत्प्रयाजानुयाजान्त्समस्थापयन् प्रयाजानुयाजा वै देवा ऽआज्यपा जुषाणो ऽअग्निराज्यस्य व्वेत्विति तदग्निꣳ स्विष्टकृतꣳ समस्थापयन्नग्निर्हि स्विष्टकृत् स ऽएषोऽप्येतर्हि तथैव यज्ञः सन्तिष्ठते यथैवैनं देवाः समस्थापयंस्तस्मादुत्तमे प्रयाजे स्वाहा-स्वाहेति यजति यावन्ति हवीꣳषि

भवन्ति व्विजित मेवैतदनु सर्व्वं यज्ञꣳ सꣳस्थापयति तस्माद्यदत ऽऊर्ध्वं व्विलोम यज्ञे क्रियेत न तदाद्रियेत सꣳस्थितो मे यज्ञ ऽइति ह व्विद्यात् स हैष यज्ञो यातयामेवास यथा व्वषट्कृतꣳ हुतꣳ स्वाहाकृतम् ॥ २३ ॥

ते देवा ऽअकामयन्त। कथं न्विमं यज्ञं पुनराप्यायेमायातयामानं कुर्याम तेनायातयाम्ना प्रचरेमेति ॥ २४ ॥

स यज्जुह्वा माज्यं परिशिष्ट मासीत्। येन यज्ञꣳ समस्थापयंस्तेनैव यथापूर्व्वꣳ हवीꣳष्यभ्यघारयन् पुनरेवैनानि तदाप्याययन्नयातयामान्यकुर्व्वन्नयातयाम ह्याज्यं तस्मादुत्तमं प्रयाज मिष्ट्वा यथापूर्व्वꣳ हवीꣳष्यभिघारयति पुनरेवैनानि तदाप्यायत्ययातयामानि करोत्ययातयाम ह्याज्यं तस्माद्यस्य कस्य च हविषोऽवद्यति पुनरेव तदभिघारयति स्विष्टकृत ऽएव तत्पुनराप्याययत्ययातयाम करोत्यथ यदा स्विष्टकृतेऽवद्यति न ततः पुनरभिघारयति नो हि ततः कस्मैचन हविषोऽम्नावाहुतिꣳ होष्यन् भवति ॥ २५ ॥ ४ ॥

॥ इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् [५. ३.] ॥

प्रयाजानुपरिष्टाद् विधास्यति ; तत्रादौ तद्गतां सङ्ख्यां विधत्ते— "ऋतवो ह वा इति। यस्मात् 'ऋतवः' हेमन्तशिशिरयोरैक्येन 'पञ्च', अतस्तदात्मका अपि 'प्रयाजाः' 'पञ्च' कर्त्तव्याः[१] ॥ १ ॥

निर्वचनद्वारेण प्रशंसितु माख्यायिका माह— "देवाश्चेति। स्पर्द्धाया विषयं दर्शयति— "एतस्मिन्निति। 'एतस्मिन्' दर्शपूर्णमासात्मके 'यज्ञे' 'प्रजापतौ'। आश्रावयास्तुश्रौषड़ित्यादिसप्तदशात्मकस्य प्रजापतेर्यज्ञरूपत्वात्[२] 'यज्ञे प्रजापतौ'-इति सामानाधिकरण्यम्। स च सर्वोत्पादकत्वात् 'पिता'; तस्य च 'संवत्सरः प्रजापतिः'-इतिश्रुतेः[३] संवत्सरात्मकत्वम्। उक्तरूपे प्रजापतौ 'अय मस्माक मेव भविष्यति, अस्माक मेवेति' स्पर्द्धा मकुर्वन् ॥ २ ॥

"ततः इति। ते 'देवाः' 'अर्चन्तः' तत्पूजयन्तः, 'श्राम्यन्तः' आत्मानं क्लेशयन्तः 'चेरुः' अन्वतिष्ठन्, तत्साधन मन्वतिष्ठन्। 'तत एतान् प्रयाजान्' प्रजापतिजयलाभोपायत्वेन दृष्ट्वा, 'तैः' इष्ट्वा ; तत्फलभूतान् 'ऋतून्', तद्द्वारा 'संवत्सरं' च 'प्राजयन्'। जितेभ्यः तेभ्यः सकाशात्

---

१— "'समिद्धो अग्न आज्यस्य'-इत्यादिमन्त्रसाध्याः पञ्च प्रयाजाः, 'देवं बर्हिः'-इत्यादिमन्त्रसाध्याः त्रयोऽनुयाजाः"-इति ऐ० ब्रा० १. २. ५ सा० भा०। एतदप्याम्नात मैतरेयके—"प्राणा वै प्रयाजानुयाजास्ते य इमे शीर्षन् प्राणास्ते प्रयाजा येऽवाञ्चस्तेऽनुयाजाः"-इति १. ३. ६। इहापीत उत्तरस्मिन् ब्राह्मणे "प्राणा वै समिधः"-इति।

२— पुरस्तात् द्रष्टव्यम् (३४८ पृ० १३-१८ पं०)।

३— ऐ० ब्रा० २. २. ७ द्रष्टव्यम्। पुनस्तत्रैव तत उत्तरम् -"संवत्सरः प्रजापतिः, सोऽस्य सर्वस्य प्रजनयिता"-इति च २. ५. ७।

स्व-'सपत्नान्' असुरान् विरहितान् अकुर्वन्। 'तस्मात्' प्रजय-साधनत्वात् एते 'प्रजयाः-प्रजयाः'-इत्येतदस्ति, 'एतन्नाम'तः 'प्रयाजाः' खलु। यथा देवाः, 'तथा' एव 'एषः' इदानीन्तनोऽपि यजमानः 'एतैः' प्रयाजैः ऋतुसंवत्सरजयद्वारा स्व-शत्रून् ऋतुसंवत्सरेर्व्यव-हितान् करोति ॥ ३ ॥

"ते वा इति। ह्रयत इति 'हविः' द्रव्यम्, तत्तेषा माज्यात्मकं कर्त्तव्यम्। सपत्नघातकत्वात् तदाज्यस्य वज्रत्वम्। 'वै'-शब्देन सूचितां वज्रत्वप्रसिद्धि मुपपादयति,— यतः 'एतेन' ह्याज्येन प्रयाजयागद्वारा सपत्नानजयन्, अतोऽस्य वज्रत्वं सिद्ध मित्यर्थः। "तयो"-इत्यादिः दृष्टान्तः ॥ ४ ॥

प्रकारान्तरेणाज्यद्रव्यकत्वं प्रशंसति— "एतद्वा इति। आज्य मिति यदस्ति, 'एतत्' खलु संवत्सरस्य 'स्वं पयः'। प्रतिनियतधनरूपं क्षीरम्; पयःकार्यत्वादाज्य मपि पयः; गोमहिष्यादीनां संवत्सर-पर्यन्तं प्रायेण दोहात्मत्त्वम्। 'तत्' तस्मात् 'देवाः' पूर्वम् 'एनं' प्रजापतिं 'स्वेनैव' स्वद्रव्यभूतेनैव 'पयसा' 'स्व्यकुर्वत' स्वकीय-धनवत्ता मगमयन्। 'तथा' एवेदानी मपि यजमानः प्रयाजा-नाज्येन यजन् प्रजापति मेव स्वद्रव्यतां करोति। अतस्तेषा माज्य-हविष्कत्वंप्रशस्तम्[१] ॥ ५ ॥

प्रयाजहोमविषये स्थाननियम माह— "स यत्रैवेति। 'प्रया-जेभ्यः' प्रयाजार्थं 'यत्रैव' प्रदेशे स्थितः 'आश्रावयेत्', 'ततः' पश्चात्

१— "आज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजाः। × × ×। पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः"—इति तै० सं० २. ६. १०।

नापक्रामेत्'। अनपक्रमे कारण माह— "सङ्ग्रामो वा इति। 'यः प्रयाजैः यजते', अयं युद्धाय 'सङ्ग्रामः सन्निधीयते'। अतो युद्धाय 'सङ्गतयोः[१]' मध्ये 'यः पराजयते', 'सोऽपक्रामति' पश्चात्पलायते। तस्मादपक्रमणं न युक्त मित्यर्थः॥

अथ पुरोऽभिक्रमणपच मुपन्यस्य निराकरोति— "अभितरा-मिति। 'जयन्' कश्चिज्जिगीषुः 'अभितरा मु वै' शत्रोरत्यन्त मभिमुखं खलु 'क्रामति'। यस्मादेवं 'तस्मात्' प्रयाज मभिमुख मभिमुख मीषदीषत्पुरस्तादाक्रामेत्। आक्रमणानुसारेण अग्नावपि ईषदीषत्पुरस्तादाक्रम्य 'जुहुयात्'॥ ६॥

अमुं पचं निषेधति— "तद्विति। तर्हि कथ मित्याशङ्क्य पूर्वोक्त मेव पचं निगमयति— "यचैवेति। आश्रावणस्य प्रदानाङ्ग-तया तयोः प्रदेशैक्यलाभादित्यभिप्रायः॥

पचान्तर माह— "यचो एवेति। आहवनीयमध्ये यस्मिन्नेव प्रदेशेऽग्निं प्रज्वलितं मन्येत, तच पश्चापि 'आहुतीर्जुहुयात्'। 'हि' यस्मात् समिद्धाग्निदेशहोमात् 'आहुतयः' अपि 'समिद्धाः' प्रदीप्ताः, फलजननसमर्थाः स्युः; अतोऽय मेव पचः श्रेयान्॥ ७॥

आश्रावणानन्तरं कर्त्तव्य माह— "स इति। हे होतः! समि-धामिका अग्निमूर्त्तीः प्रति तासां यागाय याज्यां पठेति प्रैषार्थः[२]।

---

१— 'संयतयोः'–इति भा। संयत्तयोरित्यस्यैव व्याख्यान मिदम्।

२— "अध्वर्युप्रेषितो मैत्रावरुणः प्रेष्यति प्रैषैर्होतारम्, होता यजत्या-प्रीभिः प्रैषलिङ्गाभिः"–इति आश्व० श्रौ० सू० ३. २. ४, ५। आप्रियः प्रयाजास्तेत्यनर्थान्तरम्। तथाहि "अथाप्रीभिश्चरन्ति"– इत्याद्यास्नास्यत इहैवोपरिष्टात् ( शत० ब्रा० ३. ८. १. )।

तेन प्रैषेण साक्षाद् 'वसन्तम्' एव 'समिन्धे' दीप्तं करोति। न केवलं तस्यैव समिन्धनम्, अपि तु तद्द्वारा सर्वेषा मप्यृतूनां समिन्धनं कृतं भवति। तथा च सति सर्वे ऋतवः स्व-स्व-कालोचिताः 'प्रजाः' सर्वा अप्युत्पादयन्ति, तदुपजीवनाय 'ओषधीश्च पचन्ति'। "तद्वेवेति। यस्मादेव कारणात् वसन्तसमिन्धनेन स्वय मपि समिद्धाः सन्तः प्राण्युत्पादन मोषधिपाकं चैव कुर्वन्ति, तस्माद्वसन्तः समिद्धोऽन्यान् ऋतून् समिन्ध इति 'सर्वान् ऋतून् निराह' ॥

समिद्यागवदितरेषा मपि नामनिर्द्देशपूर्वकत्वप्रसक्तौ तन्निवारयति— "अथ यज-यजेति। तदनिर्द्देशस्य प्रयोजन माह— "अजामितताया इति। अनतिरेकाय। "जाम्यतिरेकनाम"-इति यास्कः[१]। एकस्मिन् प्रथमे समिद्यागे नामनिर्द्देशे सतीतरेषा मप्यूहयितुं शक्यत्वेन निर्द्देशप्रायत्वात् पुनर्नामनिर्द्देशे 'जामि' भवेत्। जामित्वपक्ष मुदाहृत्य प्रदर्शयति— "जामि हेति। अतस्तनूनपात्प्रभृतीन् 'यज-यजेति' एव ब्रूयात् ॥ ८ ॥

"ऋतवो ह वै"-इत्यत्र[२] सङ्ख्यो विहिताः, पञ्च प्रयाजाः[३];

---

१— निरु० ४. ३. ४। 'पुनरुक्तनामेत्यर्थः'-इति तद्वृत्तिः। "जामि वा एतद् यज्ञे क्रियते, यत् समानीभ्या मृग्भ्यां समानेऽहन् यजतीति'-इति ऐ० ब्रा० ३. ५. ३। २— क० १ (३६१ पृ० १ पं०)।

३— "पञ्च प्रयाजान् यजतीतीयं पञ्चसङ्ख्या, प्रयाजाना मुत्पत्तिशिष्टा; नव प्रयाजान् यजतीति, एकादश प्रयाजान् यजतीति नवैकादशसङ्ख्यया बाधायोगाद् वैकृती सङ्ख्या, अभ्यासेनैव पूरणीया"-इति या० वृ० ( का० श्रौ० सू० ३. ३. ८. )। तदासां पञ्चप्रयाजाहुतीनां प्रकृता-

तेष्वेकैकं विधाय प्रशंसति— "स वै समिध इत्यादिना। अत्र समिदादीनां वसन्ताद्यात्मतया स्तुतौ सङ्ख्यासाम्य मेव साधारणम्, कारणविशेषस्तु तत्र प्रदर्श्यते— "वसन्तो वा इत्यादि। वसन्तेऽपि निखिलवृक्षाणां कुसुमाद्युद्गमेन प्रदीप्ततास्तीति समिधो वसन्तत्वाभिधानम्। अतः 'तत्' तेन समिद्यागेन 'वसन्त मेव अवृञ्जत' स्वैर्लब्धत्वात् असुरेभ्यः तं वर्जित मकुर्वन्। तस्माद् 'वसन्तात्' 'सपत्नान्' असुरान् 'अन्तरायन्'। यद्येषा नास्ति, तेन तेऽन्तर्हिता इति प्रसिद्धम् ॥

पुरातनवृत्तान्तप्रदर्शनस्य प्रयोजन माह— "वसन्तम्विति। 'उ' अपि च, इदानीं मपीत्यर्थः। 'एतत्' एतेन समिद्यागेन 'वसन्त मेव वृङ्क्ते' वर्जयति, स्वसपत्नेभ्य इत्यर्थः[१]। सिद्ध मन्यत्। एव मुत्तरवाक्यान्यपि योज्यानि ॥ ८ ॥

"अथ तनूनपात मित्यादि। ग्रीष्मस्य तनूनपात्साम्यं दर्शयति— "ग्रीष्मो हीति। अस्य सकलप्रजाशरीरतापकत्वेन तनूनां पालकत्वात्

---

वनुष्ठानप्रकार आपस्तम्बेनैवं दर्शितः— "पञ्च प्रयाजान् प्राचो यजति, प्रति दिशं वा; समिधः पुरस्तात्, तनूनपातं दक्षिणतः, इडः पश्चाद्, बर्हिरुत्तरतः, स्वाहाकारं मध्ये"—इति श्रौ० सू० २. १७. १, २।

१— "समिधो यजति, वसन्त मेवर्त्तूना मवरुन्धे"—इति तै० सं० २. ६. १. १। "प्राणा वै समिधः"—इत्यादि च ऐ० ब्रा० २. १. ४। इहत्य-समिद्-व्याख्याया माह यास्कः—"यज्ञेध्म इति कात्थक्यः, अग्निरिति शाकपूणिः"—इति ८. २. २। समिद्यागमन्त्रस्तु— "समिधो अग्न आज्यस्य वियन्तु (व्यन्तु)"—इति तै० ब्रा० ३. ५. ५. १।

तनूनपात्त्वम् ; अतो अर्थतः साम्याद् 'ग्रीष्मः तनूनपात्[1]'। शिष्टं पूर्ववत् ॥ १० ॥

"अथेड इत्यादि। इड इत्येतद्देवता यजेत। इडो वर्षात्वेनोपचारे स्वोक्तं बहुलस्य बीजम्। उक्तं साम्यं समर्थयते— "इति हीति। 'हि' एवं खलु 'इडा वर्षा'। कथ मिति तत्राह— 'यदिदं चुल्लकम्' प्राणिजात मित्यर्थः। 'सरीसृपं' कृकलासगोधादिकम्। 'ग्रीष्महेमन्ताभ्यां' निमित्ताभ्यां 'नित्यक्तं' नितरां परित्यक्तशरीरं चीणं 'भवति' ; हिमे सर्वपदार्थानां शीतेनार्त्तत्वात्, ग्रीष्मे रसानां शोषणादिति भावः। 'तत्' सर्वं 'वर्षाः' द्वितीयाबहुवचनान्ताः, प्रति 'ईडित मिव' अहो विनष्टप्रायं सत् इदानीं पुनश्चेष्टत इति सर्व्वैः प्रशंसित मिव 'अन्नं' स्वोचितं तृणजलादिरूपं 'इच्छमानम्' इच्छां कुर्वत्, इतस्ततः 'चरति'; वर्षासु तृणजलादिसमृद्धिसम्भवात्। यस्मादेवं 'तस्माद्' वर्षाणा मिड्रूपत्व मुक्त मित्यर्थः; इष्यत इतीडिति 'इट्'-शब्दव्युत्पत्तेर्वर्षास्वपि सम्भवात्[2]। शिष्टं पूर्ववत् ॥ ११ ॥

---

१— "तनूनपातं यजति, ग्रीष्म मेवावरुन्धे"—इति तै० सं० २. ६. १. २। "प्राणो वै तनूनपात्"—इत्यादि ऐ० ब्रा० २. १. ४। तनूनपाद्-व्याख्याया माह यास्कः— "आज्य मिति कात्थक्यः, अग्निरिति शाकपूणिः"—इति ८. २. २। तनूनपाद्यागमन्त्रस्तु— "तनूपादग्न आज्यस्य वेतु"—इति तै० ब्रा० ३. ५. ५. २।

२— "इडो यजति, वर्षा एवावरुन्धे"—इति तै० सं० २. ६. १. ३। "अन्नं वा इळः"—इत्यादि ऐ०ब्रा० २. १. ४। इड्-व्याख्याया माह यास्कः— "इळ ईट्टेः स्तुतिकर्मणा इन्धतेर्वा"—इति ८. २. ४। इड्यागमन्त्रस्तु— "इडो अग्न आज्यस्य वियन्तु (व्यन्तु)"—इति तै० ब्रा० ३. ५. ५. ३।

"अथ बर्हिरित्यादि। "वर्षा इति। उक्तप्रकारेण विनष्टाः, ता 'ओषधयः' वर्षासु प्रवृद्धाः सत्यः, 'शरदि' प्राप्तायां 'बर्हिषः' आस्तीर्णस्य 'रूपम्' प्राप्नुवन्ति। तत् कुत इत्यत आह– 'आस्तीर्णाः' अनुक्रमणसामान्येन आस्तृतदर्भवत् 'शेरे' शेरते। 'तस्मात्' उपपादितात् हेतोः 'शरद् बर्हिः'[१] ॥ १२ ॥

"अथ स्वाहेत्यादि। अन्त्यप्रयाजे 'स्वाहाग्निं', 'स्वाहा सोमम्' -इति[२] स्वाहाकृतिरस्ति; तां देवतां यजेति स्वाहाकारेण हविःप्रदानात्, तत्प्रदानस्य च यागत्वात्, तस्य तद्देवत्वम्। हेमन्तोऽपि वसन्ताद्यृतूना मन्तिमः। तदेवोपपादयति– 'हि' यस्माद् 'वसन्तात्' 'परार्द्धः' परस्मिन् अर्द्धे भागे भवः। 'अन्तेन' स्वाहाकारेण 'अन्तं' हेमन्तम् मसुरेभ्यः 'अवृञ्जत[३]'। गत मन्यत् ॥ १३ ॥

---

१— "बर्हिर्यजति, शरद मेवावरुन्धे"–इति तै० सं० २. ६. १. ५। "पशवो वै बर्हिः"–इत्यादि ऐ०ब्रा० २. १. ४। बर्हिर्व्याख्याया माह यास्कः— "बर्हिः परिवर्हणात्"–इति ८. २. ५। बर्हिर्यागमन्त्रस्तु"— "बर्हिरग्न आज्यस्य वेतु"–इति तै० ब्रा० ३. ५. ५. ४।

२— "स्वाहाग्निम्, स्वाहा सोमम्, स्वाहाग्निम्, स्वाहा प्रजापतिम्, स्वाहाग्नीषोमौ, स्वाहेन्द्राग्नी, स्वाहेन्द्रम्, स्वाहा महेन्द्रम्, स्वाहा देवाँ आज्यपान्, स्वाहाग्निँ होत्रा जुषाणाः, अग्न आज्यस्य वियन्तु (व्यन्तु)"–इति स्वाहाकृतयः। तै० ब्रा० ३. ५. ५. ५।

३— "स्वाहाकारं यजति, हेमन्त मेवावरुन्धे"–इति तै० सं० २. ६. १. ६। "स्वाहाकृतीर्यजति, प्रतिष्ठा वै स्वाहाकृतयः"–इत्यादि ऐ० ब्रा० २. १. ४। स्वाहाकृति-व्याख्याया माह यास्कः— "स्वाहाकृतयः। स्वाहेत्येतत्— सु आहेति वा, स्वा वागाहेति वा, स्वं प्राहेति वा, स्वाहुतं हविर्जुहोतीति वा"–इति ८. ३. ५। स्वाहाकृतियागमन्त्रास्तु – "स्वाहाग्निम्"–इत्याद्याः तै० ब्रा० ३. ५. ५. ५।

हेमन्तस्यान्तिमत्वं प्रकारान्तरेण प्रशंसति— "तद्वा इति । 'तत्' वक्ष्यमाणप्रकारं 'वै' खलु 'एतत्', तदिद मपि हेमन्तप्राशस्त्य मस्तीत्यर्थः । किं तदेतत् ? 'वसन्त एव' 'पुनः' कल्पारम्भे आवर्त्तमानः सन्, 'हेमन्तात्' स्व-पूर्वभाविनः सकाशात् 'पुनरसुः' पुनः-प्राप्त-प्राणो 'भवति' । कथ मित्यत आह— "एतस्मादिति । उक्तार्थ-वेदनं प्रशंसति— "पुनर्ह वा इति ॥ १४ ॥

प्रयाजमन्त्रेषु तद्देवताबहुत्वैकत्वप्रयुक्तं 'व्यन्तु'-'वेतु'-इति बहुत्व मेकत्वं वास्ति, तदनूद्य प्रशंसति— "स वै व्यन्त्विति । उक्तो 'जामि'-शब्दार्थोऽसकृत् । ऐकरूप्येण व्यन्त्विति वा वेत्विति वा पाठे सति शृण्वतां मनसि अनादरः स्यात्, अतस्तत् 'जामि' अधिकं भवति । प्रकारान्तरेण तदेव प्रशंसति— "व्यन्त्विति वा इति । एकस्य पुंसो जायाबहुत्वसम्भवेऽपि स्त्रियास्त्वेक एव पतिरिति नियमाद् व्यन्तु-वेतु इति योषा-वृषणौ ; अतः 'एतत्' एतेन तथाविधपाठेन अस्य पुत्रस्योत्पादनं 'मिथुन मेव' सम्पादितवान् भवति ॥ १५ ॥

तैत्तिरीयके "यदुपभृति प्रयाजानुयाजेभ्यस्तदिति[१] यदुभयार्थ माज्यग्रहण मुक्तम्[२], तस्य विभाग माह— "अथ चतुर्थ इति । 'चतुर्थे' बर्हिराख्ये 'प्रयाजे' होतव्ये सति, उपभृतः सकाशात् जुह्वां 'समानयति' आज्यम्[३] । एतत् प्रशंसति— "प्रजा वा इत्यादिना । प्रजानां पुत्रादिद्वारा उपरिवर्हणसम्भवात् बर्हिष्ट्वम् ।

---

१—तै० ब्रा० ३. ३. ६ । २— इहाप्याम्नातम् २प्र० ५ब्रा० द्रष्टव्यम् ।

३— "उपभृतो जुह्वा मानयति"—इति का० श्रौ० सू० ३. २. २२ ।

तस्यास्य वृष्ट्यादिद्वारा प्रजादिरूपेणोत्पत्तेराज्यं रेतः; अतो बर्हिष्यानयनात् 'प्रजासु' 'रेतः' सिक्तं भवति। 'सिक्तेन रेतसा' रेतोभूतेनाज्येन 'इमाः' परिदृश्यमानाः 'प्रजाः' 'अभ्यावर्त्तम्' अभ्यावृत्याभ्यावृत्य कर्मवशाद् देहसम्बन्धं प्राप्नुवन्ति। "तस्मादित्युपसंहारः ॥ १६ ॥

जुह्वा सुपभृतः प्राप्त माज्यं मित्रप्राप्त्यात्मना प्रशंसति— "सङ्ग्राम इति। 'यः' च 'प्रयाजैः' संसृष्टोऽध्वर्युः, तेन सङ्ग्राम एव सन्निधापितो भवति। अतः 'संयत्तयोः' युद्धाय प्रयतमानयोर्मध्ये 'यतरम्' एव योद्धारं 'मित्रं' सखायं साहाय्यं कर्त्तुम् 'आगच्छति', 'स जयति' इति लोके प्रसिद्धम्; एवम् 'उपभृतः' सकाशात् 'जुह्वं' जुह्वगत माज्यं 'मित्रं' सत् 'आगच्छति'; 'तेन' मित्रप्राप्तिकारणेन 'जयति'। 'तस्मात् समानयति' ॥ १७ ॥

"यजमान एव जुह्व मिति। "अत्तैव जुह्वम्"-इत्याज्यानयनार्थवादद्वयम् "अध्वर्यो! स्रुच मास्यस्व"-इत्येतस्य ब्राह्मणवद् व्याख्येयम्[१]। उपभृतः सकाशादाज्यस्य आनेता अध्वर्युः, शत्रोः सकाशाद् 'बलिम्' उपायनद्रव्य मदनीय मन्नं दात्रे यजमानाय प्रदापितवान् भवतीति सङ्ग्रहार्थः ॥ १८ ॥

आज्यसमानयनसमये उपभृदवमर्शने विपक्षे बाधदर्शनेन निषेधति— "स वा इत्यादिना। "अत्तार माद्येनेति। अत्तुरन्नस्यावमर्शो युक्तः, तद्वैपरीत्येन 'आद्येन' अन्नेनावमर्शने भोक्तुर्यजमानस्य प्रतिकूलं कृतवान् भवति ॥ १९ ॥

---

१— पुरस्तादिहैव ३ ब्रा २ क० (३४५, ३५१ पृ०) द्रष्टव्यम्।

"अथोत्तरा मिति । 'उत्तराम्' उपभृदुपरितनीं कृत्वा 'जुहूम्' 'अध्यूहति' विधारयेत् । स्पष्ट मन्यत् ॥ २० ॥

आज्यभागादिदेवतां तदनुक्रमेण निर्दिश्य स्वाहाकारेण तच स्तोतु माख्यायिका माह— "देवा ह वा इति । कृत्स्नयज्ञसमाप्त्युपायपरिज्ञानद्योतनार्थो निष्प्रत्यूहं प्रयाजलाभहर्षद्योतनार्थो वा 'हन्त'-शब्दः । 'हन्त ! विजित मेव' प्रयाजपञ्चक मपि असुरविघात मन्तरेण स्वाधीनं कृत मेव । 'अनु' तदनुसृत्य एतस्मिन्नेवान्त्यप्रयाजे 'सर्वं' प्रयाजव्यतिरिक्त सकल मपि 'यज्ञं' 'संस्थापयाम' इति । तेषा मभिप्रायं दर्शयति— "यदि न इति । 'यदि' समापनात् प्रागेव असुरा राक्षसाश्च 'नः' अस्माकं यज्ञम् आगच्छेयुः, तर्हि तस्य भङ्गः स्यात् ; अतः प्रागेव समापित एवास्त्विति तेषा मभिप्रायः ॥ २१ ॥

"त इति । एवं विचार्य 'उत्तमे प्रयाजे' 'स्वाहाकारेणैव' स्वाहा-स्वाहेत्युक्त्यैव 'सर्वम्' अवशिष्टं 'यज्ञं' 'समस्थापयन्' । तत्प्रकारं विभज्य दर्शयति— "स्वाहाग्नि मितीत्यादिना । 'उभयत्राच्युतः आग्नेयः पुरोडाशः'-इति । "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवतीति श्रुत आग्नेयोऽष्टाकपालः पुरोडाशो दर्शे पौर्णमास्यां च नित्य इत्यर्थः ॥ २२ ॥

"अथ यथादेवत मिति । पौर्णमास्या ममावास्यायां च विष्णुः, अग्नीषोमौ, प्रजापतिश्चेति विकल्पिता उपांशुयाजदेवताः[1], एका-

---

१— "विष्णुर्वा"—इत्यादि का०श्रौ०सू० ३. ३. २५ । व्यवस्थितविकल्पोऽयम् सन्नयतोऽग्नीषोमौ असन्नयतो विष्णुरिति (साङ्ख्या० १. ३.१६–१८. ) । सान्नाय्ये=दार्शिके दधिपयसी, तदनुतिष्ठन्=सन्नयन्निति ।

दशकपालदेवताः, अग्नीषोमौ, अमावास्यायां चोभयत्र साधारणः; अष्टाकपालदेवोऽग्निः, इन्द्राग्नी एकादशकपालदेवता, दधिपयो देवते इन्द्रमहेन्द्राविति या दर्शपूर्णमास-प्रधानदेवताः सन्ति, ता अनतिक्रम्य (तत्तद्देवता अनतिक्रम्य[1]) तत्तद्देवताकं यागं समस्थापय-न्नित्यर्थः। अत्र देवताना मनियतत्वात् यथादेवत मिति सङ्क्षेपेणाभिधानम् ॥

'आज्यपाः[2]' 'प्रयाजानुयाजा देवाः[3]' समिदाद्याः स्वाहान्ताः[4]। तेभ्यः इदं हविः स्वाकृत मस्त्विति तस्यार्थः। "जुषाणो अग्निः"-इत्यत्र[5] 'स्विष्टकृदग्निः' विवक्षितः; स्विष्टकृत्त्वाभावे जोषस्यैवासम्भवात्। तेन 'स्विष्टकृत मग्निं' तद्देवताकं यागं 'सम-स्थापयन्' इत्यर्थः; सकलकर्मन्यूनातिरेकपरिहारायाग्नौ स्विष्टकृद्धोम-स्यानुष्ठेयत्वात्। सैषा प्रसिद्धिः "अग्निर्होति 'हि'-शब्देनोच्यते ॥

---

१— ठ-पुस्तके नास्त्येषोऽंशः।

२— "आज्येन प्रयाजा इज्यन्ते"-इति तै० सं० ६. ३. ११.१५।

३— "एकादश प्रयाजाः, एकादशानुयाजाः, एकादशोपयाजाः ;-एते-ऽसोमपाः पशुभाजनाः"-इति ऐ० ब्रा० २. २. ८।

४ — समिधः, तनूनपात् नराशंसो वा, इळः, बर्हिः, दुरः, उषासानक्ता, दैव्याहोतारा, तिस्रोदेव्यः (इड़ा, सरस्वती, भारती) त्वष्टा, वन-स्पतिः, स्वाहाकृतयः इति। ऐ० ब्रा० २. १. ४; तै० ब्रा० ३. ६. ३; निरु० ८ अ० २, ३ पा०; निघ० ५. २. २-१३।

५— "जुषाणोऽग्निराज्यस्य वेतु"-इति, "जुषाणः सोम आज्यस्य वेतु"-इति च; द्वावेतौ आज्यभागयोर्याज्यामन्त्रौ। आम्नाताविमौ तै० ब्रा० ३. ५. ६. २, ३। ऐतरेयकेऽपि विहितौ (१. २. ६.)।

विभज्याम्वाख्यानस्य तात्पर्यं माह— "यथैवेति । 'यथा' कृत्स्नोऽपि 'यज्ञः' समाप्तो भवति, तथा 'देवाः' प्रतिपादितप्रकारेणान्त्यप्रयाज एव 'समस्थापयन्' । यदर्थं माख्यायिकाच प्रपञ्चिता, तदिदानीं सार्थवाद माह— "तस्मादिति । 'यावन्ति हवींषि' आज्यभागादि-स्विष्टकृदन्तानि, तानि सर्वाणि प्रयाजयागेनैव सम्पादितवान् भवति ॥

समापनफल माह— "तस्माद् यदत ऊर्ध्व मिति । 'तस्मात्' समापनाद्धेतोः 'अतः' अन्त्यप्रयाजात् 'ऊर्ध्वं' 'विलोम' न्यूनं विपरीतप्रकारं वा, यदि 'क्रियेत', तद्विषय मादरं न कुर्यात्,— तत्कथं समादध्या मिति चिन्तां न कुर्यादित्यर्थः । किन्तु 'यज्ञः संस्थितः' एव 'इति' जानीयात् । 'स एषः' उक्तविधो 'यज्ञः', 'अयातयामेव' अगतसार एव ; 'यथा' अपेक्षानतिक्रमेणैव यतो वषट्कारादिना उक्त आसीत्, अतो यातयामत्व-शङ्का नास्तीत्यर्थः । अथवा अपेक्षितस्य वषट्कारादेरसत्त्वात् 'स एषः' शिष्टः 'यज्ञः' 'यातयामेव' निर्गतसार एव ॥ २३ ॥

अथ देवैः कृत मवशिष्टस्य यातयामत्वपरिहारं दर्शयति— "ते देवा इति । केवलेनाङ्गेन फलानिष्पत्तेरवश्यं प्रधान मनुष्ठेयम् ; तच्च गतसार मभूत् ; अतः कथं तत्परिक्रियत इति तेषां कामना ;— गतसारं हि 'पुनराप्याययेम' इति । कस्तस्य प्रसङ्ग इति, त माह— "अयातयामान मिति । यामपर्यन्त मवस्थित मशनादिकं यथा नीरसं भवति, एव मय मपीति ; गतरसत्वसाम्यादस्यापि यातयामत्वम् ॥ २४ ॥

अथ तैर्दृष्ट मुपायं दर्शयति— "स यदिति। 'सः'-इत्यनर्थको वाक्यालङ्कारार्थः। 'आज्यं' 'जुह्वां' 'परिशिष्टं' प्रयाजहोमेभ्योऽव-शिष्ट मभूत्। उपयुक्तादन्यः शेषः; अतोऽस्याज्यस्य क्वचिदुपयोग इति तं दर्शयति— "येनेति। यं प्रति यस्य रसो निर्गतः, तस्य तत एव हि आप्यायन मुचित मिति संस्थापितावशेषाज्योपादाना-भिधानम्। "यथापूर्वं मिति। आग्नेयोऽग्नीषोमीयादिति हविषां पूर्वं-पूर्वं मनतिक्रम्येत्यर्थः॥

अभिघार मेवाप्यायन मित्याह— "पुनरेवेति। आज्येन आप्यायन मेवायातयामत्वकरणम्। आज्यस्यायातयामत्वप्रसिद्धिः 'हि'-शब्देनोच्यते। यदर्थं पुरावृत्ताभिधानम्, तदिदानीं विधत्ते— "तस्मादुत्तम मिति। अन्यथावत्तशेषस्य यातयामत्वपरिहाराय पुनरभिघारणप्रदर्शनेनाज्यस्यायातयामत्वं समर्थ्यते— "तस्मादिति। "यस्य कस्य चेति। चरोः[1] पुरोडाशस्य वा, आज्यव्यतिरिक्तस्य 'हविषः' अवत्त मिति शेषः, तम् अवत्तशेष मित्यर्थः। अवशिष्टस्य शिष्टकृत्युपयोगात् 'तत्' तेनाभिघारणेन स्विष्टकृत मेवाप्यायित-वान् भवति,— आप्यायनेन तदवशिष्टम् 'अयातयामं करोति'; शेषाभिघारणस्य अवत्तहविषोऽभिघारणात्॥

साधारणत्वशङ्कां व्युदसितुं व्यतिरेक माह— "अथ यदेति। 'स्विष्टकृते' स्विष्टकृदर्थं 'यदा' एतत्साधारणं स्यात्, तदा 'ततः' स्विष्टकृतोऽवशिष्टस्याभिघारणात् न तानि आप्याययेदित्यर्थः॥

अनभिघारणे हेतु माह— "नो हीति। 'ततः हविषः'

---

१— 'पश्वोः'—इति ढ।

सकाशात् 'काञ्चन' प्रधानस्य अङ्गस्य वा सम्बन्धिनीम् आकृतिम् अध्वर्युः 'ह्वोष्यन्' भवति । अतोऽभिघारणस्याप्याप्यायनार्थत्व मिति सिद्धम् ॥ २५ ॥ ४ ॥ [५.३.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे पञ्चमाध्याये तृतीयं ब्राह्मणम्[1] ॥

---

१— "अत्र यद्यपि शतपथे अविशेषेण श्रुतम्— "अथ तनूनपातं यजति"—इति ( ३६३ पृ० १७ पं० ), परन्तु शाखान्तरेऽस्ति विशेषोऽपि । तथाहि—'राजन्यात्रिवध्र्यश्ववसिष्ठवैश्यशुनकानां कण्वकश्यपसङ्कृतीनां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषाम्'—इति कात्या० श्रौ० ३. ३. ८ सू० वृ० । "वसिष्ठशुनकानां नाराशंसः । अत्रीणां चैके"—इति का० श्रौ० सू० १६. ६. ८, ६ । "नराशंसो अग्न आज्यस्य वेत्विति द्वितीयो वसिष्ठशुनकाना मत्रिवध्र्यश्वानां कण्वसङ्कृतीनां राजन्यानां प्रजाकामानां च"—इति शाङ्खा० १. ७. ३ । "तान्येतान्येकादशाप्रीसूक्तानि । तेषां वासिष्ठ मात्रेयं वाध्र्यश्वं गार्त्समद मिति नाराशंसवन्ति, मैधातिथं दैर्घतमसं प्रैषिक मित्युभयवन्ति, अतोऽन्यानि तनूनपात्वन्ति"—इति चाह यास्कः ( निरु० ८. ३. ७. ) आपस्तम्बस्तु— "नराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानाम्, तनूनपादितरेषां गोत्राणाम्"—इत्येवाह ( श्रौ० सू० १ ) आश्वलायनेन त्विह बह्वन्युक्तानि, तानि तत्रैव द्रष्टव्यानि ( श्रौ० सू० ३. २. १—८. ) । प्रयाजयागदेवताविचारोऽप्यस्ति । तत्र यास्केन हि "किन्देवताः प्रयाजानुयाजाः"—इत्युपक्रम्य बहु विचारानन्तरम् "आग्नेया

स वै समिधो यजति। प्राणा वै समिधः प्राणानेवैतत्समिन्धे प्राणैर्ह्ययं पुरुषः समिद्धस्तस्मादभिमृशेति ब्रूयाद्युपतापी स्यात्स यद्युष्णः स्यादेव तावच्छꣳसेत समिद्धो हि स तावद्भवति यद्यु शीतः स्यान्नाशꣳसेत तत्प्राणानेवास्मिन्नेतद्दधाति तस्मात्समिधो यजति ॥ १ ॥

अथ तनूनपातं यजति। रेतो वै तनूनपाद्रेत एवैतत्सिञ्चति तस्मात्तनूनपातं यजति ॥ २ ॥

अथेडो यजति। प्रजा वा इडो यदा वै रेतः सिक्तं प्रजायतेऽथ तदीडितमिवान्नमिच्छमानं चरति तत्प्रैवैतज्जनयति तस्मादिडो यजति ॥ ३ ॥

अथ बर्हिर्यजति। भूमा वै बर्हिर्भूमानमेवैतत्प्रजनयति तस्माद्बर्हिर्यजति ॥ ४ ॥

अथ स्वाहा-स्वाहेति यजति। हेमन्तो वा ऋतूनाꣳ स्वाहाकारो हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते तस्माद्धेमन् म्लायन्त्योषधयः प्र वनस्पतीनां पलाशानि मुच्यन्ते प्रतितरा मिव व्वयाꣳसि भवन्त्यधस्तरा मिव

---

इति तु स्थितिः”–इति निर्णीतम् ( निरु० ८. ३. ६, ७. )। एतदवलम्ब्य मीमांसादर्शनेऽपि बहूनि सूत्राणि रचितानि ( २. २. २ ; ३. १. १६, २० ; ३. ३. ११ ; ४. १. ३३–३६ ; ४०, ४१ ; ५. २. १६ ; ६. २. ५६, ६० ; १०. १. १४, १५. )। एतान्येवावलम्ब्याष्टावधिकरणान्यारचितानि माधवाचार्य्येण जैमिनीयन्यायमालाया मिति ॥

व्वयाꣳसि पतन्ति व्विपतितलोमेव पापः पुरुषो भवति हेमन्तो हीमाः प्रजाः स्वं व्वश मुपनयते स्वी ह वै त मुर्द्धं कुरुते श्रियेऽन्नाद्याय यस्मिन्नुर्द्धं भवति य ऽएव मेतद्वेद ॥ ५ ॥

देवाश्च वा ऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ते दण्डैर्धनुर्भिर्न व्यजयन्त ते हाव्विजयमाना ऽऊचुर्हन्त व्वाच्येव ब्रह्मन् विजिगीषामहै स यो नो व्वाचं व्याहृतां मिथुनेन नानुनिक्रामात्स सर्व्वं पराजयाता ऽअथ सर्व्व मितरे जयानिति तथेति देवा ऽअब्रुवंस्ते देवा ऽइन्द्र मब्रुवन् व्याहरेति ॥ ६ ॥

स ऽइन्द्रोऽब्रवीत् । एको ममेत्यथास्माक मेकेतीतरे ऽब्रुवंस्तदु तन्मिथुन मेवाविन्दन्मिथुनꣳ ह्येकश्चैका च ॥ ७ ॥

द्वौ ममेतीन्द्रोऽब्रवीत् । अथास्माकं द्वे ऽइतीतरे ऽब्रुवंस्तदु तन्मिथुन मेवाविन्दन्मिथुनꣳ हि द्वौ च द्वे च ॥ ८ ॥

त्रयो ममेतीन्द्रोऽब्रवीत् । अथास्माकं तिस्र ऽइतीतरेऽब्रुवंस्तदु तन्मिथुन मेवाविन्दन्मिथुनꣳ हि त्रयश्च तिस्रश्च ॥ ९ ॥

चत्वारो ममेतीन्द्रोऽब्रवीत् । अथास्माकं चतस्र ऽइतीतरेऽब्रुवंस्तदु तन्मिथुन मेवाविन्दन्मिथुनꣳ हि चत्वारश्च चतस्रश्च ॥ १० ॥

पञ्च ममेतीन्द्रोऽब्रवीत्। तत इतरे मिथुनं नाविन्दन्नो ह्येत ऊर्द्धं मिथुन मस्ति पञ्च-पञ्चेति ह्येवैतदुभयं भवति ततोऽसुराः सर्व्वं पराजयन्त सर्व्वस्माद्देवा असुरानजयन्त्सर्व्वस्मात्सपत्नानसुरान्निरभजन् ॥ ११ ॥

तस्मात्प्रथमे प्रयाज इष्टे ब्रूयाद्। एको ममेत्येका तस्य य महं द्वेष्मीति यद्यु न द्विष्याद्योऽस्मान् द्वेष्टि यञ्च व्वयं द्विष्म इति ब्रूयात् ॥ १२ ॥

द्वौ ममेति द्वितीये प्रयाजे। द्वे तस्य योऽस्मान् द्वेष्टि यञ्च व्वयं द्विष्म इति ॥ १३ ॥

त्रयो ममेति तृतीये प्रयाजे। तिस्रस्तस्य योऽस्मान् द्वेष्टि यञ्च व्वयं द्विष्म इति ॥ १४ ॥

चत्वारो ममेति चतुर्थे प्रयाजे। चतस्रस्तस्य योऽस्मान् द्वेष्टि यञ्च व्वयं द्विष्म इति ॥ १५ ॥

पञ्च ममेति पञ्चमे प्रयाजे। न तस्य किञ्चन योऽस्मान् द्वेष्टि यञ्च व्वयं द्विष्म इति स पञ्च-पञ्चेत्येव भवन् पराभवति तथास्य सर्व्वꣳ संवृङ्क्ते सर्व्वस्मात्सपत्नान् निर्भजति य एव मेतद्वेद ॥ १६ ॥ ५ ॥

॥ इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् [५. ४.] ॥

| | Rs. | |
|---|---|---|
| Pariçiṣta Parvan, (Text) Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1–6 @ /6/ each ... ... ... | 2 | 4 |
| Prithivirāj Rāsa, (Text) Part II, Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |
| Ditto (English) Part II, Fasc. 1 ... ... ... | 0 | 12 |
| Prākrta Lakṣaṇam, (Text) Fasc. 1 ... ... ... ... | 1 | 8 |
| Parāçara Smṛti, (Text) Vol. I, Fasc. 1–8; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6 @ /6/ each . ... ... ... ... | 7 | 8 |
| Parāçara, Institutes of (English) ... ... ... ... | 0 | 12 |
| Prabandhacintāmaṇi (English) Fasc. 1–2 @ /12/ each ... ... | 1 | 8 |
| *Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5–10; II, 1–6; III, 1–7; IV, 1–6; V, 1–8, @ /6/ each Fasc. ... ... ... | 12 | 6 |
| Sāṇkhya Sūtra Vṛtti, (Text) Fasc. 1–4 @ /6/ each .. ... | 1 | 8 |
| Ditto (English) Fasc. 1–3 @ /12/ each ... ... | 2 | 4 |
| Suçruta Saṁhitá, (Eng.) Fasc. 1 @ /12/ ... ... ... | 0 | 12 |
| *Taittereya Saṁhitā, (Text) Fasc. 14–45 @ /6/ each ... ... | 12 | 0 |
| Tāṇḍya Brāhmaṇa, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Tattva Cintāmaṇi, (Text) Vol. I, Fasc. 1–9. Vol. II, Fasc. 1–10, Vol. III, Fasc. 1–2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1–5, Part IV, Vol. II, Fasc. 1–12 @ /6/ each ... ... ... | 14 | 10 |
| Trikāṇḍa-Maṇḍanam, (Text) Fasc. 1-2 @ /6/ ... ... .. | 0 | 12 |
| Tul'si Sat'sai, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Upamita-bhava-prapañca-kathā (Text) Fasc. 1-3 @ /6/ each ... | 1 | 2 |
| Uvāsagadasāo, (Text and English) Fasc. 1–6 @ /12/ ... ... | 4 | 8 |
| Varāha Purāṇa, (Text) Fasc. 1–14 @ /6/ each ... ... ... | 5 | 4 |
| Varsa Krya Kaumudi, Fasc. 1 ... ... ... ... | 0 | 6 |
| *Vāyu Purāṇa, (Text) Vol. I, Fasc. 2–6; Vol. II, Fasc. 1–7, @ /6/ each ... ... ... ... ... ... | 4 | 8 |
| Viṣṇu Smṛti, (Text) Fasc. 1–2 @ /6/ each ... ... ... | 0 | 12 |
| Vivādaratnākara, (Text) Fasc. 1–7 @ /6/ each ... ... ... | 2 | 10 |
| Vṛhannāradīya Purāṇa, (Text) Fasc. 1–6 @ /6/ ... ... | 2 | 4 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1–6 ... ... ... | 2 | 4 |

*Tibetan Series.*

| | | |
|---|---|---|
| Pag-Sam Ṭhi S'iñ, Fasc. 1–4 @ 1/ each ... ... ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1–5, @ 1/ each ... ... ... ... ... ... | 13 | 0 |
| Rtogs *brjod dpag hkhri* S'iñ (Tib. & Sans.) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... | 10 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| 'Ālamgīrnāmah, with Index, (Text) Fasc. 1–13 @ /6/ each... ... | 4 | 14 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1–2 @ /12/ .. ... | 1 | 8 |
| Āīn-i-Akbarī, (Text) Fasc. 1–22 @ 1/ each ... ... ... | 22 | 0 |
| Ditto (English) Vol. I, Fasc. 1–7, Vol. II, Fasc. 1–5, Vol. III, Fasc. 1–5, @ 1/12/ each ... ... ... ... | 29 | 12 |
| Akbarnāmah, with Index, (Text) Fasc. 1–37 @ 1/ each ... ... | 37 | 0 |
| Ditto English Fasc, 1–5 @ 1/ each ... ... ... | 5 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger ... ... ... | 0 | 6 |
| Bādshāhnāmah, with Index, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Catalogue of Arabic Books and Manuscripts ... ... ... | 1 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1–3 @ 1/ each ... ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1–21 @ 1/ each ... ... ... ... ... ... | 21 | 0 |
| Farhang-i-Rashīdī, (Text) Fasc. 1–14 @ 1/ each ... ... | 14 | 0 |
| Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1–4 @ /12/ each ... ... ... ... ... ... | 3 | 0 |
| Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1–9 @ /6/ each ... ... | 3 | 6 |
| Ditto of Āzādī, (Text) Fasc. 1–4 @ /6/ each ... ... | 1 | 8 |
| Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1–6 @ /12/ each ... ... | 4 | 8 |
| Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1–3 @ /6/ each ... ... | 1 | 2 |
| Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... ... | 38 | 4 |
| Maāṣir-ul-Umarā, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. III, Fasc. 11-12; Index to Vol. II, Fasc. 10–12 @ /6/ each ... ... | 13 | 2 |
| Maghazi of Wāqidi, (Text) Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

| | Rs. | As. |
|---|---|---|
| Muntakhabu-t-Tawārīkh, (Text) Fasc. 1–15 @ /6/ each ... Rs. | 5 | 10 |
| Muntakhabu-t-Tawārīkh, (English) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5 and Index; Vol. III, Fasc. 1 @ /12/ each ... ... | 12 | 0 |
| Muntakhabu-l-Lubāb, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Ma'āṣir-i-'Ālamgīrī, (Text), Fasc. 1–6 @ /6/ each ... ... | 2 | 4 |
| Nukhbatu-l-Fikr, (Text) Fasc. 1 ... ... ... ... | 0 | 6 |
| Niẓāmī's Khiradnāmah-i-Iskandari, (Text) Fasc. 1-2 @ /12/ each | 1 | 8 |
| Riyāẓu-s-Salāṭīn, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Ṭabaqāt-i-Nāṣirī, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Ditto (English) Fasc. 1–14 @ /12/ each ... ... | 10 | 8 |
| Ditto Index ... ... ... ... | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barni (Text) Fasc. 1–7 @ /6/ each... | 2 | 10 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, (Text) Fasc. 1–6 @ /6/ each... | 2 | 4 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... | 3 | 0 |
| Wīs o Rāmīn. (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Ẓafarnāmah, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–8 @ /6/ each .. | 6 | 6 |
| Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 ... ... ... ... | 0 | 12 |

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES. Vol. VII, Vols. XI and XVII, and Vols. XIX and XX @ 10/ each ... ... ... 50 0
2. PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7 , 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8). 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

4. Centenary Review of the Researches of the Society from 1784–1883 ... 3 0
   A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... ... 4 0
   Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J.A.S.B.*, 1868) ... ... ... ... 2 0
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... ... 4 0
   Introduction to the Maithilī Language of North Bihār, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J.A.S B.*, 1882) ... ... ... ... ... 4 0
5. Anīs-ul-Musharrahīn ... ... ... ... ... 3 0
6. Catalogue of Fossil Vertebrata ... ... ... ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion 3 8
8. Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... 32 0
9. Jawāmiu-l-'ilm ir-riyāẓī, 168 pages with 17 plates, 4to. Part I ... 2 0
10. Khizānatu-l-'ilm ... ... ... ... ... 4 0
11. Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... 40 0
12. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
13. Sharaya-ool-Islām ... ... ... ... ... 4 0
14. Tibetan Dictionary, by Csoma de Körös ... ... ... 10 0
15. Ditto Grammar „ „ ... ... ... 8 0
16. Kaçmiraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... 3 0
17. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal by C. R. Wilson... ... ... 1 0
18. Memoir on maps illustrating the Ancient Geography of Kaśmir by M. A. Stein PH.D., Jl. Extra No. 2 of 1899 ... ... ... 4 0

---

Notices of Sanskrit Manuscripts, Fasc. 1–29 @ 1/ each ... ... 29 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

20-6-1901.

**Books are supplied by V-P.P.**

BIBLIOTHECA INDICA:



A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 996.



॥ शतपथब्राह्मणम् ॥

॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRĀHMAṆA

OF THE WHITE YAJURVEDA,

WITH THE

COMMENTARY OF SĀYAṆA ĀCĀRYA.

EDITED BY

ĀCĀRYA SATYAVRATA SĀMAS'RAMĪ.

VOL. I, FASCICULUS V.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1901.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.,

46, GREAT RUSSELL STREET, LONDON, W.C., AND MR. OTTO

HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

BIBLIOTHECA INDICA.

*Sanskrit Series.*

| | | | |
|---|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each ... | Rs. | 1 | 8 |
| Advaitachinta Kaustubhe, Fasc. 1 ... ... ... ... | | 0 | 6 |
| *Agni Purāṇa, (Text) Fasc. 4–14 @ /6/ each ... ... ... | | 4 | 2 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5 and Vol. II, Fasc. 1–5 Vol. III, Fasc. 1–5 Vol. IV, Fasc. 1–5 @ /6/ ... ... ... | | 7 | 8 |
| Aṇu Bhāṣyam, (Text) Fasc. 1–5 @ /6/ each ... ... ... | | 1 | 14 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... ... ... | | 0 | 12 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1–6 @ /6/ each ... | | 2 | 4 |
| Açvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... ... ... | | 1 | 14 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... ... | | 10 | 0 |
| *Bhāmatī, (Text) Fasc. 4–8 @ /6/ each ... ... ... | | 1 | 14 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1–3 ... ... ... ... | | 1 | 2 |
| Bṛhaddēvatā (Text) Fasc. 1–4 @ /6/ each ... ... ... | | 1 | 8 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1–6 @ /6/ each ... ... | | 2 | 4 |
| Bodhicaryavatara of Cantidevi, Fasc. 1 ... ... ... | | 0 | 6 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–3 @ 2/ each ... | | 6 | 0 |
| Çatapatha Brāhmaṇa, Fasc. 1–5 ... ... ... ... | | 1 | 14 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–10 @ /6/ each ... ... ... ... | | 19 | 14 |
| Çlokavartika, (English) Fasc. 1–2 ... ... ... ... | | 1 | 8 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 4–15 @ /6/ each ... | | 4 | 2 |
| Ditto Çāṅkhāyana, (Text) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4, Vol. III, Fasc. 1–4 @ /6/ each ... ... | | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1–3 @ /6/ each ... ... ... | | 1 | 2 |
| Gadadhara Paddhati Kālasāra Vol I. Fasc. 1–3 ... ... ... | | 1 | 2 |
| Kāla Mādhava, (Text) Fasc. 1–4 @ /6/ each ... ... ... | | 1 | 8 |
| Kāla Viveka, Fasc. 1–4 ... ... ... ... | | 1 | 8 |
| Kâtantra, (Text) Fasc. 1–6 @ /12/ each ... ... ... | | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1–14 @ /12/ each ... ... | | 10 | 8 |
| Kūrma Purāṇa, (Text) Fasc. 1–9 @ /6/ each ... ... ... | | 3 | 6 |
| Lalita-Vistara, (English) Fasc. 1–3 @ /12/ each ... ... | | 2 | 4 |
| Madana Pārijāta, (Text) Fasc. 1–11 @ /6/ each... ... ... | | 4 | 2 |
| Mahā-bhāṣya-pradīpōdyōta, (Text) Fasc. 1–9 @ /6/ each ... ... | | 3 | 6 |
| Manuṭīkā Saṅgraha, (Text) Fasc. 1–3 @ /6/ each ... ... | | 1 | 2 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1–6 @ /12 each ... ... | | 4 | 8 |
| *Mīmāṁsā Darçana, (Text) Fasc. 7–19 @ /6/ each ... ... | | 4 | 14 |
| Nārada Smṛti, (Text) Fasc. 1–3 @ /6/ ... ... ... | | 1 | 2 |
| Nyāyavārtika, (Text) Fasc. 1–4 @ /6/ ... ... ... | | 1 | 8 |
| *Nirukta, (Text) Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each ... | | 5 | 4 |
| Nityacarapaddhati Fasc. I (Text) ... ... ... ... | | 0 | 6 |
| Nyayabinduṭīka, (Text) ... ... ... ... ... | | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–3 @ /6/ each ... ... ... ... ... | | 3 | 6 |
| Padumawati Fasc. 1–3 @ 2/ ... ... ... ... | | 6 | 0 |

अथ प्रयाजान् प्रकारान्तरेणानूद्य प्रशंसति— "स वा इत्यादिना। 'एतत्' एतेन समिद्यागेन यजमानस्य 'प्राणानेव' समिन्धितवान् भवति। प्राणानां समिद्धत्व मुपपादयति— "प्राणैर्हीति। 'अयं पुरुषः' क्षेत्रज्ञः। प्राणोपाध्यभावे शरीरसम्बन्धायोगात् तेषां पुरुषसमिन्धनहेतुत्वम्। सेषा प्रसिद्धिः 'हि'-शब्देनोच्यते ॥

समिधः प्राणत्वसमर्थनाय प्रासङ्गिकं नैमित्तिक मभिमर्शन माह— "तस्मादिति। यजमानो ज्वरादिना उपतापवान् 'यदि स्यात्', तदाध्वर्युः समिद्यागसमये प्राणप्राबल्यायात्मना 'अभिमृशेति' यजमानं 'ब्रूयात्'। 'स यदि' 'उष्णः' औष्ण्यवानित्यर्थः। 'तावत् आशंसेत' अस्योपतापः शाम्यत्विति; समिद्यागेषु प्राणदेवता मनुध्यायन् कामयेत। 'तावता' तदाशंसनमात्रेणैव 'समिद्धः' प्रबलः प्राणो गतोपतापो 'भवति' एव। तापाभावे तन्न कर्त्तव्य मित्याह— "यदिति। यस्मादेवं तस्मात् 'प्राणा एव समिधः'-इति सिद्ध मित्यर्थः। "तत्प्राणानित्याद्युपसंहारः ॥ १ ॥

"अथ तनूनपात मिति। 'रेतसः' सप्तमधातोः शरीरावष्टम्भकत्वेन तनूनां पालनात् तनूनपात्त्वम्; अतस्तद्यागेन स-प्राणे यजमाने 'रेत एव' स्थापितवान् भवति ॥ २ ॥

"अथेड इति। इड्यन्तीडोऽन्नानि; तदुपजीवनेन प्रजाना मिड्रूपत्वम्। एतदेवोपपादयति— 'यद्' 'आसिक्तं रेतः' 'प्रजायते' उत्पद्यते, 'तद्' एव 'ईडितं' सर्वैः प्रशस्यमानम् 'अन्नम्' इच्छन् 'चरति', 'तत्' तेन इड्यागेन 'एतत्' रेतः 'जनयति' प्राणिरूपेणोत्पादितवान् भवति ॥ ३ ॥

"अथ बर्हिरिति। बृंहतेर्वृद्ध्यर्थाद् 'बर्हिः'-शब्दः; अतो 'बर्हिर्भूमा' खलु; अतः प्रजायमान मेतेन बर्हिर्योगेन बहुकृत मुत्पादयति ॥ ४ ॥

"अथ स्वाहेत्यादि। यः स्वाहाकाराख्यः प्रयाजः, स 'ऋतूनां हेमन्तः' अन्तिमत्वसाम्यात्। 'हेमन्तः' खलु 'इमाः' सर्वा अपि 'प्रजाः' स्वकीयं 'वशं' प्रापयति; इतरर्त्तुषु तथाविधप्रजापीडा-भावात्। अत एव च यास्को हेमन्तपर्याय-हिमशब्द मिच्छन् व्युदपादयत्— "हिमं पुनर्हन्तेः"-इति[1]। वशीकरणप्रकारं स्पष्टं प्रदर्शयति— "तस्मादित्यादिना। वशीकृतत्वाद्धेतोः 'हेमन्' हेम्नि, हेमन्ते हिमोपघातेन 'ओषधयः' वनस्पतयश्च म्लाना गलितपर्णाश्च भवन्ति। तथा 'वयांसि' पक्षिणः 'प्रतितरा मिव' अत्यन्तं प्रति-कूला इव, हिमोपहतपक्षत्वात् उपक्षीणा इवेत्यर्थः; 'अधस्तरा मिव' पत्राणां प्रच्यवनादूर्द्धङ्गन्तु मशक्ता इव अधः आ'पतन्ति'। 'पुरुषः' सर्वोऽपि 'विपतितलोमेव' प्रलुप्तलोमेव कदर्थिताङ्गो 'भवति' ॥

उपसंहरति— "हेमन्तो हीति। 'य एव मेतत्' कृत्स्नस्यापि हिमवशीकृतत्वं 'वेद', 'सः' वेदिता यस्मिन् 'अर्द्धे' अर्द्धभागे[2] देशे 'भवति', सः 'तम्' 'अर्द्धं' देशं 'श्रियेऽन्नाद्याय च स्वीकुरुते खलु' स देशो धनकनकादिश्रिया, अन्नेन च समृद्धस्तदधीनो भवतीत्यर्थः ॥ ५ ॥

---

१— "हेमन्तः हिमवान्। हिमं पुनर्हन्तेर्वा हिनोतेर्वा"—इति निरु० ४. ४. ६। कथ मेतेन 'हिम'-शब्दस्य हेमन्तपर्यायत्वम्?।

२— भूगोलकस्योपरितनार्द्धभागेऽधस्तनार्द्धभागे वेत्यस्माकम्।

इत्थं प्रयाजान् प्रशस्य तदनुमन्त्रणमन्त्रान्[1] विधातु माख्यायिका माह— "देवाश्च वा असुराश्चेति । 'प्राजापत्याः' प्रजापतेः पुत्राः 'देवाः असुराश्च उभये' स्पर्द्धित्वा, परस्परं दण्डधनुरादिभिर्हननसाधनैः विजयं नालभन्त ; सामर्थ्यस्य समानत्वात् । जयोपायपरिज्ञानहर्षद्योतनार्थो 'हन्त'-शब्दः । विजयप्राप्त्यै इत्थम् 'ऊचुः',— 'वाच्येव ब्रह्मन् विजिगीषामहै' वाग्रूपे एव मन्त्रे विवदमानाः जेतु मिच्छामहे इति । 'नः' अस्माकं 'वाचम्' अस्मन्निरुक्तं पुंलिङ्गवचनं 'मिथुनेन' स्त्रीलिङ्गान्तप्रतिवचनाभिधानेन मिथुनं कृत्वा 'न अनुनिक्रामात्' अनुक्रमेण न निष्क्रामेत्, नितरां न आक्रामति ; 'स सर्वं' 'पराजयातै' पराजयं प्राप्नुयात् । 'अथ' 'सर्वं' जेतव्यम् 'इतरे' मिथुनेन वक्तारः, जेतृपश्चादन्ये सर्व्वेऽपि 'जयान्' जयेयुः । एवं सङ्केते कृते सति 'तथेति' अङ्गीकृत्य श्रेष्ठत्वात् 'इन्द्रं व्याहर इत्यब्रुवन्' ॥ ६ ॥

"स इन्द्र इति । 'सः' एव मुक्तः 'इन्द्रोऽब्रवीत्',— 'एकः' पुत्रो 'ममेति' अस्त्विति शेषः । 'अथ' 'इतरे' असुराः 'अब्रुवन्',— 'अस्माक मेका इति' लिङ्गसामर्थ्यात् पुत्रीति गम्यते । अथ श्रुतिस्तेषां वचनप्रतिवचनस्य तात्पर्य माह— 'तद्' तदा 'तत्' तेन एव मभिहितत्वात् 'मिथुन मेव' प्रतिज्ञाविरोधेन 'अविन्दन्' लब्धवन्तः । तत्कथ मिति, तदुच्यते— 'एकश्चैका च' मिलित्वा 'मिथुनं हि' ; लोके स्त्रीपुरुषयोर्मिथुनत्वव्यवहारात् ॥ ७ ॥

"द्वौ ममेत्यादि । त्रयः पर्यायाः एव मेव योज्याः[1] ॥ ८, ९, १० ॥

---

१— का० श्रौ० सू० ३. ३. २ । "कृतस्य प्रयाजस्यानुमन्त्रणं यजमानेन कर्त्तव्यम् ; आत्मगामिवाक्यत्वात्"— इति महादेवः ।

"पञ्चम मेतीति। अथ 'इन्द्रः पञ्चम मेत्यब्रवीत्'; 'तत्' 'इतरे' असुराः 'मिथुनं नाविन्दन्'; लिङ्गद्वयेऽपि रूपाविशेषात्। अलाभे कारणं श्रुतिरेवाह— "नो हीति। 'हि'-शब्दसूचित मर्थ माह— "पञ्च-पञ्चेति। स्त्रियाः पुंसश्चोभयोरप्यभिधानं पञ्च-पञ्चेत्येव, न व्यावर्त्तको रूपभेदोऽस्ति; 'ततः' पञ्चप्रभृतीनां मिथुनलस्यालाभात् 'असुराः' 'सर्वं' विवादास्पदं जेयम् 'पराजयन्त' जेतुं नाशक्नुवन्नित्यर्थः। अतो 'देवाः' 'सर्वस्मात्' अपि जयविषयात् 'असुरान् अजयन्'। जयशब्दार्थ माह— "सर्वस्मात्सपत्नानसुरान्निरभजन्निति ॥ ११ ॥

इदानी मर्थवादसिद्धं प्रयाजानुमन्त्रणमन्त्रान् प्रति प्रयाजं विभज्य योजयति— "तस्मादित्यादिना। यस्मादिन्द्रेणैको ममेत्युक्तम्, असुरैणैका ममेत्युक्तम्, 'तस्मात्' 'प्रथमे प्रयाजे' 'एको मम' —इत्यादि 'ब्रूयात्'। एवं द्वितीयादिष्वपि—'द्वौ मम', 'द्वे तस्य' इत्यादि द्रष्टव्यम्। 'यं' च 'अहं' 'द्वेष्मि' अहं यस्य द्वेषं करोमि, 'तस्य' 'एका' पुत्री स्यादिति ब्रूयादिति प्रथमप्रयाजानुमन्त्रणमन्त्रशेषस्यार्थः। पुत्र्याः रक्षणप्रदानादौ बहुतरदुःखसम्भवात् तच्छ्चोराशा स्यात्। यदि कस्मै चिदपि द्वेषं न कुर्यात्, तदा "योऽस्मानित्यादि ब्रूयात्। वस्तुतो द्वेषाभावेऽपि रागादिभिर्द्वेषाचरणात् तन्निबन्धनं द्वेष मभिप्रेत्य 'यं च वयं द्विष्मः'— इत्यभिधानम् ॥ १२। १३। १४। १५ ॥

---

१— "एको ममैका तस्य, योऽस्मात् द्वेष्टि यञ्च वयं द्विष्म इत्येवं मिथुनैर्यथासङ्ख्यम्"—इति का० श्रौ० सू० ३. ३. ३।

"पञ्च ममेतीति। 'पञ्चमे प्रयाजे पञ्च ममेति' ब्रूयात्। पूर्ववद्। द्वेष्टरि विपरीतफलकामनायां प्राप्तायामाह— "न तस्य किञ्चनेति[1]। 'तस्य' द्वेषकृतः शत्रोः 'किञ्चन' पञ्च पुत्राः पञ्च कन्या वा स्युरिति 'न' ब्रूयादित्यर्थः। असुरैः पञ्चसङ्ख्यायां मिथुनरूपस्य वचनस्यादर्शनादिति भावः। उक्तार्थज्ञानं प्रशंसति— "पञ्चपञ्चेत्येवेति। 'सर्वं' 'संवृङ्क्ते' वर्जयति, स्वयं तत्प्राप्नोतीत्यर्थः ॥ १६ ॥ ५ ॥ [५. ४.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम्[2] ॥

---

१— का० श्रौ० सू० ३. ३. ४।

२— "एतच्चानुमन्त्रणं त्यागानन्तरं हविःप्रक्षेपे च कृते कर्त्तव्यम्। त्यागाश्च मान्त्रवर्णिकीभ्यः समिदादिदेवताभ्यः कार्याः। तत्रेयं पद्धतिः— 'इदं समिद्भ्यो न मम; एको मम, एका तस्य— योऽस्मान् द्वेष्टि यं च वयं द्विष्मः'–इति प्रथमे। द्वितीये— 'इदं तनूनपाते [नराशंसाय वा] न मम; द्वौ मम, द्वे तस्य— योऽस्मान् द्वेष्टि यं च वयं द्विष्मः'–इति। तृतीये— 'इदं मिड्भ्यो न मम; त्रयो मम, तिस्रस्तस्य— योऽस्मान् द्वेष्टि यं च वयं द्विष्मः'–इति। चतुर्थे— इदं बर्हिषे न मम; चत्वारो मम, चतस्रस्तस्य— योऽस्मान् द्वेष्टि यं च वयं द्विष्मः'–इति। पञ्चमे— 'इद मग्नये सोमाय, अग्नयेऽग्नीषोमाभ्याम्, अग्नीषोमाभ्यां देवेभ्य आज्यपेभ्यो न मम; पञ्च मम, न तस्य किञ्चन— योऽस्मान् द्वेष्टि यं च वयं द्विष्मः'–इति। अमावास्यायां तु 'इद मग्नयेऽग्नीषोमाभ्या मिन्द्राय देवेभ्य इति सन्नयतः, 'इद मग्नये विष्णवे इन्द्राग्निभ्यां देवेभ्य इति असन्नयत इति विशेषः ॥ इत उत्तर मिहैव दर्श-

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ५ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्त्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमाध्यायः समाप्तः ॥ ५ ॥

---

पूर्णमासीयकाम्यप्रयाजानुमन्त्रणविधिरप्युक्तः कात्यायनेन— "त्विषिमानपचितिमान्"—इत्यादिः (श्रौ०सू० ३. ३.)। 'पूर्वस्मादनुमन्त्रणादिदं भिद्यते, पृथग्विधानात्'—इत्यादि च तद्वृत्तौ या० दे०। इह शतपथे त्वेकादशे श्रुत मेतत् सर्वं स्फुटम् ।— "त्विषिरेव प्रथमः प्रयाजोऽपचितिर्द्वितीयो यशस्तृतीयो ब्रह्मवर्चसं चतुर्थोऽन्नाद्यं पञ्चमः। स प्रथमं प्रयाज मनुमन्त्रयेत त्विषिमान् भूयास मिति"—इत्यादि (२प्र० ३ब्रा० १०, ११ क०)। एतच्चानुमन्त्रणं 'प्रोषितोऽपि यजमानः करोति'—इति महादेव इति शम् ॥

[ अथ षष्ठाध्याये प्रथमं ब्राह्मणम् ]



ऋतवो ह वै देवेषु यज्ञे भाग मीषिरे। आ नो यज्ञे भजत मा नो यज्ञादन्तर्गता*स्त्वेव नोऽपि यज्ञभाग इति ॥ १ ॥

तद्वै देवा न जज्ञुः। त ऋतवो देवेष्वजानन्त्सुरानुपावर्त्तन्ताप्रियान् देवानां द्विषतो भ्रातृव्यान् ॥ २ ॥

ते हैता मेधतु मेधां चक्रिरे। या मेषा मेता मनुष्यवन्ति। कृषन्तो ह स्मैव पूर्व्वे वपन्तो यन्ति लुनन्तोऽपरे मृणन्तः शश्वद्धैभ्योऽकृष्टपच्या एवौषधयः पेचिरे ॥ ३ ॥

तद्वै देवाना माग आस। कनीय इन्न्वतो† द्विषं द्विषतेऽरातीयति किम्वेतावन्मात्र मुपजानीत यथेद मितोऽन्यथासदिति ॥ ४ ॥

ते होचुः। ऋतूनेवानुमन्त्रयामहा इति केनेति प्रथमानेवैनान्यज्ञे यजामेति ॥ ५ ॥

स हाग्निरुवाच। अथ यन्मां पुरा प्रथमं यजथ क्वाहं भवानीति न त्वा मायतनाच्यावयाम इति ते यदृतूनभिह्वयमाना अथाग्नि मायतनान्नाच्यावयंस्तस्मादग्नि-

---

* 'दन्तर्गाता'–इति क, ख, ग; 'दन्तर्याता'–इति च डा०–वेबर-दृष्टः।

† 'इन्वतो'–इति क, ख, ग; डा०–वेबरेण च दृष्टः।

रच्युतो न ह वा ऽआयतनाच्यवते यस्मिन्नायतने भवति य ऽएव मेत मग्नि मच्युतं व्वेद ॥ ६ ॥

ते देवा ऽअग्नि मब्रुवन् । पुरेह्येनांस्त्व मेवानुमन्त्रयस्वेति स हेत्याग्निरुवाचऽर्त्तवोऽविदं वै वो देवेषु यज्ञे भाग मिति कथं नोऽविद ऽइति प्रथमानेव वो यज्ञे यक्ष्यन्तीति ॥ ७ ॥

त ऽऋतवोऽग्नि मब्रुवन् । आ वयन्त्वा मस्मासु भजामो यो नो देवेषु यज्ञे भाग मविद ऽइति स ऽएषोऽग्निर्ऋतुष्वाभक्तः समिधो ऽअग्ने तनूनपादग्न ऽइडो ऽअग्ने बर्हिरग्ने स्वाहाग्नि मित्याभक्तो ह वै तस्यां पुण्यकृत्यायां भवति यामस्य समानो ब्रुवाणः करोत्यग्निमते ह वा ऽअस्मा ऽअग्निमन्त ऽऋतव ओषधीः पचन्तीदꣳ सर्व्वं य ऽएव मेत मग्नि मृतुष्वाभक्तं वेद ॥ ८ ॥

तदाहुः । यदुत्तमान् प्रयाजानावाहयन्त्यथ कस्मादेनान् प्रथमान् यजन्तीत्त्युत्तमान् ह्येनान् यज्ञे वाकल्पयन् प्रथमान्वो यजामेत्यब्रुवंस्तस्मादुत्तमानावाहयन्ति प्रथमान् यजन्ति ॥ ९ ॥

चतुर्थेन वै प्रयाजेन देवाः । यज्ञ माप्नुवंस्तं पञ्चमेन समस्थापयन्नथ यदत ऊर्ध्वं मसꣳस्थितं यज्ञस्य स्वर्ग मेव तेन लोकꣳ समाश्नुवत ॥ १० ॥

ते स्वर्गं लोकं यन्तः । असुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्तेऽग्निं पुरस्तादकुर्व्वत रक्षोऽहणꣳ रक्षसामपहन्तारमग्निं मध्यतोऽकुर्व्वत रक्षोऽहणꣳ रक्षसामपहन्तारमग्निं पश्चादकुर्व्वत रक्षोऽहणꣳ रक्षसामपहन्तारꣳ ॥ ११ ॥

स यद्येनान् पुरस्तात् । असुररक्षसान्यासिसङ्क्षन्नग्निरेव तान्युपाहन्नक्षोहा रक्षसामपहन्ता यदि मध्यत आसिसङ्क्षन्नग्निरेव तान्युपाहन्नक्षोहा रक्षसामपहन्ता यदि पश्चादासिसङ्क्षन्नग्निरेव तान्युपाहन्नक्षोहा रक्षसामपहन्तात ऽएवꣳ सर्व्वतोऽग्निभिर्गुप्यमानाः स्वर्गं लोकꣳ समाश्नुवत ॥ १२ ॥

तथो ऽएवैष ऽएतत् । चतुर्थेनैव प्रयाजेन यज्ञमाप्नोति तं पञ्चमेन सꣳस्थापयत्यथ यदत ऽऊर्द्ध्वं मूसꣳस्थितं यज्ञस्य स्वर्गमेव तेन लोकꣳ समश्नुते ॥ १३ ॥

स यदाग्नेयमाज्यभागं यजति। अग्निमेवैतत्पुरस्तात् कुरुते रक्षोहणꣳ रक्षसामपहन्तारमथ यदाग्नेयः पुरोडाशो भवत्यग्निमेवैतन्मध्यतः कुरुते रक्षोहणꣳ रक्षसामपहन्तारमथ यदग्निꣳ स्विष्टकृतं यजत्यग्निमेवैतत्पश्चात् कुरुते रक्षोहणꣳ रक्षसामपहन्तारꣳ ॥ १४ ॥

स यद्येनं पुरस्तात्। असुररक्षसान्यासिसङ्क्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसा मपहन्ता यदि मध्यत ऽआसिसङ्क्षन्त्यग्निरेव* तान्यपहन्ति रक्षोहा रक्षसा मपहन्ता यदि पश्चादासिसङ्क्षन्त्यग्निरेव† तान्यपहन्ति रक्षोहा रक्षसा मपहन्ता स ऽएवꣳ सर्व्वतोऽग्निभिर्गुप्यमानः स्वर्गं लोकꣳ समश्नुते ॥ १५ ॥

स यद्येनं पुरस्ताद्। यजुस्यानुव्याहरेत्तं प्रति ब्रूयान्मुख्या मार्त्ति मारिष्यस्यन्धो वा बधिरो वा भविष्यसीत्येता वै मुख्या ऽआर्त्तयस्तथा हैव स्यात् ॥ १६ ॥

यदि मध्यतो यजुस्यानुव्याहरेत्। तं प्रति ब्रूयादप्रजा ऽअपशुर्भविष्यसीति प्रजा वै पशवो मध्यं तथा हैव स्यात् ॥ १७ ॥

यद्यन्ततो यजुस्यानुव्याहरेत्। तं प्रति ब्रूयादप्रतिष्ठितो दरिद्रः क्षिप्रेऽमुं लोकमेष्यसीति तथा हैव स्यात्तस्माद ह नानुव्याहारीव स्यादुत ह्येवंवित्परो भवति ॥ १८ ॥

संव्वत्सरꣳ ह वै प्रयाजैर्जयञ्जयति‡। स ह न्वेवैनं

---

* 'मध्यत असुररक्षसान्यासिसङ्क्षन्त्यग्निरेव'—इति च।

† 'पश्चादसुररक्षसान्यासिसङ्क्षन्त्यग्निरेव'—इति च।

‡ 'जेयं जयति'—इति क, ख, ग; 'जेयम् जयति'—इति च।

जयति योऽस्य द्वाराणि व्वेद किꣳ हि स तैर्गृहैः कुर्या-
द्यानन्तरतो न व्यवविद्यात् यथा* यथास्य ते भवन्ति
तस्य व्वसन्त एव द्वारꣳ हेमन्तो द्वारं तं व्वा ऽएतꣳ
संव्वत्सरꣳ स्वर्गं लोकं प्रपद्यते सर्व्वं वै संव्वत्सरः सर्व्वं
वा ऽअक्षय्य मेतेनो हास्याक्षय्यꣳ सुकृतं भवत्यक्षय्यो
लोकः ॥ १९ ॥

तदाहुः । किन्देवत्यान्याज्यानीति प्राजापत्यानीति
ह ब्रूयादनिरुक्तो वै प्रजापतिरनिरुक्तान्याज्यानि तानि
हैतानि यजमानदेवत्यान्येव यजमानो ह्येव स्वे यज्ञे
प्रजापतिरेतेन ह्युक्ता ऽऋत्विजस्तन्वते तं जनयन्ति ॥२०॥

स ऽआज्यस्योपस्तीर्य । द्विर्हविषोऽवदायाथोपरिष्टा-
दाज्यस्याभिघारयति सैषाज्येन मिश्राहुतिर्हूयते यज-
मानेन हैवैषैतन्मिश्रा हूयते यदि ह वा ऽअपि दूरे
सन् यजते यद्यन्तिके यथा हैवान्ते सत[†] ऽइष्टꣳ
स्यादेवꣳ हैवैवंव्विदुष ऽइष्टम्भवति यद्यु हापि बहिरिव
पापं करोति नो हैव बहिर्द्धा यज्ञाद् भवति य ऽएव
मेतद् वेद ॥ २१ ॥ ६ ॥

॥ इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् [६. १०] ॥

---

* सायणभाष्ये, च-पुस्तके च नास्त्येतत् पदम् ।

† 'सद्'–इति सा०-भा०-सम्मतः पाठः, डा०-वेबरेण दृष्टश्च ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ ६ ॥

अथ वसन्तादिप्रयाजदेवेषु कथ मग्नेः सम्बन्ध इति तदुपपादनायाख्यायिका माह— "ऋतवो ह वा इति । 'ऋतवः' पुरा दर्शपूर्णमासादि-'यज्ञे' 'भागम्' 'ईषिरे' ऐच्छन् । ते देवान् प्रति अस्मानपि 'यज्ञे' भागिनः कुरुत ! 'यज्ञात्' अस्मात् 'अन्तर्'-इतान् 'मा' कुरुत! अतोऽस्माकम् 'अपि' 'यज्ञे भागोऽस्त्विति' अब्रुवन् ॥ १ ॥

"तद्वै देवा नेति । 'तत्' कार्यं 'देवाः' 'न' प्राजानन् । तेषु 'अजानत्सु' कथ मेतैः सह वासेनेति तद्वैरिभूतान् द्वेषकारिणः 'असुरान्' 'उपा'गत्य, (॥ २ ॥

"ते हैता मिति ।) तेषु 'याम्' ऋद्धिं देवेषु अन्वायन्त[1], तादृशीम् 'एधतुम्' ऋद्धि मसुरेषु प्रवर्द्धयाञ्चक्रुः । तेषु प्रवर्द्धितेषु सत्सु असुराः केचन वापनात्पूर्वभागिनः सन्तः वृष्टिबाहुल्यात्[2] 'कृषन्तो यन्ति'; किल केचन कृष्टे क्षेत्रे बीजानि 'वपन्तो यन्ति'; उप्तबीजाश्च केचन सस्यानि सम्यक् फलितानीति परस्पर मुच्चारयन्तः परिणतानि सस्यानि 'लुनन्तो यन्ति'; केचन लूनानि व्रीहिफलानि 'मृणन्तः' प्रहरन्तः, खले बलीवर्द्दाक्रमणादिना स्तम्बाद्धान्यं पृथक्

---

१— 'ऋद्धिं देवाः अत्वा ब्ययन्ते'—इति ठ ।

२— 'केचन वपनात् पूर्वं वृष्टिबाहुल्यात्'—इति ठ ।

कुर्वन्तः ; तथा असुरदेशे खलु कर्षानपेक्षिता नीवारादयो मुहुर्मुहुः सर्वदा परिपक्का आसन् ॥ ३ ॥

तद्धै देवाना मिति । एवं वैरिष्वसुरेषु समृद्धेषु सत्सु 'देवानां' मनसि 'आगः' आसीत् । कथ मिति तदुच्यते— 'अतः' अस्मात् 'इनु'-इति अतिक्रमाद्धेतोः[1] 'द्विषन्' द्वेषकार्यैवासुरसङ्घो 'द्विषते' देवसङ्घाय 'अरातीयति' शात्रव माचरितु मिच्छति[2]। एतत् 'कनीयः इनु' निकृष्टं खलु । 'अतः' प्रवृद्धैः सह कलहो न कार्यः किन्तु 'इदम्' स्थलतिक्रमलक्षणं विच्छिन्नं कार्यम् 'इतः' अस्मात्, इदानीं प्रवृत्तप्रकाराद् 'अन्यथा' प्रकारान्तरेण समाहितात्मना 'असत्' भवेत् । 'एतावन्मात्रम्' अवबुद्ध्यध्व मिति परस्पर मब्रुवन् ॥ ४ ॥

"ते होचुरिति । उक्त्वा च, 'क्रतूनेव अनुमन्त्रयामहै'- 'इति' निश्चित्य, तेषा मुक्तो वः 'केन' इतरदेवेभ्यः 'प्रथमानेव' 'यज्ञे' यजन मङ्गीचक्रुः ॥ ५ ॥

अथ प्राथम्ये तेभ्योऽवक्लृप्ते सत्याह— "स हाग्निरिति । 'अग्निः' पूर्वं 'माम्' एव 'प्रथमम्' इष्टवन्तः, इदानीं ते प्रथमं यष्टव्यास्तेतुं, 'अहं' कुत्र स्थाने यज्ञे 'भवानीति' अब्रवीत् । अथ तेनोक्तास्ते त मग्निं स्वस्थानात् 'न च्यावयाम इति' प्रतिश्रुत्य, स्थलाक्रान- समये 'अग्निं' स्वस्थानात् प्रच्युतं न चक्रुः । 'तस्मात्' 'अग्निः' स्वस्थानाद् 'अच्युतः' अभूत् । 'एवं' 'यः' कोऽपि अग्नेरच्युतत्वप्रकारं जानाति, सोऽपि स्वस्थानान्न च्यवत इति उक्तार्थज्ञानफलम् ॥ ६ ॥

---

१— 'ऋत्वतिक्रमाद्धेतोः'-इति ढ। २— पा० सू० ३. १. १० ।

"ते देवा इति। अथ 'ते देवाः' अग्नेः स्थानस्य पालनदाक्षिण्यात् ऋत्वनुमन्त्रणे 'अग्निम्' एव प्रेरयामासुः। 'सः' तथेत्यङ्गीकृत्य ऋतूनागत्य 'उवाच' आह— "ऋतव इति। 'वः' युष्माकं 'यज्ञे' 'देवेषु' मध्ये 'भागं' बुद्धवानस्मि 'इति'। केन प्रकारेणेति पृष्टः, 'प्रथमानेव' सतो युष्मान् 'यक्ष्यन्ति'-'इति' अब्रवीत् ॥ ७ ॥

"त ऋतव इति। अथ सन्तुष्टाः 'ऋतवः' हे अग्ने! त्वं 'यज्ञे' अस्माकं प्रथमम् 'अविदः'; अतः 'त्वाम्' 'अस्मासु' मध्ये 'आ भजामः'-इति 'अब्रुवन्'। यत एव मतः 'अग्निः' 'ऋतुषु' भागं लब्धवान्। "समिधो अग्ने"-"तनूनपाद्"-"अग्न इडः"—इत्याद्याभजनप्रकारप्रदर्शनम्[१]। उक्तार्थज्ञानं प्रशंसति— "आभक्तो ह वा इति। 'अस्य' भ्रातुरहं 'समानः' इति स्वात्मानं 'ब्रुवाणः' कश्चित्पुरुषो 'यां पुण्यकृत्यां' यत्पुण्यं कर्म, दर्शपूर्णमासादिकं 'करोति', तत्रासावपि भागवान् भवति; तथा 'एवम्' उक्तप्रकारेण 'अग्नि मृतुष्वाभक्तं' 'यो वेद', 'अस्मै' अग्निमते, उक्तार्थज्ञानसामर्थ्येन यागस्यावश्यं लाभादग्निमान् भवत्येव; अतोऽस्मै खलु उक्तप्रकारेणाग्निना सहिता 'ऋतवः', 'ओषधीः' व्रीहियवादिकाः स्व-स्व-कालोचिताः पाकं कुर्वन्ति। कथं पक्तव्या ओषधयः? कियन्तः? इति, तत्राह— "इदं सर्व्व मिति। यद्यल्लोके परिदृश्यमानं, तदिदं सर्व मोषधिजात मित्यर्थः ॥ ८ ॥

---

१— समिध इत्यादीनि प्रयाज-मन्त्र-प्रतीकानि। ते च मन्त्राः तै० ब्रा० ३. ५. ५ आम्नाताः, तै० सं० २. ६. १ विहिताश्च।

प्रयाजदेवतानां प्राथम्यं ब्रह्मवादिनां चोद्यमुखेन प्रशंसति— "तदाहुरिति। आवाहनक्रमेणैव सर्वत्र यागो दृष्टः, अत्र कथं वैलक्षण्य मिति तेषा माशयः। तैर्दृष्टं तत्कारणं दर्शयति— "उत्तमान् हीति। 'हि' यस्मात् प्रथमभागकल्पनासमये 'एनान्' 'उत्तमान्' चरमभाविन एव देवताः कल्पितवन्तः, पश्चात् अपगतानां तेषां पुनरागमनाय यतो 'वः' युष्मान् 'प्रथमान् यजाम इत्यब्रुवन्'; 'तस्मात्' उक्तविधं वैलक्षण्यं सञ्जात मिति। अत्रैषा मावाहनान्तिमत्वं "देवाँ आज्यपाँ आ वह"-इत्यभिधानाद्[1] द्रष्टव्यम्; आज्यपाः खलु प्रयाजानुयाजदेवाः[2] ॥ ९ ॥

आदिमध्यावसानेष्वनुष्ठेयाना माज्यभागप्रधानस्विष्टकृद्यागाना मग्निदेवताकत्व मभिधातु माह— "चतुर्थेनेति। चतुर्थप्रयाजेनैव पुरा 'देवाः' दर्शपूर्णमासाख्यं 'यज्ञम्' आप्त्वा, 'तं पञ्चमेन समस्थापयन्'; तत्र यष्टव्यान् देवान् क्रमेणोद्दिश्य स्वाहाकृतत्वात्[3]। 'यदत ऊर्द्ध्वं' 'यज्ञस्य' अवशिष्ट माज्यभागाद्यस्ति, 'तेन स्वर्गं लोकं समाश्नुवत' ॥ १० ॥

"ते स्वर्ग मिति। असुरेभ्यो राक्षसेभ्यश्च तेषाम् 'आसङ्गात्'

---

१— २८८ पृ० १५ पं० द्रष्टव्यम्।

२— २९२ पृ० तृतीया टीप्पणी द्रष्टव्या।

३— तद्यथा— "स्वाहाग्निम्। स्वाहा सोमम्। स्वाहाग्निम्। स्वाहा प्रजापतिम्। स्वाहाग्नीषोमौ। स्वाहेन्द्राग्नी। स्वाहेन्द्रम्। स्वाहा महेन्द्रम्। स्वाहा देवाँ आज्यपान्। स्वाहाग्निँ होत्रा जुषाणाः। अग्न आज्यस्य वियन्तु (व्यन्तु)"-इति पञ्चमप्रयाजमन्त्रः। तै० ब्रा० ३. ५. ५. ५।

निरोधात् भीताः आसन्; तत्परिहाराय रक्षोहन्तारम् 'अग्निं' 'पुरस्तात्' पूर्वभागे रक्षसां बधाय स्थापितवन्तः। तथा मध्ये, पश्चाच्च, अग्नि मेव रक्षोहन्तारं चक्रुः ॥ ११ ॥

"स यज्ञेनानिति। अतः कारणात् 'सः' रक्षोहा: 'अग्निः', स्वर्गं प्रति गच्छतः 'एनान्' देवानसुरराक्षसांश्च 'पुरस्तात्' पूर्वदेशे 'आभिसङ्गन्' आसङ्गं प्रतिबन्धम् मैच्छन् 'तानि' असुररक्षांसि घापहतवान्। एवं मध्ये, पश्चाद्देशे च ॥ १२ ॥

"तथो एवैष इति। अत्र सर्वत्राग्निभिरादिमध्यान्तस्थितैः रक्षिताः स्वर्गलोकं प्राप्ताः यथा देवास्तथैवेदानीन्तनोऽपि यजमानः चतुर्थेन प्रयाजेन यज्ञं स्वाधीनं कृत्वा पञ्चमेन समाप्य तदूर्ध्व-भाविना असंस्थितेनावशिष्टेन यज्ञेन पुरस्तान्मध्ये पश्चाच्चाग्निनैव यज्ञविघातकान् घातयित्वा निर्बाधं स्वर्ग मश्नुते ॥ १३ ॥

अग्नेः पुरस्तान्मध्ये पश्चाच्च स्थापनप्रकारं दर्शयति— "स यदा-ग्नेय मित्यादिना। सौम्यस्याप्याज्यभागस्य सम्भवात् 'आग्नेयम्'-इति विशेषितम्। प्रथमम् 'आज्यभाग माग्नेयं' कृतवान् यजमानः, स्वर्गप्राप्तिसमये 'अग्नि मेव' रक्षोहननाय 'पुरस्तात्' कृतवान् भवति। अनेन प्रथम माग्नेयाज्यभागं कुर्यादिति ह लभ्यते। एव माग्नेयेनाष्टाकपालयोगेन अग्निं मध्यतः कुरुते। आग्नेयेन स्विष्टकृता च पश्चात् ॥ १४ ॥

त्रिष्वपि यागेष्वाग्नेयत्वकरणस्य प्रयोजन माह— "स यद्येनं पुरस्तादित्यादिना। एतत्पूर्ववाक्यवद्व्याख्येयम्[1] ॥ १५ ॥

---

१— इहैव द्वादशकण्डीयाख्या द्रष्टव्या (४ पं०)।

"स एवं सर्वतोऽग्निभिर्गुप्यमानः"— इति[1] यदग्निरक्षण मुक्तम्, तत्प्रशंसनाय कश्चिद् दृष्टं प्रयोजन माह— "स यद्येन मिति। 'सः' 'अनुव्याहारी' निन्दकः, 'एनम्' अग्निना रचितं यजमानं 'यज्ञस्य' 'पुरस्तात्' पूर्वभागे 'अनुव्याहरेत्' वैकल्यविषयं वाक्यं ब्रूयात्, 'तं' निन्दकं 'प्रति' स यजमानोऽपि 'ब्रूयात्'— "मुख्या मार्त्तिं मारिष्यसि,— अन्धो वा बधिरो वा भविष्यसीति"। एषैव मुख्या आर्त्तिरित्याह— 'एताः' अन्धबधिरादयः। ज्वरशिरोव्यथादि- तात्कालिकीं मार्त्तिं मपेक्ष्य एतासां मुख्यत्वम्[2] ॥ १६ ॥

"यदि मध्यत इत्यादि। स्पष्टम् ॥ १७ ॥

"यद्यन्तत इति। 'क्षिप्रे' अविलम्बितस्वकाले भूमौ प्रतिष्ठा- रहितो 'दरिद्रः' सन् 'अमुं लोकं' स्वर्गम् 'एष्यसि'-'इति'। अत्र स्वर्गस्य नाशात्मकत्वात् 'अमुंल्लोकम्'-इत्येतदस्माल्लोकात्प्रच्युतिमात्रे पर्यवस्यति। किं मेव मभिधानमात्रेण तथाविधा असुखप्राप्तिः सिद्धा स्यादित्याशङ्क्योक्तम्— "तथा हैव स्यादिति। उक्तप्रकारः स्यादेवेत्यर्थः। यस्मादेव मवश्यं फलम्, 'तस्मात्' 'अनुव्याहारीव न स्यात्' यज्ञस्य निन्दको न भवेदिति विधिः।

उक्तार्थज्ञं प्रशंसति— न केवलं यष्टैव ; अपि तु 'एवंविद्' अपि स्वदूषकात् स्वयं 'परः' उत्कृष्टो 'भवति'। अथवा एवं वेदनायां तात्पर्यवान् भवेदिति आख्येयम्। तस्मादाज्यभागादीना माग्नेयत्वकरणं प्रशस्त मिति तात्पर्यार्थः ॥ १८ ॥

प्रयाज एव किञ्चिद्वेदितव्य मित्याह— "संवत्सरं हेति। 'प्रयाजैः'

१— ३९४ पृ० ५ पं०। २— अस्मन्मते तु 'मुख्या' मुखमयङ्गलीया।

साधनैः साध्यं 'जयन्' संवत्सरं खलु 'जयति'। जितप्रकारः पूर्वाध्याये "देवाश्च वा असुराश्चेत्यत्र "ऋतूनसंवत्सरं प्राजयन्नित्यादिनोक्तः[1]। 'यः' 'अस्य' संवत्सरस्य 'द्वाराणि' जानाति, 'सः' खल्वेव 'एनं' संवत्सरं 'जयति', नानभिज्ञः। 'यान्' प्रयाजान् 'अन्तरतः' मध्यतो 'हि' 'स' व्यवजानाति। 'ते' च 'यथा' येन प्रकारेण 'अस्य' उपकारकाः 'भवन्ति', 'सः' अनुष्ठाता 'तैः' गृह्यमाणैरनुष्ठेयैः प्रयाजैः 'किं कुर्यात्' किं साधयेत्। 'संवत्सरः' यदेकैकं तत् क्षयिष्णु, यत् 'सर्वं' तदपरिच्छेदात् तावत् 'अक्षयि'। एतत्परिज्ञानेन च 'सुकृतं', तत्फलभूतं पुण्यलोकश्च, उभावपि 'अक्षयौ' भवतः ॥ १९ ॥

अथ आज्यद्रव्यं प्राजापत्यत्वेन प्रशंसितु माह— "तदाहुरिति। प्रजापतेः सकलदेवतासमष्ट्यात्मकत्वेन अय ससाविति निर्वक्तु मशक्यत्वादनिरुक्तत्वम् ; अतो 'आज्यानि प्राजापत्यानीति ब्रूयात्'। आकृतिभेदेन बहुवचनम् ॥

प्रजापतिशब्दस्यात्र विवक्षित मर्थ माह— "तानि हेति। 'तानि एतानि' प्रयाजादियागसाधनद्रव्याण्याज्यानि 'यजमानदेवत्यानि'। 'एव'-कारेण प्रसिद्धः प्रजापतिरपोह्यते। एतदुपपादयति— "यजमानो हीति। इतरेषा मपरोऽस्त्वेवेत्याशङ्क्याह— "एतेनेति। ऋत्विजां दक्षिणादिदानेन पालनात् प्रजापतित्वम् ; 'ऋत्विजः' तु 'एतेन' नियुक्ता एव यज्ञं 'तन्वते' स्व-स्व-भागं विस्तारयन्ति। तदेवाह— "तं जनयन्तीति। 'तं' यज्ञम् ॥ २० ॥

---

१— ३६१ पृ० ३ पं०, ३६२ पृ० २ पं० ; ३६८ पृ० १४ पं०।

इद माज्यं यजमानदेवताकत्वेन प्रशस्तम्, अतस्तेनोपस्तरणाभिघारणादि कर्त्तव्य मित्याह— "स आज्यस्येति। 'सः' अध्वर्युः 'आज्यस्य अपस्तीर्य' पुरोडाशस्थापनदेश माज्येनास्तृतं कृत्वा, 'हविषः' हविः, पुरोडाशादि 'द्विरवदाय', अवत्तस्य 'आज्यस्य' 'उपरि' आज्यम् 'अभिघारयति'। 'सैषा' उपस्तृताभिघारिता 'आज्येन मिश्रा' सती अध्वर्युणा 'हूयते'। आज्यस्य यजमानदेवताकत्वस्य प्रतिपादितत्वात् 'यजमानेन एव मिश्रा हूयते'। यत एव मत आज्येनोपस्तरणाभिघारणं कृत्वा जुहुयादित्यर्थः ॥

उक्तार्थज्ञं प्रशंसति— "यदि हेति। 'यथा हैव' यथैव खलु 'अन्ते सदः' सदसो देवयजनस्य सन्निधौ 'दृष्टं' साङ्गं 'स्यात्', 'एवम्' आज्यस्य यजमानदेवत्यत्वप्रकारं जानतो यजमानस्य देशान्तरस्थस्यापि 'दृष्टं भवति', व्यवधानदोषो नास्तीत्यर्थः ॥

न केवलं विप्रकर्षदोषाभावः, किन्तु वैकल्यदोषोऽपि नास्तीत्याह— "यद्यु हेति। 'य एतदेवं वेद', सः 'पापम्' अङ्गभ्रंशादिलक्षणं 'यदि' 'बहु अपि' कुर्यात्, स 'यज्ञात्' साङ्गात् 'नैव' 'बहिर्द्धा' बाह्यो 'भवति'। अथवा उक्तार्थज्ञानेन बहुपापोऽपि¹, यज्ञाधिकारी भवेदित्यर्थः ॥ २१ ॥ ६ ॥ [६. १.] ॥

---

१— "पापः, पातापेयानां, पापत्यमानोऽवाङेव पततीति वा, पापत्यतेर्वा स्यात्"—इति निरु० ५. १. २। पुनः "न पापासो मनामहे (ऋ० सं० ६. ४. ३७. ६.)"—इति-मन्त्रस्य व्याख्यायाम् "न पापा मन्यामहे × × × अस्त्यस्मासु ब्रह्मचर्य मध्ययनं तपो दानकर्मेत्यृषिरवोचत्"—इति च तत्रैव ६. ५. २।.

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे षष्ठाध्याये प्रथमं ब्राह्मणम्[1] ॥

## ॥ इति प्रथमकाण्डे चतुर्थप्रपाठकः समाप्तः[2] ॥

---

१— "प्रयाजानुमन्त्रणम् (३. ३. २.)"– इत्यादि-कातीय-वचनानीह पर्यालोच्यानि ।

२— इत उत्तरं क-पुस्तके "काण्डी ११७"–इति, ख-पुस्तकेऽपि तथैव, ग-पुस्तके "कण्डिका १२१"–इति, घ-ङ-पुस्तके त्वसम्पूर्णा, च-पुस्तकेऽस्त्येव "कण्डिकासङ्ख्या १२१"–इति । तत्र ब्रा०१ क०१३, ब्रा०२ क०२६, ब्रा०३ क०२०, ब्रा०४ क०२५, ब्रा०५ क०१६, ब्रा०६ क०२१, सङ्कलनया १२१ इति सिद्धम् ॥

अथ

पञ्चमप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

षष्ठाध्याये द्वितीयं ब्राह्मणम् ।



॥ हरिः ॐ ॥

यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषा मियं जितिस्ते होचुः कथं न इदं मनुष्यैरनाभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम तद्वा ऋषीणा मनुश्रुत मास ॥ १ ॥

यज्ञेन ह वै देवाः । इमां जितिं जिग्युर्यैषा मियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्निति त मन्वेष्टुं दध्रिरे ॥ २ ॥

तेऽर्चन्तः श्राम्यन्तश्चेरुः । श्रमेण ह स्म वै तद्देवा

जयन्ति यदेषां जय्य* मासऽर्षयश्च† तेभ्यो देवा वैव प्ररोचयाञ्चक्रुः स्वयं वैव दधिरे‡ प्रेत तद्देष्यामो यतो देवाः स्वर्गं लोकꣳ समाश्नुवतेति ते किं प्ररोचते किं प्ररोचत ऽइति चेरुरेत्पुरोडाश मेव कूर्म्मं भूत्वा सर्प्पन्तं ते ह सर्व्व ऽएव मेनिरेऽयं व्वै यज्ञ ऽइति ॥ ३ ॥

ते होचुः । अश्विभ्यां§ तिष्ठ सरस्वत्यै तिष्ठेन्द्राय तिष्ठेति स ससर्प्पैवाग्नये‖ तिष्ठेति ततस्तस्थावग्नये वा ऽअस्थादिति त मग्नावेव परिगृह्य सर्व्वहुत मजुहवु-राहुतिर्हि देवानां तत ऽएभ्यो यज्ञः प्रारोचत त मसृ-जन्त¶ त मतन्वत सोऽयं परोऽवरं यज्ञो ऽनूच्यते पितैव पुत्राय ब्रह्मचारिणे ॥ ४ ॥

स वा ऽएभ्यस्तत्पुरोऽदाशयत् । य एभ्यो यज्ञं प्रारो-चयत्तस्मात्पुरोदाशः पुरोदाशो ह वै नामैतद्यत्पुरो-डाश ऽइति स ऽएष ऽउभयत्राच्युत ऽआग्नेयोऽष्टाकपालः पुरोडाशो भवति ॥ ५ ॥

स न पौर्णमासꣳ हविः । नामावास्य मग्नीषोमीय

---

* 'युज्य'–इति च डा०-वेवरेण दृष्टः पाठोऽशुद्ध एव ।

† 'मास ऋषयस्च'–इति ग । ‡ 'दधिरे'–इति क ।

§ 'ते होचुरश्विभ्यां'–इति ग । एव मिहोत्तरत्रापि सर्वत्र ।

‖ 'ससर्पैवाग्नये'–इति च । ¶ 'मसृजन्त'–इति च ।

ऽएव पौर्णमासꣳ हविः सान्नाय्य मामावास्यं यन्नु ऽएवैष ऽउभयत्रावक्लृप्तो नेद्यन्नादुयानीति न्वेव पुरस्तात्पौर्णमासस्य क्रियत ऽएवम्मा*मावास्यस्यैतन्नु तद्यस्माद्दुच क्रियते ॥ ६ ॥

यद्यु ऽएन मुपधावेत्। इष्ट्या मा याजयेत्येतयैव याजयेद्यत्कामा वा ऽएत मृषयोऽजुहवुः स ऽएभ्यः कामः समर्द्धत यत्कामो ह वा ऽएतेन यज्ञेन यजते सोऽस्मै कामः समृद्ध्यते यस्यै वै कस्यै च देवतायै हविर्गृह्यतेऽग्नौ वै तस्यै जुह्वत्यग्ना ऽउ चेद्वोष्यन्त्स्यात्कि मन्यस्यै देवताया ऽआदिशेत्तस्मादग्नय ऽएव† ॥ ७ ॥

अग्निर्व्वै सर्व्वा देवताः। अग्नौ हि सर्व्वाभ्यो देवताभ्यो जुह्वति तद्यथा सर्व्वा देवता ऽउपधावेदेवं तत्तस्मादग्नय ऽएव ॥ ८‡ ॥

अग्निर्व्वै देवाना मज्ञातमाम्। यं व्वा ऽअज्ञातमां मन्येत त मुपधावेत्तस्मादग्नय ऽएव ॥ ९ ॥

अग्निर्व्वै देवानां मृदुहृदयतमः। यं वै मृदुहृदयतमं मन्येत त मुपधावेत्तस्मादग्नय ऽएव ॥ १० ॥

---

* 'एवु' म्वा'–इति क, ग।

† 'ऽएवु'–इति च; एव मिहोत्तरत्रापि सर्वत्र।

‡ 'शतम् ५००'–इतीह च-पुस्तके।

अग्निर्वै देवानां नेदिष्ठम्। यं वै नेदिष्ठ मुपसर्त्तव्यानां मन्येत त मुपधावेत्तस्मादग्नय ऽएव ॥ ११ ॥

स यदीष्टिं कुर्व्वीत। सप्तदश सामिधेनीरनुब्रूयादुपाꣳशु देवतां यजति तद्धीष्टिरूपं मूर्द्धन्वत्यौ याज्यानुवाक्ये स्यातां वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये॥१२॥१.

॥ इति पञ्चमप्रपाठके प्रथमं ब्राह्मणम् [६. २.] ॥

आग्नेयं पुरोडाशं[1] विधातु माख्यायिका माह— "यज्ञेन वा इत्यादिना। पुरा किल 'देवाः' 'इमां जितिम्' इदानीं परिदृश्यमानप्रकारं स्वर्गजयं 'यज्ञेन' एव साधनेन ('जिग्युः') जितवन्तः। 'ते' देवाः स्वैर्जितं स्वर्गस्थानं तुच्छैः मनुष्यैः 'कथम्' आरोहणार्हं न भवेदिति परस्पर मुक्त्वा, 'यज्ञस्य' 'रसं' 'धीत्वा' पीत्वा, 'यथा' सरघाः 'मधु' निःशेषेणास्वाद्य गतसार मेव परिशेषयन्ति, एवं 'यज्ञं' ('विदुह्य') विदोहं कृत्वा, तं 'यूपेन' आच्छाद्य तिरोहिता 'अभवन्'। अतो योपन-साधनत्वात् यूपस्य 'यूप'-नाम सम्पन्नम्[2]। 'तत्' देवैः कृतं यज्ञविमोहनम् 'ऋषीणाम् अनुश्रुत मास' ऋषयोऽन्वश्रृण्वन्नित्यर्थः ॥ १ ॥

---

१— 'यथोक्तदेवतां प्रति हविष्ट्वेन प्रदेयद्रव्यरूपः पक्वः पिष्टपिण्डः पुरोडाश इत्युच्यते'—इति सा० भा० (ऐ० ब्रा० १. १. १.)।

२— "यज्ञेन वै देवा ऊर्द्ध्वाः स्वर्गं लोक मायंस्ते ऽबिभयुरिमन्नो दृष्ट्वा मनुष्याश्च ऋषयश्चानुप्रज्ञास्यन्तीति तं वै यूपेनैवायोपयंस्तं यद् यूपेनैवायोपयंस्तद्यूपस्य यूपत्वम्"—इति ऐ० ब्रा० २. १. १।

अनुश्रुतप्रकारं पुनरनुवदति[1]— "यज्ञेन ह वै देवा इति। 'तं' यूपेण योपितं यज्ञम्, ऋषयः 'अन्वेष्टुम्' अन्वेषणे मतिं कृत्वा, (॥ २ ॥

"तेऽर्चन्त इति।) तदन्वेषणेन 'अर्चन्तः' अन्वेष्टव्यं पूजयन्तः, अन्वेषणप्रयासेनात्मानं खेदयन्तः, इतस्ततः सं-'चेरुः'। कथ मित्या-शङ्क्याह— "श्रमेणेति। देवा ऋषयश्च पूर्वं जेतुं शक्य मर्थं[2] श्रमेणैव 'जयन्ति'; अतः श्राम्यन्तश्चेरुरित्येतद्युक्त मित्यर्थः। अथ तदन्वेषणे एतेषां देवा अपि रुच्युत्पादन[3] मकुर्वन्,। तेऽपि स्वय मपि तदर्थं मतिं कृत्वा परस्परं यूपं प्रगच्छन्तः। यस्मात् 'स्वर्गं लोकं' 'देवाः' प्राप्ताः, 'तत्' साधनम् 'एष्यामः' 'इति' उक्त्वा (इद मन्वेषणं कार्यं 'किं प्ररोचते'[4]) किं तव मतम्—किं तव मतम् 'इति' ब्रुवाणाः 'चेरुः'। परिभ्रम्य[5] च 'पुरोडाश मेव'। कूर्मरूपं[6] धृत्वा, 'सर्प्पन्तं' पुरोडाशम् "आ इत्"। 'आ'-इत्युपसर्गश्रुतेर्योग्य-क्रियाध्याहारः; त माजग्मुरेवेत्यर्थः। 'ते सर्वे' अपि 'अयं' कूर्म एव अस्माभिरन्वेष्टव्यो 'यज्ञ इति' निश्चिताः ॥ ३ ॥

---

१— "यज्ञेन वै देवा इमां जितिं०—०तस्माद् यूपो नाम। तद्वा ऋषीणा मनुश्रुत मास"—इत्यादि चात्रैवोपरिष्टात् (३. २. २. ११, १२.)।

२— "क्षय्य-जय्यौ शक्यार्थे"—इति पा० सू० ६. १. ८१।

३— 'शुश्रुत्पादन'—इति ढ।

४— बन्धनीचिह्नान्तःकृतोऽयं पाठो ढ-पुस्तके नास्ति।

५— 'परिभ्राम्य'—इति ज, झ।

६— "अतुङ्ग मनपूपाकृतिं कूर्मस्येव प्रतिकृति मश्वसफमात्रं करोति, यावन्तं वा मन्यते"—इति आप० श्रौ० सू० १. २५. ४, ५।

"ते होचुरिति। 'ते' हे यज्ञावयव-पुरोडाश! त्वम् 'अश्विभ्याम्' अर्थाय ('तिष्ठ') स्थितिं कुरु,— मा पलायिष्ट इति 'ऊचुः'। तथापि 'सरस्वत्यै तिष्ठ' इति, 'इन्द्राय तिष्ठ'-'इति' चाब्रुवन्। तस्मिन् सर्पति सति 'अग्नये तिष्ठेति' ऊचुः। 'ततः' स स्थितवान्। अथ ते अयं पुरोडाशोऽग्नये स्थित इति 'तम्' अग्न्यर्थ मेव परिगृह्य, यथा देवतान्तरसम्बन्धराहित्येन सः 'अग्नये' एव 'अस्थात्', तथा 'सर्वं हुत मजुहवुः' ॥

किं मेकस्मै सर्वस्यापि प्रदान मिति, तत्राह— "आहुतिर्हि देवाना मिति। प्रियेति शेषः। यतः प्रियस्य वस्तुनोऽसाकल्येन प्रदान मनुचितम्, अतः सर्वहोमो युक्त इत्यर्थः। 'ततः' अग्नेः प्रदानात्कारणात् 'एभ्यः' ऋषिभ्यो मनुष्येभ्यः 'प्रारोचत' रुचि मुदपादयन्। 'तम्' 'असृजन्त' उदपादयन्। 'तम्' एव ('अतन्वत') अङ्गकलापैर्विस्तारितवन्तः। 'सोऽयं' यज्ञः 'परोऽवरम् अनूच्यते'। यथा परभावी[1] सन् कस्यचिदुपादिष्टः, सन्मुखादन्यस्योपदेशनात् अय मेव 'अवरः' पश्चाद्भावी भवति, तथानुक्रमेणोच्यत इत्यर्थः। तदेवाह— "पितेव पुत्रायेति। 'ब्रह्मचारिणे' उपनीतस्यैव वेदविद्याधिकारात् ब्रह्मचारिण इत्युक्तम् ॥ ४ ॥

अथ पुरोडाशं नामनिर्वचनद्वारेण स्तौति— "स वा इति। यतः 'सः' कूर्मरूपेणाच्छन्नो मनुष्यैर्दृष्टः, 'तत्' ततः[2] यागसमये 'पुरः' पूर्वस्मिन् काले यज्ञमुखे 'अदाशयत्' फल मदापयत्। तथा 'यः' पुरोडाशः 'एभ्यः' मनुष्येभ्योऽर्थं 'यज्ञं प्रारोचयत्'। यस्मात्

---

१— 'पराभावी'-इति ङ। २— 'तत्र'-इति ञ।

पुरोऽदाशयत्, 'तस्मात्' सः 'पुरोदाशः'। वस्तुतः 'एतन्नाम', 'यत्' सर्वैरिदानीन्तनैः 'पुरोडाश इति' व्यवह्रियते[1] ॥

इत्थ मर्थवादेन प्रशस्येदानीं तं विधत्ते— "स एषेति। 'सः' देवैराच्छादितः, 'एषः' मनुष्यैर्लब्धः, 'पुरोडाशः' 'आग्नेयः' अग्निदेवताकः[2]। 'सः' 'उभयत्र' दर्शे पौर्णमास्यां च ( 'अच्युतः' ) नित्यं कर्त्तव्यः 'भवति' ॥ ५ ॥

उभयसाधारण्य मेव स्थापयति— "स नेति। पौर्णमास्यां भवं 'पौर्णमासम्', एवम् 'आमावास्यम्'। उभयात्मकस्यान्यतरत्वाभावात्ते हि प्रतिनियतैकहविषी इति ते आह— "अग्नीषोमीय एवेत्यादिना। उभयत्रापि नियमेनानुतिष्ठता मभिप्राय माह— "यज्ञ एवैष इति। यज्ञसाधनत्वात् 'एषः' पुरोडाशः 'यज्ञ एव'। स उभयकालोऽपि नियमेन देवैः 'अयानि'-'इति'; उभयत्रावक्लृप्त मतिक्रम्य नैव गच्छानि। यदा अन्यदनुतिष्ठामि, तदा 'नेत्' परिभयं भवति। "नेत्येष इदित्येतेन सम्प्रयुज्यते परिभये"—इति[3] हि निर्वचनेन खल्वभिप्रायेण 'पौर्णमासस्य', 'आमावास्यस्य' च यागस्य 'पुरस्तात्' पूर्वकाले 'क्रियते[4] यस्माद्' दर्शे पौर्णमास्यां च यस्मात्कारणादनुष्ठीयते, 'तत्' तत्कारणम्, 'एतन्नु' उभयं निमित्तं खलु ॥ ६ ॥

---

१— पा० सू० ३. २. ३१, ८. २. ६७। का० वा० २०३६, २०३८। य० वा० प्रा० २. ४३।

२— "सास्य देवता। अमेर्ढक्"—इति पा० सू० ४. २. २४, ३३।

३— निरु० १. ३. ६। 'सर्वतो भयं परिभयम्'—इति तद्वृत्तिः।

४—" 'यज्ञ एव'। स उभयकालोऽपि तयोः पूर्वकाले क्रियते"—इति ढ।

अस्य एवाग्नेयस्य[1] ऋद्धिफलार्थं पृथक्-प्रयोक्तव्यता माह— "यद्यु इति। 'एनम्' अध्वर्युम्। 'एतयैव' आग्नेयेष्ट्यैव। "यत्कामा वा इति। पुरा 'एतम्' आग्नेयाष्टाकपालपुरोडाशम् 'ऋषयः' यं काम मपेक्ष्य 'अजुहवुः' अन्वतिष्ठन्, 'एभ्यः' 'स कामः' समृद्धोऽभूत्; अत इदानी मपि यः 'एतेन यजते', 'अस्मै' अपि 'स कामः' भवत्येव। यत्सम्बन्धादष्टाकपालेष्टेरेवंविधसामर्थ्याऽभूत्, त मग्निं बहुधा प्रशंसति— "यस्मै वै कस्मै चेत्यादिना। यां काञ्चिद्देवता मुद्दिश्य आज्यसोमादि 'हविः' 'गृह्यते', तत् 'अग्नौ' एव 'जुह्वति', नान्यत्र; अतः सर्वं वा सर्वस्य ('अग्नाऽउ') अग्नावेव 'होष्यन्' यदि भवेत्, तर्हि किमर्थम् 'अन्यस्यै' इन्द्रादि-'देवतायै' अमुष्या इद मिति 'आदिशेत्'; 'तस्मात्' अग्नौ होमस्यावश्यकत्वात् 'अग्नये' एव होमः, प्रशस्त इति शेषः ॥ ७ ॥

इतोऽप्यग्नय एव प्रदानं युक्त मित्याह— "अग्निर्वा इति। उक्तप्रकारेण अग्नावेव सर्वदेवतार्थहवनात्तदुपधावितत्वात् 'सर्वाः' 'अग्निः' एव। 'तत्' तस्मात् सर्वदेवतोपधावनात् यद्भवति, तदग्नेः उपधावनेनैव स्यात्। 'तस्मादग्नय एव' हविरादेशः प्रशस्तः ॥ ८ ॥

"अग्निर्वै देवाना मिति। किं यथा लोके यम् 'अद्धातमाम्'[2] अतिशयेन प्रत्यक्षफलदं मन्येत, 'तम्' एव 'उपधावेत्', एव मग्नेः प्रत्यक्षदेवत्वात् 'अग्नय एव' ॥ ९ ॥

---

१— "अस्या आग्नेयेष्टेः"–इति ठ।

२— 'अद्धा'–इत्यव्ययम्, सत्यनामसु पठितम्। निघ० ३. १०. ४। इहोत्तरत्रापि बहुत्र २. ३. १. २५; ३. १. ४. ११।

तथा इतरदेवताभ्योऽग्नेरेव शीघ्रं प्रसादाय मृदुहृदयत्वात्, प्रत्यक्षदेवत्वेन समीप एव सेव्यत्वाच्च 'अग्नय एव' होमो युक्त इत्याह— "अग्निर्वै देवानां मृदुहृदयतम इति, "अग्निर्वै देवानां नेदिष्ठ मिति च ॥ १० ॥ ११ ॥

अथ पृथक्-प्रयोक्तव्याया आग्नेयेष्टेर्वैशेषिक मङ्गजात माह— "स यदीत्यादिना । 'यदि' 'इष्टिं' दर्शपूर्णमासात्पृथगेव 'कुर्वीत' 'स सामिधेनीः सप्तदशानुब्रूयात्', तथा प्रधानदेवता उपांशु यजेत । 'तत्' उपांशुत्वं काम्येष्टिरूपं खलु ; उपांशु काम्या इष्टयः क्रियन्ते इति[1] । एवं 'मूर्धन्वत्यः'[2] "अग्निर्मूर्धा, भुवो यज्ञस्य"—इत्येते[3] मूर्धशब्दवत्यौ, प्रधानस्य 'याज्ये' स्विष्टकृद्याज्यापुरोनुवाक्ये ; 'विराजौ' विराट्छन्दस्के "प्रेद्धो अग्न, इमो अग्ने"-इत्येते[4] भवतः[5] ॥ १२ ॥ १ ॥ [६. २.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥

---

१— पुरस्तात् (३. ५. १०. पृ० २४६) द्रष्टव्यम् ।

२— "वयस्यासु मूर्ध्नो मतुप्"—इति पा० सू० ४. ४. १२७ ।

३— वा० सं० १३. १४ (३. १२.), १५ ।

४— वा०सं० १७, ७६ (तै०सं० ४. ६. ५. ११.) तै०सं० ४. ३. १३. २१ ।

५— संयाज्यशब्दार्थस्त्वेव माह सायणः—"स्विष्टकृत्सम्बन्धिन्यौ याज्यानुवाक्ये इत्यर्थः"—इति ऐ० ब्रा० १. १. ५. भा० ।

त्वष्टुर्ह वै पुत्रः। त्रिशीर्षा षडक्ष ऽआस तस्य त्रीण्येव मुखान्यासुस्तद्युदेवꣳ रूप ऽआस तस्माद्विश्वरूपो नाम ॥ १ ॥

तस्य सोमपान मेवैकं मुख मास। सुरापाण मेक मन्यस्मा ऽअशनायैकं त मिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद ॥ २ ॥

स यत्सोमपान मास। ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुक ऽइव बभ्रुरिव हि सोमो राजा ॥ ३ ॥

अथ यत्सुरापाण मास। ततः कलविङ्कः समभवत्तस्मात्सोऽभिमाद्यत् क ऽइव व्वदत्यभिमाद्यन्निव हि सुरां पीत्वा व्वदति ॥ ४ ॥

अथ यदन्यस्मा ऽअशनायास। ततस्तित्तिरिः समभवत्तस्मात्स व्विश्वरूपतम ऽइव सन्त्येव घृतस्तोका ऽइव त्वन्मधुस्तोका ऽइव त्वत्पर्णेष्वाश्चुतिता ऽएवꣳ रूप मिव हि* स तेनाशन मावयत् ॥ ५ ॥

स त्वष्टा चुक्रोध। कुविन्मे पुत्र मवधीदिति सोऽपेन्द्र मेव सोम माजह्रे स यथायꣳ सोमः प्रसुत ऽएव मपेन्द्र ऽएवास ॥ ६ ॥

---

* "ऽएवꣳ रूपꣳ हि"—इति च।

इन्द्रो ह वा ऽईक्षाञ्चक्रे। इदं वै मा सोमादन्तर्यन्तीति स यथा बलीयानबलीयस ऽएव मनुपहूत ऽएव यो द्रोणकलशे शुक्र ऽआस तं भक्षयाञ्चकार स हैनं जिहिंस सोऽस्य विष्वङ्ङेव* प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्रावाथ सर्व्वेभ्योऽन्येभ्यः प्राणेभ्यो ऽद्रवत्तदद्ः सौत्रामणीतीष्टिस्तस्यां तद्व्याख्यायते यथैनं देवा ऽअभिषज्यन् ॥ ७ ॥

स त्वष्टा चुक्रोध। कुविन्मेऽनुपहूतः सोम मवभक्षदिति स स्वय मेव यज्ञवेशसं चक्रे स यो द्रोणकलशे शुक्रः परिशिष्ट ऽआस तं प्रवर्त्तयाञ्चकारेन्द्रशत्रुर्व्वर्द्धस्वेति सोऽग्नि मेव प्राप्य सम्बभूवान्तरैव सम्बभूवेत्यु हैक ऽआहुः सोऽग्नीषोमावेवाभिसम्बभूव सर्व्वा विद्याः सर्व्वं यशः सर्व्व मन्नाद्यं सर्व्वां श्रीं† ॥ ८ ॥

स यद्वर्त्तमानः समभवत्। तस्माद्वृत्रोऽथ यदपात्समभवत्तस्माद्हिस्तं दनुश्च दनायूश्च‡ मातेव च पितेव च परिजगृहतुस्तस्माद्दानव ऽइत्याहुः ॥ ९ ॥

अथ यदब्रवीदिन्द्रशत्रुर्व्वर्द्धस्वेति। तस्माद हैन मिन्द्र

---

* 'विष्वङ्ङेव'—इति क, ख। † 'श्रीं'—इति क, 'श्रीम्'—इति ख।

‡ 'दनायुश्च'—इति'—इति पाठः सा०-सम्मतः, डा०-वेवरेण दृष्टश्च।

ऽएव जघानाथ यद्ध शुश्वदवक्ष्यदिन्द्रस्य शत्रुर्व्वर्द्धस्वेति शुश्वदु ह स ऽएवेन्द्र महनिष्यत् ॥ १० ॥

अथ यदब्रवीद्वर्द्धस्वेति। तस्मादु ह स्मेषुमात्र मेव तिर्यङ् वर्द्धत ऽइषुमात्रं प्राङ्क्सो ऽवैवापरꣳ समुद्रं दधावव पूर्वꣳ स यावत्स ऽआस सहैव तावदन्नाद ऽआस ॥ ११ ॥

तस्मै ह स्म पूर्व्वाह्ले देवाः। अशन मभिहरन्ति मध्यन्दिने मनुष्या ऽअपराह्ले पितरः ॥ १२ ॥

स वा ऽइन्द्रस्तथैव नुत्तश्चरन्। अग्नीषोमा ऽउप-मन्त्रयाञ्चक्रेऽग्नीषोमौ युवं वै मम स्थो युवयोरह मस्मि न युवयोरेष किञ्चन कं म ऽइमं दस्युं व्वर्द्धयथ ऽउप मावर्त्तथा मिति ॥ १३ ॥

तौ होचतुः। कि मावयोस्ततः स्यादिति ताभ्या मेत मग्नीषोमीय मेकादशकपालं पुरोडाशं निरवपत्तस्मा-दग्नीषोमीय ऽएकादशकपालः पुरोडाशो भवति ॥ १४ ॥

तावेन मुपावर्त्ततुः। तावनु सर्व्वे देवाः प्रेयुः सर्व्वा व्विद्याः सर्व्वं यशः सर्व्व मन्नाद्यꣳ सर्व्वा श्रीस्तेनेष्ट्वेन्द्र ऽएतदभवद्यदिद मिन्द्र एष उ पौर्णमासस्य बन्धुः स यो हैवं व्विद्वान् पौर्णमासेन यजत ऽएताꣳ हैव श्रियं गच्छत्येवं यशो भवत्येव मन्नादो भवति ॥ १५ ॥

तद्वेव खलु हतो वृत्रः । स यथा दृतिर्निष्पीत एवꣳ संलीनः* शिश्ये यथा निर्हृतसक्तुर्भस्त्रैवꣳ संलीनः† शिश्ये त मिन्द्रोऽभ्यादुद्राव हनिष्यन् ॥ १६ ॥

स होवाच । मा नु मे प्रहार्षीस्त्वं वै तदेतर्ह्यसि यदहं व्येव मा कुरु‡ मामुया भूव मिति स वै मेऽन्न मेधीति तथेति तं द्वेधान्वभिनत्तस्य यत्सौम्यं न्यक्त मास तं चन्द्रमसं चकाराथ यदस्यासुर्यं मास तेनेमाः प्रजा उदरेणाविध्यत्§ तस्मादाहुर्वृत्र एव तर्ह्यन्नाद आसीद् वृत्र एतर्हीतीदꣳ हि यदसावापूर्यतेऽस्मादेवै-तल्लोकादाप्यायतेऽथ यदिमाः प्रजा अशन मिच्छन्ते-ऽस्मा एवैतद्वृत्रायोदराय बलिꣳ हरन्ति स यो हैव मेतं वृत्र मन्नादं वेदान्नादो हैव भवति ॥ १७ ॥

ता उ हैता देवता ऊचुः । या इमा अग्नीषोमा-वन्वाजग्मुरग्नीषोमौ युवं वै नो भूयिष्ठभाजौ स्थो ययोर्वा मिदं युवयोरस्मानन्वाभजत मिति|| ॥ १८ ॥

---

*, † 'संल्लीनः'—इति च पाठो डा०-वेवरेण दृष्टः । संल्लीनः, 'संलीनः'—इति वा च-पाठः सा०-सम्मतश्च ।

‡ 'मा आकुरु'—इति सा०-सम्मतो डा०-वेवर-दृष्टश्च ।

§ 'उदरेणायुध्यत्'—इति सा०-सम्मत इत्याह डा०-वेवरः ।

|| 'भजत इति'—इति च डा०-वेवरेण दृष्टः ।

तौ होचतुः। किं मावयोस्ततः स्यादिति यस्यै कस्यै च देवतायै हविर्निर्वपांस्तद्वां पुरस्तादाज्यस्य यजानिति तस्माद्यस्यै कस्यै च देवतायै हविर्निर्वपन्ति तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति तन्न सौम्येऽध्वरे न पशौ यस्यै कस्यै च देवतायै हविर्निर्वपानिति* ह्यब्रुवन् ॥ १९ ॥

स हाग्निरुवाच। मय्येव वः सर्वेभ्यो जुह्वतु तद्वोऽहं मय्याभजामीति तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुरग्निः सर्वा देवता इति ॥ २० ॥

अथ ह सोम उवाच। मा मेव वः सर्वेभ्यो जुह्वतु तद्वोऽहं मय्याभजामीति तस्मात्सोमꣳ सर्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुः सोमः सर्वा देवता इति ॥ २१ ॥

अथ यदिन्द्रे सर्वे देवास्तस्थानाः। तस्मादाहुरिन्द्रः सर्वा देवता इन्द्रश्रेष्ठा† देवा इत्येतद्ध वै देवास्त्रेधैकदेवत्या अभवन्त्स यो हैव मेतद्वेदैकधा हैव स्वानाꣳ श्रेष्ठो भवति ॥ २२ ॥

द्वयं वा इदं न तृतीय मस्ति। आर्द्रञ्चैव शुष्कञ्च यच्छुष्कं तदाग्नेयं यदार्द्रं तत्सौम्य मथ यदिदं द्वय

---

* इह 'हविः'–पदं न दृश्यते च-पुस्तके।

† 'इन्द्रज्येष्ठा'–इति पाठः सा०-सम्मत इत्याह डा०-वेवरः।

मेवाथ* किं मेतावत्क्रियत ऽइत्यग्नीषोमयोरेवाज्यभागा-वग्नीषोमयोरुपाᳫंशुयाजोऽग्नीषोमयोः पुरोडाशो यदुत एकतमेनैवेदᳫं सर्वं माप्नोत्यथ किं मेतावत्क्रियत ऽइत्यग्नीषोमयोर्हैवैतावती व्विभूतिः प्रजातिः ॥ २३ ॥

सूर्य ऽएवाग्नेयः । चन्द्रमाः सौम्यो ऽहरेवाग्नेयᳫं रात्रिः सौम्या य ऽएवापूर्यतेऽर्द्धमासः स ऽआग्नेयो योऽपक्षीयते स सौम्यः ॥ २४ ॥

आज्यभागाभ्या मेव । सूर्याचन्द्रमसावाप्नोत्युपाᳫंशु-याजेनैवाहोरात्रे ऽआप्नोति पुरोडाशेनैवार्द्धमासावाप्नो-तीत्यु हैक ऽआहुः ॥ २५ ॥

तदु होवाचासुरिः । आज्यभागाभ्या मेवातो यतमे वा यतमे वा द्वे ऽआप्नोत्युपाᳫंशुयाजेनैवातो यतमे वा यतमे वा द्वे† ऽआप्नोति पुरोडाशेनैवातो यतमे वा यतमे वा द्वे ऽआप्नोति‡ सर्वं म ऽआप्त मसत्सर्वं जितᳫं सर्वेण व्वृत्रᳫं हनानि सर्वेण द्विषन्तं भ्रातृव्यᳫं हना-नीति तस्माद्वा ऽएतावत्क्रियत ऽइति ॥ २६ ॥

तदाहुः । किं मिदं जामि क्रियतेऽग्नीषोमयोरेवाज्य-

---

* 'मेवाप्य'—इति च । सोऽय मशुद्धः पाठः स्यान्मुद्राकरप्रमादजः ।

† च-पुस्तके तु 'यतमे वा यतमे वा द्वे'—इत्यस्य स्थाने 'ऽहोरात्रे'—इति पाठः ।

‡ च-पुस्तके तु 'यतमे वा यतमे वा द्वे ऽआप्नोति'—इत्यस्य स्थाने 'ऽर्द्धमासा-वाप्नोति'—इति पाठः ।

स्याग्नीषोमयोः पुरोडाशस्य यदनन्तर्हितं तेन जामी-
त्यनेन ह त्वेवाजाम्याज्यस्येतरं पुरोडाशस्येतरं तदन्य-
दिवेतर मन्यदिवेतरं भवत्यृच मनूच्य जुषाणेन यजत्यृच
मनूच्यर्चा यजति तदन्यदिवेतर मन्यदिवेतरं भवत्यनेन
ह त्वेवाजाम्युपाꣳश्वाज्यस्य यजत्युच्चैः पुरोडाशस्य स
यदुपाꣳशु तत्प्राजापत्यꣳ रूपं तस्मात्तस्यानुष्टुभ मनु-
वाक्या मन्वाह वागध्यनुष्टुब् वाग्घि प्रजापतिः ॥ २७ ॥

एतेन वै देवाः। ऽउपाꣳशुयाजेन यं य मसुराणा
मकामयन्त त मुपत्सुर्यं वज्रेण वषट्कारेणाघ्नंस्तथो
ऽएवैष ऽएतेनोपाꣳशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्य
मुपत्सुर्यं वज्रेण वषट्कारेण हन्ति तस्मादुपाꣳशुयाजं
यजति ॥ २८ ॥

स वा ऽऋच मनूच्य जुषाणेन यजति। तदन्विमा
ऽअन्यतरतोदन्ताः प्रजाः प्रजायन्तेऽस्थि ह्यृगस्थि हि
दन्तोऽन्यतरतो ह्येतदस्थि करोति ॥ २९ ॥

अथर्च्च मनूच्यर्चा यजति। तदन्विमा ऽउभयतो-
दन्ताः प्रजाः प्रजायन्तेऽस्थि ह्यृगस्थि हि दन्त ऽउभयतो
ह्येतदस्थि करोत्येता वा ऽइमा द्वय्यः प्रजा ऽअन्यतरतो-
दन्ताश्चैवोभयतोदन्ताश्च स यो हैवं विद्वानग्नीषोमयोः
प्रजातिं यजति बहुर्हैव प्रजया पशुभिर्भवति ॥ ३० ॥

स वै पौर्णमासेनोपवत्स्यन्। न सचा सुहित ऽइव स्यात्तेनेद मुदर मसुर्यं क्लिनात्याहुतिभिः प्रातर्हैव मेषु ऽउ पौर्णमासस्योपचारः ॥ ३१ ॥

स वै सम्प्रत्येवोपवसेत्। सम्प्रति वृत्रꣳ हनानि सम्प्रति द्विषन्तं भ्रातृव्यꣳ हनानीति ॥ ३२ ॥

स वा ऽउत्तरा मेवोपवसेत्। स मिव वा ऽएष क्रमते यः सम्प्रत्युपवसत्यनद्धा वै सङ्क्रान्तयोर्यदीतरो वेतर मभिभवतीतरो वेतर मथ य ऽउत्तरा मुपवसति यथा पराञ्च मावृत्तꣳ सम्पिꣳष्यादप्रत्यालभमानꣳ सोऽन्यतोघात्येव स्यादेवं तद्य ऽउत्तरा मुपवसति ॥ ३३ ॥

स वै सम्प्रत्येवोपवसेद्। यथा वा ऽअन्यस्य हतꣳ सम्पिꣳष्यादेवं तद्य ऽउत्तरा मुपवसति सोऽन्यस्यैव कृतानुकरोऽन्यस्योपावसायी भवति तस्माद् सम्प्रत्येवोपवसेत् ॥ ३४ ॥

प्रजापतेर्ह वै प्रजाः ससृजानस्य। पर्वाणि विसस्रꣳसुः स वै संवत्सर ऽएव प्रजापतिस्तस्यैतानि पर्वाण्यहोरात्रयोः सन्धी पौर्णमासी चामावास्या चर्त्तुमुखानि ॥ ३५ ॥

स विस्रस्तैः पर्वभिः। न शशाक सꣳहातुं त मेतैर्हविर्यज्ञैर्देवा ऽअभिषज्यन्नग्निहोत्रेणैवाहोरात्रयोः सन्धी

तत्पुर्व्वाभिषज्यंस्तत्समदधुः पौर्णमासेन चैवामावास्येन च पौर्णमासीं चामावास्यां च तत्पुर्व्वाभिषज्यंस्तत्समदधुश्चातुर्म्मास्यैरेवऽर्त्तुमुखानि तत्पुर्व्वाभिषज्यंस्तत्समदधुः ॥ ३६ ॥

स सुꣳहितैः पुर्व्वभिः। इदु मन्नाद्य मभ्युत्तस्थौ यदिदं प्रजापतेरन्नाद्यꣳ स यो हैवं व्विद्वान्त्सम्प्रत्युपवसति सम्प्रति हैव प्रजापतेः पुर्व्व भिषज्यत्युवति हैनं प्रजापतिः स ऽएव मेवान्नादो भवति य ऽएवं व्विद्वान्त्सम्प्रत्युपवसति तस्माद् सम्प्रत्येवोपवसेत् ॥ ३७ ॥

चक्षुषी ह वा ऽएते यज्ञस्य यदाज्यभागौ। तस्मात्पुरस्ताज्जुहोति पुरस्ताद्धीमे चक्षुषी तत्पुरस्तादेवैतच्चक्षुषी दधाति तस्मादिमे पुरस्ताच्चक्षुषी ॥ ३८ ॥

उत्तरार्द्धपूर्वार्द्धे हैके। आग्नेय माज्यभागं जुह्वति दक्षिणार्द्धपूर्वार्द्धे सौम्य माज्यभाग मेतत्पुरस्ताच्चक्षुषी दध्म ऽइति व्वदन्तस्तदु तदाविज्ञान्य* मिव हवीꣳषि ह वा ऽआत्मा यज्ञस्य स यदेव पुरस्ताद्धविषां जुहोति तत्पुरस्ताच्चक्षुषी दधाति यत्रो ऽएव समिद्धतमं मन्येत तदाहुतीर्जुहुयात्समिद्धहोमेन ह्येव समृद्धा ऽआहुतयः ॥ ३९ ॥

स वा ऽऋच मनूच्य जुषाणेन यजति। तस्मादिमे

---

* 'तदातिविज्ञान्य'–इति ग।

ऽअस्थन्त्सत्यनुस्थिके चुक्षुषी ऽआश्लिष्टे ऽअथ यद्दृच मनू-च्यऽर्चा युजेदृस्थि हैवु कुर्यान्न चुक्षुः ॥ ४० ॥

ते वा ऽएते। अग्नीषोमयोरेव रूप मन्वायत्ते यच्छुक्लं तदाग्नेयं यत्कृष्णं तत्सौम्यं यदि वेतरथा यदेव कृष्णं तदाग्नेयं यच्छुक्लं तत्सौम्यं यदेव व्वीक्षते तदाग्नेयꣳ रूपꣳ शुष्के* ऽइव हि व्वीक्षमाणस्याक्षिणी भवतः शुष्क मिव ह्याग्नेयं यदेव स्वपिति तत्सौम्यꣳ रूप मार्द्रे इव हि सुषुपुषोऽक्षिणी भवत ऽआर्द्र ऽइव हि सोम आजरसꣳ ह वा ऽअस्मिंल्लोके† चुक्षुष्मान्भवति सचुक्षुरमुष्मिंल्लोके‡ सम्भवति य ऽएवु मेतौ चुक्षुषी ऽआज्यभागौ व्वेद ॥ ४१ ॥ २ ॥

॥ इति पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् [६. ३.] ॥

अग्नीषोमीय मेकादशकपालं विधातु माख्यायिका माह—"त्वष्टुर्ह वै पुत्र इति[1]। पुरा किल 'त्वष्टुः'[2] शिरस्त्रयेण युक्तः

---

* 'शुष्केव'—इति क। † 'ऽअस्मिन् लोके'—इति ख, 'ऽअस्मिंल्लोके'—इति ग, 'ऽअस्मिंलोके'—इति च।

‡ 'रमुष्मिन् लोके'—इति ख, 'रमुष्मिंल्लोके'—इति ग, 'रमुष्मिंलोके'—इति च।

१— एतदारभ्याष्टमकण्डीस्थ-'नदुद्राव'—इत्यन्तं ग्रन्थजातम् पुनः पञ्चमे काण्डे अपि श्रुतम् (५. ५. ४. २—८.)।

२— "त्वष्टा, तूर्ण मश्नुत इति नैरुक्तास्त्विषेर्वा स्याद् दीप्तिकर्मणस्त्वक्षतेर्वा स्यात् करोति कर्मणः"—इति निरु० ८. २. १०। पुनरुक्तञ्चैव तत

कश्चित् 'पुत्रः' बभूव[1]। यतोऽयं सुकरीत्या बहुरूपः, अतः सः 'विश्वरूपः'-इत्यन्वर्थनामा अभूत् ॥ १ ॥

"तस्येति। 'तस्य' शिरस्त्रयगतेषु मुखत्रयेषु मध्ये 'एकं मुखं' 'सोमपानं' सोमः पीयते अनेनेति करणे ल्युट्[2]। सोमपानायाभूत्। अन्यन्मुखं 'सुरापाणं' सुरापानसाधनम्। "वा भावकरणयोः"-इति[3] णत्वम्। 'अन्यस्मै' पानव्यतिरिक्ताय 'अशनाय' भोजनाय 'एकं' मुख मासीत्। 'तं' विश्वरूपं दृष्ट्वा, 'इन्द्रः' 'दिद्वेष' द्वेष मकरोत्। द्वेषणं तैत्तिरीयके समाम्नातम्— "स प्रत्यक्षं देवेभ्यो भाग मवदत्, परोक्ष मसुरेभ्यः"-इति[4]। स क्रुद्ध इन्द्रः 'तानि' त्रीण्यपि शिरांसि 'प्रचिच्छेद' ॥ २ ॥

"स यत्सोमपान इति। तेषु त्रिषु मुखेषु मध्ये 'यत्' सोम-पानाय मुखम्, 'ततः' 'कपिञ्जलः' पक्षी 'समभवत्'। "कपिञ्जलः

---

उत्तरम्— "माध्यमिकस्त्वष्टेत्याहुः। मध्यमे च स्थाने समाम्नातः (निघ० ५. ४. २१.)। अग्निरिति शाकपूणिः"-इति (११)। 'सर्व-शिल्पिमता माचार्यो देववर्द्धकिर्दाक्षायणी-पुत्रो द्वादशाना मादि-त्याना मन्यतम इत्यैतिहासिकाः'-इति च तद्भाष्ये पर्यालोच्यम्। द्युस्थाने आदित्यनामसु चाम्नातो निघण्टौ (५. ६. ६.)। "तत्रेतिहास माचक्षते"-इत्यादि नैरुक्तं चात्रालोच्यम् (निरु० १२. १. १०.)।

१— त्रिशिरो वर्णनं कृतं सायणाचार्येण ऋ०सं० १म० २अ० १सूक्तारम्भे; विशेषतस्तु "त्रिशीर्षाणं ०—० त्रितो गाः"-इत्यादौ द्रष्टव्यम् (ऋ० सं० १०. ८. ८; ९९. ६)।

२— पा० सू० ३. ३. ११७। ३— पा० सू० ८. ४. १०।

४— तै० सं० २. ५. १. १।

कपिरिव जीर्णः कपिरिव जवत ईषत्पिङ्गलो वा"-इति यास्कः[१]। उक्तार्थविश्वासाय पक्षिणः सोमस्य च साम्य माह— "तस्मात् स बभ्रुक इवेति ॥ ३ ॥

"अथ यत् सुरापान मिति। तथा कलविङ्कोऽपि शब्दयति, अतः ततस्तदुत्पत्तिर्युक्ता ॥ ४ ॥

"अथ यदन्यस्मा इति। 'अथ' पानात् 'अन्यस्मात्' अशनाय यत् सुखम्, 'ततः तित्तिरिः'[२]। यतो बहुरूपादन्नभक्षकान्मुखात् सम्बभूव, अतः सोऽत्यन्तं बहुरूपवान्[३] दृश्यते।

कथं तस्य तथात्व मिति तद्दर्शयति— "सन्त्येवेति। त्वच्छब्द-स्त्वशब्दसमानार्थः, सर्वनामसु विकल्पेन पठितः[४]। 'त्वत्' एकस्मि-न्नङ्गे 'घृतस्तोका इव' घृतविन्दवः परिदृश्यन्ते। तथा 'त्वत्' एकत्र अङ्गे मधोर्विन्दव इव। एतदपि कुत इत्यत आह— 'पर्णेषु' चटकपक्षेषु 'आस्रुतिताः' आचरं प्राप्ताः बहुरूपाणि दृश्यन्ते। कार्यगतं वैरूप्यं तत्कारणेऽपि सम्भावयति— 'एवं रूप मिव'

---

१— तथाहि—"अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते"—इत्यधिकारे (निरु० ३. ४. १.) द्रष्टव्यम्। तत्र "कमनीयं शब्दं पिञ्जयतीति वा"—इति च तच्छेषः।

२— "तित्तिरिस्तरणात्, तिलमात्रचित्र इति वा"—इति निरु० ३. ४. १।

३— एवंविधेषु पदेषु प्रथमं मत्वर्थीयप्रत्ययेन भाव्यम्, ततो समासः; अत एव "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तदर्थप्रतिपत्ति-करः"—इति नात्र विरुध्यते।

४— श० पा० १. १. १. (१. १. २७ सू०)।

हतस्तोकादिरूप मिव खलु 'सः' 'तेन' मुखेन 'अग्रनं' जठरम् 'आवयत्' अवति[१]श्च गत्यर्थः[२], अगमयत् ॥ ५ ॥

"स त्वष्टेति। एवं पुत्रशिरस्सु छिन्नेषु 'स त्वष्टा' असाविन्द्रो 'मे' 'पुत्रं' 'कुवित्' बहुप्रकारम् 'अवधीत्'–'इति' क्रुद्धो भूत्वा 'अपेन्द्र मेव' इन्द्रेण विरहित मेव 'सोम माजह्रे'। 'सः' च 'सोमः' 'यथा' अपेन्द्रः 'प्रसुतः', 'एवं' प्रदानेऽपि 'अपेन्द्र एव' अभूत् ॥ ६ ॥

"इन्द्रो ह वा इति। स च 'इन्द्रः' 'इदम्' एव सर्वेऽपि 'मा' 'सोमात्' व्यवहितं कुर्वत 'इति' विचार्य, 'यथा' प्रबलो दुर्बलस्य धन मननुज्ञात एवापहरति, 'एवम्' 'अनुपहूत एव' 'द्रोणकलशे'[३] शोधितं सोम मभक्षयत्। 'सः' च भक्षितः सोमः सात्म्य मप्राप्नुवन् त मेव 'जिहिंसस' हिंसितवान्, पीडा मकरोत्। ततः सर्वतः नासाद्यमुख्य-'प्राणेभ्यः', मुखव्यतिरिक्तेभ्यः च्युतोऽभूत्। अथ कर्कन्ध्वादिपदार्थरूपेण सृतेभ्यस्तेभ्यः सकाशात् 'सौत्रामणी' सुत्राम्णः सम्बन्धिनी 'इष्टिः' निष्पन्ना[४]। सोमे सृते, येन प्रकारेण त मिन्द्रं

---

१— 'अयति'–इति ज, झ, डा०-वेवरेण च त्रिषु पुस्तकेषु दृष्टः।

२ — धा० पा० भ्वा० पं० ६००।

३— द्रोणकलशो द्रुममयः कलशाकारो वैकङ्कतः सोमरसपात्रविशेषः। अस्योपर्यैव धारा ग्रहा गृह्यन्ते। का० श्रौ० ८. ७. ५ सू० द्रष्टव्यम्।

४— "सुत्रामा गोत्रभिद् वज्री"–इत्यमरः १. १. ४५। "तदेतत् सर्वं माप्नोति यज्ञे सौत्रमणीसुते"–इत्यादि वा० सं० १९, ३१। तत्र च "सुरावन्तम् (वा० सं० १९. ३२.)"–इत्यादिमन्त्रैर्होमो विहितः (का० श्रौ० १९. ३. ८.)। "न वा एतदयो न हिरण्यं, यत्सीसम्; न स्त्री न पुमान्, यत् क्लीवः; न सोमो न सुरा, यत् सौत्रामणी-

सुतसोमं 'देवाः' विचिकित्सितवन्तः, 'तत्' सर्वं सौत्रामणीप्रकरणे विस्पष्ट माम्नायते[१] ॥ ७ ॥

"स त्वष्टेति । अथ 'स त्वष्टा' मम 'सोमम्' अतिप्रसूत मनाकारित मेवापिबदिति क्रुद्धः सन्, 'स्वय मेव' नष्टस्य यज्ञस्य 'यज्ञवेशसं' यज्ञहिंसापरिहारं कृतवान् । कथम् ? 'यो द्रोणकलशे' 'शुक्रः' सोमः 'परिशिष्टः' आसीत्, 'तम्' आदाय प्रवर्त्तयामास, "इन्द्रशत्रुर्वर्द्धस्व"-इत्युच्चार्य कृतवान् । 'सः' च कृतः सोमः, अग्निप्राप्ति-समकाल एव पुरुषरूपेण 'सम्बभूव' । केचित् प्रवर्त्तनसामर्थ्यात् अग्नि मस्पृशन्नेव मध्ये 'सम्बभूवेत्याहुः' । 'सः' च सम्भवन् 'अग्नीषोमावेव' 'अभि' व्याप्नुवन् भक्षयन् 'सम्बभूव' । न केवलं जगत्कारणभूतौ तावेव, किन्तु लोके याः 'विद्याः', यद् 'यशः', यत् अदनीय मन्नम्, या च 'श्रीः', तानि सर्वाणि 'अभि'लक्ष्य भक्षयन् 'सम्बभूव' ॥ ८ ॥

"स यद्वर्त्तमान इति । तथा 'सः' सम्भवन् 'वर्त्तमानः' सर्वं व्याप्नुवन्नेव । यतः 'समभवत्', 'तस्मात्' तस्य नाम, सर्वं व्याप्य वर्त्तत इति व्युत्पत्त्या 'वृत्रः'-इति सम्पन्नम्[२] । तथा यस्मात् ('अपात्')

---

समृद्धी"-इति तै० ब्रा० १. ८. ५. ४ । "ते देवा अब्रुवन् सुत्रातं बतैन मत्रासता मिति तस्मात् सौत्रामणी नाम"-इति (५. ५. ४. १२.) नामनिर्वचनम् । "सुत्रातं बतैनं पाप्मनोऽत्रासतेति"-इत्यादि चोपरिष्टादिहैव (५. ५. ४. १२ ; १२. ७. १. १४.) ।

१— इहैवोत्तरभागे द्रष्टव्यम् । उत्तरभागे हि अष्टाध्यायिसौत्रामण्यश्व-मेधाख्यास्त्रयः काण्डास्तुर्थस्य ब्रह्मप्रतिपादको बृहदारण्यकाख्यः ।

२— "वृत्रो वृणोतेर्वा, वर्त्ततेर्वा, वर्द्धतेर्वा ; 'यदवृणोत् तद् वृत्रस्य वृत्रत्व मिति विज्ञायते, 'यदवर्त्तत तद् वृत्रस्य वृत्रत्व मिति विज्ञायते, यदवर्द्धत तद् वृत्रस्य वृत्रत्व मिति विज्ञायते"-इति निरु० २. ५. ३।

अपादः सन् सम्भूतः, 'तस्मात्' अतः सर्पणसाम्यात् 'अहिः' इत्यपि[1] तन्नामासीत्। 'तं' 'दनुश्च दनायूश्च' मातृ-पितृ-स्थानीयौ भूत्वा रक्षणाय 'परिजगृहतुः'। यस्मात्ताभ्यां परिजगृहतुः, 'तस्माद्दानव इत्याहुः' सर्वे जनाः ॥ ९ ॥

"अथ यदब्रवीदिति। तथा स त्वष्टा ग्रहप्रवारसमये[2] इन्द्र-शत्रुरिति[3] पूर्वपदोदात्ततया,— इन्द्रः शत्रुर्यस्येति बहुव्रीहिसमासं कृत्वा[4] मन्त्रं प्रयुक्तवान्, अतः तम् 'इन्द्रो जघान'। यद्यसौ अन्तोदात्ततया तत्पुरुषसमासेन[5] वा, 'इन्द्रस्य शत्रुः'-इति व्यस्तनिर्देशेन वा ब्रूयात्, तदा निश्चित मेव 'स इन्द्रं' हन्यात्[6] ॥ १० ॥

---

१— "अहिरयनात्; एत्यन्तरिक्षे। अय मपीतरोऽहिरेतस्मादेव, निर्ह्रसितोपसर्ग आहन्तीति"–इति निरु० २. ५. ३।

२— 'ग्रहप्रचारसमये'–इति ठ।

३— "इन्द्रशत्रुः। इन्द्रोऽस्य शमयिता वा शातयिता वा तस्मादिन्द्रशत्रुः"–इति निरु० २. ५. २।

४— "बहुव्रीहौ प्रकृत्या पूर्वपदम्"–इति पा० सू० ६. २. १।

५— "अन्तोऽवत्याः"–"समासस्य"–इति पा० सू० ६. १. २२०, २२३।

६— "इन्द्रस्य शातयिता इन्द्रशत्रुरिति-विवक्षायां तत्पुरुषसमासस्यान्तोदात्तत्वेन भवितव्यम्: आद्युदात्तस्त्वयं शब्दः प्रयुक्तः, स च बहुव्रीहितां द्योतयति, बहुव्रीहौ प्रकृत्या पूर्वपद मिति पूर्वपदाद्युदात्तत्वविधानात्। सति बहुव्रीहौ इन्द्रः शातयिता यस्येत्यर्थो भवति। सोऽयं मन्त्रगतः स्वरापराधः"–इति तै० सं० २. ४. १२ सा० भा०। अत एवाह पस्पशायाम्— "दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न त मर्थ माह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्"–इति पा० म० भा० १. १. १ आ०।

"अथ यदिति। तथा 'वर्द्धस्वेति'-प्रयोगसामर्थ्यात् 'सः' वृत्रः 'इषुमात्रम्— इषुमात्रम्' धनुषः सकाशाद्बलान्मुक्तेषुर्यावत् दूरं गच्छति तावन्मात्रम्, प्रतिक्षणं 'तिर्यङ्' उभयपार्श्वतः 'वर्द्धते', 'प्राङ्' हि 'इषुमात्रम्' अवर्द्धत। एतत् पश्चाद्वृद्धेरप्युपलक्षणम्। 'अवरं', 'पूर्वं' च 'समुद्रं' तथा प्राक्-पश्चात्समुद्रावपि 'अवदधौ' शरीरवृद्ध्या अवाक् चकार इत्यर्थः। यावद्यावत् प्रवृद्ध आस, तावत्तावत् प्रवृद्धोऽन्नभक्षक एवाभूत्[1] ॥ ११ ॥

"तस्मै ह स्मेति। एवं बह्वाशिने 'तस्मै' 'देवाः मनुष्याः पितरश्च' पूर्वमध्यन्दिनापराह्णेषु क्रमेण सर्वतः 'अशनम्' प्रयच्छन्ति ॥ १२ ॥

"स वा इन्द्र इति। इन्द्रस्तु वृत्रशरीरवृद्धिक्रमानुसारेणैवेष-द्दीषत्प्रणश्यन्नो दूर एव[2] 'चरन्', श्रोदन मसहमानो वृत्र मनुगतौ 'अग्नीषोमौ' इच्छन् उपमन्त्रयामास। कथम्? हे 'अग्नीषोमौ!' युवां 'मम' स्वम् भवथः, 'युवयोरहं' स्वम् भवामि। यथाहं युवयोस्तथा 'एषः' वृत्रो 'न किञ्चन' कि मपि न भवति, अतः 'कम्' कीदृशमहत्त्वोपेतं 'दस्युं' 'वर्द्धयथ'? अतोऽमुं परित्यज्य मां प्रति 'उपावर्त्तेथाम्'। 'इति'-शब्दः उपमन्त्रणप्रकार-समाप्त्यर्थः[3] ॥ १३ ॥

'तौ होचतुरिति। अथ 'तौ' इन्द्रम् 'ऊचतुः'। 'ततः'

---

१— तैत्तिरीयसंहितायाञ्चैव मेव (२. ४. १२, २. ५. २.)।

२— 'दूराद् दूर एव'—इति ज, झ।

३— तैत्तिरीयसंहितायाञ्चाम्नात मेवमेवोपमन्त्रणम् ( तै० सं० २. ५. २.); अधिकन्तु तत्र श्रुत मिहैव प्रजापतितो वज्रलाभादिकञ्चेति।

वृत्रवदननिर्गमनात् 'आवयोः' 'किं' फलं लब्धं 'स्यात्'? 'इति'। स एव मुक्तः 'ताभ्याम्', 'एतम्' इदानीं विधीयमानम् 'एकादशकपालं पुरोडाशम्' अग्नीषोमदेवताकं कृत्वा निरुप्तवान्, तयोरिद मिति कल्पितवानित्यर्थः ॥

इदानीं तं यागं विधत्ते— "तस्मादिति। अग्नीषोमौ देवते यस्य, सः 'अग्नीषोमीयः[१]', एकादशसु कपालेषु संस्कृतः पुरोडाशः 'एकादशकपालः[२]' स भवेत्, पौर्णमास्यां कर्त्तव्यः ॥ १४ ॥

"तावेन मिति। अथ 'तौ' 'एनम्' इन्द्रं प्रत्युपावृत्तावभूताम्। 'तावनु' 'सर्वे' अपि वृत्रमुखान्तर्गताः 'देवाः' ('प्रेयुः') निरीयुः। तथा वृत्रेण भक्षिता विद्यायशोऽन्नश्रियः 'सर्वाः' अपीन्द्रं प्रति निर्गताः। 'यत्' 'इदम्' इदानीमुपरिदृश्यमानप्रकार मिन्द्रस्य सर्वाधिपत्य मस्ति, तत् 'तेन' अग्नीषोमीयैकादशकपालयागेन 'इष्ट्वा' 'अभवत्'। उक्त मर्थं निगमयति— "एष उ इति। एष एव "त्वष्टुर्ह वै"-इत्याद्युपक्रम्य, "तेनेष्ट्वेन्द्र एतदभवत्"-इत्यन्तेनोक्त एव 'पौर्णमासस्य' पौर्णमास्या मसाधारणेनानुष्ठेयस्य[३] हविषो 'बन्धुः' बन्धकोऽर्थनियामकः, एतदेव ब्राह्मण मित्यर्थः ॥

---

१— "सास्य देवता (४. २. २४.)"-इत्यधिकारे "द्यावापृथिवी-शुनासीर-मरुत्वदग्नीषोम-वास्तोष्पति-गृहमेधाच्छ च"-इति पा० सू० ४. २. ३२। "देवताद्वन्द्वे च (पा० सू० ६. ३. २६.)"-इति, "अग्नेः स्तुत्स्तोमसोमाः (८. ३. ८२.)"-इति पाणिनिसूत्रे चात्र स्मर्त्तव्ये।

२— "संस्कृतं भक्षाः"-इति पा० सू० ४. २. १६।

३— 'पौर्णमास्यां साधारणेनानुष्ठेयस्य'-इति ज।

विहित मर्थं मनूद्य प्रशंसति— "यो ह्वैवं विद्वानिति। अत्र यद्यपि पौर्णमासीशब्देन कालवाचिना तत्कालक्रियमाणं सर्वं कर्माश्रयणीयम्, तथाप्याग्नेयाष्टाकपालस्य साधारण्याद्, वाक्यशेषे श्रीप्रभृतेरेव फलत्वेन श्रवणाच्च, अग्नीषोमीय एकादशकपाल एव परिगृह्यते। 'यः' यजमानः 'एवम्' उक्त मर्थं 'विद्वान्' जानन्, 'पौर्णमासेन' पौर्णमास्यां क्रियमाणेनाग्नीषोमीयेन 'यजते' अनुतिष्ठति, सः 'एताम्' इन्द्रेणानुभूतां 'श्रियम्', तथाविधं यशोऽन्नञ्च प्राप्नोति ॥ १५ ॥

"तद्वेव खल्विति। अथ तदानीम्, अग्नीषोमादिनिर्गमनानन्तर मेव 'वृत्रो हतः' 'निष्पीतो दृतिरिव' चर्मनिर्मितपात्र मिव, स यथा 'संलीनः'[१] सङ्कुचितकुक्षिरिति[२] एवं संलीनो भूमावशयिष्ट; तथा 'निर्धूतसक्तुका भस्त्रा' चर्ममयी संलीना, तद्वत् 'संलीनः' शेते; कुक्षिगतानां सक्तुस्थानीयानां देवानाम्, उदकस्थानीयानां मरुद्गादीनाञ्च स्रावात् दृष्टान्तद्वयाभिधानम्। अथ शयानं वृत्रं हननेच्छया इन्द्रः शीघ्र माजगाम ॥ १६ ॥

"स होवाचेति। तं दृष्ट्वा वृत्रोऽब्रवीत्,— इदानीं मेतत् सर्वं त्वमेव भवसि, पूर्वं यदहं सर्व मभवम्; अतो 'व्याकुर्वेव' शरीरं विविधम्, आ सर्वतो भग्नपर्यन्तं[३] कुरु, विदारयेत्यर्थः। 'अमुया' इदानीं मनूभूयमानप्रकारया स्थित्या 'मा भूवम्' सर्वदा न भवामि 'इति'। 'सः' एव मुक्तः इन्द्रः, तर्हि ममान्नं भवेत्युवाच।

---

१— 'संल्लीनः'—इति ठ। एव मित्योत्तरत्रापि सर्वत्र।

२— 'सङ्कुचितकुक्षितनुः पतति'—इति ठ। ३— 'भग्नं'—इति ठ।

'तथा' अस्तु 'इति' उक्तम्। 'तम्' इन्द्रो 'द्वेधा' 'अन्वभिनत्' तदनुक्रमेण व्यदारयत्। तेन 'यत्' 'सौम्यं' श्रेष्ठं श्रुत मासीत् 'तं चन्द्रमसं चकार'। प्रतिनिर्द्देशापेक्षया पुंल्लिङ्गता। 'यत्' 'असुर्यम्' असुरेभ्यो हितम्[1] उच्छिष्ट मासीत्, 'तेन' 'इमाः' सर्वा अपि प्रजाः उदरप्रदेशेन अयुज्यत्[2], तद्रूपेणोपस्थापया-मासेत्यर्थः। यस्मादेवं 'तस्माद्' यः कश्चित् यदि बह्वन्नं भक्षयेत्, 'तर्हि' तदा सर्वेऽपि जनाः इदानीं 'वृत्र एतर्हि अन्नाद आसीत् इत्याहुः'। प्रसिद्धेः सार्वत्रिकत्वप्रदर्शनाय दृष्टान्तः। उक्त मर्थं समर्थयते— "एतर्हीति। 'असौ' चन्द्रः पूर्वपक्षे 'आपूर्यते'-इति यत्, तत् 'इदं हि' कि मिदम्? तदाह— 'अस्मात्' 'लोकादेव' चन्द्रः 'आप्यायते'। अस्माल्लोकात् चन्द्रस्याप्यायनप्रकार मुपरिष्टाद् वक्ष्यते— "तदेन मद्भ्य ओषधिभ्यः सम्भृत्याहुतिभ्यो ऽधि जनयति, स एष आहुतिभ्यो जातः पश्चाद्दृशे"-इति[3]।

यदा ('इमाः') बुभुक्षिताः 'प्रजाः' 'अशन मिच्छन्ति', तदा 'अस्मा एव वृत्राय' षष्ठ्यर्थे चतुर्थी[4], वृत्ररूपाय 'उदरायेव' 'बलिं हरन्ति'। अतो वृत्रभागविशेषस्यास्मद्रूपेण स्थापनं युक्त मित्यर्थः। "स यो हैव मिति ज्ञानफलम् ॥ १७ ॥

---

१— असुरशब्दस्य गवादिषु पाठात् "तस्मै हितम् (पा० सू० ५. १. ५.)"—इत्यर्थे "उ-गवादिभ्यो यत् (पा० सू० ५. १. २.)"—इति यत्। वस्तुतोऽत्र "असुरस्य स्वम् (पा० सू० ४. ४. १२३.)"—इति यदित्येव स्यात् सुवचम्। २— 'अयुध्यत्'—इति ज, ठ।

३— एतदिहैव काण्डे इत उपरिष्टाद् द्रष्टव्यम् (६. ४. १५.)।

४— पा० सू० २. ३. ६२ वा० १. (१५०६)।

प्रयाजानन्तर माज्यभागौ वक्तव्यावन्तरितौ, अतस्तौ अग्नीषोमीयपुरोडाशप्रसङ्गेन विधातु माह[१]— "ता उ हेति। वृत्रदेहात् 'अग्नीषोमावनु' निर्गताः सर्वाः 'देवताः' 'तौ' अग्नीषोमौ प्रतीद मब्रुवन्। यतो वृत्रदेहान्निर्गतयोर्युवयोरिदं पुरोडाशद्रव्यं प्रातिस्विकम्[२] अभूत्, अतो युवा मेव प्रभूतभागभाजौ भवथः, 'युवयोः' मध्ये 'अस्मान्' अपि 'अन्वाभजतम्' 'इति' ॥ १८ ॥

"तौ होचतुरिति। अथ 'तावुचतुः'— 'ततः' युष्मदनुप्रवेशाद् 'आवयोः किं स्यात्?' 'इति' उक्ता देवतास्तयोः हे अग्नीषोमौ! लोके यष्टारो 'यस्यै कस्यै च देवतायै' इन्द्रादिदेवतानां मध्ये यां काञ्चिद्देवतां प्रति 'हविः' 'निर्वपान्' निर्वपेयुः; तत्र च निरूप्तप्रधानदेवताभ्यः पूर्वम् 'आज्यस्य' आज्यं[३] 'यजान्' यजेयुः। इदानीं विधत्ते— "तस्मादिति। 'तस्माद्' देवैर्दत्तत्वात् यत्र निर्वपति, तत्र 'आज्यभागावग्नीषोमाभ्याम्' अनुष्ठेयौ।

आज्यभागौ प्रशंसति— "तन्न सौम्ये इति॰ पशुसोमयोराज्यभागौ 'न' कुर्यात्। निर्वापाभावादेव पशुसोमयोरप्राप्तस्य आज्यभागस्य पुनर्निषेधेनैष्टिक माज्यभागविधानं स्तूयते। यथा दशमाध्यायस्याष्टमे पादे द्वितीयाधिकरणे— "न सौम्येऽध्वर[४] इत्यत्र

---

१— 'प्रयाजानन्तरं वक्तव्यौ तावाज्यभागौ, अग्नीषोमीयपुरोडाशप्रसङ्गेन विधातु माह"–इति ढ-पाठः।

२— प्रातिस्विक मसाधारणधर्मे त्रिकाण्डः।

३ — 'आज्यभागं'–इति ढ।

४— ४१८ पृ० ४ पं० द्रष्टव्यम्। एतदेव तदधिकरणस्य विषयवाक्यम्।

किं निषिध्यते, उत पर्युदस्यते, अथार्थवादः ? इति त्रिधा विकल्प्यार्थवाद इति राद्धान्तितम्[1]। सोमपश्वोस्तदप्राप्तौ कारण माह— "यत्से कस्मै चेति। 'निर्वपानिति ह्यब्रुवन्' इति निर्वापस्य विशेषितत्वात् तयोस्तदभावादिति भावः ॥ १९ ॥

इदानीं ताभ्यां देवताभ्यः कृत मुपकारं दर्शयति— "सहाग्नि-रित्यादिना, "अथ ह सोम इत्यादिना च। अग्निः सर्वदेवार्थ माहुत्याधारतालक्षणम्,— सोमस्तु सर्वदेवताना माहुतिलक्षणम्, उपकारं कृतवन्तौ। यस्मादेवं 'तस्मात्' वेदवादिनः अग्नेः सोमस्य च सर्वदेवतात्मकताम् 'आहुः' ॥ २० ॥ २१ ॥

"अथ यदिन्द्र इति। 'यद्' यस्माच्च 'इन्द्रे' 'सर्वे देवाः' 'तस्थानाः' स्थितवन्तः, अतः 'इन्द्रः सर्वा देवताः'। अत्र कारण माह— "इन्द्रज्येष्ठा देवा इतीति। ज्येष्ठत्वं तु "तावेन मुपावहृतत-स्तावनु सर्वे देवाः"-इत्यादिनोक्तत्वात्[2] अवगन्तव्यम्। 'एतद्ध' एतेनैव खलु कारणेन सर्वेऽपि 'देवाः' 'त्रेधा' त्रिप्रकारेण अग्निसोमेन्द्रात्मकाः 'एकदेवत्याः' एकैकदेवतार्थाः 'अभवन्'। तादर्थ्ये यत् ॥

---

१— तथाहि जैमिनिसूत्रम्— "अपूर्वे चार्थवादः स्यात्"-इति मी० द० जै० सू० १० अ० ८ पा० ५ सूत्रम् (८ अधि०)। "यथा 'आदित्यो यूपः'-इति अञ्जने कृते तेजस्सामान्यादुच्यते, एव मिहापि पशौ आज्यभागौ कथं न क्रियेता मिति तदर्था प्रशंसा"-इति च तत्र तद्भाष्योपसंहारः ( शा० भा० )।

२— अस्मिन्नेव ब्राह्मणे पुरस्ताद् ( ४१६ पृ० १५ क० ) द्रष्टव्यम्।

उक्तार्थज्ञं प्रशंसति— "स य इति। अग्न्यादीना मेकदेवत्व-लक्षणश्रेष्ठत्वपरिज्ञानेन स्वय मपि स्वकीयानां मध्ये एक एव 'श्रेष्ठो भवति' ॥ २२ ॥

आज्यभागोपांशुयाजपुरोडाशानां यदग्नीषोमदेवताकत्व मस्ति, तत् प्रशंसितु माह— "द्वयं वा इत्यादि। लोके पदार्थाः सर्वेऽपि शुष्कार्द्रभावेन द्विविधाः; अतः तृतीयविधस्याभावाद् 'यच्छुष्कं तदाग्नेयम्' भविष्यति, 'यच्चार्द्रं तत्सौम्यम्'। अतो लोके विद्यमानं वस्तुद्वय मेव अस्मादेव कारणात् अग्नीषोमयोर्योगेन स माप्तं भविष्यति। 'किम्' 'एतावद्' बहु 'क्रियते' 'इति' ब्रह्मवादिना-श्चोद्यम्। एतावदिति सङ्क्षेपेणोक्तस्य विवरणम्— "अग्नीषोमयो-रिति। अग्नीषोमयोरेवाज्यभागावित्यादित्रयाणा मपि प्रदानस्योप-पत्ति माह— "अग्नीषोमयोर्हेत्यादिना। 'एतावती' सूर्यचन्द्रादि-भेदेन त्रिधा[1] 'विभूतिः'। विभवो[2] बहुभावः। विभूतिरित्यस्य व्याख्यानम्— "प्रजातिरिति। 'प्रजातिः' प्रकर्षेणोत्पत्तिः ॥ २३ ॥

सूर्यादियुगलत्रयस्याग्नीषोमात्मकतां विभज्य योजयति— "सूर्य एवेति। सूर्याह्नोश्चन्द्ररात्र्योश्चाग्निसोमात्मकताया मुष्णत्वशीतत्वे हेतू। आपूर्यमाणपक्षस्याग्नेयत्व मग्नेर्भिन्नस्य सवितुः किरणाना मनुक्रमेण चन्द्रमस्यनुप्रवेशात्; अपक्षीयमाणपक्षस्य सौम्यत्वञ्च क्रमेण सूर्यांशापनये सति स्वकीयकारणोपवापादिति[3] द्रष्टव्यम् ॥ २४ ॥

अस्त्वेवं किं तत इत्यत आह— "आज्यभागाभ्या मेवेति। अत-

---

१— 'त्रेधा'—इति ढ। २— 'विभावो'—इति ढ।

३— 'स्वकीयकिरणोपवापादिति'—इति च पाठो डा०-वेबरेण दृष्टः।

स्त्रिविधविभूत्याप्तये त्रयाणा मपि यागाना मग्नीषोमीयत्वं युक्त मिति केचिदाहुः ॥ २५ ॥

"तद् होवाचेति। 'आसुरिः' त्वेवम् 'उवाच'[१]। उभयेषु त्रिषु यागेष्वाज्यभागाभ्या मेव सूर्याहोऽर्द्धमासयुगलत्रयात्मकासु[२] त्रिविधासु विभूतिषु 'यतमे वा यतमे वा' 'द्वे' वस्तुनी, 'यतमे वा' अहोरात्र-रूपे वा, शुक्लकृष्णपक्षरूपे वा, द्वे 'आप्नोति'। वीप्सया त्रिविधान्यपि युगलानि परिगृह्यन्ते। आज्यभागपुरोडाशाभ्यां अग्नीषोमाग्नीषोम-देवताकाना मप्येवं त्रिष्वपि यागेष्वेकैकेनैव त्रिविधा मप्यग्नीषो-मयोर्विभूति माप्तवान्[३] भवतीति[४] 'आसुरिः' आचार्यो मन्यते।

आसुरिपक्षं निगमयति— "तस्मादिति। 'तस्माद्धि' यस्मादेकैकेन सर्वविभूतिराप्ता भवति, तस्मात् कारणात् 'एतावत्' यागत्रय मप्यग्नीषोमीय मेव 'क्रियते' ॥ २६ ॥

अथाज्यभागादियागत्रयद्रव्ययोराज्यपुरोडाशयोरेकदेवतात्वप्रयुक्तं जामितादोष माक्षिप्य द्रव्यमन्त्रधर्म्माणां भेदेन तत्परिहरति— "तदाहुरित्यादिना। आज्यपुरोडाशस्य प्रदान मिति शेषः। अथवा 'आज्यस्य' 'पुराडाशस्य' वा पशावपि 'अग्नीषोमयोः' एव दीयत इत्यर्थः। कथ मेतावता जामितेति, तत्राह— "यदिति। एकरूपं 'यद्' वस्तुद्वयम्, तद्विलक्षणेन वस्त्वन्तरेणाव्यवहितम्; 'तेन' अव्यव-

१— 'आसुरिराचार्यस्त्वेवं मन्यते'—इति ढ।

२— 'सूर्याहोऽर्द्धमासयुगलत्रयात् सकलासु'—इति ज, झ।

३— 'त्रिविधा अप्यग्नीषोमयोर्विभूतीराप्तवान्'—इति ज।

४— 'भवति'—इत्यन्त एवात्रत्यग्रन्थो ढ-पुस्तके।

धानेन तद्वत्तु 'जामि' भवति। अत्र तु व्यवधान माग्नेयेन 'अनेन' वक्ष्यमाणेन च खल्वजामि। केनेति, उच्यते— 'आज्यस्य' द्रव्यस्य 'इतरम्' इतरत् कर्म उपांशुयाजाख्यम्; तथा 'पुरोडाशस्येतरं' आज्याख्यम्[१]; अन्योऽन्यापेक्षयोरुभयोरितरत्वम्। "अन्यदिवेति। द्रव्यभेदादेकदेवत्य मपि कर्मद्वयम् 'अन्यदिवान्यदिव' भवतीत्यर्थः; अतोऽन्ययोर्न जामितास्ति। द्वितीयः परिहारः— आज्यभागः प्रधानद्वयं वेति कोटिद्वयं विषयीकृत्य प्रवृत्त इति द्रष्टव्यम्[२]। मन्त्रभेदेन चाज्यभागप्रधानद्वययोरजामित्वम्[३]; प्रधानद्वययोः 'जुषाणः'—इत्यस्यासम्भवात्। यद्यप्याज्यभागप्रधानयोर्देवतैक्यम्, तथाप्याज्यभागस्य 'ऋचम्' "अग्निर्वृत्राणि"—"त्वं सोमासि"-इत्यादिका मनुवाक्यां कृत्वा, "जुषाणो अग्निराज्यस्य वेतु"-"जुषाणः सोमः"-इति 'जुषाणेन यजति'[४]; प्रधानाभ्यां तु क्रमेण "अग्नीषोमा यो अद्य वाम्[५]"—"अग्नीषोमा सवेदसा[६]"-इत्यनूच्य, "आन्यं दिवो मातरिश्वा जभार[७]"-"युव मेतानि[८]"-इत्युग्भ्यां यजति। "अन्यदिवेत्यादि। पूर्ववत्[९] न दोषः। तथाज्यपुरोडाशयोरुपांशुत्वोच्चैस्त्व-

---

१— 'धानाख्यम्'-इति भ, ढ।
२— द्वितीय इत्यादिग्रन्थो ढ-पुस्तके नास्ति।
३— मन्त्रेत्यादिग्रन्थो ज-पुस्तके नास्ति।
४— तै० ब्रा० ३. ५. ६. १, २ संख्यकौ मन्त्रौ द्रष्टव्यौ।
५— ऋ० सं० १. ९३. २।
६— ऋ० सं० १. ९३. ९। तै० ब्रा० ३. ५. ७. ४ (क)।
७— ऋ० सं० १. ९३. ६।
८— ऋ० सं० १. ९३. ५। तै० ब्रा० ३. ५. ७. ४ (ख)।
९— ५ पंक्तिर्द्रष्टव्या।

भेदादप्यजामित्वम्। "तावब्रूतादग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजन्निति-श्रुत्यन्तरात् उपांशुत्वविधानं युक्तम्। विहित माज्यस्योपांशुत्वं प्रशंसति—"स यदुपांश्विति। उपांशुत्वस्यानिरुक्तत्वात्, प्रजापतेरपि सर्वात्मकत्वेन तथात्वात्, प्रजापतिरूपत्वम्; 'तस्मात्' उपांशोः प्रजापतिरूपत्वात् 'तस्य' प्रजापतेः उचिता मनुष्टुप्छन्दस्काम् "अग्नीषोमा यो अद्य वाम्"-मित्येताम् 'अनुवाक्याम्' अनुब्रूते। एतावता कथं साम्यप्रतीतिरित्यत आह— "वाग्घीति। "अनुष्टुप् च वै सप्तदशश्च समभवताꣳ सानुष्टुप् चतुरुत्तराणि छन्दांस्यसृजत"- इति सामब्राह्मणे[१] श्रवणादनुष्टुभो वाग्रूपत्वम्। ततोऽपि किं मित्यत आह— "वाग्घि प्रजापतिरिति। "आश्रावयास्तुश्रौषडित्यादि— "एष वै सप्तदशः प्रजापतिरितिश्रुतेः[२] प्रजापतिरूपत्वम् ॥ २७ ॥

सिद्धवद्भावहृत मुपांशुयाज मिदानीं सार्थवादं विदधाति— "एतेन वै देवा इति। 'एतेन' 'उपांशुयाजेन' 'असुराणां' मध्ये 'यं-यम्' असुरं हन्तु मैच्छन्, 'तं-तम्' 'उपत्सर्य' उपपार्श्वे च गत्वा, उच्चैरुच्चार्यमाणेन वषट्काराख्येन च 'वज्रेण' 'अघ्नन्'। वषट्कारस्य वृत्रशिरश्छेदनसाधनत्वात् वज्रत्वम्। "तथो एवेत्यादि स्पष्टम्। तस्मात् उपांशुयाजं यजेदिति विधिः। उपांश्विज्यते देवता अत्र यागे इति 'उपांशुयाजः' ॥ २८ ॥

आज्यभागोपांशुयाजयोर्जामितापरिहाराय याज्यापुरोऽनुवाक्ययोः वैलक्षण्य मुक्तम्, तदेव विधाय प्रशंसति[३]— "स वा ऋच मनूच्य

---

१— सा० ब्रा० १प्र० २ख० द्रष्टव्यम्।

२— पुरस्तात् टीप्पन्यां द्रष्टव्यम् ( २५२ पृ० )।

३— वैलक्षण्य मुक्त्वा प्रशंसति'–इति ढ।

जुषाणेनेत्यादिना। उदाहृतौ जुषाणशब्दयुक्तौ मन्त्रौ[1], 'तत्' तादृक् अनुष्ठानम् 'अनु', तत्सामर्थ्यादित्यर्थः। 'अन्यतरतः' तयोरन्यत्र च्छक्करणात् एतत्कर्म 'अन्यतरतः' 'अस्थि' अस्थिवद् दृढं करोति। तस्मात् अन्यतरत च्छक्करणं युक्त मित्यर्थः ॥ २९ ॥

"अथर्च्च मनूच्यर्च्चेति। एवम् 'ऋच मनूच्य ऋचा'-इत्येतद्व्याख्येऽयम्। 'उभयतोदन्ताः' पुरुषाश्वादयः प्रसिद्धाः। द्विविधप्रजाव्यतिरेकेण प्रजान्तराभावात् सर्वप्रजालाभाय याज्यानुवाक्यायुगलयोरुक्तं वेलक्षण्यम् ॥

उक्तार्थज्ञानपूर्वकानुष्ठानं प्रशंसति— "स य इति। अग्नीषोमयोः प्रजापतिसूर्यसोमादिरूपं त्रिविधवैभवम्, तदाप्तिकारण माज्यभागोपांशुयाजाग्नीषोमीयपुरोडाशाख्यं यागत्रय मनुतिष्ठतीत्यर्थः ॥ ३० ॥

॥ ३१ ॥ ३२ ॥

पक्षान्तर माह— "स वा उत्तरा मिति। न पूर्वां पौर्णमासी मुपवसेत्, उत्तरा मेव। उत्तरोपवासपक्षे गुण माह— "अथ य उत्तरा मिति। यथा कश्चित्पराराष्ट्रं प्राप्य प्रतिमुखं पलायमानं हननोद्योगरहितं सम्यक् चूर्णितं करोति, तदुत्तरं पेषण मप्येवं भवति; प्रतिनिवृत्तस्योत्तरपक्षस्याक्रान्तप्रायत्वात्। "य उत्तरा मिति पुनरुपसंहारः ॥ ३३ ॥

इत्थं पक्षान्तरं सोपपत्तिक मभिधाय प्रथमं पक्षं सिद्धान्तयितुं पुनरुपादत्ते— "स वै सम्प्रत्येवोपवसेदिति।

---

१— इहैव पुरस्तात् प्रदर्शितौ ( ४३७ पृ० ११ पं० )।

ननु द्वितीयपक्षानादरे किं कारण मिति, तदाह— "यथा वा अन्यस्येति। 'यथा' कश्चिन्मन्दोऽन्येन पूर्व मेव पातितम्, पुनः स्वयम् 'पिंष्यात्', 'एवं' 'तत्' उत्तरपेषणं भवति; स्वत एव प्रतिनिवृत्तस्य पक्षस्य स्वेनाक्रान्तत्वात्।

उत्तरानादरे कारणान्तर माह— "सोऽन्यस्यैवेति। किञ्च उत्तरोपवासी 'अन्यस्य' अन्येन यत्कृतं कार्यं तस्य 'अनुकरः' अनुकारी, कृतस्यैव कार्यस्य पुनः करणशीलो भवति। तथा 'अन्यस्य उपावसायी' अन्येनाध्यवसितस्य पुनरध्यवसायी 'भवति'। सम्प्रति उपवसन्तं दृष्ट्वा, तदनुकर्त्तुं स्वय मपि परेद्युः असावुपवसतीत्येवं प्रतिभानात्। 'तस्माद् सम्प्रति'-इति स्वपक्षनिगमनम् ॥ ३ ४ ॥

सम्प्रतिपक्ष मेव सिद्धान्तयितु माख्यायिका माह— "प्रजापतेर्हेति। पुरा 'प्रजाः' सृष्टवतः 'प्रजापतेः' सन्धयो विस्रस्ता आसन् किल। ननु कः प्रजापतिः? कानि पर्वाणि? इति उच्यते— संवत्सरे सकलप्रजोत्पत्तेः 'सः संवत्सर एव प्रजापतिः'; 'तस्य' कालात्मकस्य 'पर्वाणि' 'अहोरात्रयोः सन्धी' प्रातस्सायङ्कालौ। तथा एतौ 'सन्धी' 'पौर्णमासी च अमावास्या च' कालौ। 'ऋतुमुखानि' वसन्तादीनि, तानि विस्रस्तानि ॥ ३ ५ ॥

"स विस्रस्तैरिति। 'सः' विस्रस्तपर्वा 'संहातुं' सङ्गतो भवितुं शक्तो माभूत्। 'तम्' अशक्तम् 'एतैर्हविर्यज्ञैः' 'देवाः' 'अभिषज्यन्' भेषज मकुर्वन्। सोमव्यतिरिक्ताज्यपुरोडाशादिसाध्या[1] 'हविर्यज्ञाः'। विभज्य योजयति— सायं प्रातश्च क्रियमाणेन 'अग्निहोत्रेण'

१— 'सोमव्यतिरिक्तपुरोडाशादिसाध्या'-इति ढ।

'अहोरात्रयोः सन्धौ' एतदात्मकं प्रजापतेः 'तत् पर्व' चिकित्सन्, 'समदधुः' समाहित मकुर्वन्। तथा 'पौर्णमासीञ्चामावास्याञ्च' पौर्णमास्यमावास्यारूपे पर्वणी वैश्वदेवादि-'चातुर्मास्यैरेव' वसन्तादि-'ऋतुमुखानि' 'समदधुः' ॥ २६ ॥

"स सꣳहितैरिति। 'सः' एव कालात्मकः प्रजापतिः दृढपर्वा[१], संवत्सरमध्ये यदन्नं व्रीह्यादिरूपं पक्वं भवति, तत् सर्वम् 'अभि'-लक्ष्य भोक्तु मुत्थितवान्; कालावयवानां विच्छेदाभावात् तत्तत्कालोचितमन्नं भोगयोग्य मासीदित्यर्थः ॥

इदानी मुपवासयोग्यं पर्व विधत्ते— "सम्प्रतीति। 'सम्प्रति ह्येव' पर्वविस्रंसनसमकाल एव 'प्रजापतेः पर्व' सम्प्रति उपवसन् चिकित्सितवान् भवति; तथैव सम्प्रत्युपवासिनं रक्षति; प्रजापतिवत् स्वय मपि सर्वान्नादो भवति ॥

"य एवं विद्वान्"-इति उपसंहारः। "तस्मादिति स्वाभिमतपक्षनिगमनम्। कात्यायनस्तु ब्राह्मणे सोपपत्तिकाभिधान मभिप्रेत्य पक्षद्वय मपि विकल्पेनोवाच— "पूर्वां पौर्णमासी मुपवसेत्, उत्तरां वा"-इति[२] ॥ २७ ॥

आज्यभागस्थाननियम माह— "चक्षुषी ह वा इति। 'यत्' यतः 'आज्यभागौ' चक्षुःस्थानीयौ, अतः 'पुरस्तात्' कर्त्तव्यौ; तयोः पुरस्तात्करणेन 'यज्ञस्य चक्षुषी' 'पुरस्तात्' कृतवान् भवति। यतो

---

१— 'पश्चात् 'सः' दृढपर्वा'—इत्येतावदेव ज-झ-पुस्तकयोः।

२— का० श्रौ० सू० २. १. १। इहैवोपरिष्टाद् (६. २. २. १८)।

यज्ञे ते पुरस्तात् क्रियेते, अत इदानी मपि प्राणिनां 'चक्षुषी पुरस्ताद्' वर्त्तेते ॥ ३८ ॥

अत्र केषाञ्चित् पक्ष माह— "उत्तरार्द्धपूर्वार्द्ध इति। तेषा मभिप्राय माह— "एतदिति। 'एतत्' एतेन, पूर्वभागेऽपि उत्तर-दक्षिणभागयोर्होमेन 'पुरस्तात्' साक्षात् 'चक्षुषी' स्थान एव स्थाप-याम इति ॥

अस्य पक्षस्य दुरवगमत्व माशङ्क्य पूर्वोक्त मेव पक्षं सिद्धान्तयति— "तद् तदित्यादिना। 'अविज्ञान्य मिव' विज्ञानेन हीन मिव, वैषम्याभावेन साक्षात् स्थानविज्ञानस्याशक्यत्वात् तस्य। कस्य पुर-स्तादित्यत आह— "हवींषीति। यागशरीररूपस्य द्रव्यत्यागात्मक-त्वात् यत्र प्रधानानि हवींषि हूयन्ते, तेषां पुरोभागमात्रपवनात् स्वस्थाने चक्षुःस्थानं भवतीत्यर्थः। उक्तपुरोभागविशेष[1] माह— "यत्रो एवेति। उत्तरपूर्वार्द्धादिस्थान मनपेक्ष्य प्रधानहविःपुरोभागे 'यत्र' कुत्राग्नौ समिद्धे होतव्यम्; तथा सति 'आहुतयः' अपि 'समृद्धाः' स्युः। अत्र कात्यायनः— "आग्नेय मुत्तरपूर्वार्द्धे, दक्षिणपूर्वार्द्धे सौम्यं, समिद्धतमे वा"-इति[2] ॥३९॥

आज्यभागयाज्यानुवाक्ययोर्यादृग् जुषाणवैलक्षण्यं पूर्व मुक्तम्[3], तदपि तयोश्चक्षुष्प्रयुक्त मित्याह— "स वा ऋच मनूच्येति। 'अस्थन्' अस्थनि, मुखे अस्थिमये सति ऋग्जुषयोः[4] काठिन्यमृदुत्वात्

१— 'उक्तहविःपुरोभागे विशेष'-इति ठ।

२— का० श्रौ० सू० ३. ३. १७. २०, २१, २२।

३— इहैव पुरस्तात् २७ कण्डी द्रष्टव्या ( ४२० पृ० )।

४— 'ऋग्जुषाणयोः'-इति भ, 'ऋग्यजुषोः'-इति ठ।

साम्यादस्थ्नस्थ्यात्मता। यद्वै यज्ञस्य समाम्नातेन यजुषा[1] क्रियते, तत् शिथिलितम्; यदृचा तद् दृढ मिति। 'ऋचा' "अग्नि-र्वृत्राणि"-इत्यादिकया, 'यजुषा' "जुषाणो अग्निर्जुषाणः सोमः"—इति, ऋग्यजुषोश्च मृदुशिथिलत्वे समाम्नाते। उक्तप्रकारता मथान्य-भावे दोषदर्शनेन समर्थयते— "यदृच मनूच्येति। अण्वावेव कुर्वन्, प्राणिनां यज्ञस्य वा 'अक्षि' अक्षिस्थानं मुखम् केवलम् 'कुर्यात्', 'न चक्षुः, चक्षुस्तु वर्जयत्येव ॥ ४० ॥

आग्नेयसौम्ययोराज्यभागयोर्यज्ञचक्षुष्ट्वं लौकिकचक्षुस्साम्येन सम-र्थयते— "ते वा एते इति। 'ते' चक्षुषी प्रत्येकम् 'अग्नीषोमयोः रूपम्' 'अन्वायत्ते' अनुप्राप्ते। कथम्? चक्षुषि 'यच्छुक्लं तदाग्नेयम्' सितभास्वरत्वसाम्यात्; चन्द्रमसि कार्ष्ण्यस्य वृद्ध्यनुसारेण स्फुटं प्रतिभासात् 'यत् कृष्णं तत् सौम्यम्'।

अथ "आग्नेयः कृष्णग्रीवः"-इत्यादिषु[2] कार्ष्ण्यस्याग्नेयत्वश्रवणात्, अर्चिमध्यस्य प्रकाशकाग्निधर्मत्वाच्च; सोमे भूयसः शौक्ल्यस्य दर्शनाच्च उक्तवैपरीत्य माशङ्क्याह— "यदि वेतरथेति।

इदानीं दर्शनादर्शनांशभेदेनाग्नीषोमात्मकता माह— "यदेव वीक्षत इति। 'यदेव' चक्षुरुन्मीलनकाले सर्वं पश्यति। एतदुप-पादयति— "शुष्क इवेति। सर्व मपि वस्त्वग्निसम्बन्धे शुष्कं भवतीति प्रसिद्धम्। स्वपितिरप्यदर्शन मुपलक्षयति— "यदेवेति। दर्शनं न

---

१— 'चक्षुषी'-इति ज, झ।

२— य० वा० सं० २६. २८। विधानञ्चास्यैव १३. ५. १. ३।

करोतीत्यर्थः । 'सुषुपुषः' सुप्तवतः । स्वपेः क्वसुः[१] । सोमोऽपि आर्द्र-प्रस्रवः; आप्यमण्डलत्वात् ॥

वेदितुः प्रशंसा— "आजरस मिति । वयोहानिपर्यन्तं 'चक्षुष्मान् भवति' इत्यर्थः[२] । 'अमुष्मिन्' स्वर्गलोकेऽपि 'सचक्षुः' एव 'सम्भवति', आज्यभागयोः चक्षुष्ट्व-वेदिता ॥ ४१ ॥ २ ॥ [६. ३.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे षष्ठाध्याये तृतीयं ब्राह्मणम् ॥

---

इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । सोऽबलीयान् मन्यमानो नास्तृषीतीव बिभ्यन्निलयाञ्चक्रे स पराः परावतो जगाम देवा ह वै विदाञ्चक्रुर्हतो वै वृत्रोऽथेन्द्रो न्यलेष्टेति ॥ १ ॥

त मन्वेष्टुं दध्रिरे । अग्निर्द्देवतानाᳩं हिरण्यस्तूप ऋषीणां बृहतीच्छन्दसां त मग्निरनुविवेद तेनैताᳩं रात्रिᳩं सहाजगाम स वै देवानां वसुर्व्वीरो ह्येषाम् ॥ २ ॥

ते देवा अब्रुवन् । अमा* वै नोऽद्य वसुर्व्वसति

---

१— पा० सू० ३. २. १०७; ६. १. १५ ।

२— 'वयोहानिपर्यन्तं चक्षुर्मोघं न भवति'—इति ढ ।

* 'नमा'—इति क, ख, ग ।

यो नः प्रावात्सीदिति ताभ्या मेतद्यथा ज्ञातिभ्यां वा सखिभ्यां वा सहागताभ्याᳬ समानु मोदनं पचेदजं वा तदह मानुषᳬ हविर्द्देवाना मेव माभ्या मेतत्समानᳬ हविर्न्निरवपन्नैन्द्राग्नं द्वादशकपालं पुरोडाशं तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥ ३ ॥

स इन्द्रोऽब्रवीत्। यच्च वै वृत्राय वज्रं प्राहरं तद्यस्मये स कश इवास्मि* न वै मेदं धिनोति यन्मा धिनवत्तन्मे कुरुतेति तथेति देवा अब्रुवन् ॥ ४ ॥

ते देवा अब्रुवन्। न वा इम मन्यत्सोमाद्धिनुयात्सोम मेवास्मै सम्भरामेति तस्मै सोमᳬ समभरन्नेष वै सोमो राजा देवाना मन्नं यच्चन्द्रमाः स यत्रैष एताᳬ रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोक मागच्छति स इहैवापश्चौषधीश्च प्रविशति स वै देवानां वस्वन्नᳬ ह्येषां तद्यदेष एताᳬ रात्रि मिहामा वसति तस्मादमावास्या नाम ॥ ५ ॥

तं गोभिरनुविद्याप्य समभरन्। यदोषधीराश्नंस्तदोषधिभ्यो यदपोऽपिबंस्तदद्भ्यस्त मेवᳬ सम्भृत्यातच्य तीव्रीकृत्य त मस्मै प्रायच्छन् ॥ ६ ॥

सोऽब्रवीत्। हिनोत्येव† मेदं नेव त मयि श्रयते

---

* 'इवास्मिन्'—इति क।    † 'धिनोत्येव'— इति ग, च।

यथेदं* मयि श्रयातै तथोपजानीतेति तꣳ शृतेनैवा-
श्रयन् ॥ ७ ॥

तद्वा ऽएतत् । समानमेव सत् पय ऽएव सदिन्द्र-
स्यैव सत्तत्पुनर्न्नानेवाचक्षते । यदब्रवीद्धिनोति मेति
तस्माद्दध्यथ यदेनꣳ शृतेनैवाश्रयंस्तस्माच्छृतꣳ ॥ ८† ॥

स यथाꣳशुराप्यायेत । एव माप्यायतताप पाप्मानꣳ
हरिमाण मघ्नतैष ऽउ ऽआमावास्यस्य बन्धुः स यो
हैवं विद्वान्त्सन्नयत्येवꣳ हैव प्रजया पशुभिराप्यायते
ऽप पाप्मानꣳ हते तस्माद्वै सन्नयेत् ॥ ९ ॥

तदाहुः । नासोमयाजी सन्नयेत्सोमाहुतिर्व्वा ऽएषा
सानवरुद्धासोमयाजिनस्तस्मान्नासोमयाजी सन्नयेदिति॥
१० ॥

तदु समेव नयेत् । नन्वचान्तरेण शुश्रुम सोमेन नु
मा याजयताथ म ऽएतदाप्यायनꣳ सम्भरिष्यथेत्यब्रवी-
दिति न वै मेदं धिनोति यन्मा धिनवत्तन्मे कुरुतेति
तस्मा ऽएतदाप्यायनꣳ समभरंस्तस्मादप्यसोमयाजी
समेव नयेत् ॥ ११ ॥

व्वार्त्रघ्नं वै पौर्णमासम् । इन्द्रो ह्येतेन व्वृत्र मघ्नन्नथै-

---

‡ 'यथेद'—इति च-पाठो नूनं मुद्राकरप्रमादजः ।

* इह "अर्द्धप्रपाठकः"—इति ख-ग-पुस्तकयोः ।

तदेव वृत्रहत्यं यदामावास्यं वृत्रꣳ ह्यस्मा ऽएतज्जघुष ऽआप्यायन मकुर्व्वन् ॥ १२ ॥

तद्वा ऽएतदेव वार्त्रघ्नम् । यत्पौर्णमास मथैष ऽएव वृत्रो यच्चन्द्रमाः स यत्रैष ऽएताꣳ रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदेन मेतेन सर्व्वꣳ हन्ति नास्य किञ्चन परिशिनष्टि सर्व्वꣳ ह वै पाप्मानꣳ हन्ति न पाप्मनः किञ्चन परिशिनष्टि य ऽएव मेतद्वेद ॥ १३ ॥

तद्धैके दृष्ट्वोपवसन्ति । श्वो नोदेतेत्यदो ह्येव देवाना मविक्षीण मन्नं भवत्यथैभ्यो वय मित ऽउप प्रदास्याम ऽइति तद्धि समृद्धं यदक्षीण ऽएव पूर्वस्मि-न्नन्नेऽथापर मन्न मागच्छति स ह बह्वन्न ऽएव भवत्यसोमयाजी त्व क्षीरयाज्यदो ह्येव सोमो राजा भवति ॥ १४ ॥

अथ यथैव पुरा । केवलीरोषधीरश्नन्ति केवलीरपः पिबन्ति ताः केवल मेव पयो दुह्र ऽएवं तदेष वै सोमो राजा देवाना मन्नं यच्चन्द्रमाः स यत्रैष ऽएताꣳ रात्रिन्न पुरस्तान्न पश्चाद्ददृशे तदिमं लोक मागच्छति स ऽइहा-पश्चौषधीश्च प्रविशति तदेन मह्ना ऽओषधिभ्यः । सम्भृत्याहुतिभ्योऽधि जनयति स ऽएष ऽआहुतिभ्यो जातः पश्चाद्ददृशे ॥ १५ ॥

तद्वा ऽएतद् । अविक्षीण मेव देवाना मन्नाद्यं परि-स्रवतेऽविक्षीणꣳ ह वा ऽअस्यास्मिंल्लोकेऽन्नं भवत्यक्षय्य ममुष्मिंल्लोके सुकृतं य ऽएव मेतद्वेद ॥ १६ ॥

तद्वा ऽएताꣳ रात्रिम् । देवेभ्योऽन्नाद्यं प्रच्यवते तदिमं लोक मागच्छति ते देवा ऽअकामयन्त कथन्नु न ऽइदं पुनरागच्छेत्कथन्न ऽइदं परागेव न प्रणश्येदिति तद्य ऽएव सन्नयन्ति तेष्वाशꣳसन्त ऽएत एव नः सम्भृत्य प्रदास्यन्तीत्याह वा ऽअस्मिन्त्स्वाश्च निष्ठ्याश्च शꣳसन्ते य ऽएव मेतद्वेद यो वै परमतां गच्छति* तस्मिन्नाशꣳ सन्ते† ॥ १७ ॥

तद्वा ऽएष ऽएवेन्द्रः । य ऽएष तपत्यथैष ऽएव वृत्रो यच्चन्द्रमाः सोऽस्यैष भ्रातृव्यजन्मेव तस्माद्यद्यपि पुरा विदूर मिवोदितोऽथैन मेताꣳ रात्रि मुपैव न्याप्लवते सोऽस्य व्यात्त मापद्यते ॥ १८ ॥

तं ग्रसित्वोदेति । स न पुरस्तान्न पश्चाद्ददृशे ग्रसते ह वै द्विषन्तं भ्रातृव्य मय मेवास्ति नास्य सपत्नाः सन्तीत्याहुर्य ऽएव मेतद्वेद ॥ १९ ॥

तं निर्धीय निरस्यति । स ऽएष धीतः पश्चाद्ददृशे स पुनराप्यायते स ऽएतस्यैवान्नाद्याय पुनराप्यायते

---

* 'गच्छति'—इति च । † 'प्राꣳसन्ति'—इति क ।

यदि ह वा ऽअस्य द्विषन् भ्रातृव्यो व्वणिज्यया वा केनचिद्वा सम्भवत्येतस्य हैवान्नाद्याय पुनः सम्भवति य ऽएवं मेतद्वेद ॥ २० ॥

तद्धैके महेन्द्रायेति कुर्व्वन्ति। इन्द्रो* वा ऽएष पुरा व्वृत्रस्य व्वधा†दथ व्वृत्रं‡ हत्वा यथा महाराजो व्विजिग्यान ऽएवं महेन्द्रोऽभवत्तस्मान्महेन्द्रायेति तदिन्द्रायेत्येव कुर्यादिन्द्रो वा ऽएष पुरा व्वृत्रस्य व्वधा‡दिन्द्रो व्वृत्रं जघ्निवांस्तस्मादिन्द्रायेत्येव कुर्यात् ॥ २१ ॥ ३ ॥

॥ इति पञ्चमप्रपाठके तृतीयं ब्राह्मणम् [ ६. ४. ] ॥

अथामावास्यानि हवींषि विधातु माख्यायिका माह— "इन्द्रो ह यत्रेति। 'यत्र' यस्मिन् देशे 'इन्द्रः' 'वृत्राय' वृत्रवधार्थं 'वज्रं' 'प्रजहार', तदा स्वयं बलवान् सन्नपि 'अबलीयान्' अह मिति मत्वा 'मास्तृषि'। "स्तृङ् हिंसायाम्[१]", लुङ्[२]। अहं न हिंसितवानस्मीति भीतः सन् पुनर्वाधशङ्कया निलीनोऽभूत्। एतदेवाह— 'पराः परावतो जगाम' अत्यन्तं विप्रकृष्टदेशं गतवान्। परावदिति

* 'तद्धैके। महेन्द्रायेति कुर्व्वन्तीन्द्रो'—इति ग, च।

†, ‡ 'बधा'—इति च।

१— 'स्तृणाति'—इत्यस्य बधकर्म्मसु पाठात्। निघ० २. १९. १२।

२— पा० सू० ३. २. ११० ; ३. ४. ६।

दूरनाम[1]। तस्य "उपसर्गाच्छन्दसि धात्वर्थे"-इति[2] मतुप्। ततो 'देवाः' वृत्रे हते 'इन्द्रः' तज्जीवनशङ्कया कुत्र विलीनः? 'इति' विदित्वा, (॥ १ ॥

"त मन्वेष्टु मिति।) अन्वेषणे मतिं कृत्वा देवऋषिच्छन्दसां मध्ये अग्निर्हिरण्यस्तूपऋत्याख्यास्त्रयोऽप्यन्वयिषुः। तत्र 'अग्निः' 'अनुविवेद' अनुसृत्यालब्धवान्। लब्धेनेन्द्रेण सह 'एतां' रात्रिं। रात्रिशब्दो दिनस्योपलक्षणः। अत्यन्तसंयोगे द्वितीया[3]। कृष्ण मप्यमावास्यादिवसं सहोषितवान्। किं कारणं तत्र तस्य वास इति, तदाह— "स वा इति। 'सः' इन्द्रो 'देवानां' 'वसुः' धनरूपः[4], वासयिता वा[5]। एवं 'हि' यतः 'एषां' देवानां मध्ये 'वीरः', अतः तदागमनायाग्नेर्विलम्बो युक्तः। "इन्द्रो हि देवानां वसुः"-इति तैत्तिरीयके समानप्रकरणेऽभिधानात् "स वै"-इति तच्छब्देनेन्द्र एव परामृष्टव्यः ॥ २ ॥

ऐन्द्राग्नं द्वादशकपालं विधातु माह— "ते देवा इति। 'ते देवाः' 'नः' अस्माकं सम्बन्धी 'यः' इन्द्रः प्रवास मकरोत्, सः 'नः'

---

१— निघ॰ ३. २६. ५। निरु॰ ७. ७. ४; ११. ४. १४।

२— पा॰ सू॰ ५. १. ११८।

३— "कालाध्वनोरत्यन्तसंयोगे"-इति पा॰ सू॰ २. ३. ५।

४— निरु॰ ६. २. ४।

५— "वसवो यद् विवसते सर्वम्। अग्निर्वसुभिर्वासव इति समाख्या; तस्मात् पृथिवीस्थाना। इन्द्रो वसुभिर्वासव इति समाख्या; तस्मान्मध्यमस्थाना। वसव आदित्यरश्मयः, विवासनात्; तस्माद् द्युस्थानाः"-इति निरु॰ १२. ४. ७।

'वसुः', 'अद्य' 'अमा' अग्निना सह 'वसति'-'इति' उक्त्वा, 'ताभ्यां' सखिभावेन सह वसद्भ्या मिन्द्राग्निभ्यां द्वादशकपालं हविरिति शेषः ; प्रयच्छाम इत्यर्थः ॥

ननु देवताभेदेन हविर्भेदः किं न स्यात् ? इत्यत आह— "यथा ज्ञातिभ्या मिति। परस्पर मुच्छिष्टता नास्तीत्यवगमयितुं ज्ञातिसख्योरुपन्यासः। 'समानम्' एक मेव पचति ; पक्त्वा समानं प्रयच्छतीत्यर्थः। 'मानुषं' मनुष्येभ्यः कर्त्तव्यं सत्, उपकरण मिति शेषः। अस्त्वेवं देवानां कि मायात मित्याह— "हविर्देवाना मिति। 'देवानां' तु सहागतानां 'हविः समान मेव' उपकरण मित्यर्थः। एवं पूर्वाचारानुसारेणैव इदानीं विधत्ते— "तस्मादैन्द्राग्न इति ॥ ३ ॥

अथ साम्नाय्यं विधातु माह— "स इन्द्र इत्यादिना। 'यत्र' यस्मिन् काले 'वज्रं' 'प्राहरम्' प्राक्षिपम्, तदा 'व्यस्मये' विस्मितोऽभवम् ; विगतप्रबले स्मयदर्शनात्। यतः 'श्लथोऽस्मि', तस्मात् 'इदं' कठिनं पुरोडाशं 'मा' मां 'न धिनोति' न प्रीणयति, अतो मम प्रीतिकरं हविः सम्पादयत 'इति' (॥ ४ ॥

"ते देवा इति।) उक्त्वा 'देवाः' 'इमम्' इन्द्रं प्रीणयितुं 'सोमादन्यत्' 'न' शक्नोतीति विचार्य, तस्मै 'सोम मेव' सम्भृतवन्तः। कथं सम्भेरयुरिति, तत्प्रकार उच्यते— "चन्द्रमा इति। 'यत्' योऽस्ति 'एषः' एवाभिषूयमाणः 'सोमो राजा', 'सः' एवोभयत-स्चन्द्रदर्शनरहितायां सम्पूर्णामावास्यायां भूलोक मागत्य अप्सु ओष-धीषु च प्रविशति। 'सः' प्रविष्ट एव चन्द्रमाः 'देवानां वसु'

देवधनम्। कुतः?[1] यतः 'एषां' व्रीहियवसोमादिरूपेण 'अन्नं' भवति, अतो वसुरित्यर्थः ॥

चन्द्रमसोऽप्योषधिसहवासप्रसङ्गात् 'अमावास्या'-शब्दं निर्वक्ति— "तद्यदेष इति। 'इह' भूलोके 'एतां रात्रिम्' अपरिदृष्टचन्द्रायां रात्रौ साकल्येन 'अमा वसति' अमा सह वसति; अप्योषधि-चन्द्रमसा यस्यां तिथौ सहवासात् सा तिथिः 'अमावास्या नाम' अभवत् ॥ ५ ॥

"तं गोभिरिति। 'तम्' अनुप्रविष्टं सोमं 'गोभिः' अनुक्रमेण विविधं स्थापयित्वा धारयित्वैव 'समभरन्'। तत्प्रकार माह— "यदोषधीरिति। 'ओषधीः' 'आश्नन्' अभक्षयन् गावः, 'तत्' तेन 'ओषधिभ्यः' सोम मभरन्। तथा अनुप्रविष्टसोमा अपः पिबन्ति गावः, तेन 'अद्भ्यः'; अबुपलक्षितानां तृणपयसां क्षीरतया परिणामादिति भावः। एवम्प्रकारेण सम्भरण मेव सोमस्य तीव्री-करणम्। अथवा 'तीव्रीकृत्य' अन्यत् आतञ्चनं कृत्वेत्यर्थः। अथ 'तं' सम्भृतम् 'अस्मै' इन्द्राय 'प्रायच्छन्' ॥ ६ ॥

"सोऽब्रवीदिति। 'सः' इन्द्रः स्वीकृत्येदम् 'अब्रवीत्'। 'इदं' हविः 'मा' मां 'धिनोत्येव[2]', ('तु') परन्तु 'मयि' 'नैव श्रयते' न तिष्ठति, न सात्म्यं भजत इत्यर्थः। अतो 'मयीदं' 'यथा' 'श्रयातै' श्रयेत, 'तथा' उपायं बुध्यध्व मिति। तेऽपि 'तम्' इन्द्रं 'शृतेनैव' पक्वक्षीरेणैव 'अश्रयन्'। यद्यपि तैत्तिरीयके प्रथमं शृतं पश्चाद्

१— ठ-पुस्तके नास्त्येतत् पदम्।

२— 'हिनोत्येव'—इत्येव बङ्गमूलपुस्तकपाठः।

दधीति[1] क्रमः, तथाप्यत्र सायम्प्रातर्दोहाभ्यां दधिपयसोः सम्भवात्[2] अनेन क्रमेणाभिधान मिति द्रष्टव्यम् ॥ ७ ॥

तत् प्रशंसति— "तद्वा एतदिति । 'तत्' प्रथमतस्सन्द्रात्मकम् 'एतत्' शृतरूपेण परिणतम्, वस्तुतः 'समान मेव' एकरूप मेव ॥ ८ ॥

सान्नाय्यस्य सोमात्मकता मभिधाय, आप्यायनसाम्यादपि तदात्मकता माह— "स यथांशुरिति । 'अंशुः' सोमः, 'स यथा' आप्याययेत्, 'एवं' सान्नाय्य मपि । तथा पीतवतां 'पाप्मानम्' 'अप'हन्ति[3],— 'हरिमाणं' शरीरस्य हरितत्व मपहन्तीति ॥

प्राकरणिक मर्थ मुपसंहरति— "एष उ इति । 'एषः' "इन्द्रो ह यत्र वृत्रायेत्यादिकः[4] 'आमावास्यस्य' कर्मणः 'बन्धुः' ब्राह्मणम्[5] ॥

उक्तार्थज्ञानप्रशंसापूर्वकं सान्नाय्यं विधत्ते— "स यो हैवं विद्वानिति ॥ ९ ॥

विहितस्य सान्नाय्यस्याधिकारितां निरूपयितुं केषाञ्चिन्मत माह— "तदाहुरिति । 'तत्' तत्र सान्नाय्यविषये 'आहुः' ब्रुवते । तेषा मभिप्राय माह— "सोमाहुतिरिति । सान्नाय्याहुतिः परम्परया 'सोमाहुतिः' खलु ; 'सा एषा' पूर्वं सोमेनानिष्टत्वात् 'अनवरुद्धा' न सम्पन्ना ; अतः 'असोमयाजी न सन्नयेदिति' ॥ १० ॥

---

१— "शृतेन प्रातस्सवने श्रीणीयात्, दध्ना मध्यन्दिने, शीतमिश्रेण तृतीयसवने"–इति तै० ब्रा० १. ४. ८. ६ ।

२— पूर्वं सायं दोहेन दधि सम्पाद्यते, ततो यागदिने प्रातर्दोहेन शृतम् ।

३— इहैतत्पदं ढ-पुस्तके नास्ति ।

४— ४४४ पृ० ७ पं० ।

५— व्याख्यान मेतस्य ४३० पृ० १५-पङ्क्तिप्रेषतो द्रष्टव्यम् ।

स्वाभिमतं पक्षं प्रतिजानीते[1]— "तद्धिति। असम्नयने कारणं स्मारयन् पुनराक्षिपति— "नन्वत्रान्तरेणेति। 'ननु' 'अत्र' विषये 'अन्तरेण' मध्ये एव श्रुतवन्तः स्म। कथम्? 'नु' निश्चयेन 'मा' मा मिन्द्रं 'सोमेन' 'याजयत', 'अथ' पश्चात् 'मे' मम 'एतत्' साम्नाय्यलक्षणम् 'आप्यायनम्' 'भरिष्यथ?'-'इति' इन्द्रेणोक्तं वचन मिति। स्वाभिमतसम्नयनपक्षे पूर्वोदाहृतं वाक्यं प्रमाणत्वेन पुनः श्रावयन्निगमयति[2]— "न वै मेद मित्यादिना। पूर्ववद्व्याख्येयम्[3]। अतः सम्नयेदिति स्वपक्षनिगमनम् ॥ ११ ॥

अमावास्योपवासस्य कालं विधित्सुः पुराकल्प माह— "वार्त्रघ्नं वा इति। पौर्णमास्यां क्रियमाणं यद्धविरस्ति, तद् 'वार्त्रघ्नं' वृत्रहननसम्बन्धि; वृत्रहननाय तदन्तर्गतनिगमनावसरे एकादशकपालोपांशुयाजहविषोः प्रदानात्। हननसाधनत्व मेव दर्शयति— "इन्द्रो ह्येति। आमावास्यन्तु हविः 'वृत्रहत्यं' वृत्रहनन मेव; वृत्रं हतवत इन्द्रस्याप्यायनार्थं कृतत्वात् ॥ १२ ॥

वक्ष्यमाणोपायेण वृत्रशब्दार्थ माह— "तद्वा एतदिति। उक्तप्रकारेण 'पौर्णमासं' हविः 'वार्त्रघ्नम्'। "चन्द्रमा इति। स यथास्थित एव 'वृत्रः'; "तस्य यत् सौम्यं न्यक्त मास, तं चन्द्रमसं चकार"-इतिप्रागुक्तत्वात्[4]। 'सः' उक्तरूपो वृषः 'यत्र' यस्मिन्

---

१— "स्वाभिमतं पक्ष माह—"-इति ढ।

२— 'इन्द्रेणोक्तं वचनं तत्प्रमाणत्वेन पुनः श्रावयन् निगमयति'-इति ढ।

३— इहैव श्रुता सप्तमी कण्डी ( ४५२ पृ० ) द्रष्टव्या।

४— ४१७ पृ० ६-पङ्क्तिमध्यतो द्रष्टव्यम्।

दिवसे 'पुरस्तात् पश्चात्' च 'न' दृश्यते, 'तत्' तेन 'एनं' वृत्रम् 'एतेन' हविषा 'सर्वं' साकल्येन 'हन्ति', 'न किञ्चन' अवशेषयति। अतः सर्वपापक्षयाय चन्द्रदर्शनरहितायां शुद्धामावास्याया मेवोपवसेदित्यर्थः ॥

उक्तार्थज्ञानं प्रशंसति— "सर्वं ह वा इति ॥ १२ ॥

उपवासतिथिविषये केषाञ्चित्पक्ष माह— "तद्धैक इति। केचन चन्द्रदर्शनयुक्तायां चतुर्दशीयुक्तामावास्याया मेवोपवसन्ति। एषा मभिप्राय माह— 'श्वः' परस्मिन्नहनि 'नोदेतेति' अव्यवहिते एव भविष्यति काले उदयं न प्राप्नोतीति ; अतोऽदर्शनोपवासपक्षो न युक्त इत्यभिप्रायः। तत्पक्षे को लाभ इत्यत आह— "अदो हैवेति। 'अदः' अविप्रकृष्टं प्रत्यक्षं चन्द्राख्यं[1] खलु 'देवाना मविक्षीण मन्नं भवति' ; अतो यथा न विक्षीणं भवेत्, तथा ( कर्त्तव्यम् )। 'अथ' चन्द्रक्षयसमनन्तर मेव 'एभ्यः' देवेभ्यो 'वयम्' 'इतः' लोकात् 'प्रदास्याम इति'। अविक्षीणत्व मेव दर्शयति— "तद्धीति। पूर्वार्जितान्नेऽवशिष्टे पुनरन्नसञ्चये सत्यन्नसातत्यात् 'तत् सम्टद्धम्' तथाविधान्न एव प्रवृद्धान्नो भवति। तस्मात् चन्द्रदर्शनयुक्ततिथा-वेवोपवासो युक्त इति ॥

दृष्टोपवासपक्षे दोषाभिधानपुरःसर मदर्शनोपवास मेव समर्थ-यते— "असोमयाजी त्वित्यादिना। 'तु'-शब्दः पक्षं व्यावर्त्तयति। 'असोमयाजी चीरयाजी भवति' ; स मेव नयेदिति निगमित-त्वात्। 'अदो हैव' आकृतं चीर मेव लोकान्तरवर्त्ति सत्, 'सोमो

---

१— 'चन्द्रारथं ( ? थ A. ?)'–इति ढ।

राजा भवति'; "स एष आकृतिभ्यो जातः पश्चाद् ददृशे"–इति वक्ष्यमाणत्वात्[1] ॥ १४ ॥

अस्तु, ततः किमित्यत आह– "अथ यथैवेति। 'यथा' 'पुरा' चन्द्रस्यौषध्युदकेषु प्रवेशरहितकाले, अमावास्यातः पूर्वदिवसे इत्यर्थः। तत्र यथा गावः 'केवलीः' चन्द्रानुप्रवेशरहिताः 'ओषधीः' 'अपः' च आहारं कृत्वा, 'केवलं' चन्द्ररहितम् 'एव' 'पयो दुह्रे' दुह्रते[2]। "लोपस्त आत्मनेपदेषु"–इति[3] त-लोपः, "बहुलं छन्दसि"–इति[4] रुट्। 'एवं' 'तत्' चौरयजनं भवति; चन्द्रानुप्रवेशरहितं केवलं भवतीत्यर्थः। अतो दृष्टोपवासे चन्द्रस्यौषधीष्वननुप्रवेशेन केवलत्वात् तदानीं चौरस्य चन्द्रात्मकात्वाभावात् स पक्षो न युक्त इत्यर्थः। अस्तु, को दोष इत्याशङ्क्यावश्यं चन्द्रानुप्रवेशता चौरेण भवितव्य मित्याह– "एष वा इति। एतत् सान्नाय्यब्राह्मणवद् व्याख्येयम्[5]। 'एनम्' अमावास्याया मप्स्वोषधीष्वनुप्रविष्टम् ताभ्यः 'आकृतिभ्यः' सकाशात् चौररूपेण 'सम्भृत्य' 'अधिजनयति' पुनरुत्पादयति चौरयाजी। 'स एषः' असुं लोक मागतः, पुनराकृतिद्वारा[6] अन्तरिक्षे उत्पन्नः, 'पश्चात्' प्रतीच्यां दिशि 'ददृशे' दृश्यते ॥ १५ ॥

"तद्वा एतदिति। 'तत्' एतच्चन्द्राख्य मन्नं 'परिप्लवते' परि-

---

१— परस्या मेव कण्डिकायाम् (१५पं०)। मूलन्तु ४४७पृ० १६पं० द्रष्टव्यम्।
२— धा० पा० अदा० उ० ४। ३— पा० सू० ७. १. ४१।
४— पा० सू० ७. १. ८। ५— मूलम् ४४५ पृ० ८ पं०; तद्व्याख्यानम् ४५१ पृ० द्रष्टव्यम्। ६— '०द्वारेण'–इति ढ।

भ्रमति। उक्तार्थज्ञानं प्रशंसति— "अविक्षीणं ह वा अस्यास्मिन्निति ॥ १६ ॥

अन्नस्याविक्षीणत्वाच्च सान्नाय्यस्यावश्यं दातव्यता माह— "तद्वा एतां रात्रि मिति। चन्द्रोपक्षय एवान्नप्रच्यवः; च्युतस्य च भूलोकप्रवेश उक्तः; प्रच्युतश्च तदन्नं तथैव प्रणाश मप्राप्य यथा पुनरागच्छेदिति कामयित्वा सान्नाय्ययाजिष्वेतेऽस्माकं क्षीररूपेण पुनः सम्पाद्य दास्यन्तीत्याशंसां कुर्वन्ति। अतोऽवश्यं चन्द्रदर्शनरहिततिथौ सान्नाय्यं कर्त्तव्य मित्यर्थः ॥

उक्तार्थज्ञं प्रशंसति— "आह वा इति। 'निष्ट्याः' नीचाः; "समानी यस्य निष्ट्यः"-इत्यादिमन्त्रवर्णात्[1]। उक्तार्थज्ञान्निकृष्टतराः। तं ज्ञानिन मय मशनाच्छादनादिकं प्रयच्छतीत्याशंसनीयत्वं युक्त मेवेत्याह— "यो वा इति ॥ १७ ॥

चन्द्रस्य क्षयोदयकारणाभिधानव्याजेन चन्द्रदर्शनरहिता समावास्यां प्रशंसति— "तद्वा एष एवेन्द्र इत्यादिना। तपन्नादित्य एवेन्द्रः, परमैश्वर्ययोगात्। चन्द्रस्य वृत्रत्वं प्रतिपादितम्। 'स चन्द्रमाः' 'अस्य' सूर्यस्य शत्रुजन्मेव भवति। अनेन सूर्याचन्द्रमसोरिन्द्रवृत्रत्वे समर्थिते भवतः[2]। भ्रातृव्यत्वं समर्थयते— "तस्मा-

---

१— तै० ब्रा० २. ४. १. २।

२— वृत्रपदार्थनिर्णये त्वेव मुक्तं यास्केन— "तत् को वृत्रः? मेघ इति नैरुक्ताः; त्वाष्ट्रोऽसुर इत्यैतिहासिकाः; अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्त्यहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च; विवृद्ध्या शरीरस्य स्रोतांसि निवारयाञ्चकार, तस्मिन् हते प्रसस्यन्दिर आपः"-इत्यादि निरु० २. ५. २।

दिति। यस्मादयं तस्य भ्रातृव्यः, 'तस्मात्' 'पुरा' अमावास्यातः पूर्वदिवसेषु अत्यन्तं दूरं यथा भवति तथा 'उदितः' अपि 'अथैनं' सूर्याख्य मिन्द्रं प्रति 'एतां रात्रिम्' अमु ममावास्यादिवसं प्रति 'उपैव' समीपे एव 'न्याप्लवते' आगच्छति। अथ 'सः' एव 'अस्य' इन्द्रस्य 'व्यात्तं' विवृतं मुखं प्राप्नोति ॥ १८ ॥

"तं ग्रसित्वेति। 'तं' मुखान्तर्गतं ग्रचुं गिरन्नेव सूर्य उदेति। 'सः' तस्मिन् दिवसे 'न पुरस्तात्' दृश्यते। उक्तार्थञ्च प्रशंसति— "ग्रसते ह वा इति। चन्द्राख्यभ्रातृव्यस्यात्यन्त मदर्शनात् तद्वाचौ 'सपत्नाः न सन्ति' एव 'इत्याहुः' ॥ १९ ॥

एवं सपत्नं चन्द्रं निःशेषेण पीत्वा पुनर्निर्गमयति— "तं निष्ठीव्येति। पूर्वस्यां दिशि भक्षितः, 'पश्चाद्' भागे निर्गतो रेखामात्रो दृश्यते; 'सः' च 'पुनः' कलाक्रमेण तस्यैव सूर्यस्याप्लाय प्रवर्द्धते ॥

ज्ञातुः फल माह— "यदि हेति। 'अस्य' ग्रचुरपि अनेन हृतधनोऽपि कृषिवाणिज्यादिकया कयाचिद्वृत्त्या समृद्धो भवन् 'एतस्य' ज्ञातुरन्नार्थ मेव वर्द्धते ॥ २० ॥

सान्नाय्यस्येन्द्रत्व माख्यायिकया प्रतिपादितम्, तत्र केषाञ्चित्पक्ष मुपन्यस्य पुनरिन्द्रत्व मेव सिद्धान्तयति— "तद्धैक इति। 'तत्' सान्नाय्यम्। महेन्द्रत्वे कारण माह— "एष पुरेति। पूर्वं केवल मिन्द्रः सन्नपि; यथा कश्चिद्राजमात्रः सन् पश्चाच्छत्रून् जित्वा महाराजतां प्राप्नोति। यत एवं वृत्रं हत्वा महेन्द्रोऽभवत्, अत एवं युक्त मित्यर्थः। स्वपक्षे युक्ति माह— "वृत्रस्य वधादिति।

वृत्रवधात् प्राक् यतोऽयं केवलः 'इन्द्रः', तथाविध एव स 'वृत्रं' हतवान्; अतः पश्चादागतं महत्व मप्रयोजक मिति 'इन्द्रायेत्येव कुर्यात्' इति ॥ २१ ॥ ३ ॥ [६. ४.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ६ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरीँस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां हेमवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पाचसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहा-
राजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये
वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथम-
काण्डे षष्ठाध्यायः समाप्तः ॥ ६ ॥

---

*

[ अथ सप्तमाध्याये प्रथमं ब्राह्मणम् ]



स वै पर्णशाखया वत्सानपाकरोति। तद्यत्पर्ण-शाखया वत्सानपाकरोति यत्र वै गायत्री सोम मच्छा-पतत्तदस्या ऽआहरन्त्या ऽअपादस्ताभ्यायत्य* पर्णं प्रचि-च्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्वा पर्णो† ऽभवत्तस्मात्पर्णो नाम तद्यदेवात्र सोमस्य न्यक्तं तदि-हाप्यसदिति तस्मात्पर्णशाखया वत्सानपाकरोति ॥ १ ॥

ता‡ माच्छिनत्ति। इषे त्वोर्ज्जे त्वेति वृष्ट्यै तदाह यदाहेषे त्वेत्यूर्ज्जे त्वेति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह ॥ २ ॥

अथ मातृभिर्व्वत्सान्समवार्ज्जन्ति। स वत्सᳬ शाख-योपस्पृशति वायव स्थेत्ययं वै वायुर्योऽयं पवत ऽएष वा ऽइदᳬ सर्व्वं प्रप्याययति यदिदं किञ्च वर्षत्येष वा ऽएतासां प्रप्याययिता तस्मादाह वायव स्थेत्युपायव

---

* 'अपाधुस्ताभ्यायत्य'—इति सा०-सम्मत इति डा०-वेवरः।

† 'स पर्णो'—इति ख। ‡ 'त'—इति च।

स्येत्यु हैक आहुरुप हि द्वितीयोऽवतीति* तद् तथा न ब्रूयात् ॥ ३ ॥

अथ मातॄणा मेकाꣳ शाखयोपस्पृशति। व्वत्सेन व्याकृत्य देवो वः सविता प्रार्प्पयत्विति सविता वै देवानां प्रसविता सवितृप्रसूता यज्ञꣳ सम्भरानिति तस्मादाह देवो वः सविता प्रार्प्पयत्विति ॥ ४ ॥

श्रेष्ठतमाय कर्म्मण ऽइति। यज्ञो वै श्रेष्ठतमं कर्म्म यज्ञाय हि तस्मादाह श्रेष्ठतमाय कर्म्मण ऽइति ॥ ५ ॥

आप्यायध्व मघ्न्या ऽइन्द्राय भाग मिति। तद्यथैवादो देवतायै हविर्ग्गृह्णन्नादिशत्येव मेवैतद्देवताया ऽआदिशति यदाहाप्यायध्व मघ्न्या ऽइन्द्राय भाग मिति ॥ ६ ॥

प्रजावतीरनमीवा ऽअयक्ष्मा ऽइति। नात्र तिरोहित मिवास्ति मा व स्तेन ऽईशत माघशꣳस ऽइति मा वो नाष्ट्रा रक्षाꣳसीशतेत्येवैतदाह ध्रुवा ऽअस्मिन् गोपतौ स्यात बह्वीरित्यनपक्रमिण्योऽस्मिन् यजमाने बह्व्यः स्यातेत्येवैतदाह ॥ ७ ॥

अथाहवनीयागारस्य वा पुरस्तात्। गार्हपत्यागारस्य वा शाखा मुपगूहति यजमानस्य पशून् पाहीति तद् ब्रह्मणैवैतद्यजमानस्य पशून् परिददाति गुप्त्यै ॥ ८॥

---

* 'द्वितीयोऽयतीति'—इति च।

तस्यां पवित्रं करोति। व्वसोः पवित्र मसीति यज्ञो वै व्वसुस्तस्मादाह व्वसोः पवित्र मसीति ॥ ९ ॥

अथ यवाग्वैताᳬं रात्रि मग्निहोत्रं जुहोति। आदिष्टं वा ऽएतद्देवतायै हविर्भवति यत्पयः स यत्पयसा जुहुयाद्यथान्यस्यै देवतायै हविर्गृहीतं तदन्यस्यै जुहुयादेव तत्तस्माद्यवाग्वैताᳬं रात्रि मग्निहोत्रं जुहोति जुह्वत्यग्निहोत्र मुपक्लृप्तोखा भव*त्यथाहोपसृष्टां प्रब्रूतादिति यदा प्राहोपसृष्टेति ॥ १० ॥

अथोखा मादत्ते। द्यौरसि पृथिव्यसीत्युपस्तौत्येवैना मेतन्महयत्येव यदाह द्यौरसि पृथिव्यसीति मातरिश्वनो घर्म्मोऽसीति यज्ञ मेवैतत्करोति यथा घर्म्मं प्रवृञ्ज्यादेवं प्रवृणक्ति व्विश्वधा ऽअसि परमेण धाम्ना दृᳬंहस्व माह्वारिति दृᳬंहत्येवैना मेतदशिथिलां करोति मा ते यज्ञपतिर्ह्वार्षीदिति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदह्वला माशास्ते ॥ ११ ॥

अथ पवित्रं निदधाति। तद्वै प्राङ् निदध्यात्प्राची हि देवानां दिगथो ऽउदगुदीची हि मनुष्याणां दिगयं वै पवित्रं योऽयं पवते सोऽय मिमांल्लोकांस्तिर्यङ्ङनुपवते तस्मादुदङ् निदधात् ॥ १२ ॥

---

* '०खा भव'—इति डा०-वेवरेण च दृष्टः। च-पाठस्तु '०खा भव'—इति।

तद्यथैवादः । सोमꣳ राजानं पवित्रेण सम्पावयन्त्येव मेवैतत्सम्पावयत्युदीचीनदशं वै तत्पवित्रं भवति येन तत्सोमꣳ राजानꣳ सम्पावयन्ति तस्मादुदङ् निदध्यात् ॥ १३ ॥

तन्निदधाति । व्वसोः पवित्र मसीति यज्ञो वै व्वसुस्तस्मादाह व्वसोः पवित्र मसीति शतधारꣳ सहस्रधार मित्युपस्तौत्येवैनदेतन्महयत्येव यदाह शतधारꣳ सहस्रधार मिति* ॥ १४ ॥

अथ व्वाचंयमो भवति । आ तिसृणां दोग्धोर्व्वाग्वै यज्ञो व्विक्षुब्धो यज्ञं तनवा ऽइति ॥ १५ ॥

तदानीयमान मभिमन्त्रयते । देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्वेति तद्यथैवादः सोमꣳ राजानं पवित्रेण सम्पावयन्त्येव मेवैतत्सम्पावयति ॥१६॥

अथाह का मधुक्ष ऽइति । अमू मिति सा व्विश्वायुरित्यथ द्वितीयां पृच्छति का मधुक्ष ऽइत्यमू मिति सा व्विश्वकर्म्मेत्यथ तृतीयां पृच्छति का मधुक्ष ऽइत्यमू मिति सा विश्वधाया ऽइति तद्यत्पृच्छति व्वीर्याण्येवास्वेतद् दधाति तिस्रो दोग्धि त्रयो वा ऽइमे लोका ऽएभ्य ऽएवैनदेतल्लोकेभ्यः सम्भरत्यथ कामं व्वदति ॥ १७ ॥

---

* 'मिति'—इति क, ख ; 'मिति'—इति ग ।

अथोत्तमां दोहयित्वा। येन दोहयति पात्रेण तस्मिन्नुदस्तोक मानीय पल्युङ्ग्य* प्रत्यानयति यदत्र पय-सोऽहायि तदिहाप्यसदिति रसस्यो चैव सर्व्वत्वायेदं हि यदा व्वर्षत्यथौषधयो जायन्त ऽओषधीर्जग्ध्वापः पीत्वा तत ऽएष रसः सम्भवति तस्माद्रसस्यो चैव सर्व्वत्वाय तद्वास्यातनक्ति तीव्रीकरोत्येवैनदेतत्तस्मा-द्वास्यातनक्ति ॥ १८ ॥

स ऽआतनक्ति। इन्द्रस्य त्वा भागं सोमेनातन-च्मीति तद्यथैवादो देवतायै हविर्गृहीत्वानादिशत्येव मेवै-तद्देवताया ऽआदिशति यदाहेन्द्रस्य त्वा भाग मिति सोमेनातनच्मीति स्वदयत्येवैनदेतद्देवेभ्यः ॥ १९ ॥

अथोदकवतोत्तानेन पात्रेणापिदधाति। नेदेनदुप-रिष्टान्नाष्ट्रा रक्षांस्यवमृशानिति व्वज्रो वा ऽआपस्तद्व-ज्रेणैवैतन्नाष्ट्रा रक्षांस्यतोऽपहन्ति तस्मादुदकवतोत्ता-नेन पात्रेणापिदधाति ॥ २० ॥

सोऽपिदधाति। व्विष्णो हव्यं रक्षेति यज्ञो वै व्विष्णुस्तद्यज्ञायैवैतद्धविः परिददाति गुप्त्यै तस्मादाह व्विष्णो हव्यं रक्षेति ॥ २१ ॥ ४ ॥

॥ इति पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् [७. १.] ॥

---

* 'पल्युङ्ग्य'—इति च।

॥ श्रीगणेशाय नमः ॥

प्रधानयागः सकलः साख्यानः सम्यकीर्त्तितः ।
प्राधान्येनाथ तद्धर्मा निरूप्यन्तेऽथ[1] सप्तमे ॥ ७ ॥

तत्रादौ सन्निहितत्वात् सान्नाय्यधर्माः[2] प्रथम मुच्यन्ते । तत्र वत्सापाकरणाय शाखाच्छेदं[3] विधास्यन् तदुचितं शाखायाः पर्णत्वं सार्थवाद माह— "स वै पर्णशाखयेति । 'सः' वत्साना मपाकर्त्ता । शाखायाः पर्णत्वं प्रशंसितु मनुवदति— "तद्यत्पर्णशाखयेति । 'यत्र' यस्मिन् देशे 'गायत्री' पक्षिरूपेण 'सोमम्' अभिलक्ष्य आनयनाय अगच्छत्, 'तत्' 'अस्याः आहरन्त्याः[4]' 'अपाधस्ता[5]' अधस्तात् प्रदेशे

१— 'निरूप्यन्तेऽत्र'—इति ज ।

२— "अग्नीषोमीय एव पौर्णमासं हविः सान्नाय्य मामावास्यम्"—इति ४०६ पृ० । "स प्रजापतिः पशूनब्रवीदेतदस्मै सन्नयतेति, तत् पशव ओषधीभ्यो ऽध्यात्मन्त्समनयन्; तत् प्रत्यदुहन्; यत् समनयन्, तत् सान्नाय्यस्य सान्नाय्यत्वम्"—इति तै० सं० २. ५. ३. ३ । तदेतस्मात् पशुपयसां सान्नाय्यत्व मवगम्यते । गोरस इति, एतद्ब्राह्मणवचन-व्याख्यायां सायणः । 'सान्नाय्यं दधिपयोलक्षणम्'—इति चात्रैव (११. २. ६. ६.) भाष्ये सायणः । 'सम्यङ् नीयते होमार्थ मग्निं प्रति इति सान्नाय्यं हविर्विशेषः'—इति पा० ३. १. १२६—सूत्रवृत्तौ दीक्षितः । 'सान्नाय्यं दुग्धदधिरूपं हविः'—इति कात्या० औ० ४. २. १७—सूत्र-वृत्तौ याज्ञिकदेवस्य । "सोमः खलु वै सान्नाय्यम्"—इति तै० ब्रा० ३. २. ३. ११ । सान्नाय्यविधानादिकं सर्वञ्चैतः पूर्वस्मिन् ब्राह्मणे ४–११ कण्डीषु द्रष्टव्यम् । ३— 'वत्सापाकरणार्थशाखाच्छेदं'—इति ढ ।

४— 'आनयनायागच्छन्नाहरन्त्याः'—इति ज, ढ ।

५— 'अपादस्ता'—इति बङ्गमूलपाठः; 'अपावस्ता'—इति च भाष्यपाठो डा०-वेवरेण दृष्टः । वस्तुतो 'अपादस्ता' अप-अदस्तम्, अनुपक्षीण मित्यर्थः स्यात् साधुः । तै० आ० ४. १. २, तै० ब्रा० ३. २. ३. १२ द्रष्टव्यम् ।

'अभ्यायत्य' यत्[1] 'पर्णं', तत्[2] 'प्रचिच्छेद'। कस्येत्याह— "गायत्र्यै वा, सोमस्य वा राज्ञ इति। 'वा'-शब्दश्चार्थे, 'गायत्र्याः' 'सोमस्य' चेत्यर्थः; अननुष्ठानत्वेन विकल्पस्यानुचितत्वात्। पतितात् पर्णात् उत्पन्नः पलाशः, तस्य 'पर्णत्वम्'[3]। अस्त्वेवं तथाप्यस्यैव शाखाकरणे कोऽभिप्राय इत्यत आह— "तद्यदेवेति। 'तस्मात्' सोमांशस्यैव सम्पादितप्रायत्वात् 'पर्णशाखया' एव माहात्म्यः सकाशात् 'वत्सान्' 'अपाकुर्यात्' पृथक् कुर्यात्[4]। कात्यायनस्तु शमीशाखा मपि विकल्पेनाचावोचत्— "पर्णशाखां छिनत्ति शामीलीं वा"-इति[5]। "शम्याः ष्लञ्"-इति[6] विकारेष्वपि ॥ १ ॥

इदानीं छेदने मन्त्रं[7] विधत्ते— "ता मिति। "तदिति। इष्यत इतीट्। यदिट्, तद्वाक्य मित्यर्थः। पृथग्-योगस्य विवक्षितत्वात् वाक्ययोरपि पौर्वापर्यं विवक्षित मिति गम्यते। स्पष्ट मन्यत् ॥

सूत्रकारस्तु मन्त्रभेदपक्ष मप्यङ्गीकृत्य शाखाच्छेदे एव विकल्पितम्, छेदनसन्नमनयोर्वेति योगभिन्नतां चाह— "पर्णशाखां

---

१, २— ज-ठ-पुस्तकयोरिह यत्तत्पदे न दृश्येते।

३— 'तस्य पर्णत्वम्'—इति ठ-पुस्तके नास्ति।

४— 'सम्पादितप्रायत्वात् अस्यैव शाखाच्छेदनम्'—इत्येव ठ।

५— का० श्रौ० सू० ४. २. १। "इषे त्वोर्जे त्वेति वा"—इति तत्र तच्छेषः ( वा० सं० १. १. १, २. )। "उभयोर्मन्त्रयोश्छेदने विधानात् करणमन्त्रत्वेन समुच्चयासम्भवाद् विकल्पः"—इति तत्र या० दे०।

६— पा०सू० ४. ३. १४२। ७— वा०सं० १. १. १ (१, २ वा.)।

छिनत्ति शामीलीं वेषेत्वेति, ऊर्जे त्वेति वा, छिनद्मीति वोभयोः साकाङ्क्षत्वात्, सन्नमयामीति वोत्तरे"-इति[1] ॥ २ ॥

अथ वत्सानां मातृसंयोजनम्। तत्रैकस्य शाखया समन्त्रक मुपस्पर्शनमाह– "अथ मातृभिरिति। 'समवार्जन्ति' संयोजयन्ति। हे वत्स! गावश्च! यूयं 'वायवः स्थ' प्रवर्द्धकत्वेन वायुसम्बन्धाद् यूय मपि वायवो भवथेति मन्त्रार्थः[2]। कथ मेतेषां वायुत्वव्यवहार इति तत्समर्थनायाह– "अयं वा इत्यादि। वायोर्गवां वर्द्धकत्व-समर्थनाय सर्वजगद्वर्द्धकता माह– "एष वा इदं सर्व मिति। एतन्मन्त्रशेषत्वेन[3] शाखान्तरे पठितं[4] मन्त्र मनूद्य निराचष्टे– "उपायव स्थेत्यु हैक इति[5]। यदेनं भागं ब्रूयात्, यजमानस्य 'द्वितीयः' शत्रुरुपागच्छति, अतो 'न ब्रूयात्' ॥३॥

प्रस्तुतानां गवां मध्ये एकस्याः वत्सात् पृथक् स्पर्शनम्, तन्मन्त्रं[6] चाह– "अथ मातृणा मिति। 'वत्सेन' 'व्याहृत्य' पृथक्कृत्य। प्रेषणकर्मणि सवितुः प्रयोजकत्वे कारण माह– "सविता वा इति। 'यज्ञं' यज्ञसाधनं क्षीरम्, तत् 'सम्भरान्' सम्भरेयुः ॥ ४ ॥

किं तत् श्रेष्ठतमं कर्म? इति, तदाह– "यज्ञो वा इति। साक्षात्स्वर्गसाधनत्वादितरकर्मभ्यः 'श्रेष्ठतमत्वम्' ॥ ५ ॥

---

१— का० श्रौ० सू० ४. २. १, २, ३।
२— वा० सं० १. १. २ ( ३ वा. )। का० श्रौ० सू० ४. २. ७।
३— नास्त्येतद्विशेषणं ठ-पुस्तके।
४— तै० सं० १. १. १; तै० ब्रा० ३. २. १ द्रष्टव्यम्।
५— तै० सं० १. १. ३। का० श्रौ० सू० ४. २. ८।
६— वा० सं० १. १. ३. ( ४ वा. )। का० श्रौ० सू० ४. २. ९।

मन्त्रभागे यद्देवताविशेषनामनिर्द्देशपूर्वक मादेशनम्, तत्प्रशंसति— "आप्यायध्व मघ्निया[१] इति। यथा अग्नये हविर्ग्रहणादौ अग्नये जुष्ट मितीति[२] नामविशेषतो देवतादेशनं क्रियते, तद्वदिद मपि पाठेनैव कृतं भवतीत्यर्थः[३] ॥ ६ ॥

"प्रजावतीरित्यादि। स्पष्टार्थता माह— "नात्रेति। 'मा वः'-इत्यस्य मन्त्रभागस्य तात्पर्य माह— "नाष्ट्रेति। 'नाष्ट्रा' नाष्ट्राणि नाशकारीणि, 'रक्षांसि'। रक्षितव्याभ्य इति रक्षणापादानभूतानि स्तेनव्याघ्रादीनि 'नाष्ट्रा'। ध्रुवशब्दगोपतिशब्दयोरर्थ माह— "ध्रुवा अस्मिन्निति ॥ ७ ॥

शाखागुह्यप्रदेशविशेषम्, तत्र समन्त्रकं गूहनन्नाह— "अथाहवनीयागारस्येति। अग्निपुरोदेशे स्थापयन्नध्वर्युः अमुं मन्त्रं ब्रूयात्— "यजमानस्येति[४]। हे शाखे! त्वं 'यजमानस्य पशून्' रक्ष। एतन्मन्त्रपाठतात्पर्य माह— "तद्ब्रह्मणैवेति। एतन्मन्त्रपाठेन शाखायै पशूनां परिदानम्, तदधीनत्वेन रक्षणार्थम् ॥ ८ ॥

इदानीं दोहनार्थं शाखायां समन्त्रकं[५] पवित्रबन्धनं विधत्ते— "तस्यां पवित्र मिति। (दोहनार्थं[६]) 'तस्यां' शाखायां 'पवित्रं'

---

१— 'अघ्नियाः'-इति तैत्तिरीयपाठः; अत्रत्यपाठस्तु 'अघ्न्याः'-इत्येव।

२— पुरस्तात् ( ३८ पृ० ७ पं० ) १. २. १७ द्रष्टव्यम्।

३— "ऐन्द्रं भवति माहेन्द्रं वा"-इति का० श्रौ० सू० ४. २. १०।

४— वा० सं० १. १. ४. ( ५ वा. )। का० श्रौ० सू० ४. २. ११।

५— वा० सं० १. २. १। का० श्रौ० सू० ४. २. १५।

६— नास्त्येतत् पदं ढ-पुस्तकादन्यत्र।

कुशद्वयात्मकं त्रिवृतं वा 'करोति' बध्नीयात्। तथाच सूत्रम्— "वसोः पवित्र मिति पवित्र मस्यां बध्नाति कुशौ, त्रिवृद्वा"-इति[1]। 'वसु'-शब्दार्थ माह— "यज्ञो वा इति। पुनात्यनेनेति[2] 'पवित्रम्'[3], तस्मिन्नित्यर्थः ॥ ९ ॥

अमावास्यायां रात्रौ सन्नयतः चौरस्यान्नार्थत्वेन नियोगात् अग्निहोत्रस्य द्रव्यान्तरं विधत्ते— "अथ यवाग्वेति। एतच्छब्दार्थ माह— "यत्पय इति। विपक्षबाधपुरःसरं स्वपक्ष मुपसंहरति— "स यत्पयसेति। इन्द्रार्थस्य दुग्धस्य अग्न्यर्थत्वस्याप्युक्तत्वात्। यद् यवाग्वैव होतव्यम्। "यवाग्वाग्निहोत्रहोमः सन्नयतः"-इति[4] कात्यायनः। "जुहोत्यग्निहोत्र मिति। दोहकालोपलक्षणार्थम्, जुहोतिसमकालम्; तद्धोमे परिसमाप्त एव 'उखा' सान्नाय्यस्थाली सा अध्वर्युणा अपणप्रदेशे 'उपक्लृप्ता' भवति। तस्याः समानयनानन्तरम् 'उपसृष्टां' वत्सेन सङ्गताम् 'प्रब्रूतात्'-'इति' दोग्धारं प्रत्यध्वर्युः। 'यदा' उपसृष्टा, तदा 'उपसृष्टेति' दोग्धा 'प्राह' ब्रूयादित्यर्थः। दोग्धा च शूद्रव्यतिरिक्तो भवेत्; "वाग्यतो दोहयत्यशूद्रेण"-इतिसूत्रात्[5] ॥१०॥

---

१— का० श्रौ० सू० ४. २. १५, १६। २— पा० सू० ३. २. १८५।

३— "त्रिवृद्दर्भमयं पवित्रम्"—इत्यापस्तम्बः। "हस्तप्रादेशमात्रं तु त्रिवृत् कृत्वा पवित्रकम्"—इति। पवित्रं वेण्याकार मिति केचित्। नवकुशवेणी मिति श्रीअनन्तः। वस्तुतो द्वे साग्रे दर्भतृणे पवित्रं कर्त्तुं शाखायां बध्नाति, कुशत्रयस्य रज्वाकारं कृत्वा वा बध्नातीति सम्प्रदायः।

४— का० श्रौ० सू० ४. २. १७। तण्डुलैः शिथिलपक्का यवागूरित्युच्यते।

५— का० श्रौ० सू० ४. २. २२। 'अशूद्रेण=त्रैवर्णिकेन'—इति माधवः।

अध्वर्योः समन्त्रकं[1] स्थाल्यादानं विधत्ते– "अथोखा मिति। उखायाः द्यु-पृथिव्यात्मकत्वस्य कदाचिदप्यसम्भवात् उपस्तुतिमात्र मिद मित्याह– "उपस्तौत्येवेति। सापि किमर्थेत्यत आह– "महयत्येवेति। स्तुत्या पूजनं लोके प्रसिद्धम्। अधिश्रयणे मन्त्र[2] माह– "मातरिश्वन इति। 'मातरि' अन्तरिक्षे श्वसतीति 'मातरिश्वा' वायुरादित्यो वा[3]। तस्य घर्मस्त्वमसि; तेन दीप्यमानत्वात्। एतत्पाठेन 'यज्ञ मेव' कृतवान् भवति। तत्कथ मिति, तदुपपादयति– "यथेति। यज्ञे 'यथा' 'घर्मं' प्रवर्ग्यं 'प्रवृञ्ज्यात्', 'एवं' स्थाल्यधिश्रयणेन 'प्रवृणक्ति' प्रवर्ग्यं कृतवान् भवति; अतो यज्ञसम्पादनम्। "विश्वधायाः"-इतिमन्त्रभागस्य तात्पर्याभिधानं स्पष्टम्। "मा ते"-इतिमन्त्रभागे 'यज्ञपति'-शब्दार्थ माह– "यजमानो वा इति। 'ह्वला' नाशः, तदभावम् 'आशास्ते'– 'मा ह्वार्षीत्'-इत्यनेन। "ह्वृ कौटिल्ये"-इति[4] धातुः॥ ११॥

अथ पवित्रस्थापनं तदयनियमञ्चाह– "अथ पवित्र मिति। वत्सापाकरणानन्तरं यत् शाखापवित्रं कृतम्, तत् प्रागग्रं स्थाल्यां 'निदध्यात्'। दैव्यस्य पवित्रस्य देवदिगाभिमुख्यं युक्तम्; प्राच्या इन्द्राधिष्ठितत्वात्, इन्द्रस्य च सर्वदेवतात्मकत्वात्, तद्दैवत्यं पवित्रम्। दिगन्तर माह– "अथोदीची हीति। उत्तरस्यां प्रायेण मनुष्यप्राचुर्यात्। किञ्च यस्माज्जगत्पवित्रभूतो वायुरपि 'तिर्यङ्ङनुपवते'

---

१— वा० सं० १. २. २। का० श्रौ० सू० ४. २. १९।

२— वा० सं० १. २. ३। का० श्रौ० सू० ४. २. २०।

३— निरु० ७. ७. ४ द्रष्टव्यम्। ४— धा० पा० भ्वा० प० ९३१।

तिर्यग् गच्छति; अतोऽस्यापि पवित्रत्वात् तत्सौम्याय 'उदङ् निदध्यात्' ॥ १२ ॥

सान्नाय्यस्य सोमात्मकत्वात् तत्पवनसाधन-दशापवित्रवदस्या-प्युदग्यत्वं युक्त मिति स-दृष्टान्त माह— "तद्यथैवाद इति ॥ १३ ॥

पवित्रनिधानस्य मन्त्र माह— "तन्निदधाति वसोरिति[1] ॥१४॥

मौनकालनियमावधि माह— "अथेति। 'तिसृणां दोग्धोः' तिसृणां गवां दोहावधि। 'वाचा' मन्त्रेण साध्यत्वात् 'वाग्= यज्ञः'। अथ वाक्शब्देन नियता वाक् विवक्षिता। वाचि यज्ञो-पयोगिन्यां सत्यां मनसि विक्षेपो भवति, तत्परिहाराय वाङ्-नियमविधानम्[2] ॥ १५ ॥

पयस आसेचनसमये अध्वर्योर्जपं विधत्ते[3]— "तदानीयमान मिति। 'अभिमन्त्रणम्' आभिमुख्येन जपः; "आसिच्यमाने जप-तीतिसूत्रात्[4]। 'सुप्वा' सुष्ठु-पवित्रेण पावयित्वा। स्पष्ट मन्यत् ॥१६॥

"अथाहेति। अध्वर्युः प्रथमायां गवि दुग्धायां 'कां' गाम् 'अधुक्षः' दुग्धवानसीति[5] ब्रूयात्। सोऽपि दोग्धा गङ्गां गौरी मिति दुग्धाया गोर्नाम मिति निर्दिशेत्। अथ सोऽध्वर्युस्तां 'सा विश्वायुः'- 'इति' ब्रूयात्[6]। एव मुत्तरयोरपि व्याख्या। 'विश्वायुः' बहुत्ना,

---

१— वा० सं० १. ३. १। का० श्रौ० सू० ४. २. २१।

२— 'वाग्यमविधानं'—इति ज।     ३— 'अध्वर्युर्जपति'—इति क।

४ — का० श्रौ० सू० ४. २. २३। तत्र मन्त्रः — वा० सं० १. ३. २।

५— का० श्रौ० सू० ४. २. २४। तत्र मन्त्रः — वा० सं० १. ३. ३।

६— वा० सं० १. ४. १। का० श्रौ० सू० ४. २. २५।

बहुक्षीरेत्यर्थः। 'विश्वकर्मा' बहुत्वनिसाधनदोहकर्मोपेता[1]। 'विश्वधायाः' धीयत इति 'धायाः' अन्नम्, बहन्ना[2]। एवं प्रश्नपूर्वकं तासां गुणकथनेन तासु वीर्य मवस्थापयति। दोग्धव्यगवां सङ्ख्यां विधत्ते— "तिस्रो दोग्धीति। तिसृभ्यः क्षीरसम्भर्त्ता त्रिभ्यो लोकेभ्य एव सम्भृतवान् भवति, अतः तिस्रो दुह्यात्। अत्र "यावत् स्व मधिकारात्, तिस्रो वा नित्यत्वात्"-इत्यादि[3] सूत्रं द्रष्टव्यम् ॥

अतःपरं वाङ्नियमं विसृजेदित्याह—"अथ कामं वदतीति ॥१७॥

दोहनपात्रक्षालनोदकस्य पुनः क्षीरे समर्पण माह— "अथोत्तमा मिति। 'उदस्तोकम्' उदकविन्दुधारा मित्यर्थः। 'पल्यङ्ग्य[4]' परितो गमयित्वा, दोहपात्र उदक मासिच्य प्रक्षाल्येत्यर्थः। 'पयसः' अवशिष्टं 'यत्' 'अहायि' हृत मभूत्। "तदिहापीति। 'अपि'-शब्दो भिन्नक्रमः,— तदपीह 'असत्' भवेदिति। एतत् सङ्क्षालनोदकानयनप्रयोजनम्। तदपि किमर्थ मित्यत आह— "रसस्यो चैवेति। 'उ, च, एव'-इति निपातत्रयम्। 'रसस्य' क्षीरस्यैव 'सर्वत्वाय' कात्स्न्र्याय। अस्तु नाम क्षीरांशेन सर्वत्वम्, तत्संयुक्तेन क्षालितोदकेन कथं सर्वत्व मित्युदकस्यापि क्षीरोपादानता माह— "इदं हि यदेति। परिक्षालनानयनमन्त्रः[5] सूत्रे दर्शितः—

---

१, २— वा० सं० १. ४. २, ३। का० श्रौ० सू० ४. २. २६।

३— का०श्रौ०सू० ४. २. २८, २९। अत्रादिपदेन "आदिसामर्थ्यात्"— "दर्शनाच्च"—इतिसूत्रद्वयस्य ग्रहणम् (का० श्रौ० सू० ४.२.३०, ३१.)।

४— परिपूर्वाङ्गतेः रूपमिदम्। एव मुपरिष्टादपि ३.९.२.१६ द्रष्टव्यम्।

५— आम्नातस्व सः— तै० सं० १. १. ३. १।

"परिचालन मानयति सम्पृच्यध्व मृतावरीरित्यादिना[1]। "तद्दाखेत्यादि। आतञ्चनेनैतत् चीरं तीव्रीकृतवान् भवति। तीव्रीकरणं सारत्वकरणम्। चीरादपि दध्नोर्बलकरत्वं लोके दृष्टम्,— "यन्मा धिनवत्तन्मे कुरुत"-इति ह्युक्तम्[2]। आतञ्चनद्रव्यं सूत्रकार आह— "प्राग्घृतशेषेण"-इति[3]। यवाग्वेत्यर्थः[4] ॥ १८ ॥

तत्र मन्त्र माह— "स आतनक्ति इन्द्रस्य त्वेति[5]। मन्त्रे देवतानामनिर्देशं प्रशंसति— "तद्यथेति। पूर्ववद्व्याख्येयम्[6]। सोमस्य देवताना मतिप्रियत्वात् कीर्त्तितेन एतद्द्रव्यं तेभ्यः स्वादु कृतवान् भवति ॥ १९ ॥

"अथोदकवतेति। पिधानपात्रस्योदकपूर्णत्वे प्रयोजन माह— "नेदिति। 'नेत्'-इति परिभये[7]। यद्युदकपूर्णं न कुर्यात्, न तु चीर मुपरिभागे, 'रचांसि' 'अवमृशान्' अवमृशेयुः; एतद्भयावह मित्यर्थः। कथं तत्परिहार इति तदाह— "वज्रो वा आप इति ॥ २० ॥

"सोऽपिदधातीति। पिधानमन्त्रे[8] विष्णुशब्दार्थ माह— "यज्ञो

---

१— का० श्रौ० सू० ४. २. ३२ (तै० सं० १. १. ३. १ द्रष्टव्यम्)।

२— पुरस्ताद्धृतम्—४४६ पृ० १५ प० (तै० सं० २. ५. ३. ४.)।

३, ४— का० श्रौ० सू० ४. २. ३२। दध्नेति नव्याः। "अत्र विप्रतिपत्तिः"-इत्यादिर्याज्ञिकदेवीयो ग्रन्थोऽत्रालोच्यः।

५— वा० सं० १. ४. ४।

६— इहैव षष्ठकण्डी-भाष्यं द्रष्टव्यम् (४६१ पृ०)।

७— "नेत्येष इदित्येतेन सम्प्रयुज्यते परिभये"-इति निरु० १. ३. ६।

८— वा० सं० १. ४. ५। का० श्रौ० सू० ४. २. ३४।

वा इति। स च यज्ञात्मना व्यापित्वात् 'यज्ञो विष्णुः' ॥ २१ ॥
४ ॥ [७. १.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे सप्तमाध्याये प्रथमं ब्राह्मणम्[१] ॥

---

१— "प्रतिपदि दर्शयागं चिकीर्षुरमावास्यायां प्रातरग्निहोत्रं कृत्वा दर्शयागार्थं 'ममाग्ने वर्चः'–इति मन्त्रेण अग्निषु समिदाधानरूप मन्वाधानं कृत्वा वत्सापाकरणं कुर्यात्। दर्शयागे त्रीणि हवींषि सन्ति। आग्नेयोऽष्टाकपालः, ऐन्द्रं दधि, ऐन्द्रं पय इति। तत्र प्रतिपदि दधि होतुं दध्नो निष्पत्त्यै रात्रावमावास्यायां गावो दोग्धव्याः। तद्दोह-नार्थं प्रातर्लौकिकदोहादूर्ध्वं स्वमातृभिः सह चरन्तो वत्साः स्वमातृभ्यः पलाशशाखयापाकरणीयाः। तदर्थं पलाशशाखाच्छेदनम्"–इति वा० सं० मही० भा०। अथात्र "देवो वः"–इतीम मेव, त्रीन्मन्त्रानभिप्रेत्य विनियोगत्रयं च प्रोक्त मापस्तम्बेन। तथाहि—"देवो वः सविता प्रार्पयत्विति शाखया गोचराय गाः प्रस्थापयति, प्रस्थितानामेकां शाखयोपस्पृशति दर्भैर्दर्भपिञ्जूलैर्वा आप्यायध्व मिति, रुद्रस्य हेतिः परि वो वृणक्त्विति प्रस्थिता अनुमन्त्रयते"–इति। अतएव तैत्तिरीय-भाष्ये सायणेनात्र विनियोगसङ्ग्रह एव मुक्तः— "इषे शाखां छिनत्त्यूर्जे मार्ष्टि वा एति वत्सकान्। अपाकृत्याथ देवो गाः प्रस्थाप्याप्येति गां स्पृशेत्। रुद्रस्येत्यभिमन्त्र्यैतान् ध्रुवेति गृह माव्रजेत्। यजेति शाखोपगूह इत्यष्टावनुवाकगाः"–इति। एवञ्चैतदनुवाकाम्नातै-रष्टभिर्मन्त्रैस्तैत्तिरीयाणां शाखाच्छेदनादीन्यष्टौ कर्म्माणि सम्पद्यन्ते। तत्र "सन्नयन मृजूकरणम्, अनुमार्जन मानुलोम्येन संलग्नधूल्याद्यप-

ऋणꣳ ह वै जायते योऽस्ति। स जायमान एव देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्यः ॥ १ ॥

स यदेव यजेत। तेन देवेभ्य ऋणं जायते तद्ध्येभ्य एतत् करोति यदेनान् यजते यदेभ्यो जुहोति ॥ २ ॥

अथ यदेवानुब्रुवीत। तेनऽर्षिभ्य ऋणं जायते तद्ध्येभ्य एतत्करोत्यृषीणां निधिगोप इति ह्यनूचान माहुः ॥३॥

अथ यदेव प्रजा मिच्छेत। तेन पितृभ्य ऋणं जायते तद्ध्येभ्य एतत्करोति यदेषाꣳ सन्तता*व्यवच्छिन्ना प्रजा भवति ॥ ४ ॥

अथ यदेव व्वासयेत। तेन मनुष्येभ्य ऋणं जायते तद्ध्येभ्य एतत्करोति यदेनान् व्वासयते यदेभ्योऽशनं ददाति स य एतानि सर्व्वाणि करोति स कृतकर्म्मा तस्य सर्व्व माप्तꣳ सर्व्वं जितम्† ॥ ५ ॥

---

नयनम्”–इति तै०ब्रा०सा०भा०। मूलादारभ्याग्रात् स्पर्शन मनुमार्जन मिति धूर्त्तस्वामी। “अनुमार्जनं तत्पर्णादिपातनेन गुणीकरणम्”–इति का० श्रौ० सू० ४. २. ३ भाष्ये या० दे०। वाजसनेयिनान्तु “यज्ञस्येति मन्त्रो मन्त्रभागो वा नैवाम्नातः; एवं “वायव स्थ”–इत्यस्यानन्तरम् “उपायव स्थ”–इति मन्त्रो मन्त्रांशो वा नास्त्येव; अपि “आप्यायध्व मिति मन्त्रे “ऊर्जस्वतीः पयस्वतीः”–इति विशेषणपदद्वयाभावोऽपि बोध्यः।

* ‘सन्तता’–इति च। † ‘जितं’–इति क, ख; ‘जितꣳ’–इति च।

स येन देवेभ्य ऽऋणं जायते। तदेनांस्तदवदयते* यद्यजतेऽथ यदग्नौ जुहोति तदेनांस्तदवदयते† तस्माद्यत्किञ्चाग्नौ जुह्वति तदवदानं नाम ॥ ६ ॥

तद्वै चतुरवत्तं भवति। इदं वा ऽअनुवाक्याथ याज्याथ व्वषट्कारोऽथ सा देवता चतुर्थी यस्यै देवतायै हविर्भवत्येवꣳ हि देवता ऽअवदानान्यन्वायत्ता‡ ऽअवदानानि वा देवता ऽअन्वायत्तान्यतिरिक्तꣳ§ ह तदवदानं यत्पञ्चमं कस्मा ऽउ हि तदवद्येत्तस्माच्चतुरवत्तं भवति ॥ ७ ॥

उतो पञ्चावत्तमेव भवति। पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः संव्वत्सरस्यैषो पञ्चावत्तस्य सम्पद्बहुर्हैव प्रजया पशुभिर्भवति यस्यैवं व्विदुषः पञ्चावत्तं क्रियत ऽएतद्ध न्वेव प्रज्ञातं कौरुपाञ्चालं यच्चतुरवत्तं तस्माच्चतुरवत्तं भवति ॥ ८ ॥

स वै यावन्मात्रमिवैवावद्येत्। मानुषꣳ ह कुर्याद्यन्महदवद्येद् व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद् व्यृद्धं यज्ञे करवाणीति तस्माद्यावन्मात्रमिवैवावद्येत् ॥ ९ ॥

स ऽआज्यस्योपस्तीर्य। द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति द्वे वा ऽआहुती सोमाहुति-

---

*,† '०दवजायते'—इति ख।

‡ '०न्नन्वायत्ता'—इति ख। § '०न्नतिरिक्तꣳ'—इति ख।

रेवान्याज्याहुतिरन्या तुत ऽएषा केवली युत्सोमाहुति-रथैषाज्याहुतिर्यद्धविर्यज्ञो युत्पशुस्तदाज्य मेवैतत् करोति तस्मादुभयत ऽआज्यं भवत्येतद्वै जुष्टं देवानां यदाज्यं तज्जुष्ट मेवैतद्देवेभ्यः करोति तस्मादुभयत ऽआज्यं भवति ॥ १० ॥

असौ वा ऽअनुवाक्येयं याज्या। ते ऽउभे योषे तयोर्मिथुन मस्ति वषट्कार एव तद्वा ऽएष एव वषट्कारो य ऽएष तपति स ऽउद्यन्नेवामू मधिद्रवत्यस्तं यन्निमा मधिद्रवति तदेतेन वृष्णेमां प्रजातिं प्रजायते यैन-योरियं प्रजातिः ॥ ११ ॥

सोऽनुवाक्या मनूच्य। याज्या मनुद्रुत्य पश्चाद्वषट्क-रोति पश्चाद्वै परीत्य वृषा योषा मधिद्रवति तदेने ऽउभे पुरस्तात् कृत्वा वृष्णा वषट्कारेणाधिद्रावयति तस्मादु सह वैव वषट्कारेण जुहुयाद् वषट्कृते वा ॥ १२ ॥

देवपात्रं वा ऽएष यद्वषट्कारः। तद्यथा पात्र ऽउद्धृत्य प्रयच्छेदेवं तदथ यत्पुरा वषट्काराज्जुहुयाद्यथाधो भूमौ निदिग्धं* तदमुया स्यादेवं तत्तस्मादु सह वैव† वषट्कारेण जुहुयाद्वषट्कृते वा ॥ १३‡ ॥

---

* 'निदग्धं'—इति सा०-सम्मत इति डा०-वेबरः।

† 'वै'—इत्येव ख-पुस्तके।

‡ इहैव "६०० शतम्"—इति ख; "शतम् ६००"—इति च-पुस्तके।

तद्यथा योनौ रेतः सिञ्चेत्। एवं तदथ यत्पुरा व्वषट्कारात्जुहुयाद्यथा योनौ रेतः सिक्तं तदमुया स्यादेवं तत्तस्माद् सह वैव* व्वषट्कारेण जुहुयाद्वषट्कृते वा ॥ १४ ॥

असौ वा ऽअनुवाक्येयं याज्या। सा वै गायत्रीयं त्रिष्टुबसौ स वै गायत्री मन्वाह तदमू मनुब्रुवन्नसौ ह्यनुवाक्येमा मन्वाहेयꣳ हि गायत्री ॥ १५ ॥

अथ त्रिष्टुभा यजति। तदनया यजन्नियꣳ हि याज्यामुष्या ऽअधि व्वषट्करोत्यसा ऽउ हि त्रिष्टुप्तदेने सयुजौ करोति तस्मादिमे सम्भुञ्जाते ऽअनयोरनु-सम्भोग मिमाः सर्व्वाः प्रजा ऽअनु सम्भुञ्जते ॥ १६ ॥

स वा अह्वयन्निवैवानुवाक्या मनुब्रूयात्। असौ ह्यनुवाक्या बृहद्ध्यसौ बार्हतꣳ हि तद्रूपं क्षिप्र ऽएव याज्यया त्वरेतेयꣳ हि याज्या रथन्तरꣳ हीयꣳ राथन्तरꣳ हि तद्रूपꣳ ह्वयति वा ऽअनुवाक्यया प्रयच्छति याज्यया तस्मादनुवाक्यायै रूपꣳ हुवे हुवामह ऽआगच्छेदम्बर्हिः सीदेति यद्ध्वयति हि तया प्रयच्छति याज्यया तस्मा-द्याज्यायै रूपं व्वीहि हविर्जुषस्व हविराव्वृषायस्वाद्धि पिब प्रेति यत्प्र हि तया यच्छति† ॥ १७ ॥

सा या पुरस्ताल्लक्षणा। सानुवाक्या स्यादसौ ह्यनु-

---

* 'वै'-इत्येव ख-पुस्तके। † 'यच्छति'-इति च।

वाक्या तस्या ऽअमुष्या ऽअवस्तात्क्ष्म* चन्द्रमा नक्षत्राणि सूर्यः ॥ १८ ॥

अथ योपरिष्टाल्लक्ष्मा। स याज्या स्यादियं हि याज्या तस्या ऽअस्या† ऽउपरिष्टाल्लक्ष्मौषधयो वनस्पतय ऽआपोऽग्निरिमाः प्रजाः ॥ १९ ॥

सा ह न्वेव समृद्धानुवाक्या। यस्यै प्रथमात्पदाद्देवता मभिव्याहरति सो ऽएव समृद्धा याज्या यस्या ऽउत्तमात् पदाद्देवताया अधि वषट्करोति वीर्यं वै देवतास्तदु-भयत ऽएवैतद्वीर्येण परिगृह्य यस्यै देवतायै हविर्भवति तस्यै प्रयच्छति ॥ २० ॥

स वै वौगिति करोति। वाग्वै वषट्कारो वाग्रेतो रेत ऽएवैतत्सिञ्चति षडित्यृतवो वै षट् तदृतुष्वेवैतद्रेतः सिच्यते तदृतवो रेतः सिक्त मिमाः प्रजाः प्रजनयन्ति तस्मादेवं वषट्करोति ॥ २१ ॥

देवाश्च वा ऽअसुराश्च। उभये प्राजापत्याः प्रजापतेः पितुर्दाय मुपेयुरेतावेवार्द्धमासौ य ऽएवापूर्यते तं देवा ऽउपायन् योपक्षीयते त मसुराः ॥ २२ ॥

---

* 'अधस्ताल्लक्ष्म'—इति सा०-सम्मत इति डा०-वेबरः।

† नास्त्येतत् पदम् ख-पुस्तके।

ते देवा ऽअकामयन्त । कथं न्विम मपि संवृञ्जी- महि योऽय मसुराणा मिति तेऽर्चन्तः श्राम्यन्तश्चेरुस्त ऽएतꣳ हविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासौ ताभ्या मयजन्त ताभ्या मिष्ट्वैत मपि समवृञ्जत ॥ २३ ॥

य ऽएषो ऽसुराणा मासीद् । यदा वा ऽएता ऽउभौ परिप्लवेते ऽअथ मासो भवति मासशः संव्वत्सरः सर्व्वं वै संव्वत्सरः सर्व्वं मेव तद्देवा ऽअसुराणाꣳ समवृञ्जत सर्व्व- स्मात्सपत्नानसुरान्निरभजन्त्सर्व्वम्वेवैष ऽएतत्सपत्नानाꣳ संवृङ्क्ते सर्व्वस्मात्सपत्नान्निर्भजति य ऽएव मेतद्वेद ॥ २४ ॥

स यो देवाना मासीत् । स यवायुवत हि तेन देवा योऽसुराणाꣳ सोऽयवा न हि तेनासुरा ऽअयुवत ॥ २५ ॥

अथो ऽइतरथाहुः । य ऽएव देवाना मासीत्सोऽयवा न हि त मसुरा ऽअयुवत योऽसुराणाꣳ स यवायुवत हि तं देवाः सब्द महः सगरा रात्रिर्यव्या मासाः समेकः संव्वत्सरः स्वेको ह वै नामैतद्यत्समेक ऽइति युवा च हि वा ऽअयवा यवेतीवाथ येनैतेषाꣳ होता भवति तद्यावहोच मित्याचक्षते ॥ २६ ॥ ५ ॥

॥ इति पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् [ ७. २. ] ॥

| | Rs. | |
|---|---|---|
| Pariçiṣta Parvan, (Text) Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1–6 @ /6/ each ... ... ... | 2 | 4 |
| Prithivirāj Rāsa, (Text) Part II, Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |
| Ditto (English) Part II, Fasc. 1 ... ... ... | 0 | 12 |
| Prākṛta Lakṣaṇam, (Text) Fasc. 1 ... ... ... ... | 1 | 8 |
| Parāçara Smṛti, (Text) Vol. I, Fasc. 1–8; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6 @ /6/ each .. ... ... ... ... | 7 | 8 |
| Parāçara, Institutes of (English) ... ... ... | 0 | 12 |
| Prabandhacintāmaṇi (English) Fasc. 1–2 @ /12/ each ... ... | 1 | 8 |
| *Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5–10; II, 1–6; III, 1–7; IV, 1–6; V, 1–8, @ /6/ each Fasc. ... ... ... | 12 | 6 |
| Sāṅkhya Sūtra Vṛtti, (Text) Fasc. 1–4 @ /6/ each ... ... | 1 | 8 |
| Ditto (English) Fasc. 1–3 @ /12/ each ... ... | 2 | 4 |
| Suçruta Saṁhitá, (Eng.) Fasc. 1 @ /12/ ... ... ... | 0 | 12 |
| *Taittereya Saṁhitā, (Text) Fasc. 14–45 @ /6/ each ... ... | 12 | 0 |
| Tāṇḍya Brāhmaṇa, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Tattva Cintāmaṇi, (Text) Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–10, Vol. III, Fasc. 1–2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1–5, Part IV, Vol. II, Fasc. 1–12 @ /6/ each ... ... ... | 14 | 10 |
| Trikāṇḍa-Maṇḍanam, (Text) Fasc. 1-2 @ /6/ ... ... ... | 0 | 12 |
| Tul'si Sat'sai, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Upamita-bhava-prapañca-kathā (Text) Fasc. 1-3 @ /6/ each ... | 1 | 2 |
| Uvāsagadasāo, (Text and English) Fasc. 1–6 @ /12/ ... ... | 4 | 8 |
| Varāha Purāṇa, (Text) Fasc. 1–14 @ /6/ each ... ... ... | 5 | 4 |
| Varṣa Krya Kaumudi, Fasc. 1–3 @ /6/ ... ... ... | 1 | 2 |
| *Vāyu Purāṇa, (Text) Vol. I, Fasc. 2–6; Vol. II, Fasc. 1–7, @ /6/ each ... ... ... ... ... ... | 4 | 8 |
| Viṣṇu Smṛti, (Text) Fasc. 1–2 @ /6/ each ... ... ... | 0 | 12 |
| Vivādaratnākara, (Text) Fasc. 1–7 @ /6/ each ... ... ... | 2 | 10 |
| Vṛhannāradīya Purāṇa, (Text) Fasc. 1–6 @ /6/ ... ... | 2 | 4 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1–6 ... ... ... | 2 | 4 |
| *Tibetan Series.* | | |
| Pag-Sam Ṭhi S'iñ, Fasc. 1–4 @ 1/ each ... ... ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1–5, @ 1/ each ... ... ... ... ... ... | 13 | 0 |
| Rtogs brjod dpag ḥkhri S'iñ (Tib. & Sans.) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... ... | 10 | 0 |
| *Arabic and Persian Series.* | | |
| 'Ālamgīrnāmah, with Index, (Text) Fasc. 1–13 @ /6/ each... ... | 4 | 14 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1–2 @ /12/ ... ... | 1 | 8 |
| Āīn-i-Akbarī, (Text) Fasc. 1–22 @ 1/ each ... ... ... | 22 | 0 |
| Ditto (English) Vol. I, Fasc. 1–7, Vol. II, Fasc. 1–5, Vol. III, Fasc. 1–5, @ 1/12/ each ... ... ... ... | 29 | 12 |
| Akbarnāmah, with Index, (Text) Fasc. 1–37 @ 1/ each ... ... | 37 | 0 |
| Ditto English Fasc, 1–6 @ 1/ each ... ... ... | 6 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger ... ... ... | 0 | 6 |
| Bādshāhnāmah, with Index, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Catalogue of Arabic Books and Manuscripts ... ... ... | 1 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1–3 @ 1/ each ... ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1–21 @ 1/ each ... ... ... ... ... ... | 21 | 0 |
| Farhang-i-Rashīdī, (Text) Fasc. 1–14 @ 1/ each ... ... | 14 | 0 |
| Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1–4 @ /12/ each ... ... ... ... ... ... | 3 | 0 |
| Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1–9 @ /6/ each ... ... | 3 | 6 |
| Ditto of Āzādī, (Text) Fasc. 1–4 @ /6/ each ... ... | 1 | 8 |
| Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1–6 @ /12/ each ... ... | 4 | 8 |
| Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1–3 @ /6/ each ... ... | 1 | 2 |
| Īṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... ... | 38 | 4 |
| Maāṣir-ul-Umarā, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. III, Fasc. 11-12; Index to Vol. II, Fasc. 10–12 @ /6/ each ... ... | 13 | 2 |
| Maghāzi of Wāqidi, (Text) Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

| | | | |
|---|---|---|---|
| Muntakhabu-t-Tawārikh, (Text) Fasc. 1–15 @ /6/ each ... | Rs. | 5 | 10 |
| Muntakhabu-t-Tawārikh, (English) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5 and 3 Indexes; Vol. III, Fasc. 1 @ /12/ each ... ... | | 12 | 0 |
| Muntakhabu-l-Lubāb, (Text) Fasc. 1–19 @ /6/ each ... ... | | 7 | 2 |
| Ma'āşir-i-'Ālamgīrī, (Text), Fasc. 1–6 @ /6/ each ... ... | | 2 | 4 |
| Nukhbatu-l-Fikr, (Text) Fasc. 1 ... ... ... ... | | 0 | 6 |
| Nizāmī's Khiradnāmah-i-Iskandari, (Text) Fasc. 1-2 @ /12/ each | | 1 | 8 |
| Riyāzu-s-Salāṭīn, (Text) Fasc. 1–5 @ /6/ each ... ... ... | | 1 | 14 |
| Ṭabaqāt-i-Nāṣirī, (Text) Fasc. 1–5 @ /6/ each ... ... ... | | 1 | 14 |
| Ditto (English) Fasc. 1–14 @ /12/ each ... ... | | 10 | 8 |
| Ditto Index ... ... ... ... | | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barni (Text) Fasc. 1–7 @ /6/ each... | | 2 | 10 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, (Text) Fasc. 1–6 @ /6/ each... | | 2 | 4 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... | | 3 | 0 |
| Wīs o Rāmīn, (Text) Fasc. 1–5 @ /6/ each ... ... ... | | 1 | 14 |
| Ẓafarnāmah, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–8 @ /6/ each .. | | 6 | 6 |
| Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 ... ... ... ... | | 0 | 12 |

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | | |
|---|---|---|---|
| 1. | ASIATIC RESEARCHES. Vol. VII, Vols. XI and XVII, and Vols. XIX and XX @ 10/ each ... ... ... | 50 | 0 |
| 2. | PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No. | | |
| 3. | JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members | | |
| | *N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.* | | |
| 4. | Centenary Review of the Researches of the Society from 1784–1883 ... | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... ... .. | 4 | 0 |
| | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J.A.S.B.*, 1868) ... ... ... ... | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... ... | 4 | 0 |
| | Introduction to the Maithilī Language of North Bihār, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J.A.S.B.*, 1882) ... ... ... ... ... | 4 | 0 |
| 5. | Anīs-ul-Musharrahīn ... ... ... ... ... | 3 | 0 |
| 6. | Catalogue of Fossil Vertebrata ... ... ... ... | 3 | 0 |
| 7. | Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion | 3 | 8 |
| 8. | Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... | 32 | 0 |
| 9. | Jawāmlu-l-'ilm ir-riyāẓī, 168 pages with 17 plates, 4to. Part I ... | 2 | 0 |
| 10. | Khizānatu-l-'ilm ... ... ... ... ... | 4 | 0 |
| 11. | Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... | 40 | 0 |
| 12. | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ... | 18 | 0 |
| 13. | Sharaya-ool-Islām ... ... ... ... ... | 4 | 0 |
| 14. | Tibetan Dictionary, by Csoma de Körös ... ... ... | 10 | 0 |
| 15. | Ditto Grammar " " ... ... ... | 8 | 0 |
| 16. | Kaçmīraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... | 3 | 0 |
| 17. | A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal by C. R. Wilson... ... ... | 1 | 0 |
| 18. | Memoir on maps illustrating the Ancient Geography of Kaśmir by M. A. Stein PH.D., Jl. Extra No. 2 of 1899 ... ... ... | 4 | 0 |

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. 1–29 @ 1/ each ... ... | 29 | |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... | 5 | 0 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

20–6–1901.

**Books are supplied by V.-P.P.**

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, No. 1016.



## ॥ शतपथब्राह्मणम् ॥

॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

## THE ÇATAPATHA BRĀHMAṆA

OF THE WHITE YAJURVEDA,

WITH THE

COMMENTARY OF SĀYAṆA ĀCĀRYA.

EDITED BY

ĀCĀRYA SATYAVRATA SĀMAS'RAMĪ

VOL. I, FASCICULUS VI.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1902.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

**No. 57. PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.,

46, GREAT RUSSELL STREET, LONDON, W.C., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | | |
|---|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each ... | Rs. | 1 | 8 |
| Advaitachinta Kaustubhe, Fasc. 1 ... ... ... ... | | 0 | 6 |
| *Agni Purāṇa, (Text) Fasc. 4–14 @ /6/ each ... ... ... | | 4 | 2 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5 and Vol. II, Fasc. 1–5 Vol. III, Fasc. 1–5 Vol. IV, Fasc. 1–5 @ /6/ ... ... ... | | 7 | 8 |
| Aṇu Bhāṣyam, (Text) Fasc. 1–5 @ /6/ each ... ... ... | | 1 | 14 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... ... ... | | 0 | 12 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1–6 @ /6/ each ... | | 2 | 4 |
| Açvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... ... ... | | 1 | 14 |
| Avadāna Kalpalata, (Sans. and Tibetan) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... ... | | 10 | 0 |
| *Bhāmatī, (Text) Fasc. 4–8 @ /6/ each ... ... ... | | 1 | 14 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1–3 ... ... ... ... | | 1 | 2 |
| Bṛhaddēvatā (Text) Fasc. 1–4 @ /6/ each ... ... ... | | 1 | 8 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1–6 @ /6/ each ... ... | | 2 | 4 |
| Bodhicaryavatara of Cantidevi, Fasc. 1 ... ... ... | | 0 | 6 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–3 @ 2/ each ... | | 6 | 0 |
| Çatapatha Brāhmaṇa, Fasc. 1–6 ... ... ... ... | | 2 | 4 |
| Catasahasrika Projnaparamita, (Text) Fasc. 1–3 @ /6/ each ... | | 1 | 2 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–10 @ /6/ each ... ... ... ... | | 19 | 14 |
| Catasahasrika-prajna-parimita Part I Fasc. 1–3 @ /6/ ... ... | | 1 | 2 |
| Çlokavartika, (English) Fasc. 1–3 ... ... ... ... | | 2 | 4 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 4–16 @ /6/ each ... | | 4 | 14 |
| Ditto Çāṅkhāyana, (Text) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4, Vol. III, Fasc. 1–4 @ /6/ each ... ... | | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1–3 @ /6/ each ... ... | | 1 | 2 |
| Gadadhara Paddhati Kālasāra Vol I. Fasc. 1–3 ... ... ... | | 1 | 2 |
| Kāla Mādhava, (Text) Fasc. 1–4 @ /6/ each ... ... ... | | 1 | 8 |
| Kāla Viveka, Fasc. 1–4 ... ... ... ... | | 1 | 8 |
| Kātantra, (Text) Fasc. 1–6 @ /12/ each .. ... ... | | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1–14 @ /12/ each ... ... | | 10 | 8 |
| Kūrma Purāṇa, (Text) Fasc. 1–9 @ /6/ each ... ... ... | | 3 | 6 |
| Lalita-Vistara, (English) Fasc. 1–3 @ /12/ each ... ... | | 2 | 4 |
| Madana Pārijāta, (Text) Fasc. 1–11 @ /6/ each... ... ... | | 4 | 2 |
| Mahā-bhāṣya-pradīpōdyōta, (Text) Fasc. 1–9 & Vol. II, Fasc. 1–4 @ /6/ each ... ... ... ... ... ... | | 4 | 14 |
| Manutīkā Saṅgraha, (Text) Fasc. 1–3 @ /6/ each ... ... | | 1 | 2 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1–6 @ /12 each ... ... | | 4 | 8 |
| *Mimāṁsa Darçana, (Text) Fasc. 7–19 @ /6/ each ... ... | | 4 | 14 |
| Nārada Smṛti, (Text) Fasc. 1–3 @ /6/ ... ... ... | | 1 | |
| Nyāyavārtika, (Text) Fasc. 1–5 @ /6/ ... ... ... | | 1 | 14 |
| *Nirukta, (Text) Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each ... | | 5 | 4 |
| Nityacarapaddhati Fasc. 1–5 (Text) @ /6/ ... ... ... | | 1 | 14 |
| Nyayabindutīkā, (Text) ... ... ... ... ... | | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1–6 Vol. II, Fasc. 1–3 @ /6/ each ... ... ... ... ... | | 3 | 6 |
| Padumawati, Fasc. 1–3 @ 2/ ... ... ... ... | | 6 | 0 |

अवदानस्वरूपं[1] विवक्षुराख्यायिका माह— "ऋणं हेति। 'यः' द्विजातिः 'स जायमान एव' देवादिभ्यश्चतुर्भ्योऽपि 'ऋणवान्' अधमर्णिको 'जायते'[2]। ऋणित्वे[3] जनन मेव निमित्त मित्यर्थः॥ १॥

सङ्क्षेपोक्तं[4] विवृणोति— "स यद्देवेति। 'यजेत'-इति 'यत्', 'तेन' कारणेन यागेन निमित्तेन 'देवेभ्यः' 'तद् ऋणं जायते'। 'हि' यस्माद् यागकर्म्मभ्यः 'एभ्यः' देवेभ्यः 'एतत्' इदानीं 'करोति'; अतस्तेभ्यः तद् ऋण मित्यर्थः। तच्छब्दार्थ माह— "यदेनानिति। यागहोमावुभावपि नियमेन देवार्थ मेव यतः क्रियेते; अतः तेषां तौ स्वम्, तस्यावश्यप्रदानत्वादृणी जायत इत्यर्थः। एव मुत्तर-वाक्यान्यपि योज्यानि ॥ २ ॥

"अथेति। 'अनुब्रुवीत' अनुवचनं कुर्यात्, अधीयेतेत्यर्थः। "निधिगोप इतीति। उपभुज्यमानोऽपि यो न विनश्यति, स 'निधिः'। तादृशः ऋषीणां सम्बन्धी यो वेदाख्यो निधिः, तस्य गोपायिता 'इति' वेदम् 'अनूच्यमानम्' 'आहुः' बुधाः। अतस्तेषां प्रवचनं धन मिति गम्यते ॥ ३ ॥ ॥ ४ ॥

"अथ यद्देवेति। 'वासयेत' गृहे; अन्नादिप्रदानेनेदानी मव-

---

१— "यत् किञ्चाग्नौ जुह्वति तदवदानं नाम"-इतीहैवोपरिष्टात् (६ क०)।

२— "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारि-वासी"-इति तै० सं० ६.३.१०.५। म० सं० ६. ३५-३७; ४. २५७। रामा० २. ४. १३। महाभा० १. ४६५६-५८।

३— 'ऋणत्वे'-इति ढ। ४— 'सङ्क्षेपोक्तं'-इति ढ।

काशं प्रयच्छेत् । 'यः' जायमानो ब्राह्मणः 'एतानि' यागानुवचनादीनि 'सर्वाणि' अपि 'करोति', 'सः' 'कृतकर्मा' कृतकृत्यः । तस्मात् आप्तव्यं 'सर्वं माप्तं' भवति, देवादिसर्वस्थानं 'सर्वं' जेतव्यं 'जितं' भवति ॥ ५ ॥

"स येनेति । इत्थं तेषा मृणत्वं प्रति तेन 'अवदयते' दयतिर्दानार्थः[1]; अवप्रत्यर्पणम्, देवानां स्वभूत मृणम्, विभज्य दत्तवान् भवति । तच्छब्दार्थ माह— "यद्यजत इति । यदस्ति तत्तेन यागेनेत्यर्थः ; एवं होमेनापि । 'यस्मादेवं' तस्मात् 'यत् किञ्च' चरुपुरोडाशादिकम् 'अग्नौ जुहृति', 'तत्' अवत्तं हविः "अवदानम्"-इति प्रसिद्धं भवति ॥ ६ ॥

तस्यावदेयस्य चतुष्ट्वं विधत्ते— "तद्वा इति । तत्र कारण माह— "इदं वा इति । 'इदं वा' अनुवाक्यात्मक मिदं खलु प्रथमम् ; 'अथ' पश्चाद् 'याज्या'; 'अथ' प्रधानसाधनो 'वषट्कारः'; पश्चाद्धविस्स्वामिनी 'देवता' 'चतुर्थी' भवति । 'एवं' क्रमेण पुरोऽनुवाक्यायाज्यास्तस्रो 'देवताः', क्रमेण चत्वारि 'अवदानानि अन्वायत्ताः' । 'हि'-शब्दश्चार्थे[2]; अवदानानि च चत्वारि, चतस्रः पुरोऽनुवाक्यायाज्यादिदेवताः 'अन्वायत्तानि' अनुप्राप्तानि । अत उभयेषां समसङ्ख्याकत्वात् तन्न्यूनाधिकभावो न युक्त इत्यर्थः । चतसृभ्योऽवदानचतुष्टयस्यावश्यकत्वात् न्यूनसङ्ख्याकत्वं न शक्यम् । अधिकत्व-

१— "दय दानगतिरक्षणहिंसादानेषु"-इति धा० पा० भ्वा० आ० ४८१ ।

२— "हीत्येषोऽनेककर्मा"-इति निरु० १. २. ४ ; १. ४. ३ । अम० को० ३. ३. २५६, ४. ५ ।

दोषात् पञ्चम माग्नञ्च परिहरति— "अतिरिक्तं हेति। अतिरेक मेव दर्शयति—"कस्मा इति। 'कस्मै' प्रयोजनाय 'पञ्चमम् अवद्येत् ?' तदभिमानिन्याः पञ्चम्या देवताया अभावादिति भावः॥ ७॥

अथाभ्युपगम्याधिक्यदोषं यज्ञादिसम्पत्तिलाभाय पञ्चावदान-पच्च मप्याह— "उतो इति। यज्ञस्य पाङ्क्तत्वं धानाकरम्भादिहविः-पञ्चकादिनावगन्तव्यम्[१]। ऐतरेयकेऽपि— "यो वै यज्ञम्"—इत्या-दिना[२] हविरचरसञ्ज्ञादिभिर्बहुधा[३] यज्ञस्य पाङ्क्तत्व मुपपादितम्। पशोः पाङ्क्तत्वं लोमत्वगादिभिरिति प्रागुक्तम्[४]। हेमन्तशिशिरयो-रैक्याभिप्रायेण संवत्सरः पाङ्क्तः[५]। एवन्तु पञ्चावत्ते सति तद्गतपञ्च-सङ्ख्याद्वारा 'सम्पत्' यज्ञात्मकं धनं सम्पद्यत इत्यर्थः॥

एतज्ज्ञानपूर्वकानुष्ठानफल माह— "बहुर्हैवेति॥

अथ पुनः चतुरवत्त मेव स्थापयति— "एतदिति। एतदेव 'चतु-रवत्तं' 'कौरुपाञ्चालम्' कुरुपञ्चालदेशे प्रसिद्धम्; अतस्तत्र प्रज्ञा-तत्वादनुष्ठानसम्प्रदायानुरोधेन 'चतुरवत्तम्' एव कर्त्तव्यम्॥ ८॥

अवदानस्येयत्तां विधत्ते— "स वा इति। ('यावन्मात्र मिव') 'इव'-शब्दोऽनर्थको वाक्यालङ्कारे[६]। 'यावन्मात्र मेव' अङ्गुष्ठपर्वमात्र मेवेत्यर्थः॥

---

१— "धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्या"—इति ऐ० ब्रा० २. ३. ६; तै० सं० ६. ५. ११. ८। २— ऐ० ब्रा० २. ३. ६।

३— हविष्पङ्क्तिः, अक्षरपङ्क्तिः, नराशंसपङ्क्तिः, सवनपङ्क्तिः।

४— "पाङ्क्तः पशुः"—इत्यादिकं पुरस्तात् द्रष्टव्यम् (१२६पृ० ७ पं०)।

५— "हेमन्तशिशिरयोः समासेन"—इति ऐ० ब्रा० १. १. १।

६— "इवोऽपि दृश्यते"—इत्यादि निरु० १. ३. ५ द्रष्टव्यम्।

आधिक्ये दोष माह— "मानुषं ह"-इति। मनुष्याणां शरावादिपरिमितत्वादाधिक्यं मानुषत्वकरणम् ॥ ९ ॥

इदानीं चतुरवदानप्रकारं दर्शयति— "स आज्यस्येति। पुरोडाशांशौ द्वौ ; तदध उपरि चोपस्तृताभिघारिताज्याभ्यां[1] चतुरवत्तत्वम् ॥

पुरोडाशस्योभयत आज्यकरणं प्रशंसितु माह— "द्वे वा इति। सर्वापि आहुतिः सोमाज्यभेदेन द्विविधा; तत्र सोमस्य[2] स्वरूपेणाहुतित्वादाज्यापेक्षैव नास्ति ; अवशिष्टौ हविर्यज्ञपशुयज्ञावाज्याहुतिकौ[3] भवितव्यौ ; अतस्तत्र तयोः 'एतत्' एतेनोपस्तरणाभिघारणेन 'आज्य मेव' कृतवान् 'भवति' ॥

"एतद्वै जुष्टम्"—इत्यादि स्पष्टम् ॥ १० ॥

अवदानाय धर्म मुक्त्वा प्रधानधर्मं विधातु माह— "असौ वा इति। अनुवाक्या-याज्ययोः क्रमेण देवताह्वान-हविःप्रदानसाध-

---

१— पुरस्तात् द्रष्टव्यम् ३९५, ४०३ पृ० ; परस्तादपि ६. १. २१। अपि का० श्रौ० सू० १. ९. ८–११, २०, २१।

२— "अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशिमांस्ततः। वाजपेयोऽतिरात्रश्चाप्तोर्यामात्र सप्तमः। इत्येते सुत्याः"–इति गो० ब्रा० १. ५. २३। सुत्याः सोमसंस्थाः सोमयज्ञाः इत्येतेऽभिन्नार्थाः।

३— "अग्न्याधेय मग्निहोत्रं पौर्णमास्यमावास्ये। नवेष्टिश्चातुर्मास्यानि पशुबन्धोऽत्र सप्तमः। इत्येते हविर्यज्ञाः"–इति गो० ब्रा० १. ५. २३। "अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः"–इति गौ० ध० सू० ८. ५। पाकयज्ञा एव पशुयज्ञाः।

मलं वक्ष्यते[१]। आक्रान्तव्यानां देवानां द्युलोकसम्बन्धात्, प्रदानस्यै-वैतल्लोकसम्बन्धात्, तयोः क्रमेण द्युभ्वात्मकता। तयोः स्त्रीलिङ्गत्वात् द्वन्द्वे, वषट्कारस्य[२] पुंल्लिङ्गत्वात् सह मिथुनतास्ति। उभयोरन्तराले तपन्नादित्य एव वषट्कारः। स चोदयास्तमयसमये दिवं पृथिवी-ञ्चाधिकृत्य गच्छति[३]। 'तत्' तस्मात् 'एतेन वृष्णा' अनेन वर्षकेण, आदित्येन सह सङ्गते सत्यौ, ते एव मिदानीं प्रसिद्धाम् 'इमां प्रजातिं' 'प्रजायेते'; सर्वेषा मप्युत्पद्यमानानां भावानां तत्रैवोत्पत्तेः, उत्पद्यमानपदार्थात्मना ते एव प्रकृष्टे जायेते इत्यर्थः॥ ११॥

पुरोऽनुवाक्यायाज्यानां[४] द्युभ्वात्मकताभिधानस्य[५] प्रयोजन माह— "सोऽनुवाक्या मिति। तयोः समनन्तरं वषट् कुर्यादिति विधिः। उक्तेऽर्थे लोकाचरणं प्रमाणयति— "पश्चाद्वा इति। 'पश्चात् परीत्य' स्त्रियाः पश्चाद्देशादागत्य 'अधिद्रवति' अभिगच्छति। 'तत्' तेन याज्यापुरोऽनुवाक्यानन्तरं वषट्कारकरणेन 'एने उभे' द्यावापृथिव्यात्मिके याज्यापुरोऽनुवाक्ये 'पुरस्तात् कृत्वा' 'वृष्णा' सेक्त्रा 'वषट्कारेण' तत्सूर्यात्मकेन द्रवण माकारितवान् भवति।

---

१— इहैव ब्राह्मणे सप्तदशकण्डिकायाम् (४८८ पृ० ११ पं०)।

२— 'वषट्कार एव'—इति ञ।

३— "स वा एष न कदाचनास्त मेति, नोदेति। तं यदस्त मेतीति मन्यन्तेऽह्न एव तदन्त मित्त्वाथात्मानं विपर्यस्यते; रात्री मेवावस्तात् कुरुतेऽहः परस्तात्"—इत्यादि ऐ० ब्रा० ३. ४. ६।

४— 'पुरोऽनुवाक्यायाज्यादीनां'—इति ञ, 'पुरोऽनुवाक्यादीनां'—इति ठ।

५— 'द्युत्वात्मकताभिधानस्य'—इति ञ, ठ।

"तस्मात्"-इति स्पष्टम्। वौषडित्युच्चारणकाले वा, समनन्तरं वा प्रदान मस्तु; सर्वथा वषट्कारात् प्राक् न जुहुयादित्यर्थः। अनेनैव पुरोऽनुवाक्यायाज्ययोर्वषट्कारात् पूर्वभावित्वं सिद्धम् ॥ १२ ॥

प्रदानस्य वषट्कारानन्तरत्वं प्रकारान्तरेणोपपादयति— "देवपात्रं वा इति। पिबन्त्यनेन देवा इति 'देवपात्रं' 'वषट्कारः'। 'तत्' वषट्कारावसानं प्रदानम् 'एवं' भवति, पात्रोद्धारपूर्वकप्रदान मिव भवति। उक्तवैपरीत्ये दोष माह— "अथ यत्पुरेति। 'अधो भूमौ निदिग्धम्[1]' भूमौ प्रास्तम्[2], दुष्टत्वेनोपयोगाभावात् दग्ध मित्युपचर्यते[3]। 'अमुया' अनेन वषट्कारात्पूर्वकालहोमेन ('स्यात्') दग्धं स्यादित्यर्थः। "तस्मात्"-इत्युपसंहारः ॥ १३ ॥

"तद्यथा योनौ"—इत्यादि स्पष्टम् ॥ १४ ॥

पुरोऽनुवाक्यायाज्ये गायत्रीत्रिष्टुभौ कर्त्तव्ये इति विधातु माह— "असौ वा इति। 'अनुवाक्या' 'असौ' द्युलोकः, तत्स्थाना; 'याज्या' तु ('इयम्') भूः। 'सेयं' पृथिवी गायत्र्यात्मिका, 'असौ' द्युलोकः त्रिष्टुबात्मकः। तथा सति "गायत्री मन्वाह"—इति यत्, 'तत्' तेन अनुवाक्यात्मकम् 'अनुब्रुवन्' गायत्रीच्छन्दोद्वारा 'इमां' पृथिवी मेवोक्तवान् भवति। द्युलोकस्य कथ मनुवक्तव्यतेत्याशङ्क्य अनुवाक्यात्मकत्वं वाक्यमध्य एव स्मारयति। पृथिव्या अप्यनुवक्तव्यत्वं गायत्र्यात्मकत्वादित्याह— "इयꣳ हीति। इत्य मनुवाक्याया गायत्रीत्वे द्यावापृथिव्यावुभे अपि योजितवान् भवतीत्युक्तम् ॥ १५ ॥

---

१— 'निदग्धम्'-इति ज, 'निदिग्धम्'-इत्यपि तत्रैव शोधितः।

२— 'प्राप्तं'-इति ज। ३—दिग्ध मित्यस्यैव भाष्यं स्यात् दग्ध मिति।

याज्यायास्त्रिष्टुब्रूपसम्पादनेऽपि तथैव योजितवान् भवतीत्याह—"अथेति। 'त्रिष्टुभा यजति' त्रैष्टुभं याज्यां कुर्यात्। तत्र याज्यया स्पृचा यजतीति यत्, 'तत्' तेन 'अनया' पृथिव्यैव यजति। तत्कथ मित्यत आह— "तदिति। 'तत्' तेन त्रिष्टुब्रूपकरणेनानया यजति। एतां ध्रुव मेव याज्यां कृतवान् भवतीत्यर्थः। उक्तार्थ-समर्थनाय पूर्वोक्तं स्मारयति— "इयं हि याज्येति। अतः 'अमुष्या अधि' द्युलोकस्योपरि एव 'वषट्' कृतवान् भवति। एतत्समर्थना-याह— "त्रिष्टुबिति। 'तत्' तेन, पुरोऽनुवाक्यायाज्ययोर्गायत्री-त्रिष्टुब्रूपकरणेनानेन 'एते' द्यावापृथिव्यौ, प्रतिपादितप्रकारेण 'सयुजौ' परस्परं संयुक्तौ कृतवान् भवति। 'तस्मात्' सायुज्यात् 'इमे' सहाभ्यवहरतः; "द्यावापृथिवीभ्यां स्वाहा"-इति[1] सहप्रदानात्। अथवा वृष्ट्यन्नयोः परस्परसापेक्षत्वात्[2] सहभागः[3]। अतस्तयोः सहभागम् 'अनु' 'सर्वाः' अपि 'प्रजाः' तत्सम्बन्धिन्यः 'अनु सम्भुञ्जते' अनुसृत्य भुञ्जते। अत उभयोः सभागलोकात्मकत्वात्, तयोश्च परस्परसाहित्याद् याज्यानुवाक्ययोः साहित्येनापि भवितव्य मित्यर्थो लभ्यते ॥ १६ ॥

अथानुवाक्याया उच्चारणधर्म माह— "स वा अह्वयन्निवैवेति। 'अह्वयन्निव' वर्णानालोडयन्निव शनैरनुवाक्यां ब्रूयात्। अह्वृतिः

---

१— ऐ० ब्रा० १. ३. ५। तै० ब्रा० २. १. ७. १; ८. २।

२— इहैवोपरिष्टात् ५. ३. ५. १९; ७. ३. १. ३०। म० सं० ३. ७६।

३— 'सहभाव'-इति ज-शोधितः, 'सहभोगः'-इति ठ।

गत्यर्थः[१]। उक्तविधानुवचनं "बृहत्"-साम्ना[२] स्तौति— "असौ द्यौरिति। 'अनुवाक्या' ('असौ') द्यौः, एवं 'बृहत्' सामापि द्यौः[३]। 'हि' यतो द्युभागोऽनुवाक्या बृहत्साम, 'तत्' तस्मात् तद्गतं मन्द्रत्वं 'बार्हतं' बृहतीसम्बन्धि 'रूपम्' ॥

याज्याया उच्चारणे धर्म माह— "क्षिप्र एव याज्ययेति। 'याज्यया' निमित्तया उच्चारणे वर्णविषयां त्वरां कुर्यात्। "इयं स्त्रीत्यादि[४]। पूर्वापेक्षया त्वरतीति 'तत्' क्षिप्रोच्चारणं 'राथन्तरम्' रथन्तरसम्बधि 'रूपम्'[५] ॥

अथ पुरोऽनुवाक्यायाज्ययोः लक्षणान्यन्यानि वक्तुं कार्यभेद माह[६]— "ह्वयति वा इति। 'अनुवाक्यया' यष्टव्यदेवान् आह्वयति, तानेव 'याज्यया' यजति। 'तस्मात्' आह्वानार्थत्वात्, आह्वानार्थं यल्लिङ्गम्, तत् 'अनुवाक्याया रूपम्'। तानि लिङ्गानि दर्शयति— "हुव इत्यादिना। 'हि' यस्मात् 'तया' अनुवाक्यया यष्टव्यदेवान् आह्वयति, तस्मादाह्वानप्रकाशकं "हुवे"-इत्यादि यल्लिङ्गजातम्, तद्वत्येव सर्वत्रानुवाक्या कार्येत्यर्थः ॥

"प्रयच्छति याज्येत्यादि। यस्माद् याज्या हविःप्रदानसाधनम्, 'तस्मात्' तस्याः तत्प्रदानप्रकाशकं लिङ्गं 'रूपम्'। अभिहित-

---

१— "पर्यङ्खयाते"–इति ऋ० सं० १०. १६. ७।

२— सा० सं० आ० गा० १. १. २७।

३— ता० ब्रा० १६. ११। तै० ब्रा० ३. ५. १३।

४— सा० सं० आ० गा० २. १. २१। तै० ब्रा० ३. ५. १३।

५— ता० ब्रा० १६. ११। ६— 'कार्यभेदश्चाह'–इति ठ।

लिङ्गानि दर्शयति— "वीहीति । 'हि' यस्मात् 'तया' याज्यया प्रयच्छति हविः, 'तस्मात्' प्रदानप्रकाशकं यद् "वीहि"-इत्यादि लिङ्गम्, तद्वत्येव सर्वत्र याज्या कार्येत्यर्थः ॥ १७ ॥

लक्षणान्तर माह— "सा या पुरस्ताल्लक्षणेति । 'पुरस्तात्' मन्त्रस्य पुरोभागे 'लक्षणं' यष्टव्यदेवनाम यस्यां[1] 'सा' ('अनुवाक्या') पुरोऽनुवाक्या । तस्या अधस्ताल्लक्षणत्वे कारण माह— "तस्या इति । 'तस्याः' पुरोऽनुवाक्यायाः 'अमुष्याः' "असौ हि अनुवाक्या"-इत्युक्तत्वात्[2] सामानाधिकरण्यम् । तस्याः चन्द्रनक्षत्रसूर्याः ('अवस्ताल्लक्ष्म') अधस्तात् लक्ष्माणीव; अधोभागे तेषां परिभ्रमणात् । अतोऽस्या अपि तथात्वं युक्तम् ॥ १८ ॥

"अथ योपरिष्टाल्लक्षणेति वाक्यं पूर्ववाक्यवद्व्याख्येयम् । 'तस्याः' याज्यारूपायाः 'अस्याः' भूम्याः ॥ १९ ॥

उक्तं पुरस्तादुपरिष्टाल्लक्षत्वं विशिनष्टि— सा ह स्मैवेति । 'यस्यै' यस्या अनुवाक्यायाः 'प्रथमात् पदात्' "अग्निः प्रत्नेन सोम गीर्भिरित्यादिलक्षणाद्[3] यष्टव्यदेवतां ब्रूयात्, 'सा एव समृद्धा अनुवाक्या' । 'याज्या' तु सा समृद्धा, 'यस्या उत्तमात् पदात्' "जिह्वा अग्ने चकृषे इत्यादिकात्[4] अभिहितायाः 'देवतायाः' उपरि 'वषट्करोति' । ननु कथं देवतासद्भावमात्रेण समृद्धत्व मिति, तदाह—

---

१— "यष्टव्यदेवाना मस्यां'–इति ञ, झ, डा०–वेबरेण च दृष्टः ।

२— पूर्वस्यां कण्डिकायां द्रष्टव्यम् ( ४७८पृ० ११पं० ) ।

३— ऋ० सं० ८. ४४. १२ । तै० ब्रा० ३.५.६. ३ । तै० सं० २. ६, २. २ ।

४— ऋ० सं० १० ८. ६ । तै० ब्रा० ३. ५. ७. २ । तै० सं० २. ६. २. ८ ।

"वीर्यं वा इति। 'देवता वै वीर्यम्' ऋगाम्नानस्य तत्प्रकाशनार्थत्वात्[1] ॥ २० ॥

अथ याज्यानन्तरभाविनं वषट्कारं विभज्य विधाय प्रशंसति— "स वै वौगितीति। 'वौगिति' उच्चारणं कुर्यात्। तत्प्रशंसति— "वाग्वा इति। 'वौग्'-इत्येतदौकारस्थाने आकारे कृते 'वाग्'-इति भवति; अतो 'वषट्कारो वाक्'। सा च 'वाक्' 'रेतः'; सेचनसाधनत्वात्। उच्चारण मेव तत्सेकः। तथा 'षडिति' करोतीत्यनुषज्यते, ब्रूयादित्यर्थः। सङ्ख्याया ऋतुष्वपि सम्भवात् 'ऋतवः' एव 'षट्'-इत्यनेन विवक्षिताः; प्राक् षडित्यतः वौगित्येतस्य स्थापनात्। तेन 'सिक्तं' 'रेतः' 'इमाः' सर्वाः 'प्रजाः' उत्पादयन्ति। 'तस्मात्' 'एवं' वौषडिति 'वषट्' कुर्यात् ॥ २१ ॥

इत्थं दर्शपूर्णमासोभयसाधारण मवदानादिकं वषट्कारान्तं धर्म मभिधाय तत्प्रसङ्गाद्यवादिशब्दाभिधानद्वारेण दर्शपूर्णमासयागं प्रशंसति— "देवाश्च वा असुराश्चेत्यादिना। 'प्राजापत्याः' प्रजापतेः पुत्राः 'दायं' पैतृकं वित्तम्[2] 'उपेयुः'। किं तत्? 'एतावेव' प्रसिद्धावेव 'अर्द्धमासौ' मासस्यार्द्धौ शुक्लकृष्णपक्षौ। "अर्द्धं नपुंसकम्[3]"-इत्येकदेशिसमासः। विभज्याह— "य एवापूर्यत इति। प्रजापतेः कालात्मकत्वादनयोस्तद्दत्त्वम् ॥ २२॥

---

१— "प्र वीर्येण देवताति चेकिते"-इत्यादिषु (ऋ॰ सं॰ १. ५५. ३.)।

२— "दायं पित्र्यम्"-इति म॰ सं॰ ९. १६४। ऋ॰ सं॰ १०. ११४. १०। ऐ॰ ब्रा॰ ७. ३. ५। ता॰ ब्रा॰ १६. ४। तै॰ सं॰ ३. १. ९ ४।

३— "पा॰ सू॰ २. २. २।

एवं विभागे सति 'देवाः' 'कथम्' असुरेभ्यः, तदीय मपि भागं 'संवृञ्जीमहि' अपहरेमहि ? एवं कामयित्वा तत्साधनं प्रयासेनान्विष्य 'दर्शपूर्णमासौ' यागावेवापश्यन्। 'ताभ्याम्' ('एत मपि') कृष्णपक्ष मपि स्वय मलभन्त। (॥ २३ ॥)

तद्द्वारा तदुभयावर्त्तमानात्मकं मासम्, तदावर्त्तनात्मकं संवत्सरं च, असुरेभ्यः 'समवृञ्जत' स्वाधीनं कृतवन्तः। अतो न्यूनाधिक-कालावयवानां संवत्सरेऽन्तर्भावात् 'संवत्सरः सर्वम्' संवत्सरात्मकात् 'सर्वस्मात्' कालात् 'सपत्नान् असुरान्' भागरहितान् अकुर्वन्। 'निरभजन्'-इति तात्पर्याभिधानम्। 'सर्वम् एव एषः'-इति वेदितुः फलम्। अतो दर्शपूर्णमासानुष्ठानं सपत्नसर्वस्वहरण मिति प्रशंसा ॥ २४ ॥

"स यो देवाना मिति। 'सः यः' इति वाक्यालङ्कारे। 'सः' आपूर्यमाण-पक्षः पुरा 'देवाना मासीत्'। 'सः' 'यवायुवत'। यौतीति[1] यवः, तस्य यवेति नाम। कथम् ? 'हि' यस्मात् 'तेन' आपूर्यमाणपक्षेण सह 'देवाः' 'अयुवत' समसृज्यन्त। 'असुराणां' कृष्णपक्षस्तु 'अयवा'। कथम् ? 'हि' यस्मात् 'तेन' कृष्णपक्षेण सह 'नायुवत' तस्य देवैरपहृतत्वात् ॥ २५ ॥

शुक्लकृष्णपक्षयोर्नामधेयव्यत्यास माह— "अथो इति। 'देवानां' स्वभूतो 'यः' असौ 'अयवा'; देवानां प्रतिनियतस्वभूतत्वेनासुर-सम्बन्धाभावात्। अतोऽयवनादमिश्रणादयवा शुक्लपक्षः। 'असुराणां' स्वभूतः कृष्णपक्षो 'यवा'; उपायेनापहृत्य देवैर्मिश्रितत्वात् ॥

---

१— "यु मिश्रणेऽमिश्रणे च"-इति अदा० प० २२ धा०।

अनयोरेवावयवावयवप्रशंसार्थ महोरात्रमाससंवत्सराणा मपि नाम दर्शयति— "शब्द मित्यादिना। यव-शब्दाभिधेयान् शुक्ल-कृष्णपक्षान् अर्हतीति[1] 'मासः यव्यः'। 'स्वेकः'-इत्यस्य मकारोपजनेन 'सुमेकः'-इति संवत्सरस्य नाम सम्पन्नम्। 'सु' सुष्ठु 'एकः' 'स्वेकः'। "सर्वं वै संवत्सरः"-इत्युक्तत्वेन[2] सर्वस्यापि कालस्य तत्रैवान्तर्भावात् संवत्सर एक एव कालः; अतस्तस्यैतन्नाम युक्तम्; तस्यैव परोक्षेण[3] 'सुमेकः'-इति व्यवहारः[4] ॥

प्रसङ्गादहरादिनामाभिधाय प्रकृत मुपसंहरति— "यवा चेति। 'यवा अयवा च हि' 'यवेतीव' यवेत्येव भवति; यवनस्योभयानुगतत्वात्। अथवा देवैरेवायवात्मकस्य कृष्णपक्षस्यापि यवनात् पक्षद्वय मपि 'यवा'। अतः 'एतेषां' यवादीनां मध्ये 'येन' निमित्तेन 'होता' भवेत्, 'तत्' कार्यं 'याविहोत्रम्'।

---

१— 'हीतीति'- इति ज, 'युञ्जतीति'-इति तत्रैव शोधितः पाठः, 'अ-[य]तीति'-इति डा०-वेबर-शोधितः। अर्हतीति पाठे यवशब्दात् "दण्डादिभ्यो यत्"-इति (पा० सू० ५. १. ६६.) अर्हत्यर्थे यत् स्यात्, स्याच्च दण्डादेराकृतिगणत्वं मन्तव्यम्। 'अहीत्तानि'-इति भ-पाठः।

२— ४८० पृ० ६ पं०।

३— "परोक्षप्रिया इव हि देवाः"-इति तै० ब्रा० १. ५. ९. २। तथैव ऐ० ब्रा० ३. ३. ९।

४— 'मासो यव्यः'-इत्यस्यानन्तरं स्वेक इत्यादि-व्यवहार इत्यन्त-ग्रन्थस्य स्थाने "सुष्ठु एकः 'स्वेकः'; सर्वस्यापि कालस्य तत्रैवान्तर्भावात् संवत्सर एक एव कालः मकारोप[यु]ञ्जनेन 'सुमेकः'-इति परोक्षनाम सम्पन्नम्"-इति ढ-पाठः।

तैत्तिरीयकेऽपि "ऋतव्या उपदधाति"-इत्यत्र[1] चयनप्रकरणे यवादयो व्याख्याताः[2] ॥ २६ ॥ ५ [७. २.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥

## ॥ इति प्रथमकाण्डे पञ्चमप्रपाठकः समाप्तः[3] ॥

---

१— "तै० सं० ५. ३. १.२ ; ११. ९ ; ४. २. १ ।

२— "कल्पः-'यावा अयावा इति समर्त्तव्याः'-इति । पाठस्तु- 'यावा अयावा एवा ऊमाः सन्नः सगरः सुमेकः'-इति । यावाद्याः षट् शब्दा वसन्ताद्यृतुवाचिनः ; सुमेकशब्दः संवत्सरवाची । हे इष्टके! त्वं त्वद्रूपासीति योज्यम्"-इति तै० सं० ४. ४. ८. २३-२९ सा० भा० ।

३— इत उत्तरम् — क-पुस्तके "काण्डी १२१"-इति, ख-पुस्तकेऽपि तथैव, ग-पुस्तके "कण्डी १२१"-इति, घ-ङौ न स्तः, च-पुस्तके तु "कण्डिकासङ्ख्या १२१"-इति । तत्र १ब्रा० १२क०, २ब्रा० ४१क०, ३ब्रा० २१क०, ४ब्रा० २१क०, ५ब्रा० २६क० ; सङ्कलनयात्र पञ्चमप्रपाठकीयपञ्चसु ब्राह्मणेषु १२१ कण्डिकाः सन्ता इति सिद्धम् ॥

अथ

षष्ठप्रपाठके प्रथमं ब्राह्मणम् ।

अपि वा

सप्तमाध्याये तृतीयं ब्राह्मणम् ।

॥ हरिः ॐ ॥

यज्ञेन वै देवाः* । दिव मुपोदक्रामन्नथ योऽयं देवः पशूना मीष्टे स ऽइहाहीयत तस्माद्वास्तव्य ऽइत्याहुर्व्वास्तौ हि तदहीयत ॥ १ ॥

स येनैव देवा दिव मुपोदक्रामन् । तेनो† ऽएवार्चन्तः श्राम्यन्तश्चेरुरथ योऽयं देवः पशूना मीष्टे य ऽइहाही-यत ॥ २ ॥

स ऽऐक्षत । अहास्य हान्तर्यन्त्य मा यज्ञादिति सोऽनू-च्चक्राम स ऽआयतयोत्तरत ऽउपोत्पेदे य‡ ऽएष स्विष्ट-कृतः कालः§ ॥ ३ ॥

* 'देवाः'–इति ख । † 'ऽक्रामंस्तेनो'–इति क, ग ।

‡ 'स'–इति च । § 'कालः'–इति घ ।

ते देवा ऽअब्रुवन्। मा व्विसाक्षीरिति ते वै मा यन्नान् मान्तुर्गताहुतिं मे कल्पयतेति तथेति स समहृहत् स नास्यत् स न कञ्चनाहिनत् ॥ ४ ॥

ते देवा ऽअब्रुवन्। यावन्ति नो हवीꣳषि गृहीतान्यभूवन्त्सर्वेषां तेषाꣳ हुत मुपजानीत यथास्मा ऽआहुतिं कल्पयामेति ॥ ५ ॥

ते ऽध्वर्यु मब्रुवन्। यथापूर्वꣳ हवीꣳष्यभिघारयैकस्मा ऽअवदानाय पुनराप्याययायातयामानि कुरु तत ऽएकैक मवदान मवद्येति ॥ ६ ॥

सोऽध्वर्युः। यथापूर्व्वꣳ हवीꣳष्यभ्यघारयदेकस्मा ऽअवदानाय पुनराप्याययदयातयामान्यकरोत्तत ऽएकैक मवदान मवाद्यत्तस्माद्वास्तव्य ऽइत्याहुर्व्वास्तु हि तद्यज्ञस्य यद्धुतेषु हविष्षु तस्माद्यस्यै कस्यै च देवतायै हविर्ग्गृह्यते सर्व्वत्रैव स्विष्टकृदन्वाभक्तः सर्वत्र ह्येवैनं देवा ऽअन्वाभजन् ॥ ७ ॥

तद्वा ऽअग्नय ऽइति क्रियते। अग्निर्वै स देवस्तस्यैतानि नामानि शर्व्व ऽइति यथा प्राच्या ऽआचक्षते भव ऽइति यथा बाहीकाः पशूनाम्पती रुद्रोऽग्निरिति तान्यस्याशान्तान्येवेतराणि नामान्यग्निरित्येव शान्ततमं तस्मादग्नय ऽइति क्रियते स्विष्टकृत ऽइति ॥ ८ ॥

ते होचुः। यत्त्वय्यमुत्र सत्ययक्ष्महि तन्नः स्विष्टं कुर्व्विति तदेभ्यः स्विष्ट मकरोत्तस्मात् स्विष्टकृत ऽइति ॥ ९ ॥

सोऽनुवाक्या मनूच्य सम्पश्यति। ये तथाग्निꣳ स्विष्टकृत मयाडग्निरग्नेः* प्रिया धामानीति तदाग्नेय माज्यभाग माहायाट् सोमस्य प्रिया धामानीति तत्सौम्य माज्यभाग माहायाडग्नेः प्रिया धामानीति तद्य ऽएष ऽउभयत्राच्युत ऽआग्नेयः पुरोडाशो भवति त माह ॥ १० ॥

अथ यथादेवतम्। अयाड् देवाना माज्यपानां प्रिया धामानीति तत्प्रयाजानुयाजानाह प्रयाजानुयाजा वै देवा आज्यपा यक्षदग्नेर्होतुः प्रिया धामानीति तदग्निꣳ होतार माह तदस्मा ऽएतां देवा ऽआहुतिं कल्पयित्वाथैनेनैतद्भूयः समशाम्यन् प्रिय ऽएनं धामन्नुपाह्वयन्त तस्मादेवꣳ सम्पश्यति ॥ ११ ॥

तद्वैके। देवतां पूर्व्वां कुर्व्वन्त्ययाड्ढारादग्नेरयाट् सोमस्यायाडिति तदु तथा न कुर्याद्विलोम ह ते यज्ञे कुर्व्वन्ति ये देवतां पूर्व्वां कुर्व्वन्त्ययाड्ढारादिदꣳ हि प्रथम मभिव्याहरन्नयाड्ढार मेवाभिव्याहरति तस्मादयाड्ढार मेव पूर्व्वं कुर्यात् ॥ १२ ॥

यक्षत् स्वं महिमान मिति। यत्र वा ऽअदो देवता

---

* 'मयाळग्निरग्नेः'—इति सायणसम्मतः पाठ इति डा०-वेबरः।

ऽआवाहयति तदपि स्वं महिमान मावाहयति तदतः प्राङ् नैव किञ्चन स्वाय महिम्न ऽइति क्रियते तदेष तं प्रीणाति तथो हास्यैषोऽमोघायावाहितो भवति तस्मादाह यक्षत् स्वं महिमान मिति ॥ १३ ॥

आ यजता मेज्या ऽइष ऽइति। प्रजा वा ऽइषस्ता ऽएवैतद्यायजूकाः करोति ता ऽइमाः प्रजा यजमाना ऽअर्चन्त्यः श्राम्यन्त्यश्चरन्ति ॥ १४ ॥

सो ऽअध्वरा जातवेदा जुषताᳫं हविरिति। तद्यज्ञस्यैवैतत्समृद्धि माशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति तस्मादाह जुषताᳫं हविरिति ॥ १५ ॥

तद्यदेते ऽऋच। याज्यानुवाक्ये ऽअवक्लृप्ततमे भवतस्तृतीयसवनं वै स्विष्टकृद्वैश्वदेवं वै तृतीयसवनं पिप्रीहि देवाᳫँ३* ऽउशतो यविष्ठेति तदनुवाक्यायै वैश्वदेव मग्ने यदद्य विशो ऽअध्वरस्य† होतरिति तद्याज्यायै वैश्वदेवं तद्यदेते ऽएवᳫंरूपे भवतस्तेनो ऽएते तृतीयसवनस्य रूपं तस्माद्वा ऽएते ऽऋच याज्यानुवाक्ये ऽअवक्लृप्ततमे भवतः ॥ १६ ॥

तौ वै त्रिष्टुभौ भवतः। व्यास्तु वा ऽएतद्यज्ञस्य यत् स्विष्टकृदवीर्यं वै व्यास्त्विन्द्रियं व्वीर्यं त्रिष्टुबिन्द्रिय

---

* 'देवांश॥'–इति च। † 'ऽअध्वरस्य'–इति क, ग।

मेवैतद्वीर्यं व्वास्तौ स्विष्टकृति दधाति तस्मात्त्रिष्टुभौ भवतः ॥ १७ ॥

उतो ऽअनुष्टुभावेव भवतः। व्वास्त्वनुष्टुब्व्वास्तु स्विष्टकृद्वास्तावेवैतद्वास्तु दधाति पेसुकं वै व्वास्तु पिस्यति ह प्रजया पशुभिर्यस्यैवं व्विदुषोऽनुष्टुभौ भवतः ॥ १८ ॥

तदु ह भाल्लवेयः। अनुष्टुभ मनुवाक्यां चक्रे त्रिष्टुभं याज्या मेतदुभयं परिग्रह्णामीति स रथात् पपात स पतित्वा बाहु मपि शश्रे* स परिममृशे यत् किं मकरं तस्मादिद मापदीति† स हैतदेव मेने यद्विलोम यज्ञेऽकर मिति तस्मान्न व्विलोम कुर्यात् सच्छन्दसावेव स्याता मुभे वैवानुष्टुभा ऽउभे वा त्रिष्टुभौ ॥ १९ ॥

स वा ऽउत्तरार्द्धादवद्यति। उत्तरार्द्धे जुहोत्येषा ह्येतस्य देवस्य दिक् तस्मादुत्तरार्द्धादवद्यत्युत्तरार्द्धे जुहोत्येतस्यै वै दिश ऽउदपद्यत तं तत ऽएवाशमयंस्तस्मादुत्तरार्द्धादवद्यत्युत्तरार्द्धे जुहोति ॥ २० ॥

स वा ऽअभ्यर्द्ध ऽइवेतराभ्य ऽआहुतिभ्यो जुहोति। इतरा ऽआहुतीः पशवोऽनुप्रजायन्ते रुद्रियः स्विष्टकृद्-

---

* 'सश्रे'—इति सायणसम्मतः पाठ इति डा०-वेबरः।

† 'मापदिति'—इति च। 'मापदीति'—इत्यपि डा०-वेवरेण दृष्टः। 'मपदिति'—इत्येव पाठः सायणसम्मत इति च डा०-वेबरः।

द्रियेण* पशून् प्रसजेद्यदितराभिराहुतिभिः संसृजेत् तेऽस्य गृह्याः पशव ऽउपमूर्यमाणा ऽईयुस्तस्मादभ्यर्द्ध ऽइवेतराभ्य आहुतिभ्यो जुहोति ॥ २१ ॥

एष वै स यज्ञः। येन तद्देवा दिव मुपोदक्रामन्नेषु ऽआहवनीयोऽथ य ऽइहाहीयत स गार्हपत्यस्तस्मादेतं गार्हपत्यात् प्राञ्च मुद्धरन्ति ॥ २२ ॥

तं वा ऽअष्टासु विक्रमेष्वादधीत। अष्टाक्षरा वै गायत्री गायत्र्यैवैतद्दिव मुपोत्क्रामति ॥ २३ ॥

एकादशस्वादधीत। एकादशाक्षरा वै त्रिष्टुप् त्रिष्टुभैवैतद्दिव मुपोत्क्रामति ॥ २४ ॥

द्वादशस्वादधीत। द्वादशाक्षरा वै जगती जगत्यैवैतद्दिव मुपोत्क्रामति नात्र मात्रास्ति यत्रैव स्वयं मनसा मन्येत तदादधीत स यद्वा ऽअप्यल्पक मिव प्राञ्च मुद्धरति तेनैव दिव मुपोत्क्रामति ॥ २५ ॥

तदाहुः। आहवनीये हवींषि श्रपयेयुरतो वै देवा दिव मुपोदक्रामंस्तेनो ऽएवार्चन्तः श्राम्यन्तश्चेरुस्तस्मिन् हवींषि श्रपयाम तस्मिन् यज्ञं तनवामहा ऽइत्यपस्खलु ऽइव ह स हविषां यद्गार्हपत्ये श्रपयेयुर्यत्र ऽआहवनीयो यज्ञे यज्ञं तनवामहा ऽइति ॥ २६ ॥

* '०द्रुद्रेण'-इति सायणसम्मत इति डा०-वेबरः।

उतो* गार्हपत्य ऽएव ऽअपयन्ति। आहवनीयो वा ऽएष न वा ऽएष तस्मै यदस्मिन्नशृतꣳ ऽअपयेयुस्तस्मै वा ऽएष यदस्मिञ्छृतं जुहुयुरित्यतो यतरथा कामयेत तथा कुर्यात् ॥ २७ ॥

स हैष यज्ञ ऽउवाच। नग्नताया वै बिभेमीति का ते ऽनग्नतेत्यभित† ऽएव मा परिस्तृणीयुरिति तस्मादेतदग्निमभितः परिस्तृणन्ति तृष्णाया वै बिभेमीति का ते तृप्तिरिति ब्राह्मणस्यैव तृप्ति मनु तृप्येय मिति तस्मात्सꣳस्थिते यज्ञे ब्राह्मणं तर्प्पयितवै ब्रूयाद्यज्ञ मेवैतत् तर्प्पयति ॥ २८ ॥ १ ॥

॥ इति षष्ठप्रपाठके प्रथमं ब्राह्मणम् [७. ३.] ॥

अथाग्नये स्विष्टकृद्यागम्, तस्य प्रधानयागसमानन्तर्यञ्च विधातु माख्यायिका माह— "यज्ञेन वा इति। पुरा खलु 'देवाः' 'यज्ञेन' साधनेन 'दिवं' प्राप्ताः; तथा पश्वभिमानी 'देवः' रुद्रः 'इह' यज्ञवास्तावुषित्वा[1] द्युलोकाद्धीनोऽभूत्। अत एव 'वास्तौ' एव स्थितत्वात् रुद्रो 'वास्तव्य इति' वेदविदः कथयन्ति ॥ १ ॥

रुद्रस्येहैव हीनभावे कारणाभिधानायाह— "स येनैवेति।

* 'उतो'-इति च। † '०तेत्यभित'-इति च।

१— 'यज्ञवास्तवरोषित्वा'-इति अ, भ, दृष्टो डा०-ओयेबरेणापि।

'अथ' रुद्राः 'देवाः' 'येन' यज्ञेन साधनेन 'दिवं' गताः, 'तेनैव' साधनेन, तत्साधयितुं साधन मतिदुस्सम्पाद मिति ब्रुवन् आत्मान मन्तरेण क्लेशापनयतां स्वर्गसाधन मन्वतिष्ठत् ॥ २ ॥

"स ऐक्षतेति । भवतः स चाहं देवैस्त्यक्तो भुव मा यज्ञादेते व्यवहितं कुर्वन्तीत्येवेति विचार्य स्वयं यज्ञप्रदेशं प्रत्युत्तमासन्नद्धो[१] भूलोत्तरस्यां दिशि स्विष्टकृत्काले यज्ञं प्रतिरोद्धु मुत्तस्थौ ॥ ३ ॥

तथा च सति— "ते देवा अब्रुवन्निति । 'ते देवाः' (अमुं[१]) यज्ञं विसृष्टं मा कार्षीरित्यब्रुवन् । अथ स रुद्रोऽपि हे देवाः! 'ते' यूयं 'मा' मां 'यज्ञात्' अन्तर्हितं 'मा' कार्ष्ट, अत एव 'आहुतिं 'मे' मदर्थं 'कल्पयतेति' उक्तवान् । तैः 'तथा' अस्तु 'इति' उक्ते 'सः' रुद्रो यज्ञं 'समवृहत्' ऊर्द्धं प्रापयत्; न च हविरादिकं बहिः क्षिप्तवान् । तथा 'कञ्चन' किमपि यज्ञावयवं न हिंसितवान् ॥ ४ ॥

"ते देवा इति । अथ 'ते देवाः' परस्पर मित्यम् 'अब्रुवन्',— अस्माकं प्रदानाय 'यावन्ति हवींषि गृहीतानि', 'तेषां' पूर्व्वं माहुतं 'कृतं'[२] शिष्टम् 'उपजानीत' । 'यथा' येन प्रकारेण द्रव्येण 'अस्मै' रुद्राय 'आहुतिं कल्पयाम' 'इति' ॥ ५ ॥

एव मुक्त्वा, "तेऽध्वर्यु मब्रुवन्निति । हे अध्वर्यो ! त्व मस्माक मवत्तानि 'हवींषि' आग्नेयादिक्रमेण अभिघारणं कुरु । तथा चैकस्मै, ततोऽप्यवशिष्टायावदानाय, 'पुनः' तदवत्तशेषम्, 'पुनः' अभिघारणेन 'आप्यायय', ततः अयातयामं कृत्वा सर्वाण्यप्यवत्तशे-

---

१— 'प्रत्युच्चक्राम स क्रुद्धो'—इति ढ । २— नैतत् पदं ढ-पुस्तकादन्यत्र ।
३— 'तेषां पूर्वं माहुतिकृतां'—इति भ,'तेषां सर्वेषां माहुतिकृता'—इति द ।

षाणि अगतसाराणि कुरु, 'ततः' 'एकैकं' यावन्तः प्रधानशेषास्तेष्वेकैक मवदानं कुरु ॥ ६ ॥

देवैरभिहित मर्थ मध्वर्युणा तथैवानुष्ठित मर्थं श्रुतिभूतार्थेन खेटानुवदति— "सोऽध्वर्युरित्यादिना ॥

इदानीं मवशिष्टभाक्त्वेन रुद्रस्य वास्तव्यत्वप्रसिद्धि माह— "तस्मादिति। आख्यायिकासिद्ध मर्थ मिदानीं विधत्ते— "तस्माद् यस्मै कस्मै चेति। हविर्ग्रहणवत्सर्वप्रदेशेष्वपि स्विष्टकृतो नियतत्वे कारणाभिधानं "सर्वत्र होति। रुद्रः 'अन्वाभक्तः' ॥ ७ ॥

कथ मग्नेः स्विष्टकृति क्रियत इत्याशङ्क्याह— "तदा अग्नय इतीति। प्राच्यादिदेशभेदेन शर्वादिनामभेदेऽपि देवतैकैवेत्यर्थः। यद्येवं तर्हि अन्यत् नाम किन्न स्यादित्यत आह— "तान्यस्येति। 'अस्य' रुद्रस्य अग्निनामाभिधेयस्य अन्तु पावकादि नाम; सर्वलोकोऽपकारित्वात्। 'तस्मात्' तत्र सर्वत्र 'अग्नये-इति क्रियते' ॥ ८ ॥

अथ किमर्थं स्विष्टकृत इति विशेषणं हविर्दातृभिः क्रियते ? तत्र कारण माह[1]— "ते होचुरिति। 'यद्' यस्मात् 'त्वयि' 'अमुत्र' आहवनीयदेशे आहुत्याधारभूते 'सति' 'अयक्ष्महि' इष्टवन्तः, तस्मात्। अथ वा 'यत्' हविर्जातम् 'अयक्ष्महि', 'तत्' सर्वं 'स्विष्टम्' अवैकल्येन प्र'कुरु'; यथा साङ्गं फलवद्भवति, तथा कुर्वित्यर्थः। यस्मादूचुः, 'तस्मात्' स तथैव 'स्विष्ट मकरोत्' सर्वत्रापि विशेषणत्वेन 'स्विष्टकृत इति' क्रियते। तस्मात् "अग्नये स्विष्टकृते"-इति स्विष्टकृद्यागसमये ब्रूयादित्यर्थः ॥ ९ ॥

---

१— 'स्विष्टकृत इति विशेषणस्य कारण माह'—इति ढ।

अथ स्विष्टकृन्निगद[1] मभिधातु माह[2]— "सोऽनुवाक्या मिति । 'स:' होता, स्विष्टकृदनुवाक्यानन्तरं 'ये' आनन्तर्येण प्रयाजाज्य-भागादिदेवाः स्विष्टाः, तान्, तं 'स्विष्टकृत मग्निं' च 'सम्पश्यति' संस्मरेत्, सम्भूयानुवदेदित्यर्थः ॥

मन्त्रदर्शनप्रकार मनूद्य क्रमेण व्याचष्टे—"अयाडग्निः[3]"-इत्यादिना । 'अयं' स्विष्टकृत् 'अग्निः' ('अग्नेः') प्रथमाज्यभागदेवस्य ('प्रिया') प्रियाणि 'धामानि' 'इति' निःशेषाणि 'अयाट्' इष्टवान् । 'तत्' तेनैतन्मन्त्रभागपाठेन प्रथमम् 'आज्यभागं' स्विष्टं कृतवानित्युक्तवान् भवति । एव मितरवाक्यान्यपि योज्यानि । एष स्विष्टकृन्निगद आवाहननिगदेनैव व्याख्यातप्रायः[4] सम्पश्यताम्[5] ॥ १० ॥

अत्र स्विष्टकृदग्निरवान्तरदेववत्स्विष्टीकर्त्तव्यत्वेनोक्तः, सोऽभि-धीयते— "यक्षदग्नेर्होतुः प्रिया धामानीत्यनेन । अत्राज्यभागादि-देवेभ्योऽन्य मिच्छितत्वादयाडिति भूतार्थे प्रयोगात् स्विष्टकृदग्नेः स्वस्येतः परं यष्टव्यत्वम् । यक्षदिति विध्यर्थः पञ्चमलकारः[6] । "अग्निं

---

१— स एष निगदः वा० सं० २१ अ० ४७ कण्डिकायां द्रष्टव्यः ।

२— 'अथ स्विष्टकृन्निगद मभिदधाति'—इति ङ ।

३— 'अयालग्निः'—इत्येव पाठोऽस्मद्दृष्टेषु सर्वपुस्तकेषु, पठ्यते तु अया-ळग्निः'—इति ; वस्तुतः 'अयाडग्निः'—इत्येव साधुः ।

४— पुरस्तात् ४. २. १६ द्रष्टव्यम् (२८८, २९१ पृ० ) ।

५— नैतत् पदं ठ-पुस्तके ।

६— "लिङर्थे लेट्"—इति पा० सू० ३. ४. ७ ।

होतार माहेति। होमाधार मग्नि माह। स एव स्विष्टकृदग्निः; "त्वय्यमुत्र सत्ययस्त्वहीत्युक्तत्वात्[1]। किं मेतत्सन्दर्शनमात्रेणाग्निः कथं स्विष्टं कुर्यादित्याशङ्क्य तस्य प्रीत्युत्पादनप्रकारं दर्शयति— "तदस्मा इति। 'तत्' तस्मात् 'अस्मै' स्विष्टकृतेऽग्नये पूर्वम् 'एता माहुतिं कल्पयित्वा' ('अथ') इदानीम् ('एतेन') अनेन यच्चदग्ने-रिति भागेन 'भूयः समशाम्यन्' (भूयसीं प्रीति मुदपादयन्[1])। "तस्मादिति। सर्वथाग्नेः सन्तुष्टत्वाय स्विष्टकृत्त्वकरणस्य प्रकाशनादेवं सम्पश्येदित्यर्थः॥ ११॥

अयाट्कारात् प्राग् देवतानामनिर्देश मेकीयपक्षत्वेनोपन्यस्य निराचष्टे— "तद्धैक इति। तत् स्वय मेव प्रदर्शयति— "अग्नेरयाट् सोमस्यायाडिति। अग्नेः सोमस्य च यानि धामानि, तानि स्विष्टकृदग्निः सम्यगिष्टवानित्यर्थः। 'विलोम' विरुद्धम्; स्विष्टी-करणस्यैवाभ्यर्हितत्वेन प्रथमनिर्देष्टव्यत्वात्[2]। अतः 'प्रथम मभिव्या-हरन्' पुरुषोऽयाट्कार मेव प्रथम मभिव्याहरेत्॥ १२॥

स्वं महिमान मित्यस्य तात्पर्य माह— "यजत् स्वं महिमान मिति। अयं स्विष्टकृदग्निः 'स्वं महिमानं' स्वकीयं देवतारूप मपि 'यजत्' यजेत। स्विष्टकृत इदानी मपि अकृतत्वादयाडिति नोच्यत इत्यभिप्रायः। 'यत्र' यष्टव्यदेवता 'आवाहयति', तत्रापि 'स्वं

---

१— पुरस्ताद् द्रष्टव्यम् (४९६ पृ० १पं०)।

२— व्याख्यैषा ढ-पुस्तकमात्रे दृश्यते।

३— 'देवतां देवतानाम पूर्वम् अयाट्कारात् प्राक्। तद्विरुद्धम्; स्विष्टी-करणस्यैवानभ्यर्हितत्वेन प्रथमनिर्देष्टव्यत्वात्'—इति ढ।

महिमानं' महत्त्वस्य विग्रह मप्यावाहयति। अतो यथा आवाहिता देवताः सर्वा अपीष्टाः, एवं स्वं महिमार्थ मपि यष्टव्यम्। यतः 'अतः प्राक्' 'किञ्चन' 'स्वाय महिम्ने' इदं हविः 'इति' 'न क्रियते', तस्मात् 'अत्र' स्विष्टकृन्निगदाभिधानसमये 'तत्' तेन स्वं महिमान मित्यनेन 'तम्' (अग्नेर्महिमानं[1]) प्रीणितवान् भवति। अत एव यत्तदग्नेरित्येतत् अग्नेरपि यागानुज्ञाप्रदानादेव पूर्वं प्रागावाहनसमये आवाहितः स्वो महिमा। 'तथो ह' तथैव सति 'अस्य' यजमानस्य 'अमोघाय' साफल्याय 'आवाहितः' भवेत्। तस्मादित्युपसंहारः ॥ १ ३ ॥

"आ यजतेति। 'आ यजता मेज्या इषः'-इतिभागस्य तात्पर्य माह— इट्शब्देनान्न मुच्यते; तदुपजीवित्वात् 'प्रजाः' अपि 'इषः'; 'एज्याः' पुनः पुनरिज्याः[2]; अत एतत्पाठेन यजमानरूपाः प्रजाः 'यायजुकाः' इष्टिशीलाः[3] 'करोति'। अतः कारणात् 'ता इमाः' सर्वा यजमानरूपाः प्रजा इदानीम् 'अर्चन्त्यः' बहुकर्म कुर्वन्त्यः 'श्राम्यन्तः' आत्मानं व्यापारैः क्लेशयन्त्यः ('चरन्ति') यागाननुतिष्ठन्ति ॥ १ ४ ॥

"सो अध्वरेति। सो अध्वरेत्यस्य तात्पर्य माह— "तद्यज्ञस्यैवैतदिति। 'हविः' सौविष्टकृतम्, 'जातवेदाः' आहुत्याधारः स्विष्टकृदग्निः। 'यत्' 'हविः' (सौविष्टकृतं[4]) 'देवाः' सेवन्ते[5], 'तेन'

---

१— ढ-पुस्तके नैते पदे दृश्येते।

२— 'पुनर्यष्टा'–इति ज, भ ; 'पुनरिष्या'–इत्यपि दृष्टो डा०-वेबरेण।

३— 'इज्याशीलाः'–इति च।

४— नैतत् पदं ढ-पुस्तकादन्यत्र।

५— 'सेवतां'–इति ढ।

सेवितेन हविषा 'महत्' उत्तमं[1] स्थानं 'जयति' यजमानः ; अतः मन्त्रद्वैर्हविर्षोऽधीनत्वादेतत्पाठो युक्तः ॥ १५ ॥

इत्थं स्विष्टकृन्निगदं व्याख्याय तस्य याज्यां पुरोऽनुवाक्याञ्चाह— "तद्यदिति। 'अत्र' स्विष्टकृति। 'तद्यत्' तस्मात् 'एते' वक्ष्यमाणे एव 'याज्यानुवाक्ये' 'अवक्लृप्ततमे' अत्यन्तं योग्ये भवतः। तयोरवक्लृप्तत्व माह— "तृतीयसवनं वा इति। अयं 'स्विष्टकृद्' यागः 'तृतीयसवनं' तत्स्थानीयः; अन्तिमत्वसाम्यात्। तच्च 'तृतीयसवनं' 'वैश्वदेवं' विश्वे देवास्तस्याभिमानिनः ; अतः सर्वथा वैश्वदेवेन भवितव्यम्। तत्रापि "पिप्रीहि"-इति[2] या ऋगस्ति, 'तत्' 'अनुवाक्यायै' अनुवाक्यायाः 'वैश्वदेवं' रूपम् ; तत्र "देवान्"-इति देवानां बहुत्वश्रवणात्। "अग्ने यदद्य"-इत्येत्[3] 'याज्यायै' याज्यायाः वैश्वदेवत्वम् ; अत्र "विशः"-इति बहुवचनलिङ्गात्। 'एते' ऋचौ 'एवंरूपे' वैश्वदेवलिङ्गके "पिप्रीहि देवान्"— "अग्ने यदद्य विशः"- इत्येवंरूपे ; ('तेन उ') तेनैव कारणेन 'एते' द्वे ऋचौ 'तृतीयसवनस्य रूपम्' ॥ १६ ॥

तयोर्यत् त्रिष्टुप्त्वम्, तत्प्रशंसति— "ते वै त्रिष्टुभाविति। स्विष्ट-

---

१— 'जेतव्यं'-इति ज।

२— ऋ० सं० १०. २. १। तै० सं० ४. ३. १३. १२। पाठस्त्वेवम्—"पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँ ऋतुपते यजेह। ये दैव्या ऋत्विजस्तेभिरग्ने त्वँ होतॄणा मस्यायजिष्ठः"—इति।

३— ऋ० सं० ६. १५. १४। तै० सं० ४. ३. १३. १४। तत्पाठस्त्वेवम्— "अग्ने यदद्य विशो अध्वरस्य होतः पावक शोचे वेष्ट्वँ हि यज्वा। ऋता यजासि महिना वि यद् भूर्हव्या वह यविष्ठ या ते अद्य"—इति।

कृतो कृतावशिष्टरूपत्वात् 'एतद्' 'यज्ञस्य' 'वास्तु' वास्तुस्थानीयम्। तच्च वास्तु 'अवीर्यं' निस्सारम्; उपयुक्तशेषत्वात्। त्रिष्टुप् प्रजापतेः बलवद्भ्यः उरोबाहुभ्यः सकाशादिन्द्रेण सहोत्पन्नत्वात् 'त्रिष्टुबिन्द्रियम्'; अत एव 'वीर्यम्'; अतः पुरोऽनुवाक्यायास्त्रिष्टुप्त्वकरणेन अबले 'स्विष्टकृति' 'इन्द्रियं वीर्य मेव' स्थापितवान् भवति॥ १७॥

पक्षान्तर माह— "उतो अनुष्टुभावेवेति। स्विष्टकृतः प्रधानेभ्योऽतिरिक्तत्वेनाधिकत्वाद् 'वास्तु', 'अनुष्टुप्' अपि गायत्र्यादिसवनच्छन्दसोऽतिरिक्तत्वाद् 'वास्तु'; अत एव 'वास्तावेव' 'वास्तु' स्थापितवान् भवति। तच्च वास्तु 'पेसुकम्' अभिवर्द्धनशीलम्; अत एव तज्ज्ञानवान् यः 'अनुष्टुभौ' याज्यानुवाक्ये कुर्यात्, सोऽपि 'प्रजया पशुभिः' च 'पिस्यति[1]' अभिवृद्धो[2] भवति॥ १८॥

याज्यानुवाक्ययोर्विलक्षणच्छन्दस्त्वपक्षं निराकर्त्तु माख्यायिका माह— "तदु हेति। 'भाल्लवेयः' उक्तोभयपक्षोक्तफलावरोधाय 'अनुष्टुभ मनुवाक्यां', 'त्रिष्टुभं याज्याम्' अकरोत्। 'सः' विलक्षणानुष्ठानदोषेण कदाचित् सञ्चारसमये 'रथात् पपात'। पतन्नेकं 'बाहुं' भूमौ प्रसारितवान्[3]; सबाहुर्विस्त्रस्तोऽभूदित्यभिप्रायः। 'सः' च विचार्य किञ्चिदविहितं कृतवानस्मि, 'तस्मात्' 'इदं' रथात्पतनम् 'अपत्[4]' प्राप्त मभूदिति निश्चित्य, "यदनन्तरं यद्भवति, तत्तस्य कारणम्"—इतिन्यायादिदं विपरीतानुष्ठान मेव कारणं

---

१— निघ० २.१४. २१। "पिस्ट पेस्ट गतौ" भ्वा० प०, व्यत्ययेन श्यन्।
२— 'अतिवृद्धो'—इति ज, झ। ३— 'प्रांशे'—इत्यस्यैवाय मर्थः स्यात्।
४— मूलविरुद्धपाठोऽयम्; तस्यैव व्याख्यानं वा कृत मेवं स्यात्।

बुद्धवान्। यस्मादेवं 'तस्मात् सर्वत्र' विपरीतं 'न' अनुतिष्ठेत्। अतः 'उभे' याज्यानुवाक्ये 'अनुष्टुभावेव वा त्रिष्टुभावेव वा'; स्विष्टकृद्याज्यानुवाक्ये 'सच्छन्दसौ' समानच्छन्दस्के भवेताम् ॥ १९ ॥

स्विष्टकृदवदानहोमप्रदेशयोर्विशेष माह— "स वा उत्तरार्द्धादिति। उत्तरपूर्वदिशो[1] लोकपालत्वेन रुद्रसम्बन्धः सर्वशास्त्रप्रसिद्धः[2]; तेन कारणेनापि उत्तरार्द्धादेवावदानं, तत्रैव होमस्य कर्त्तव्य इत्याह— "एतस्यै वै दिश इति। स्विष्टकृद्यागविधानसमये "उत्तरत उपोत्पेदे"-इत्युक्तत्वात्[3]; "यत उत्पद्यते, 'तं तत एव' शमयितव्यम्"— इतिनियमात् उत्तरतोऽवदानहोमौ कर्त्तव्यौ। तथा च कात्यायनः— "यावद्धविरुत्तरार्द्धात् स्विष्टकृतस्तत एव होमः"-इति[4] ॥ २० ॥

उत्तरदेशे प्रदानेऽपि प्रधानहविषा सहासंस्पर्शं विधत्ते— "स वा अभ्यर्द्ध इवेति। 'इतराभ्यः' प्रधान-'आहुतिभ्यः' सकाशात् 'अभ्यर्द्धे' सन्निहितप्रदेश एव; न तासां स्थाने। विपक्षे बाध माह— "इतरा इति। 'इतरा आहुतीः अनु' यजमानस्य 'पशवः' 'प्रजायन्ते'; ताः पशुफलजनका इत्यर्थः। स्विष्टकृद्यागस्य 'रुद्रियः' रुद्रदेवत्यः।

---

१— 'उत्तरदिशो'—इति ङ; 'उत्तरपूर्वदिशो'—इत्यपि दृष्टो डा०-वेवरेण।

२— "इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत्। कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात्"—इति अम० को० १. ३. ३।

३— पुरस्ताद् द्रष्टव्यम् (४९४ पृ० १४ पं०)।

४— का० श्रौ० सू० ३. ३. २६, २७। यावन्ति हवींषि भवन्ति, तेषां सर्वेषा मुत्तरार्द्धात् उत्तरस्मात् प्रदेशात् स्विष्टकृतः स्विष्टकृद्यागार्थं अवद्यति। ततोऽपेक्षत्तरार्द्धे एव स्विष्टकृदवदानानां होमो भवति।

एवं सति यदि ताभिः सह स्विष्टकृदाहुति मासंयोजयेत्, तदा रुद्रेण[1] सह 'पशून्' 'प्रसजेद्' योजयेत् । अत एतेनापराधेन यजमानस्य गृहावस्थिताः 'पशवः' 'उपमूर्यमाणाः' समीप एव म्रियमाणाः प्राप्नुयुः । तस्मादितराभ्यो नातिदूरे जुहुयात् । तथा च सूत्रम्— "असंसृष्टा माहुतिभिः"-इति[2] ॥ २१ ॥

आहवनीयगार्हपत्ययोरन्यतरस्मिन् हविः-श्रपणं विधास्यति, तदर्थं तयोराधानप्रदेशपरिमाणं विधातु माह— "एष वा इति । 'येन' साधनेन 'तद्देवाः' 'दिवं' गताः, 'स एष यज्ञः' खलु । एष यज्ञ इत्येतद्विशिनष्टि— "एष आहवनीय इति । यज्ञसाधनत्वादाहवनीयस्य यज्ञत्वम् । यस्त्विह भूमावेवावशिष्टः, 'स गार्हपत्यः' । 'तस्मात्' इदानी मपि दिवङ्गन्तुकामाः 'एतम्' आहवनीयं यज्ञसाधनं 'गार्हपत्यात्' 'प्राञ्चं' प्राग्देशं प्रति 'उद्धरन्ति' यजमानायोद्धरेयुरित्यर्थः ॥ २२ ॥

उद्धृत्य प्राच्यां कियत् पुर आदध्यात् ? इत्यत्र बहून् पक्षानाह:— "तम् अष्टास्वित्यादिना । विक्रमशब्देनात्र विक्रम्यते अनेनेवेति व्युत्पत्त्यैकपादप्रक्षेपपरिमितोऽंश उच्यते[3]; अन्यच्च यजमानसम्मानस्य करणात् । गार्हपत्य मवधीकृत्य तथाविधेषु अष्टसु प्रक्रमेषु गतेष्वाह-

---

१— 'रुद्रियेण'—इति मूलपाठः ; तस्यैव व्याख्यानं स्याद्रुद्रेणेति ।

२— का० श्रौ० सू० ३. ३. २९ । इतराभिराज्याहुतिभिरस्पृष्टां स्विष्टकृदाहुतिं जुहुयादिति तदर्थः ।

३— 'क्रमु पादविक्षेपे'—इति भ्वा० प० ४७३ धातुः । प्रकर्षेण क्रमणं प्रक्रमः । क्रमणेनारत्निमात्रः प्रक्रमो भवति ; "तस्मात् प्राङ् प्रक्रामति त्रीन् विक्रमान्"—इत्यादिश्रुतेः (३. ५ १. १.) । अरत्निस्तु पुरुषपञ्चमांशः ; तस्माद् द्विपदः प्रक्रमः ।

वनीय मादधीत। तथा सति तद्द्वारा अष्टसङ्ख्यायुक्त-'गायत्र्यैव' 'दिवं' प्राप्तवान् भवति। तस्माद्गायत्रीसाम्यलाभादष्टप्रक्रमपरिमाणाधानं प्रशस्त मित्यर्थः ॥ २३ ॥

एव मुत्तरवाक्यान्यपि योज्यानि ॥ २४ ॥

क्रियासौकर्यानपह्नवेनान्यान् पक्षानभिधाय कर्मणो यावन्मात्रं पर्याप्त मिति मन्यते, तावन्मात्र मेव कुर्यादित्याह— "नात्रेति। 'अत्र' आधानविषये अष्टत्वादि[1]-'मात्रा' 'नास्ति' शास्त्रतः। अतः स्वेच्छया 'यत्रैव' देशे आहवनीय आहिते कर्म सुकरं भवतीति 'स्वयं मनसैव मन्येत' निश्चिनुयात्, तत्र 'आदधीत'; तस्मात् 'अल्पक मिव' अल्पक मपि, अष्टप्रक्रमादत्यल्प मपि 'प्राञ्चं' दिशं प्रत्युद्धरेत्। 'तेनैव' आत्मनैव[2] 'दिवं' प्राप्नोत्येव। अत्र कात्यायनः— "पुरस्तादाहवनीयस्याष्टासु प्रक्रमेष्वेकादशसु द्वादशसु मत्या वा"- इति[3] ॥ २५ ॥

इदानीं हविः-श्रपणविषये केषाञ्चित्पक्ष माह— "तदाहुरिति। आहवनीय एव श्रपयता मभिप्राय माह— "अतो वा इति। 'अतः' अस्मादाहवनीयात् 'देवाः' 'दिवं' प्राप्ताः, अतोऽस्माभिरपि तत्रैव श्रपणं कर्त्तव्य मिति तेषा माशयः। उपोत्क्रमणसाधनत्व मेव कुत इत्यत आह— "तेनो एवेति। तेनैवाहवनी-

---

१— 'अष्टात्वादि'-इति भ। २— 'आत्म्येनैव'-इति ज।

३— का० श्रौ० सू० ४. ८. १९। गार्हपत्यस्य खरस्य मध्यात् प्राच्यां दिशि अष्टासु पदिकेषु प्रक्रमेषु आहवनीयखरस्य मध्यं कुर्यात्। 'मत्या वा' उक्तसङ्ख्यातो न्यूनेष्वपि सप्तसु षडादिषु वेत्यर्थः।

येन साधनेन प्रयासात्मकं हविः-प्रदानादि सकलं कर्मानुतिष्ठन्; अतस्तस्योपोत्क्रमणसाधनत्वम्। अतो वय मपि अन्यत्र श्रपण मन्यत्र जुहवाम इति वैय्यधिकरण्यं मा भूदिति तस्मिन्नेव आहवनीये श्रपणं यागञ्च करवामेति। वैय्यधिकरण्ये दोष माह— "अपस्खल इवेति। 'गार्हपत्ये श्रपयेयुः' इति यत्, 'सोऽपस्खलः इव' अपस्खल नाम 'हविषां' भवति। फलितानां व्रीह्यादीनां तुषविमोकादिसम्पादनप्रदेशः 'स्खलः'। यथा व्रीह्यादिराशिः खलाद्[1] बहिरपि प्राप्तो व्यर्थो भवति, एव मन्यत्र श्रपण मपि। अतः प्रागुक्तप्रकारेण आहवनीये एव 'यज्ञे', 'यज्ञ' यज्ञसाधनत्वात् श्रप्यमाणं हविरपि यज्ञः॥ २६॥

अन्येषां पक्ष माह— "उतो इति। प्रथमपक्षोक्त माहवनीये श्रपण मत्रापि सम्भावयति— "आहवनीयो वा इति। आहवनीयस्य इतः प्रणीतत्वात्। किं मुपचरितेनाहवनीयेन, साक्षात्तस्मिन्नेव श्रपण मस्त्वित्याशङ्क्य तस्य श्रपणायोग्यत्व माह— "न वा एष इति। 'एषः' आवनीयः शृत-श्रपणाय 'न वै' नोचितः, खल्वित्यर्थः। तर्हि कस्मा उचित इति, तत्राह— "तस्मै वा इति। असौ शृतस्य होमायोचित इत्यर्थः॥

---

१— 'स्खलाद्'-इति ढ। वस्तुतो लोके निस्सकारः प्रयोग एव स्यात् साधुः। तथा हि मनुः—"खलात् क्षेत्रादगाराद्वा"-इत्यादि (११. १७.)। "खल उत्तरवेदिः"-इति आश्व० श्रौ० ७. १३. १४; का० श्रौ० २२. ३. ४३। "ये वेदि मभितस्तानुत्तरवेदिदेशे म्टद्नन्ति"-इति च तत्रैव तत उत्तरम् ४५ सू०।

अथवा एवं व्याख्येयम्। "आहवनीयो वा एष इति, मुख्य आहवनीय एवोच्यते। यस्मात्[1] 'एष आहवनीयः' आहवनार्हः; अत एष पक्वस्य हविषो होमाय योग्यः; न त्वामस्य पाकायेति। अग्निद्वयपक्षेऽप्युपपत्तिसम्भवाद्विकल्पस्यैच्छिकत्व माह— "अतो यतरथेति। यथा कामयते, तथैव कुर्यात् ॥ २७ ॥

अथाग्नेः परिस्तरणं विधातु माह— "स हैष इति। 'यज्ञः' अग्निः; एष आहवनीय इत्युक्तत्वात्। 'नग्नता' प्रावरणराहित्यम्। अग्नेर्नग्नत्वपरिहार मजानानाः पृच्छन्ति— "का त इति। 'अनग्नता'-इति छेदः। "तस्मादिति, परिस्तरणविधिः ॥

इष्ट्यङ्गभूतब्राह्मणसन्तर्पणं विधातु माह— "तृष्णाया इति। भीत्युपन्यासस्तस्यावश्यम्परिहर्त्तव्यत्वद्योतनार्थः। कः परिहारस्तृष्णाया इति पृष्ट आह— "ब्राह्मणस्यैवेति। 'एव'-कारेण स्वतर्पणादपि ब्राह्मणतर्पण मेव श्रेय इत्यय मर्थो द्योत्यते। 'ब्राह्मणस्य'-इति जातावेकवचनम्[2]; ब्राह्मण मित्यभिधानात्। "तस्मादिति। 'ब्राह्मणं तर्पयितवै ब्रूयात्' यजमान इति शेषः। 'एतत्' एतेन ब्राह्मणतर्पणेन 'यज्ञ मेव' अग्नि मेव ॥ २८ ॥ १ ॥ [७. ३.] ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे सप्तमाध्याये तृतीयं ब्राह्मणम् ॥

---

१— 'तस्मात्'-इति ज, झ। २— पा० सू० १. २. ५८ द्रष्टव्यम्।

प्रजापतिर्ह वै स्वां दुहितर मभिदध्यौ। दिवं वोषसं वा मिथुन्येनया* स्या मिति ताꣳ सम्बभूव ॥ १ ॥

तद्वै देवाना माग ऽआस। य ऽइत्थꣳ स्वां दुहितर मस्माकꣳ स्वसारं करोतीति ॥ २ ॥

ते ह देवा ऊचुः। योऽयं देवः पशूना मीष्टे ऽतिसन्धं वा ऽअयं चरति य ऽइत्थꣳ स्वां दुहितर मस्माकꣳ स्वसारं करोति विध्येम मिति तꣳ रुद्रोऽभ्यायत्य विव्याध तस्य सामि रेतः प्रचस्कन्द तथेन्नूनं तदास ॥३॥

तस्मादेतदृषिणाभ्यनूक्तम्। पिता यत् स्वां दुहितर मधिष्कन् क्ष्मया रेतः सञ्जग्मानो निषिञ्चदिति तदाग्निमारुत मित्युक्थं तस्मिंस्तद्व्याख्यायते यथा तद्देवा रेतः प्राजनयंस्तेषां यदा देवानां क्रोधो व्यैदथ प्रजापति मभिषज्यंस्तस्य तꣳ शल्यं निरकृन्तन्त्स वै यज्ञ ऽएव प्रजापतिः ॥ ४ ॥

ते होचुः। उपजानीत यथेदं नामुयासत् कनीयो ह्याहुतेर्यथेदꣳ स्यादिति ॥ ५ ॥

ते होचुः। भगायैनद्दक्षिणत ऽआसीनाय परिहरत तद्भगः प्राशिष्यति तद्यथाहुत मेवं भविष्यतीति तद्भगाय

---

* 'मिथुंन्येनया'–इति क, ग ।.

दक्षिणत ऽआसीनाय पर्य्याजह्रु*स्तद्भगोऽवेक्षाञ्चक्रे तस्या-
क्षिणी निर्ददाह तथेन्नूनं तदास तस्मादाहुरन्धो भग
इति ॥ ६ ॥

ते होचुः। नो न्वेवाचाशमत् पूष्ण ऽएनत् परि-
हरतेति तत् पूष्णे पर्य्याजह्रु†स्तत् पूषा प्राश तस्य दतो
निर्जघान तथेन्नूनं तदास तस्मादाहुरदन्तकः पूषेति
तस्माद्यं पूष्णे चरुं कुर्व्वन्ति प्रपिष्टाना मेव कुर्व्वन्ति
यथादन्तकायैवम् ॥ ७ ॥

ते होचुः। नो न्वेवाचाशमद् बृहस्पतय ऽएनत्
परिहरतेति तद् बृहस्पतये पर्य्याजह्रुः‡ स बृहस्पतिः
सवितार मेव प्रसवायोपाधावत् सविता वै देवानां
प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्रासु-
वत् तदेनꣳ सवितृप्रसूतं नाहिनत् ततोऽर्व्वाचीनꣳ
शान्तं तदेतन्निदानेन यत् प्राशित्रम्§ ॥ ८ ॥

स यत् प्राशित्र मवद्यति। यदेवात्राविद्धं यज्ञस्य
यद्रुद्रियं तदेवैतन्निर्मिमीतेऽथाप ऽउपस्पृशति शान्ति-
रापस्तदद्भिः शमयत्यथेडां पशून्त्समवद्यति ॥ ९ ॥

स वै यावन्मात्र मिवैवावद्येत्। तथा शल्यः प्रच्यवते

---

*,†,‡ 'पर्य्याजह्रुः'—इति क, ग।

§ 'प्राशित्रं'—इति क, ग; 'प्राशित्रꣳ'—इति ख, च।

तस्माद्यावन्मात्र मिवैवावद्येदन्यतरत ऽआज्यं कुर्याद-धस्ताद्वोपरिष्टाद्वा तथा खदन्निस्सरणवद्भवति तथा निस्रवति तस्मादन्यतरत ऽआज्यं कुर्यादधस्ताद्वोपरिष्टाद्वा॥ १० ॥

स ऽआज्यस्योपस्तीर्य। द्विर्हविषोवदायाथोऽपरिष्टादाज्यस्याभिघारयति तद्यथैव यज्ञस्यावदान मेव मेव तत्* ॥ ११ ॥

तन्न पूर्व्वेण परिहरेत्। पूर्वेण हैके परिहरन्ति पुरस्ताद्वै प्रत्यञ्ची यजमानं पशव ऽउपतिष्ठन्ते रुद्रियेण ह पशून् प्रसजेद्यत् पूर्व्वेण परिहरेत्तेऽस्य गृहाः पशव ऽउपमूर्यमाणा ऽईयुस्तस्मादित्यैव तिर्यक् प्रजिहीत† तथा ह रुद्रियेण पशून्न प्रसजति तिर्यगेवैनं निर्मिमीते ॥ १२ ॥

तत् प्रतिगृह्णाति। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति ॥ १३ ॥

तद्यथैवादो बृहस्पतिः। सवितारं प्रसवायोपाधावत् सविता वै देवानां प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्रासुवत्तदेनꣳ सवितृप्रसूतं नाहिनदेव मेवैष

---

* 'मेव तत्'—इति ख, 'मेव मेतत्'—इति च।

† 'प्रजहीत'—इति हरिस्वामिसम्मत इति डा०—वेबरः।

ऽएतत्सवितार मेव प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्रसौति तदेनं सवितृप्रसूतं न हिनस्ति* ॥ १४ ॥

तत् प्राश्नाति। अग्नेष्ट्वास्येन प्राश्नामीति न वा ऽअग्निं किञ्चन हिनस्ति तथो हैन मेतन्न हिनस्ति† ॥ १५ ॥

तन्न दद्भिः खादेत्। नेन्म ऽइदं रुद्रियं दतो हिनसदिति तस्मान्न दद्भिः खादेत् ॥ १६ ॥

अथाप ऽआचामति। शान्तिरापस्तदद्भिः शान्त्या शमयतेऽथ परिक्षाल्य पात्रम् ॥ १७ ॥

अथास्मै ब्रह्मभागं पर्याहरन्ति। ब्रह्मा वै यज्ञस्य दक्षिणत ऽआस्तेऽभिगोप्ता स ऽएतं भागं प्रतिविद्वान् ऽआस्ते यत् प्राशित्रं तदस्मै पर्याहार्षुस्तत् प्राशीदथ य मस्मै ब्रह्मभागं पर्याहरन्ति तेन भागी स यदत ऽऊर्ध्वं मसंस्थितं यज्ञस्य तदभिगोपायति तस्माद्वा ऽअस्मै ब्रह्मभागं पर्याहरन्ति ॥ १८ ॥

स वै व्वाचंयम ऽएव स्यात्। ब्रह्मन् प्रस्थास्यामी-त्येतस्माद्वचसो व्विद्वहन्ति वा ऽएते यज्ञं क्षण्वन्ति ये मध्ये यज्ञस्य पाकयज्ञिययेडया चरन्ति ब्रह्मा वा ऽऋत्विजां भिषक्तमस्तद् ब्रह्मा सन्दधाति न ह

---

*,† 'न हिनस्ति'—इति ग।

सन्दध्याद्यद्वावद्यमान ऽआसीत तस्माद्वाचंयम ऽएव स्यात् ॥ १९ ॥

स यदि पुरा मानुषीं व्वाचं व्याहरेत्। तत्रो व्वैष्णवी मृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिः ॥ २० ॥

स यत्राह। ब्रह्मन् प्रस्थास्यामीति तद् ब्रह्मा जपत्येतं ते देव सवितर्यज्ञं प्राहुरिति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविता बृहस्पतये ब्रह्मण ऽइति बृहस्पतिर्व्वै देवानां ब्रह्मा तद्य ऽएव देवानां ब्रह्मा तस्मा ऽएवैतत् प्राह तस्मादाह बृहस्पतये ब्रह्मण ऽइति तेन यज्ञ मव तेन यज्ञपतिं तेन मा मवेति नात्र तिरोहित मिवास्ति ॥ २१ ॥

मनो जूतिर्जुषता माज्यस्येति। मनसा वा ऽइदं सर्वं मात्तं तन्मनसैवैतत् सर्व्वं माप्नोति बृहस्पतिर्यज्ञ मिमं तनोत्वरिष्टं यज्ञꣳ स मिमं दधात्विति यद्विरुढः तत्सन्दधाति व्विश्वे देवास ऽइह मादयन्ता मिति सर्व्वं वै व्विश्वे देवाः सर्व्वेणैवैतत् सन्दधाति स यदि कामयेत ब्रूयात् प्रतिष्ठेति यद्यु कामयेतापि नाद्रियेत ॥ २२ ॥ २ ॥

॥ इति षष्ठप्रपाठके द्वितीयं ब्राह्मणम् [७.४.] ॥

[प्राशित्रावदानविध्यर्थ[1] माख्यायिका माह— "प्रजापतिर्हेति। दिव मिति केचिदाहुरुषस मित्यपरे। तथा चैतरेयब्राह्मणम्[2]— "दिव मित्यन्य आहुरुषस मित्यन्ये"- इति[3]।]

"प्रजापतिर्ह वै"। प्राशित्रब्राह्मण मेतत्। तत्र रौद्रस्येषोरनीकं प्रजापतेर्यज्ञस्य ब्रह्मात्मकं निरवदेयम्। ब्रह्मणा च सवितृप्रसूतेन बृहस्पतिरूपेण प्राशनीय मित्येतदाख्यानेन दर्श्यते। 'प्रजापतिः' प्राणपिण्डलोककालयज्ञात्मा, अभिध्यातवान्, 'दिवम् वा उषसं वा' लोकात्मना दिवम्; कालात्मना उषसम्; प्राणपिण्डात्मना ऋक्षेभ्यो मृगो रोहितम्, रोहिणी नाम नक्षत्रम्[4]; यज्ञात्मना वाचम्। कथ मभिदध्यौ? 'मिथुनी' मिथुनवान् 'एनया' 'स्या मिति', 'तां' 'सम्बभूव' सङ्गतः ॥ १ ॥

---

१— प्राशित्रं ब्रह्मणो भागावदानम्। तत् क्रियते येन पात्रेण, तत् पात्रं प्राशित्रहरणम्। तच्च आदर्शसदृशं वर्त्तुलं, चमससदृशं चतुरस्रं वा, खातवच्च भवति। का० श्रौ० १. ३. ४०, ४१ सूत्रे द्रष्टव्ये।

२— "प्रजापतिर्वै स्वां दुहितर मभ्यध्यायद्, दिव मित्यन्य आहुरुषस मित्यन्ये"—इत्यादि ऐ० ब्रा० ३. ३. ६।

३— मत्सङ्गृहीतेषु डा०-वेबरसङ्गृहीतेषु च सर्वेष्वेवादर्शपुस्तकेषु शतपथब्राह्मणीयप्रथमकाण्डस्यैतदन्त मेव सायणभाष्य मवलोक्यते, अप्येतदारभ्याकाण्डसमाप्तेर्ग्रन्थशेषस्य हरिस्वामिकृतं भाष्य मेव सर्वत्र विद्यत इत्येतत्काण्डस्यावशिष्टं सायणीयं भाष्यं लुप्तकल्पता मुपगत मिति स्यान्मन्तव्यम्।

४— तथा चैतरेयकम्— "ता मृश्यो भूत्वा रोहितं भूत्वा०—० या रोहित् सा रोहिणी"—इत्यादि ३. ३. ६।

"तद्वै देवानाम्"। 'तद्' दुहितृगमनं 'देवानां' चेतसि 'आगः' अपराधो बभूव। अपराधी सर्व्व मेवं 'करोतीति' ॥ २ ॥

"ते ह देवाः"। 'योऽयं देवः पशूना मीष्टे', तम् 'ऊचुः'— 'अतिसन्धं' सन्धा सन्धानं मर्यादा व्यवस्था, "दुहिता न गन्तव्या"-इति; अतीत्य सन्धाम् (त मतिसन्धं सञ्चरणम्[1]), मर्यादा मतीत्य 'अयं चरति'। ततस्त्वापराधित्वान्निग्रहार्ह इति 'विध्य इमम्'। "व्यध ताड़ने[2]"। ताडयेषुणेति। यस्माज्जगत्सृष्टिभवितव्यताप्रसक्तानां चेष्टितम् 'तं' 'रुद्रः' आहत्य इषुं विद्धवान्। "तथेन्नूनम्"। इच्छब्दोऽवधारणार्थः[3]। 'नूनं'-शब्दो यस्मादर्थे[4]। यस्मात् तथैव 'तदास' ॥ ३ ॥

"तस्मादेतत्"। 'तस्मात्' तत् 'ऋषिणा' मन्त्रेण 'अभ्यनूक्तम्'। 'पिता' प्रजापतिः 'स्वां दुहितरम्' 'अधिष्कन्' अधिस्कन्नः, तथा च 'सञ्जग्मानः' सङ्गतः सन्, 'क्ष्मया' क्ष्मायां पृथिव्यां 'यत् रेतः' 'निषिञ्चत्' अभिषिक्तवान्। तस्माद्रेतसः "साध्योऽजनयन् ब्रह्म देवा वास्तोष्पतिं व्रतपां निरतक्षन्"-इति[5] 'तदाग्निमारुत मिति' नाम्ना 'उक्थं' शस्तम्[6]। 'तस्मिन्' 'तद्' विभज्याख्यायते। 'यथा' 'तत्' 'रेतः' 'देवाः' प्रजनितवन्त इत्याख्यानशेषयोजना। यज्ञस्य कृत्स्नतायै 'स वै यज्ञ एव' इत्याख्यानस्य प्रकृतसम्बन्धोपक्षेपः ॥ ४ ॥

---

१— नास्त्ययमंशो ढ-पुस्तके। २— दि० प० ७५ धा०।

३— निरु० १. ३. ५ द्रष्टव्यम्। ४— निरु० १. २. ४ द्रष्टव्यम्।

५— ऋ० सं० १०. ६१. ७ (पिता यत् स्वां)। ऐ० ब्रा० ३. ३. ९ द्रष्टव्यम्।

६— "एषा रौद्री शस्यते"—इत्यादि ऐ० ब्रा० ३. ३. १० पर्यालोच्यम्।

"ते होचुः"। "यथेदं मिति। यत् 'इदम्' इषोरनीकं यज्ञरसविलिप्तम्, तद् 'यथा' 'न' वृथा स्यात्, 'यथा' च प्रधानाकृतेः न महत् स्यात्, तथा उपायं आनीतेति 'ते' देवाः 'ऊचुः' ॥ ॥ ५ ॥ ॥ ६ ॥

"ते होचु र्नो न्वेव"। प्रायप्रसन्नः[1] एव ब्राह्मणशेषः, किञ्चिन्तु वक्ष्यामः। 'नो'—इति प्रतिषेधः[2]; 'नु'—इति वाक्यपूरणः[3]। 'अशमत्' न शान्तम्। 'दतः' दन्तान्। 'प्रपिष्टानां' तण्डुलाना मिति शेषः ॥ ७ ॥

'न अहिनत्'। हिनोतेर्हिंसाकर्मणः[4]। न हतवान् 'ततोऽर्वाचीनम्'। बृहस्पतिप्रशमनादर्वाक् 'शान्तम्'। "तदेतन्निदानेमेति। इतिहास मुपसंहृत्याधिदैवज्ञानाय प्राशिता प्राशोऽस्येति 'प्राशित्रम्'। "अण्-प्रकरणे अग्निपदादिभ्य उपसंख्यानम्"-इति[5] हि स्मरन्ति ॥ ८ ॥

"स यत्"। "यदेवाचेति। संसारस्वभावाद् 'यदत्र' किञ्चिदशान्तं 'तत्' 'निर्मिमीते' बहिष्करोति, निष्कर्षतीत्यर्थः। 'अथ' 'अप उपस्पृशति' अध्वर्युः। "अथेडां पशूनिति। पशुत्व मिडायाः प्रसिद्धम्[6]; पशवश्च रुद्राद्रक्षणीयाः; अतो रुद्रिये प्राशित्रे दत्ते अप उपस्पृश्य 'इडा मवद्यति' ॥ ९ ॥

---

१— 'प्रसन्नः'—इत्येव ढ। २— निरु० १४. ३७. वा १३. ४. ६।

३— "नु इत्येषोऽनेककर्मा"—इत्यादि निरु० १. २. २।

४— निघ० ४. ३. ६४। ५— पा० ५. १. ६७ सू० १ वा०।

६—"पशवो वा इळा"—इत्यादि ऐ० ब्रा० २. ४. ६। तै० सं० २. ६. ७. ३। इत उत्तरस्मिन् ब्राह्मणे च (१२ क०) द्रष्टव्यम्।

"स वै"। इडावदानार्थता मुपसर्गस्य दर्शयति— 'खदत्'। "खद स्थैर्ये हिंसायां च[1]"। अल्पतरत्वादस्थिर मगाढवत्तम्, 'निस्सरणवद्भवति'; इतरथा तु चतुर्गृहीतं महत्त्वाद्गाढं स्यादित्यभिप्रायः॥ १०॥

"स आज्यस्य"। —इति वचनाद् विकल्पः पूर्वेण सह॥ ११॥

"तत्र पूर्वेण"। 'इत्येव'—इत्यभिनयेन अध्वर्युसञ्चरं दर्शयति। एत्र मेव अध्वर्युसञ्चरेण 'तिर्यक् प्रजहीत'। "ओ हाङ् गतौ[2]"। प्रगच्छेत् प्राशित्रम्॥ १२॥

"तत्प्रतिगृह्णाति"। —इत्यत आरभ्य ब्रह्मत्वं प्राय आध्यायसमाप्तेः[3]॥ १३॥ १४॥ १५[4]॥ १६॥

"अथापः"। 'अथ परिक्षाल्य पात्रं' "नाभि मालभते"-इति शाखान्तरात् तच्छेषः॥ १७॥

"अथास्मै ब्रह्मभागं"। —इत्याध्वर्यवम्। 'प्रतिविद्वानः' जानन्, एष मे भाग इत्याशयः। 'पूर्वम् आस्ते' 'पर्याहार्षुः' पर्याहृतवन्तः। 'प्राशीत्' प्राशितवान्। अनेन तु ब्रह्मभागेन 'भागी'। स्वीकृतेनैव यज्ञशेषं 'गोपाययेति'॥ १८॥

"स वै वाचंयमः"। वाचं यच्छतीति[5] 'वाचंयमः'। अस-

---

१—भ्वा० प० ५.० धा०। २—जु० आ० ७ धा०।

३— "देवस्य त्वेति प्रतिगृह्णाति"-इति का० श्रौ० सू० २.२.१६। मन्त्रस्तु— वा० सं० २.११.२।

४— "अग्नेष्ट्वेति प्राश्नाति दन्तैरनुपस्पृशन्"-इति का०श्रौ० सू० २.२.१८। मन्त्रस्तु— वा० सं० २.११.३।

५— "वाचि यमो व्रते"-इति पा० सू० ३.२.४०, "वाचं यमपुरन्दरौ च"-इति पा० सू० ६.३.६९।

मन्त्रवचनादुपरमयति, एतद्व्रतो वाचंयमः, ब्रह्मा स्यात्। कियन्तं कालम्? 'ब्रह्मन्! प्रस्थास्यामीति आ एतस्मात्' 'वचसः' अध्वर्यु-वचनात्। अभिविधौ च आङ्, न मर्यादायाम्; कुतः? सन्धान-वचनात्[1]। 'विवृहन्ति' विच्छिन्दन्ति। 'क्षण्वन्ति' हिंसन्ति। 'ये मध्ये यज्ञस्य' 'पाकयज्ञीयया' पाकयज्ञार्हया विलक्षणया[2] 'इडया' 'चरन्ति'। पाकयज्ञेषु कृतशेषो भक्ष्यते, इडाकृतशेषो भक्ष्यते; तेन पाकयज्ञार्हेत्युच्यते। "ब्रह्मा वा ऋत्विजां भिषक्तमः" अतिशयेन यज्ञस्य चिकित्सिता; स हि प्रायश्चित्तैर्यज्ञं भिषज्यतीत्यभिप्रायः। ततः किम्? यद् वाचंयमो भवति, 'तत्' तेन 'ब्रह्मा' यज्ञं 'सन्द-धाति'; अन्यथा तु नैव सन्दध्यात्। 'यद्' यदि 'वावदमानः' पुनःपुनर्वदमानः 'आसीत्' ॥ १९ ॥

"स यदि पुरा"। —इति प्रायश्चित्तविधिः ॥ २० ॥

"स यत्राह"। —इत्यनुयाजप्रसवविधिः। "नात्र तिरोहित मिति। विस्पष्ट एवार्थः। कथं सविता? उच्यते— यस्मात् 'ते' तुभ्यम् 'एते' अध्वर्यवो 'यज्ञं प्राहुः', 'बृहस्पतये' च; न मह्यं मनुष्याय, 'तेन' कारणेन त्व मनुज्ञया यज्ञादीनवपालय[3] ॥ २१ ॥

"मनोजूतिः[4]"। 'मनः' च देवानां 'जूतिः' गन्त्री, 'जुषताम्'

---

१— 'सन्ध्यवचनात्'—इति ज, झ। २—नैतत् पदं ठ-पुस्तके।

३— "एतं त इति समिदामन्त्रितः प्रसौति"—इति का० श्रौ० सू० २. २. २१। मन्त्रस्तु— वा० सं० २. १२, १३।

४— वा० सं० २. १३। एष हि पूर्वमन्त्रस्यैवापरांशः।

प्रीयतां हृष्यत्वाज्येन। 'बृहस्पतिः' च 'यज्ञं' 'तनोतु, सन्दधातु' च। 'विश्वे' च 'देवाः' हृष्यन्तु, त्वयानुज्ञातेऽध्वर्यो। तस्मादनुजानीहीत्यभिप्राय मालक्ष्य सवितुः, स्वयं ब्रह्मा आह— "सावीत्या-दह मेव सविता ; ततस्त्व 'प्रतिष्ठा' अध्वर्यो। अतिसर्जने लोट्[1] ॥ २२ ॥ २ ॥ [ ७. ४. ] ॥

इत्याचार्यहरिस्वामिनः कृतौ शतपथभाष्ये
सप्तमस्य चतुर्थं ब्राह्मणम् ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ शतपथभाष्ये
सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

---

१ —पा० सू० ३. ३. १६३ ।

[अथ अष्टमाध्याये प्रथमं ब्राह्मणम्]



मनवे ह वै प्रातः। अवनेग्य* मुदक माजह्रुर्†यथेदं पाणिभ्या मवनेजनायाहरन्त्येवं तस्यावनेनिजानस्य मत्स्यः पाणी ऽआपेदे ॥ १ ॥

स हास्मै व्वाच मुवाद। बिभृहि मा पारयिष्यामि त्वेति कस्मान्मा पारयिष्यसीत्यौघ ऽइमाः सर्वाः प्रजा निर्वोढा ततस्त्वा पारयितास्मीति कथं‡ ते भृतिरिति ॥२॥

स होवाच। यावद्वै क्षुल्लका भवामो बह्वी वै नस्ता-वन्नाष्ट्रा भवत्युत मत्स्य ऽएव मत्स्यं गिलति कुम्भ्यां माग्रे बिभरासि स यदा ता मतिव्वर्द्धा ऽअथ कर्षूं खात्वा तस्यां मा बिभरासि स यदा ता मतिव्वर्द्धा ऽअथ मा समुद्र मभ्यवहरासि तर्हि वा ऽअतिनाष्ट्रो भवितास्मीति ॥ ३ ॥

शश्वद्ध झष ऽआस। स हि ज्येष्ठं व्वर्द्धतेऽथेतिथीं

* 'अवनेज्य'–इति ज-पाठः, डा०–वेबरेणापि दृष्टः।

† 'माजह्रुः'–इति क, ग।

‡ 'कुथं'–इति च।

सुमां तदौघ ऽआगन्ता तन्मा नाव मुपकल्प्योपासासै स ऽऔघ ऽउत्थिते नाव मापद्यासै ततस्त्वा पारयितास्मीति ॥ ४ ॥

त मेवं भृत्वा समुद्र मभ्युवजहार। स यतिथीं तत्समां परिदिदेश ततिथीᳫं समां नाव मुपकल्प्योपासाञ्चक्रे स ऽऔघ उत्थिते नाव मापेदे तᳫं स मत्स्य ऽउपन्यापुप्लुवे तस्य शृङ्गे नावः पाशं प्रतिमुमोच तेनैत मुत्तरं गिरि मतिदुद्राव ॥ ५ ॥

स होवाच। अपीपरं वै त्वा वृक्षे नावं प्रतिबध्नीष्व तं तु त्वा मा गिरौ सन्त मुदक मन्तश्छैत्सीद्* यावद्यावदुदकᳫं† समवायात्तावत्तावदन्ववसर्पासीति स ह तावत्तावदेवान्ववससर्प्प तदप्येतदुत्तरस्य गिरेर्म्मनोरवसर्प्पण मित्यौघो ह ताः सर्वाः प्रजा निरुवाहाथेह मनुरेवैकः परिशिशिषे ॥ ६ ॥

सोऽर्च्चञ्छ्राम्यंश्चचार‡ प्रजाकामः। तत्रापि पाकयज्ञेनेजे स घृतं दधि मस्त्वामिक्षा मित्यप्सु जुहवाञ्चकार ततः संवत्सरे योषित् सम्बभूव सा ह पिब्दमा§नेवोदे-

---

* 'मन्तश्छैत्सीद्'–इति क। † 'यावदुदकᳫं'–इति च।

‡ 'श्चकार'–इत्यपि पाठो डा०–वेबरेण दृष्टः।

§ 'पिब्दमा'–इत्यपि पाठो डा०–वेबरेण दृष्टः।

याय तस्यै ह स्म घृतं पदे सन्तिष्ठते तया मित्रावरुणौ सञ्जग्माते ॥ ७ ॥

ताᳬ होचतुः कासीति। मनोर्दुहितेत्यावयोर्ब्रूष्वेति नेति होवाच य एव मा मजीजनत तस्यैवाह मस्मीति तस्या मपि त्वमीषाते तद्वा जज्ञौ तद्वा न जज्ञावति-त्वेवेयाय सा मनु माजगाम ॥ ८ ॥

ताᳬ ह मनुरुवाच कासीति। तव दुहितेति कथं भगवति मम दुहितेति या अमूरप्स्वाहुतीरहौषीर्घृतं दधि मस्त्वामिक्षां ततो मा मजीजनथाः साशीरस्मि तां मा यज्ञे ऽवकल्पय यज्ञे चेद्वै मावकल्पयिष्यसि बहुः प्रजया पशुभिर्भविष्यसि या मु मया* काञ्चाशिष माशासिष्यसे सा ते सर्वा समर्द्धिष्यत इति ता मेतन्मध्ये यज्ञस्यावाकल्पयन् मध्यᳬ ह्येतद्यज्ञस्य यद-न्तरा प्रयाजानुयाजान् ॥ ९ ॥

तयार्च्चञ्छ्राम्यंश्चचार प्रजाकामः। तयेमां प्रजातिं प्रजज्ञे येयं मनोः प्रजातिर्याम्वेनया काञ्चाशिष माशास्त† सास्मै सर्वा समार्ध्यत ॥ १० ॥

सैषा निदानेन यदिडा। स यो हैवं विद्वानिडया चरत्येताᳬ हैव प्रजातिं प्रजायते यां मनुः प्राजायत

* 'या ममुया'—इति च।

† 'माशास्ते'—इति ग।

याम्वेनया काञ्चाशिष माशास्ते सास्मै सर्वा समृध्यते ॥ ११ ॥

सा वै पञ्चावत्ता भवति। पशवो वा ऽइडा पाङ्क्ता वै पशवस्तस्मात् पञ्चावत्ता भवति ॥ १२ ॥

स समवदायेडाम्। पूर्वार्द्धं पुरोडाशस्य प्रशीर्य पुरस्ताद् ध्रुवायै निदधाति ताꣳ होत्रे प्रदाय दक्षिणात्येति ॥ १३ ॥

स होतुरिह निलिम्पति। तद्धोतौष्ठयोर्निलिम्पते मनसस्पतिना ते हुतस्याश्नामीषे प्राणायेति ॥ १४ ॥

अथ होतुरिह निलिम्पति। तद्धोतौष्ठयोर्निलिम्पते व्वाचस्पतिना ते हुतस्या*श्नाम्यूर्जे ऽउदानायेति ॥ १५ ॥

एतद्ध वै मनुर्बिभयाञ्चकार। इदं वै मे तनिष्ठं यज्ञस्य यदिय मिडा पाकयज्ञिया यद्वै म ऽइह रक्षाꣳसि यज्ञं न हिꣳस्युरिति ता मेतत् पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्येव प्राशयत तथो ऽएवैना मेष ऽएतत् पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्येव प्राशयतेऽथ यत् प्रत्यक्षं न प्राश्नाति नेदनपहूतां प्राश्नानी†त्येतदेवैनां प्राशयते यदोष्ठयोर्निलिम्पते ॥ १६ ॥

अथ होतुः पाणौ समवद्यति। समवत्ता मेव

* 'हुतस्या'—इति च। † 'प्राश्नामी'—इति च।

सतीं तदेनां प्रत्यक्षꣳ होतरि श्रयति तयात्मञ्छ्रुतया* होता यजमानायाशिष माशास्ते तस्माद्धोतुः पाणौ समवद्यति ॥ १७ ॥

अथोपाꣳशूपह्वयते। एतद्ध वै मनुर्बिभयञ्चकारेदं वै मे तनिष्ठं यज्ञस्य यदिय मिडा पाकयज्ञिया यद्वै म ऽइह रक्षाꣳसि यज्ञं न हन्युरिति ता मेतत् पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्येवोपाꣳशूपाह्वयत तथो ऽएवैना मेषु† ऽएतत् पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्येवोपाꣳशूपह्वयते ॥ १८ ॥

स उपह्वयते। उपहूतꣳ रथन्तरꣳ सह पृथिव्योप माꣳ रथन्तरꣳ सह पृथिव्या ह्वयता मुपहूतं वामदेव्यꣳ सहान्तरिक्षेणोप मां वामदेव्यꣳ सहान्तरिक्षेण ह्वयता मुपहूतं बृहत् सह दिवोप मां बृहत् सह दिवाह्वयता मिति तदेता मेवैतदुपह्वयमान ऽइमांश्च लोकानुपह्वयत ऽएतानि च सामानि ॥ १९ ॥

उपहूता गावः सहर्षभा ऽइति। पशवो वा ऽइडा तदेनां परोऽक्ष मुपह्वयते सहर्षभा ऽइति समिथुना मेवैना मेतदुपह्वयते ॥ २० ॥

---

* 'ञ्छृतया'–इति च। † 'मेष'-इति च।

उपहूता सप्तहोत्रेति। तदेनाꣳ सप्तहोत्रा सौम्येनाध्वरेणोपह्वयते ॥ २१ ॥

उपहूतेडा ततुरिरिति। तदेनां प्रत्यक्ष मुपह्वयते ततुरिरिति सर्वꣳ ह्येषा पाप्मानं तरति तस्मादाह ततुरिरिति* ॥ २२ ॥

उपहूतः सखा भक्ष ऽइति। प्राणो वै सखा भक्षस्तत् प्राण मुपह्वयत ऽउपहूतꣳ हेगिति तच्छरीर मुपह्वयते तत्सर्वा मुपह्वयते ॥ २३ ॥

अथ प्रतिपद्यते। इडोपहूतोपहूतेडोपो ऽअस्मां३† ऽइडा ह्वयता मिडोपहूतेति तदुपहूता मेवैना मेतत्सतीं प्रत्यक्ष मुपह्वयते या वै सासीद्गौर्व्वै सासीच्चतुष्पदी वै गौस्तस्माच्चतुरुपह्वयते ॥ २४ ॥

स वै चतुरुपह्वयमानः। अथ नानेवोपह्वयत ऽजामितायै जामि ह कुर्याद्यदिडोपहूतेडोपहूतेत्येवोपह्वयेतोपहूतेडेति‡ व्वेडोपहूतेति तदर्व्वाची मुपह्वयत ऽउपहूतेडेति तत्पराची मुपो ऽअस्मां३§ ऽइडा ह्वयता मिति तदात्मानञ्चैवैतन्नान्तरेत्य॥न्यथेव च भवतीडोप-

---

* 'ततुरिरिति'–इति च। † 'ऽअस्मां२॥'–इति च।

‡ '०तोपहूतेडोपहूतेडेति'–इत्यपि दृष्टो डा०–वेबरेण।

§ 'ऽअस्मां२॥'–इति च। ॥ '०वैतेनान्तरेत्य'–इति त।

ह्वतेति तत्पुनरर्वाचीमुपह्वयते तदर्वाचीमेवैना-मेतत्पराचीमेवोपह्वयते ॥ २५ ॥

मानवी घृतपदीति । मनुर्ह्येतामग्रेऽजनयत तस्मा-दाह मानवीति घृतपदीति यदेवास्यै घृतं पदे समतिष्ठत तस्मादाह घृतपदीति ॥ २६ ॥

उत मैत्रावरुणीति । यदेव मित्रावरुणाभ्यां समग-च्छत स एव मैत्रावरुणो न्यङ्गो ब्रह्मा देवकृतोपहूतेति ब्रह्मा ह्येषां देवकृतोपहूतोपहूता दैव्या अध्वर्यव उपहूता मनुष्या इति तद्देवांश्चैवैतदध्वर्यू*नुपह्वयते ये च मानुषा एते वै दैव्या अध्वर्यवोऽथ य इतरे ते मानुषाः ॥ २७ ॥

य इमं यज्ञमवान्ये च यज्ञपतिं वर्द्धानिति । एते वै यज्ञमवन्ति ये ब्राह्मणाः शुश्रुवांसोऽनूचाना एते ह्येनं तन्वत एत एनं जनयन्ति तदु तेभ्यो निह्नुते एता उ वै यज्ञपतिं वर्द्धन्ति यस्य ह्येते भूयिष्ठा भवन्ति स हि यज्ञपतिर्वर्द्धते तस्मादाह ये च यज्ञपतिं वर्द्धानिति ॥ २८ ॥

उपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देव-पुत्रे इति । तदिमे द्यावापृथिवी उपह्वयते ययोरिदं

---

* 'तद्देवांश्चैवाध्वर्यू'–इति च ।

सुवं मध्युपहूतोऽयं यजमान इति तद्यजमान मुपह्वयते तद्यदत्र नाम न गृह्णाति परोऽक्षं ह्याशीर्यदिडायां मानुषं ह कुर्याद्यन्नाम गृह्णीयाद् व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद् व्यृद्धं यज्ञे करवाणीति तस्मान्न नाम गृह्णाति ॥ २९ ॥

उत्तरस्यां देवयज्याया मुपहूत इति । तदस्मा एतज्जीवातु मेव परोऽक्ष माशास्ते जीवन् हि पूर्व मिष्ट्वाथापरं यजते ॥ ३० ॥

तदस्मा एतत् प्रजा मेव परोऽक्ष माशास्ते । यस्य हि प्रजा भवत्यमुं लोक मात्मनैत्यथास्मिंल्लोके प्रजा यजते तस्मात् प्रजोत्तरा देवयज्या ॥ ३१ ॥

तदस्मा एतत् पशूनेव परोऽक्ष माशास्ते । यस्य हि पशवो भवन्ति स पूर्व मिष्ट्वाथापरं यजते ॥ ३२ ॥

भूयसि हविष्करण उपहूत इति । तदस्मा एतज्जीवातु मेव परोऽक्ष माशास्ते जीवन् हि पूर्व मिष्ट्वाथ भूयोभूय एव हविष्करोति ॥ ३३ ॥

तदस्मा एतत् प्रजा मेव परोऽक्ष माशास्ते । यस्य हि प्रजा भवत्येक आत्मना भवत्यथोत दशधा प्रजया हविष्क्रियते तस्मात् प्रजा भूयो हविष्करणम् ॥ ३४ ॥

तदस्मा एतत् पशूनेव परोऽक्ष माशास्ते । यस्य हि

पशवो भवन्ति स पूर्वं मिष्ट्वाथ भूयो भूय ऽएव हविष्क-
रोति ॥ ३५ ॥

एषा वा ऽआशीः । जीवेयं प्रजा मे स्याच्छ्रियं गच्छेय
मिति तद्यत् पशूनाशास्ते तच्छ्रिय माशास्ते श्रीर्हि
पशवस्तदेताभ्या मेवैतदाशीर्भ्याᳬं सर्वं माप्तं तस्माद्वा
ऽएते ऽअत्र द्वे ऽआशिषौ क्रियेते ॥ ३६ ॥

देवा म ऽइदᳬं हविर्जुषन्ता मिति । तस्मिन्नुपह्वत
ऽइति तद्यज्ञस्यैवैतत् समृद्धि माशास्ते यद्धि देवा
हविर्जुषन्ते तेन हि महज्जयति तस्मादाह जुषन्ता
मिति* ॥ ३७ ॥

तां वै प्राश्नन्त्येव । नाग्नौ जुह्वति पशवो वा ऽइडा
नेत् पशूनग्नौ प्रवृणजामेति तस्मान्नाग्नौ जुह्वति ॥ ३८ ॥

प्राणेष्वेव हूयते । होतरि त्वद्यजमाने त्वदध्वर्यौ
त्वदथ यत् पूर्वार्द्धं पुरोडाशस्य प्रशीर्य पुरस्ताद् ध्रुवायै
निदधाति यजमानो वै ध्रुवा तद्यजमानस्य प्राशितं
भवत्यथ यत् प्रत्यक्षं न प्राश्नाति नेदसᳬंस्थिते यज्ञे†
प्राश्नानीत्येतदेवास्य प्राशितं भवति सर्वे प्राश्नन्ति सर्वेषु
मे हुतासदिति पञ्च प्राश्नन्ति पशवो वा ऽइडा पाङ्क्ता
वै पशवस्तस्मात् पञ्च प्राश्नन्ति ॥ ३९ ॥

* एतदनन्तरं 'शतम् ७००'—इति ग, च । † 'जज्ञे'—इति क ।

अथ यच्च प्रतिपद्यते। तच्चतुर्द्धा पुरोडाशं कृत्वा बर्हिषदं करोति तदु च पितृणां* भाजनेन चतस्रो† वा ऽअवान्तरदिशो ऽवान्तरदिशो वै पितरस्तस्माच्चतुर्द्धा पुरोडाशं कृत्वा बर्हिषदं करोति ॥ ४० ॥

अथ यत्राहोपह्वते द्यावापृथिवी ऽइति। तदग्नीध ऋादधाति तदग्नीत् प्राश्नात्युपहूता पृथिवी मातोप मां पृथिवी माता ह्वयता मग्निराग्नीध्रात् स्वाहोपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयता मग्निराग्नीध्रात् स्वाहेति द्यावापृथिव्यो वा ऽएष यदाग्नीध्रस्तस्मादेवं प्राश्नाति ॥ ४१ ॥

अथ यत्राशिष माशास्ते। तज्जपति मयीद मिन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम्। अस्माकᳫं सन्त्वाशिषः सत्या नः सन्त्वाशिष ऽइत्याशिषा मेवैषु प्रतिग्रहस्तद्या ऽएवात्र ऽर्त्विजो यजमानायाशिष ऽआशासते ता ऽएवैतत् प्रतिगृह्यात्मन् कुरुते ॥ ४२ ॥

अथ पवित्रयोर्मार्जयन्ते। पाकयज्ञिययेव वा ऽएत-द्विडयाचारिषुः पवित्रपूता यदुत ऽऊर्द्ध्वं मसᳫंस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात् पवित्रयोर्मा-र्ज्जयन्ते ॥ ४३ ॥

---

* 'पितृणां'—इति च। † 'चतस्रो'—इति क०।

अथ ते पवित्रे प्रस्तरेऽपिसृजति। यजमानो वै प्रस्तरः प्राणोदानौ पवित्रे यजमाने तत् प्राणोदानौ दधाति तस्मात्ते पवित्रे प्रस्तरेऽपिसृजति ॥ ४४ ॥ ३ ॥

॥ इति षष्ठप्रपाठके तृतीयं ब्राह्मणम् [८. १.] ॥

॥ श्रीगणेशाय नमः ॥

"मनवे ह वै"। इडाब्राह्मण मेतत्[१]। तत्रेडायां[२] मानवी मिडां देवतां वक्तुं "मानवी घृतपदी मैत्रावरुणीत्येतानि च निगदपदानि[३] व्याख्यातु मितिहासः प्रवृत्तः। स चेतिहासः प्रसन्न एव, किञ्चित्तु दर्शयामः।—

'मनवे' वैवस्वताय। तादर्थ्ये चतुर्थी[४]। अवनेज्यते हस्तादि अनेनेति 'अवनेग्यम्'[५]; करणे कृत्यः[६]। 'आजह्रुः' आनीतवन्तः, परिचारकाः। 'यथा' 'इदम्' अधुना 'पाणिभ्यां' हस्तार्थं यदवनेजनं तस्मै 'आहरन्ति', तथा आजह्रुः। 'तस्य' मनोः प्रक्षालयतः 'मत्स्यः' 'पाणी' प्राप्तः। भाविनोऽर्थस्य सिद्ध्यर्थं देवतैव मत्स्यरूपेणाजगाम ॥ १ ॥

---

१— तैत्तिरीयब्राह्मणे (३. ५. ८.) समाम्नातानीडानिगदवाक्यानीह्होनविंशकण्डिकादिषु, तैत्तिरीयसंहितायाञ्च (२.६.७.) व्याख्यातानि, प्रपञ्च सूत्रतानि चाश्वलायनेन (श्रौ० सू० १.८.)।

२— 'ततः प्रजायां'—इति ठ।

३— ५३० पृ० ३–७ पं० द्रष्टव्याः।

४— पा० २. ३. १३ सू० १वा०।

५— 'अवनेज्यम्'—इति ज, ठ।

६— पा० सू० ३. ४. ७०।

"स हास्मै"। 'सः' मत्स्यः 'अस्मै' मनवे 'वाचम्' उदितवान्। कीदृशीम्? 'बिभृहि' पुष्णीहि 'मा' माम्। किमर्थम्? 'पारयिष्यामि'। 'पार रक्षणे'[1]। रक्षिष्यामि 'त्वा' 'इति'। 'कस्मात्?' इति भयहेतुः[2] प्रश्नः। वक्ष्यतीति 'ओघः' उदकसङ्घातः। स इमा भरतवर्षनिवासिनीः 'प्रजाः' निःशेषं वोढा, देशान्तरं प्रापयिता। तस्माद् भयहेतोस्त्वा पारयितास्मि 'इति' मत्स्यवचः। 'कथम्?' इति मनोः प्रश्नः। कथं तव 'भृतिः' भरणं पुष्टिः 'इति' ॥ २ ॥

"स होवाच"। 'क्षुल्लकाः' क्षुद्रकाः, अल्पकाः। 'नाष्ट्राः'—इति। 'गिलति'। "गॄ निगरणे"[3]। निगिरति[4]। 'बिभरासि'। अध्येषणायाम्[5] लिङर्थे लेट्[6]। बिभ्रियाः, पुष्णीयाः। एव मेव 'अभ्यवहरासि', 'उपासासै', 'आपद्यासै'—इति[7] व्याख्येयानि। 'अतिवर्द्धै' अतिरिच्य वर्द्धितास्मीति प्राप्ते। "यदायद्योर्लिङ उपसङ्ख्यानम्[8]", ततश्च "लिङर्थे लेट्"-इति[9] यदायोगे लेट्। 'कर्षूः' खातिकाः[10]। अतीतो नाष्ट्रान् नाशयितॄन् इति 'अतिनाष्ट्रः' ॥ ३ ॥

---

१— चु० प० ५५ धा०। रलयोरभेदः। "पार तीर कर्मसमाप्तौ"–इति चास्ति चु० प० ३७८ धा०।

२— पा० सू० १. ४. २५।

३— तु० प० ११९ धा०।

४— 'निगरति'–इति ठ।

५— पा० सू० ३. ३. १६१।

६— पा० सू० ३. ४. ७।

७— ५२४पृ० १३पं०, ५२५पृ० १पं०, ५२५पृ० २पं० द्रष्टव्याः।

८— पा० ३. ३. १४७ सू० १वा०।

९— पा० सू० ३. ४. ७।

१०—निघ० ३. २३. ६, अम० को० १. २. ३. २७, २. ७. २७, त्रिका० २. ७. ९। 'खानिकाः'–इति ठ-पाठः। तत्र च त्रिका० २. १०. ९।

"शश्वद्ध"। शश्वच्छब्दोऽत्र सामर्थ्यात् क्षिप्रवचनः। 'झषः' महामत्स्यः, क्षिप्र मेव महामत्स्योऽचावर्त्तते इत्यर्थः। अथ कस्मात्स शीघ्र मेव महामत्स्यः संवृत्तः? 'हि' यस्मात् 'सः' 'ज्येष्ठं' वृद्धतमं 'वर्द्धते'; सर्वे एव हि जलचरा अतिशयेन वर्द्धन्ते, स तु मत्स्यत्वा-द्नाद्यत्वाच्च वृद्धतमं वर्द्धत इति श्रुतिवचनम्। 'अथेतिथीम्'—इति मत्स्यवचनम्। अथ मपि समुद्र मभ्यवहते 'इतिथीम्' इत्यभिनयः। तेन सङ्ख्यायाः समा[1] दर्शितवान्। इयतीनां दशानां द्वादशानां वा पूरणी 'इतिथी'। इदम इशादेशः[2] छान्दसः। टित्वात् ङीप्[3]। इयत्यस्तिथयो यस्यां सा इतिथीति केषुचित् कोषेषु। तेष्वपि इयतिथीं यावतिथीं तावतिथी मिति प्राप्ते छान्दसो य-शब्द—व-शब्दलोपः। 'समाः' संवत्सरः, ताम् 'समाम्', समाया मित्यर्थः। 'तत्' स इति लिङ्गव्यत्ययः। 'सः' पूर्वोक्तः 'ओघः' 'आगन्ता'; 'तत्' तदा 'नावम्' उपकल्प्य, माम् 'उपासासै' उपासीथाः। 'ओघे' 'उत्थिते' तां 'नावम्' त्वम् 'आपद्यासै' आरोहेरित्यर्थः॥ ४॥

"त मेवं भृत्वा"। यावतीनां पूरणीं 'यतिथीं' 'परिदिदेश' परिदिष्टवान्, आख्यातवान्, 'ततिथीं' तावतीनां पूरणीं 'समाम्', 'नाव मुपकल्प्य' मत्स्य मुपासितवान्। 'ओघे' च उत्थिते 'नावम्' अधिरूढः। 'तं' च मनुं 'स मत्स्यः' 'उप' समीपे, नौः[4]; एन मुपकर्ष्य मिति[5] सम्बन्धः। 'आपुप्लुवे' आगतः[6]। 'तस्य' मत्स्यस्य 'शृङ्गे' भवितव्यतयैव निष्पादिते 'नावः पाशं' प्रतिबद्धवान्।

---

१— 'सङ्ख्यायां समां'—इति ज, झ।
२— पा० सू० ५.३.३।
३— पा० सू० ४.१.१५।
४— 'नौचैः'—इति ज, झ।
५— 'मुपकर्ष्यामीति'—इति ज, ठ।
६— 'स्व' आगतः'—इति ज।

'तेन' पाशेन स ह मत्स्यः 'एतम् उत्तरं गिरिम्' हिमवन्तम् अधिजगाम ॥ ५ ॥

"स होवाच"। मत्स्यवचनम्। पालितवानस्मि त्वाम्; अधुना च 'वृक्षे' 'नावं प्रतिबध्नीष्व'; किञ्चापरम्— 'गिरौ' 'सन्तं' 'त्वा' त्वाम् 'उदकम्' 'अन्तश्छैत्सीद्' तद्देशमध्यं भित्त्वा पृथगकार्षीद्, इद मस्माद्देशादित्यर्थः। कथं पुनस्त्वां नावं छिनत्ति? 'यावद्-यावत्' अध्वनः 'उदकं समवायात्' एकीभावाय, 'अव' अधः 'अयात्' गच्छेत्, अवतरेदित्यर्थः; 'तावत्-तावत्' त्व मपि तदेवोदकम् 'अनु' 'अवसर्पासि' अवतरेः। 'सः' मनुः प्राप्ते काले 'तावत्-तावदेव' अन्ववसृप्तः। येन च वर्त्मना मनुः अवसृप्तः, 'तद्' अद्यत्वे 'अपि' 'एतत्' 'उत्तरस्य गिरेः मनोरवसर्पणम्' —'इति', आहु-रिति शेषः। अवसृप्तोऽनेनेति 'अवसर्पणम्' ॥ ६ ॥

"सोऽर्चञ्छ्राम्यन्"। तपः तप्तवान् 'प्रजाकामः'। 'तत्रापि' 'सः' मनुः 'पाकयज्ञेन' अनेन 'ईजे' इष्टवान्, घृतादिभिः। 'ततः' तस्मात् पाकयज्ञादेव 'संवत्सरे' पूर्णे 'योषित्' मिश्रीभावात्मिका सम्भूता। 'सा' योषित् 'पिब्दमाना' पाकधर्मात्मिका 'इव' आस। पिबतेर्दकारप्रत्ययोगात् अकारप्रत्ययः; तत्त्वेन साक्षादात्मगामि-फलत्वादात्मनेपदे सत्वम्[1]; नामधातौ। "पिब चरणे[2]"। घृत-प्रभवत्वात् घृतं स्रवन्ती 'उदेयाय' उद्गता, उदकादुत्थिता। एवञ्च सुस्निग्धा पिब्दमाना येन, 'तस्यै' तस्याः 'पदे घृतं सन्तिष्ठते स्म'। 'तया' च 'मित्रावरुणौ' कथ मपि सङ्गतौ ॥ ७ ॥

---

१— 'वत्वम्'—इति ठ। २— धा० प० ५२८ धा०। 'पिब'—इति ठ।

"ताᳵ होचतुः"। 'आवयोर्दुहितेति ब्रूष्व'—'इति' ऊचतुः। 'अपि त्वं' भागः, तं प्रार्थितवन्तौ। 'तद्' भागित्वं 'वा जज्ञौ' वा-शब्दः च-शब्दार्थे[1], जानातिश्च प्रतिपूर्वो द्रष्टव्यः; प्रतिज्ञातवती च; 'न' च प्रतिज्ञातवतीति। यावता मैत्रावरुणीति व्यपदिश्यते, तावत् प्रतिज्ञातवती; यत्र तस्याः किञ्चित् ताभ्यां क्रियेतेति, एवं न प्रतिज्ञातवती ॥ ८ ॥

"तां ह मनुः"। 'अजीजनथाः' जनितवानसि। 'आशीरस्मि' आशीर्हेतुत्वादाशीः। 'अत्र कल्पय' सङ्गततया समर्थय, समर्थां कुरु। 'मया' हेतुभूतया, मय्युपह्वयमानायाम् "उपहूतोऽयं यजमानः"—इत्येतेन[2] होतृवचनेन 'याम् आशिषम् आशासिष्यसे' इति, 'ताम्' 'एतत्' एतां मैत्रावरुणीं मानवीं घृतपदीं 'मध्ये यज्ञस्य' यज्ञस्यान्तः समर्थयन् 'प्रयाजानुयाजान् अन्तरा'। इति इडायागः[3] ॥९॥

"तयार्चन्"। 'तया' सह दर्शपूर्णमासयोर्देवार्चनव्रतलक्षणं 'तपः' 'श्राम्यन्' कुर्वन्, 'चचार'। 'तया' हेतुभूतया। 'इमाम् प्रजातिम्'। प्रजायते इति प्रजातिः। ततो 'यास्वनया'—इत्यादि, तत्करणफलम् ॥ १० ॥ ११ ॥

"सा वै पश्वावत्ता"। उपस्तरणादिविशेषः; शाखान्तरात्। 'पशवो वा इडा' पशुप्रभव-घृतादिप्रभवत्वात् पशवः इडा[4] ॥ १२ ॥

"स समवदाय"। प्रसक्ता ॥ १३ ॥

---

१— 'चिच्छब्दार्थे'—इति ठ, ढ। २— ५३१ पृ० १ पं०।

३— इडाशब्देनेडापात्र्या मवत्तं पुरोडाशादि द्रव्य मुच्यते।

४— तै० सं० २. ६. ७. ३। ऐ० ब्रा० २. ४. ६।

"स होतुरिह"। इहेत्यभिनयेन प्रदेशिनीपर्वमध्यमं दर्शयति ; शाखान्तरात् ॥ १४ ॥

"अथ होतुरिह"। 'इह'-इति हेलन्तरम् ; शाखान्तरादेव। 'ओष्ठयोः'-इति। अत्राविशेषेण 'निलिम्पते' निलिम्पेदिति श्रुतिः[1]; शाखान्तरे तु— अधर मधर उत्तर मुत्तरे। किं पुनर्निलिम्पते? द्रवत्वात् सन्निधानाददनीयत्वाच्च आज्यम्। तत्रापि "एतदेवैनां प्रापयते"—इति[2] इडा-निश्चयवचनादिड मेवाज्य मिति गम्यते ॥ १५ ॥

"एतद्ध वै मनुः"। निर्लेपार्थवादोऽयम्। 'बिभयाञ्चकार' भीतः। 'तनिष्ठम्' तनुतमम्। 'पाकयज्ञिया' पाकयज्ञार्हा। मनुष्यप्रधानत्वात् मन्दतरवीर्येत्यभिप्रायः। 'यत्' 'इयम् इडा'। 'यत्' 'इह' तनिष्ठे देशे 'यज्ञं न हिंस्युः', महत् स्यादिति शेषः। एवं भीतः, बिभ्यत्। "ता मेतदिति। 'ताम्' इडाम् 'एतद्', यत् "ओष्ठयोर्निलिम्पते"—इति वक्ष्यते[3], तत् 'पुरा रक्षोभ्यः' यावदेवोच्चैरुपह्वानं श्रुत्वा रक्षांसि नागच्छन्ति, तावत् 'प्रापयत'। "प्राणेष्वेव हूयते"—इति वक्ष्यते[4], तं प्राणदेशं प्रापितवान्। "पुरा रक्षोभ्यः—पुरा रक्षोभ्यः"- इति द्विर्वचनं प्रयोगान्तरव्याप्त्यभिप्रायम्[5] ॥ १६ ॥

"अथ होतुः"। अवान्तरेडावदान मेतत्[6] ॥ १७ ॥

"अथोपांशु"। अत ऊर्द्धं होत्र मिडोपह्वानं विधीयते। तदपि द्विविधम्,— उपांशु चोच्चैश्च। तत्र प्रथमं तावदुपांशूपह्वानं

१— एतन्मन्त्रस्तद्व्याख्यानञ्च तै० सं० २. ६. ८ द्रष्टव्यम्।

२— ५२७ पृ० १७ पं०। ३— ५२७ पृ० १८ पं०।

४— ५३२ पृ० १३ पं०। ५— पा० सू० ८. १. १, ४।

६— का० श्रौ० सू० ३. ४. १०। ऐ० ब्रा० २. ४. ६।

युज्यते। उपपूर्वो ह्वयतिरभ्यनुज्ञायां वर्त्तते; उपांश्वनुजानीते इत्यर्थः। "एतदिति। 'बिभयाञ्चकार' भीतः, बिभ्यत्। पूर्ववद् व्याख्या[1]। 'इयं' हि 'इडा' सर्वैः ऋत्विग्यजमानैर्विभज्य भक्षणीया। तत्र चोनातिरेकाशङ्कानिवृत्तये परस्पर मनुज्ञातव्यम्। तच्चै-तत्साधारण मेवानुज्ञातं मध्यमस्थानीयो होता सर्वैरभ्यारब्धः करोति॥ १८॥

"स उपह्वयते"। यदीडानुज्ञातव्या, रथन्तरादीनां कि मापतितम्? अत आह— "तदेता मेवैतदिति। इडाया एवैतानि रथन्तरादीनि, पृथिव्यादीनि च रूपाणि। ततश्च तस्या मुपह्वतायां तान्युपह्वतानि भवन्ति। तेषु चोपह्वतेषु सा उपह्वता भवतीत्या-धिदैविकीं विभूतिं ख्यापयितुं तद्द्वारेणैवोपह्वयते। तथा च क्वचिदाह— "तदेनां परोक्ष मुपह्वयते"-इति[2]। "उप मां रथन्तर मिति। सर्वत्र रथन्तरादिमयी इडा-देवता, तां नार्हन्त्यननुज्ञाता मनुष्या भक्षयितुम्; अतः सानुज्ञाप्यते— "मा मिति। एतच्च तुल्यहेतुत्वात् सर्वेषा मृत्विग्यजमानानां प्रदर्शनार्थम्॥ १९॥

"उपह्वता गावः"। प्रसन्नास्तत्त्वः॥ 'प्राणः' 'शरीरम्'[3]; इडाया एतद्द्रष्टव्यम्॥ २०॥ २१॥ २२॥ २३॥

"अथ प्रतिपद्यते"। "अथोपांशूपह्वयते"-इति यदुक्तम्[4],

---

१— ५३९ पृ० ८-११ पङ्क्तयो द्रष्टव्याः।

२— ५२८ पृ० १७ पं०। ३— २३ कण्डिका द्रष्टव्या।

४— ५२८ पृ० ४ पं०।

तस्यावच्छेदार्थम्[1] "अथ प्रतिपद्यते"—इत्याह। तेनेत ऊर्द्धं यथा-प्राप्त मुच्चैर्वक्तव्यम् ॥ २४ ॥

प्रसङ्गाद्यतस्तोऽतःपरम्। "वत्सा वै दैव्या अध्वर्यवः"-इति[2] साम्नाय्यं हविः सम्भवति ; अध्वर्युवदित्यभिप्रायः। इडाञ्च भच्यां, भच्यत्वेनानुज्ञाय भक्षयितॄन् अनुजानीते— "उपहूता दैव्या अध्वर्यव इत्यादिना[3] ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

तचाप्यविशेषेणानुज्ञाय, विशेषत आग्नीध्र मनुजानीते— "उपहूते द्यावापृथिवी"-इति। स हि द्यावापृथिव्योरधिदैवरूपेणानुज्ञायते। "उपहूतो यजमानः"-इति। यजमानस्य विशेषोपह्वानम्; परोक्षं[4] ह्यत्राग्नीरिति। कथं परोक्षम्? उत्तरस्यां देवयज्याया मुपहूत इत्यनुज्ञामात्र मिह श्रूयते, नाशास्त इति ; "यत्वाशास्यते, तदनुज्ञातव्यम्"—इति अनुज्ञया आग्नीर्गम्यत इत्यभिप्रायः। ततश्च यजमानोऽपि सामान्यरूपेणैव यजमान इति वाच्यः, न विशेष-रूपेण देवदत्तो यज्ञदत्त इति। तद् विस्पष्टं प्रत्यक्षं मानुष मित्यभिप्रायः ॥ २९ ॥

"उत्तरस्याम्"। यदिडाया मुपहूतः, तत् 'उत्तरस्यां देवयज्याया मुपहूतः'; सापीडाया एव विभूतिरित्यभिप्रायः। "तदस्मा एतदिति। जीवनादीना मुत्तरेज्याहेतुत्वात्। उत्तरया देवेज्यया[5] जीवनादीनि लभ्यन्ते इति दर्शयति। यच्चाशास्यते, तचोपह्वानं

---

१— 'तस्याविच्छेदार्थम्'–इति ञ, झ। २— ५३० पृ० १० पं०।
३— ५३० पृ० ८ पं०। ४— 'पारोक्ष्यं'–इति ञ, झ।
५— 'देवयज्यया'–इति ठ।

युक्त मिति गम्यमाना माशिषं "परोक्ष माशास्ते"-इति दर्शयति। एतेन "भूयो हविष्करणम्" आशास्त इति व्याख्यातम् ॥ २०—२५॥

"एषा वा आशीः"। एषैव; नातोऽधिकास्तीत्यभिप्रायः। "तद्यत्पशूनिति। पशुग्रहणं श्रियोपलक्षणार्थं मित्यभिप्रायः। "तदेताभ्या मिति। यद्यपि जीवनादिलक्षण मेक मुभयत्राभिन्नम्, तथापि स्वरूपेणोत्तरस्या इज्याया बहु हविष्करणं भिद्यते[1]; अल्पेनापि हविषा उत्तरस्या देवयज्याया उपपत्तेः ॥ २६ ॥

"देवा म इदं हविः"। 'देवा मे इदं हविः' 'जुषन्ताम्' सेवन्ताम्। यो मनोरथो यजमानस्य तस्य, 'तस्मिन्' अथ मनुज्ञातः, सोऽस्य समृद्धाता मित्यर्थः। "तद्यज्ञस्यैवैतदिति। हविर्जोषणद्वारेण यज्ञसमृद्धिफल माशास्त इति दर्शयति ॥ २७॥

"तां वै प्राश्नन्त्येव"। प्रसक्ता ॥ २८॥

"प्राणेष्वेव"। त्वच्छब्दः समुच्चयार्थः। होत्रादिग्रहणं प्रदर्शनार्थम्, ब्रह्माग्नीध्रयोरपि; "पञ्च प्राश्नन्ति"-इतिवचनात्[2]। "अथ यत्पूर्वार्द्धं मिति। पुनर्वचनं यजमानभागलज्ञापनार्थम्। "नेदसंस्थित इति। नो संस्थिते; प्राश्नातीति वचनाद्गम्यते। 'अस्य' यजमानस्य 'प्राशितं भवति' इति। अग्नौ कृत्वाथ भक्षयति। "दैवो वा अस्यैष आत्मा मानुषोऽयम्"-इत्यनेन दर्शनेनावश्यं यजमानेन प्राशनीय मित्यभिप्रायः ॥

"अथ यत्प्रत्यक्ष मिति। यजमानभाग मनुपहूतं न प्राश्नाति; इडां नु विशेषत उपहूतां प्राश्नात्येव[3]। "नेदसंस्थिते"-इति।

---

१— 'विद्यते'-इति ज, भ। २— ५३२ पृ० २० पं०।
३— "उपहूतां प्राश्नन्ति युक्ताः, यजमानश्च"-इति का० ३. ४. २२, २३।

अथापि अनुयाजपत्नीसंयाजदेवता नेज्यन्ते ; तास्वनिष्टास्वयुक्तं स्वय मशन मित्यभिप्रायः। "एतद्देवास्येति। होमानन्तर मेव प्राशितं भवतीत्यभिप्रायः। अन्ते तु प्रत्यक्ष मेव प्राशिष्यति ; अप्राश्य-माने यजमाने भागत्वव्यपदेशानुपपत्तेः। "सर्वे प्राश्नन्ति" इडा मिति सम्बध्यते ॥ ३९ ॥

"अथ यत्र प्रतिपद्यते"। 'यत्र' काले होता 'प्रतिपद्यते' "इडोपहूता"-इत्येतं निगदम्, 'तत्' तदा 'चतुर्द्धा कृत्वा पुरो-डाशम्' आग्नेयम्; "आग्नेयं चतुर्द्धा करोति"-इति शाखान्त-रात्। बर्हिषि सीदतीति 'बर्हिषत्'। यथा बर्हिषद् भवति, तथा करोति; बर्हिषि सादयतीत्यर्थः। (तच्चतुर्द्धाकरण माग्नेयस्य पुरोडाशस्य ब्रह्महोत्रध्वर्य्वग्नीधां भक्ष इति। एवं चतुःप्रकारं चतुर्द्धा, अयजमानाश्चत्वारः प्राश्नन्तीत्येवं न पञ्च प्राश्नन्तीति विरोधः[1]।) 'तत्' चतुर्द्धाकृतस्य बर्हिषः सादनम्, 'अत्र' दर्शपूर्णमासयोः 'पितृणां[2] भाजनेन' हेतुना, क्रियत इति शेषः। पितृणां संविभागार्थ इत्यर्थः। किन्तत् पितृभ्यो दीयते ? नेत्याह। किन्तर्हि? चतुस्सङ्ख्यासामा-न्याद् बर्हिस्सम्बन्धाच्च भक्तिमात्र मेतत्। तदाह— "चतस्रो वा इति। "अवान्तरदिशो वै पितर इति। तासु हि पितृयज्ञेन तेभ्यो दीयते। "तस्मादिति निगमः[3] ॥४०॥

"अथ यत्राहोपहूते"। "तदग्नीध आदधाति"। आङ्पूर्वो

---

१— ठ-पुस्तकमात्रे एषोऽधिकः पाठः। २— 'पितॄणां'-इति ठ।
३— का० श्रौ० सू० ३. ४. १३-१८। एतन्मन्त्रोऽपि तत्रैव संस्मृतः।

दधाति'रन्यत्र स्थापने प्रयुक्तोऽत्र तर्पणे द्रष्टव्यः[१]। न चैष इडाभागः; किं तर्हि? अन्य एवाय मग्निद्भागः; प्राग्नित्रश्चेडा च, यच्चाग्नीध आदधातीतीडाया भेदेन व्यपदेशात्। एतेन ब्रह्मभागयजमान-भागयोरपीडाव्यतिरेकः सिद्धः। "द्यावापृथिव्यो वा एष यदा-ग्नीध्रः"। अग्नि मिन्धे, दीपयति समार्गेणेति 'अग्नीत्'। अग्नि-समिन्धनादियोगादाग्नीध्रस्य तत्परत्वम्। स इन्द्रः द्यावापृथिव्यौ तर्पयति। "धूमेनामूं वृष्ट्येमाम्"-इति[२]। धूमेन 'अमूं' द्याम्, वृष्ट्या 'इमां' पृथिवी मिति। द्यावापृथिव्यौ आग्नीध्रः; तस्मिन् भक्षणा-दिना प्रीते सिद्धे, सिद्धा द्यावापृथिव्योः प्रीतिरिति ॥ ४१ ॥

"अथ यत्राग्निषम्"। 'यत्र' काले 'आग्निषम्' "उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायाम्"-इति[४] होता 'आशास्ते', 'तत्' तदा 'जपति[५]'। कः? यजमानः; आशिषां तदर्थत्वात्[६];— "तद्या

---

१— जु० उ० १० धा०। २— का० श्रौ० ३. ४. १९ सू० टीका द्र०।

३— "भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः"–इति ऋ० सं० १. १६४. ५१। ४— ५३१ पृ० १ पं० द्रष्टव्या।

५— "आशासने मदीय मिति यजमानो जपति"–इति का० श्रौ० सू० ३. ४. २१। मन्त्रस्तु वा० सं० २. १०. १।

६— तदिडाप्राशनपद्धतिस्त्वेवम्।— अध्वर्युः इडापात्रीं गार्हपत्ये प्रतप्य तस्यां स्थाल्या स्रुवेणोपस्तीर्य पुरोडाशस्य दक्षिणतो मध्याच्चावद्यति। ततः प्रत्यङ्मुखो भूत्वा होत्रे इडां प्रदाय, हस्तेनापि मुञ्चन्, होतारं प्रदक्षिणीकृत्य, होतुरग्रे प्रत्यङ्मुख उपविश्य, होत्रा समर्पिता मिडां प्रतिगृह्य, इडाया एव स्रुवेणाज्य मादाय होतुः प्रादेशिन्या उत्तमे पर्वणि मध्यमे च स्रुवेणैवानक्ति। ततो होतुर्हस्ते इडाया एव पश्चा-

एवात्विजो यजमानायाशिष आशासते, ता एवैतत्प्रतिष्ठाम्बम् कुरुते"-इतिवाक्यशेषात्[1] ॥ ४ २ ॥

"अथ पवित्रयोः"। 'पवित्रयोः' पवित्राभ्या मिति विभक्ति-व्यत्ययः। कुतः? "पवित्रपूताः ०—० तनवामहै"—इतिवाक्यशेषात्[2]। 'मार्जयन्ते'[3]। "मृजू शौचालङ्कारयोः[4]"। चौरादिकत्वाणिच्[5]। शोधयन्त्यात्मान मित्यर्थः ॥ ४ ३ ॥

"अथ ते पवित्रे"। "यजमानो वै प्रस्तरः"; इतरस्माद्बर्हिष उत्कृष्टतरत्वात्। "प्राणोदानौ पवित्रे"; द्वित्वात्। 'अपिसृजति' संसृजति[6] ॥ ४ ४ ॥ ३ ॥ [८. १.] ॥

श्रीमतोऽवन्तिनाथस्य विक्रमार्कचितीशितुः।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥
इत्याचार्य-श्रीहरिस्वामिनः कृतौ शतपथभाष्ये
हविर्यज्ञेषु अष्टमस्य प्रथमं ब्राह्मणम् ॥

---

वत्त मवद्यति। होता च पञ्चम मवदानं स्वय मेवादत्ते। तत इडोपहूतेति होत्रा पठ्यमाने आग्नेयं पुरोडाशं चतुर्द्धा कृत्वा ब्रह्म पिन्वस्वेतिमन्त्रान्तेऽध्वर्युर्बर्हिषि निदधाति। ततो यजमान आग्नेयादि-विदिक्षु चतुरो भागान् निधाय, प्रदक्षिण मग्नेयस्थानादारभ्य, इदं ब्रह्मणः, इदं होतुः, इद मध्वर्योः, इद माग्नीध्रस्येति ऋत्विग्भ्य आदिशति। ततोऽपसव्यादिकर्मान्ते सर्वे प्रणीतोत्करावन्तरेण निष्क्रम्य, समर्पणक्रमेण भक्षयन्ति। यजमानोऽपि पञ्चमं भागं भक्षयतीति।

१— ५३३ पृ० १४ पं०। २— ५३३ पृ० १७ पं०।
३— का० श्रौ० सू० ३. ४. २४। मन्त्रस्तु— वा० सं० ६. २२. २।
४— चु० उ० ३१५ धा०। ५— पा० सू० ३. १. २५।
६— का० श्रौ० सू० ३. ४. २५। तन्मन्त्रोऽपि तत्रैव संस्मृतः।

ते वा ऽएते ऽउल्मुके ऽउदूहन्ति। अनुयाजेभ्यो यातयामेव वा ऽएतदग्निर्भवति देवेभ्यो हि यज्ञ मूढवान् भवत्ययातयाम्न्यनुयाजांस्तनवामहा ऽइति तस्माद्वा ऽएते ऽउल्मुके ऽउदूहन्ति ॥ १ ॥

ते पुनरनुसꣳस्पर्शयन्ति। पुनरेवैतदग्नि माप्याय-यन्त्ययातयामानं कुर्वन्त्ययातयाम्नि यदुत ऽऊर्द्ध मसꣳस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात् पुनरनुसꣳस्पर्शयन्ति ॥ २ ॥

अथ समिध मभ्यादधाति। समिन्ध ऽएवैन मेतत् समिद्धे यदुत ऊर्द्ध मसꣳस्थितं यज्ञस्य तत् तनवामहा ऽइति तस्मात् समिध मभ्यादधाति ॥ ३ ॥

ताꣳ होतानुमन्त्रयते। एषा ते ऽअग्ने समित्तया व्वर्द्धस्व चा च प्यायस्व व्वर्द्धिषीमहि च व्वय मा च प्यासिषीमहीति तद्यथैवादः समिध्यमानायान्वाहैव मेवैतदन्वाह तदेतद्धोतुः कर्म स यदि मन्येत न होता व्वेदेत्यपि स्वय मेव यजमानो ऽनुमन्त्रयेत ॥ ४ ॥

अथ सम्मार्ष्टि। युनक्त्येवैन मेतद्युक्तो यदुत ऽऊर्द्ध मसꣳस्थितं यज्ञस्य तद्वहादिति तस्मात् सम्मार्ष्टि सकृत्-सकृत् सम्मार्ष्टि त्रिस्त्रिर्वा ऽअग्रे देवेभ्यः सम्मृजन्ति नेत्तथा करवाम यथा देवेभ्य ऽइति तस्मात् सकृत्-सकृत्

सम्मार्ष्ट्यजामितायै जामि ह कुर्याद्यत् त्रिः पूर्वं त्रिरुपरं तस्मात् सकृत्-सकृत् सम्मार्ष्टि ॥ ५ ॥

स सम्मार्ष्टि। अग्ने व्वाजजिद् वाजं त्वा सस्वाꣳसं वाजजितꣳ सम्मार्ज्मीति* सरिष्यन्त मिति वा ऽअग्र ऽआह सरिष्यन्निव हि तर्हि† भवत्यथाच सस्वाꣳस मिति ससृवेव ह्यच भवति तस्मादाह सस्वाꣳस मिति ॥ ६ ॥

अथानुयाजान् यजति। या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञस्तायते सर्वा वै तत्ता ऽइष्टा भवन्ति तद्यत्तासु सर्वास्विष्टास्वथैतत्पश्चेवानुयजति तस्मादनुयाजा नाम ॥ ७ ॥

अथ यदनुयाजान् यजति। छन्दाꣳसि वा ऽअनुयाजाः पशवो वै देवानां छन्दाꣳसि तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं छन्दाꣳसि युक्तानि देवेभ्यो यज्ञं व्वहन्ति तद्यच छन्दाꣳसि देवान्त्समतर्पयन्नथ छन्दाꣳसि देवाः समतर्पयंस्तदुतस्तत् प्रागभूद्यच्छन्दाꣳसि युक्तानि देवेभ्यो यज्ञ मवाक्षुर्यद्देनान्त्समतीतृपन् ॥ ८ ॥

अथ यदनुयाजान् यजति। छन्दाꣳसि वा ऽअनुयाजाश्छन्दाꣳस्येवैतत्सन्तर्प्पयति तस्मादनुयाजान्यजति

---

* 'सम्मार्ज्मीति'—इति क, ग। † 'तर्हि'—इति च।

तस्माद्येन व्वाहनेन धावयेत्तद्विमुच्य ब्रूयात् पायय-*
तैनत्सुहितं कुरुतेत्येष उ एव वाहनस्यापह्नवः ॥ ९ ॥

स वै खलु बर्हिः प्रथमं यजति । तद्वै कनिष्ठं छन्दः
सद्गायत्री प्रथमा छन्दसां युज्यते तदु तद्वीर्येणैव यच्छ्येनी
भूत्वा दिवः सोम माहरत्तदयथाययं मन्यन्ते यत्कनिष्ठं
छन्दः सद्गायत्री प्रथमा छन्दसां युज्यते ऽथात्र यथा-
यथं देवाश्छन्दाᳪंस्यकल्पयन्ननुयाजेषु नेत्पापवस्यसमस-
दिति ॥ १० ॥

स वै खलु बर्हिः प्रथमं यजति । अयं वै लोको
बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोक ऽओषधीर्दधाति ता
ऽइमा ऽअस्मिल्लोके† ऽओषधयः प्रतिष्ठितास्तदिदᳪं सर्वं
जगदस्यां तेनेयं जगती तज्जगतीं प्रथमा मकुर्वन् ॥ ११ ॥

अथ नराशᳪंसं द्वितीयं यजति । अन्तरिक्षं वै नरा-
शᳪंसः प्रजा वै नरस्ता इमा अन्तरिक्ष मनु वावद्यमानाः
प्रजाश्चरन्ति यद्वै व्वदति शᳪंसतीति वै तदाहुस्तस्मा-
दन्तरिक्षं नराशᳪंसोऽन्तरिक्ष मु वै त्रिष्टुमत् त्रिष्टुभं
द्वितीया मकुर्व्वन् ॥ १२ ॥

अथाग्निरुत्तमः । गायत्री वा अग्निस्तद्गायत्री मुत्तमा
मकुर्व्वन्नेवं यथाययेन क्रमेन छन्दाᳪंसि प्रत्यतिष्ठंस्तस्मा-
दिद मपापवस्यसम् ॥ १३ ॥

---

* 'पायय'—इति च । † 'ऽअस्मिंल्लोक'—इति च ।

देवान् यजेत्येवाध्वर्युराह। देवन्देव मिति सर्वेषु होता देवानां वै देवाः सन्ति छन्दाꣳस्येव पशवो ह्येषां गृहा हि पशवः प्रतिष्ठो हि गृहाश्छन्दाꣳसि वा अनुयाजास्तस्माद् देवान् यजेत्येवाध्वर्युराह देवन्देव मिति सर्वेषु होता ॥ १४ ॥

व्वसुवने व्वसुधेयस्येति। देवताया ऽएव व्वषट् क्रियते देवतायै हूयते न वा ऽअत्र देवतास्त्यनुयाजेषु देवम्बर्हिरिति तन्न नाग्निर्नेन्द्रो न सोमो देवो नराशꣳस ऽइति नात ऽएकश्चन यो वा ऽअत्राग्निर्गायत्री स निदानेन ॥ १५ ॥

अथ यद्वसुवने व्वसुधेयस्येति यजति। अग्निर्वै व्वसुवनिरिन्द्रो वसुधेयोऽस्ति वै छन्दसां देवतेन्द्राग्नी ऽएवैव सु हैतद्देवतायाꣳ एव व्वषट् क्रियते देवतायै हूयते ॥ १६ ॥

अथोत्तम मनुयाज मिष्ट्वा समानीय जुहोति प्रयाजानुयाजा वा ऽएते तद्यथैवादः प्रयाजेषु यजमानाय द्विषन्तं भ्रातृव्यं बलिꣳ हारयत्येव* ऽआद्यं बलिꣳ हारयत्येव मेवैतदनुयाजेषु बलिꣳ हारयति ॥ १७ ॥ ४ ॥

॥ इति षष्ठप्रपाठके चतुर्थं ब्राह्मणम् [ ८. २. ] ॥

---

* 'हारयत्येव'–इति च।

"ते वा एते उल्मुके"। अनुयाजब्राह्मण मेतत्। "अथाग्निं कल्पयति"—इत्यस्मिन्[1] क्रमे उल्मुके[2] द्वे 'उदूहन्ति' ऊर्द्धं नयन्ति, अग्नितः पृथक् कुर्वन्ति, ऋत्विग्यजमानाः। साक्षादध्वर्युः, इतरे तदनुज्ञानेन। अथ कस्मान्न बहव एव साक्षादुदूहन्ति? एकेनो-दूहनेनैकस्यैव कर्त्तुरपेक्षितत्वात्। यथा चानुयाजयजने तेषां स्व-व्यापारापेक्षं बहुत्वम्, एव मुदूहनेऽपीति गम्यते। किमर्थ मुदू-हन्ति?[3] 'अनुयाजेभ्यः' अनुयाजार्थम्। कोऽनुयाजेषु तयोरुपयोगः? इति चेत्, 'यातयामा' गतरसः, गतवीर्यः 'एतत्' एतस्मिन्ननुयाज-काले अग्निर्भवति। 'देवेभ्यः' यस्माद् 'यज्ञ मूढ़वान् भवति', ततश्च गतवीर्यत्वादनुयाजेष्वक्षमः स्यात्। आभ्यां प्रागुद्धृताभ्यां पुनः संसृष्टाभ्याम्[4] अगतवीर्यो भविष्यतीत्यभिप्रायः। अतएवाग्निकल्पन-काले उदूहन्तीति गम्यते। अनुयाजेभ्यः उल्मुके उत्सार्य देव-यागायाग्निं कल्पयतीति हि तत्र युज्यते ॥ १ ॥

"ते पुनरनु"। अनुयाजेभ्य उल्मुके उत्सार्य देवयागेऽतीते पश्चात् 'संस्पर्शयन्ति' सङ्गमयन्ति ॥ २ ॥

"अथ समिध मभ्या"। उल्मुकसमासेन पुनर्नवीकृतोऽग्निः ॥ ३ ॥

"ताꣳ होता"। समिधा सामिधेनीस्थानीयया च "एषा ते"—इत्यनयर्चा[5], "समिध्यते"-इत्येतदादिभ्यां द्वाभ्या माह। "तदेत-

---

१— पुरस्तात् ३. ३. १२ (२१७ पृ० १४ पं०) द्रष्टव्यम्।

२— 'उल्मुकम्' प्रज्वलत् काष्ठम्। अम० को० २. ६. ३०।

३— 'मुदूहनम्?'-इति ढ। ४— 'संसृष्टाभ्याम्'-इति ढ।

५— वा० सं० २. १४. १। का० श्रौ० सू० ३. ५. २।

दिति। यस्मादेव मनुमन्त्रणात्मकं कर्म होतुः, नाध्वर्योः। 'स यजमानः' 'होता न वेद इति मन्येत', तदा 'स्वय मप्यनुमन्त्रयेत' ॥ ४॥

"अथ सम्मार्ष्टि"। सम्मार्गो दाभ्या मुच्यते[1] ॥ ५ ॥

"स सम्मार्ष्टि"। 'सस्रुवान्'[२] सस्रुतवानिति प्राप्ते तकारलोपः[३] ॥ ६॥

"अथानुयाजान्" । (न चैष इडाभागः, किं तर्ह्यन्य एवाय मग्नीद्भागः, प्राश्नित्रं च इडा च यत्राग्नीध आदध्यात्[४]) अथानुयाजविधिरुपक्रान्तः, तस्मात् "अनुयाजान् यजति"—इत्युपसंहरिष्यते। 'या वा एतेन'-इति निर्वचनम् ॥ ७ ॥

"अथ यदनुयाजान्"। —इति अर्थवादसम्बन्धार्थः पुनरुपन्यासः। "छन्दाꣳसीति। यदा छन्दोभिर्देवास्तर्पिताः, अथोत्तरकालं देवैश्छन्दांसि तर्पितानीतीतिहासः। त मधियज्ञं योजयति[५]— 'तत्' 'अतः' अनुयाजेभ्यः 'प्राक्' वृत्त मधियज्ञम्। किं तत्? यच्छन्दोभिर्देवास्तर्पितास्तस्यैतद्यज्ञे रूपं दर्शितम्। प्रयाजादौ स्विष्टकृदन्त इत्यर्थः ॥ ८ ॥

यस्य द्वितीयावृत्तं देवैश्छन्दसां तर्पणम्, स यज्ञे दर्शनीयः; तदर्थ मनुयाजा इज्यन्त इति दर्शयन्नाह— "अथ यदनुयाजान् यजतीति ॥ ९ ॥

---

१— वा० सं० २. १४. २, ३। का० श्रौ० सू० ३. ५. ३, ४।

२— पुरस्तात् ४ ४ १५ (३०७ पृ०) द्रष्टव्यम्।

३—" 'सस्रुवांसं' सरन्तम्। स्रु गतावित्यस्माल्लिट्, तस्य क्वसुः"—इति, 'सस्रुवांसः' प्राप्तवन्तः'—इति च ऋ० सं० सा० भा०।

४— ज-पुस्तकेऽय मधिकः पाठः।

५— 'त मभिधेयं यज्ञं योजयति'—इति ठ।

"स वै खलु"। उत्तरस्यां कण्डिकायां बर्हिषो जगतीत्वं वक्ष्यते अस्यां तु जगत्या अनुयाजेषु प्राथम्यकारण माह— "तद्वै"—इति। तत्र सामिधेनीषु 'कनिष्ठम्' अक्षरसङ्ख्या अल्पतमं 'छन्दः' 'गायत्री' 'प्रथमा छन्दसां' यज्ञेषु 'युज्यते'। 'तत्' तेन 'वीर्येण' 'दक्ष्येनो भूत्वा दिवः सोम माहरत्'। यच्च 'अयथायथं' अयथास्वं स्थानविपर्यासं 'मन्यन्ते' विद्वांसः। 'यत्' जगत्यां परिमाणतो ज्येष्ठाया मेव तिष्ठमानाया मल्पाक्षरा 'गायत्री प्रथमा युज्यते', तद् 'यथायथं' कर्त्तु मिह 'अनुयाजेषु' 'देवाः' जगतीं प्रथमाम् 'अकल्पयन्'। सा च जगती बर्हिरित्यभिप्रायः। किमर्थम्? "नेत् पापवस्यस मसत्" 'पापं' ज्येष्ठापेक्षया कनिष्ठम्, तत् पापक मेव, 'वस्यसम्' प्रशस्ततरं, यत् 'नेत् असत्'; तदनुकाराच्च प्रजास्वपि यत्पापं वित्तबन्धुकर्मादिना, तद् 'वस्यसं' वसुतरं, प्रशस्तर मितरस्मादपापान्माभूदिति ॥१०॥

यदि देवा यथायथ मत्राकल्पयन्, एवं तर्हि जगती प्रथमं यष्टव्या, किम् बर्हिषा? एतदाशङ्क्य बर्हिषो जगतीत्वं वक्तुं बर्हिःशब्दप्रयोगे च कारणं वक्तुं पुनराह— "स वै खलु"—इति। 'अयं वै लोको बर्हिः' येयं बर्हिराख्या देवतात्रेज्यते, एषा अयं लोकः। कथम्?। परिवृद्धो हि सः। एव मपि जगती-शब्देनैव युक्तम् 'अयं लोको बर्हिः' यष्टुम्, किं बर्हिः-शब्देन? अत आह— "ओषधयो बर्हिरस्मिन्नेवैतल्लोक ओषधीर्दधातीति। बर्हिः-शब्देन जगत्या मपीज्यमानाया मयं गुणो लभ्यत इत्यभिप्रायः। यद्ययं लोको बर्हिः, बर्हिश्च प्रथम मिज्यते, ततः कथं यथायथं छन्दांसि

कल्पितानि भवन्तीत्यत आह— "तदिद मिति। अय मेव लोको जगत्सम्बन्धात् 'जगती'; ततस्तास्मिन् लोके बर्हिषीज्यमाने जगती छन्दसां प्रथम मिष्टा भवतीत्ययथायथपरिहारः। "तज्जगतीं प्रथमा मिति। "यद्बर्हिः प्रथम मयजन् देवाः, तज्जगतीं प्रथमा मकुर्वन्नेवं यथायथ मकुर्वन्"-इतीतिहासशेषस्य पूर्वेण सम्बन्धः। "तथो एवैष यद्बर्हिर्यजति, तज्जगतीं प्रथमां करोति, ततस्तापापवस्यसं यथायथं करोति"-इति चोपसंहार इतिहासस्य द्रष्टव्यः ॥ ११ ॥

"अथ नराशंसं"। नरः प्रजाः शंसन्ति वदन्त्यस्मिन्निति 'अन्तरिक्षं नराशंसः'। 'अन्तरिक्ष मु वै त्रिष्टुप्'; मध्यमत्वादेकादश-भागत्वाच्च। दश दिशः, आत्मनैकादश; रुद्रसम्बन्धाद्वा[1]। इहापि तथैवेतिहासोऽधियज्ञे उपसंहारार्थः। "यन्नराशंस मयजन्, तत् त्रिष्टुभं द्वितीया मकुर्वन्; यन्नराशंसं यजति, तत्त्रिष्टुभं द्वितीयां करोति"-इति॥ १२ ॥

"अथाग्निरुत्तमः"। अत्र यष्टव्य इति शेषः। "गायत्री वा अग्निः" राग्नेयी हि ॥ १३ ॥

"देवान् यजेत्येव"। बर्हिरादिषु यष्टव्येषु बर्हिर्यजेत्यादिरूपेन्द्र-याज्यावचने चेद मुच्यते। 'देवान्'—इति बहुवचनान्तेन देवशब्दे-नाध्वर्युः प्रेष्यति; न बर्हिर्यजेत्यादिना। होतापि सर्वत्र 'देवं देव मिति' आह, न बर्हिराद्येव केवल मित्यर्थः[2]। ननु चोत्तरयोर्देवो

---

१— एकादश रुद्राः, ते च मध्यस्थाना इति यास्कीयनिरुक्तादौ प्रसिद्धाः।

२— "अतिक्रम्याश्राव्याह देवान् यजेति, यज-यजेत्युत्तरौ, देवान्-देवानिति वा सर्वत्र नियमशब्दाद्, विकृतिदर्शनाच्च"—इति का०श्रौ०सू०३.५.६-८।

देव इत्याह, न देवं देव मिति[1]? सत्य मेवम्। यथाप्राप्ते त्वनुवदितव्ये 'देवं'-शब्दादीप्सादिर्वचन मेतत्[2] प्रातिपदिकनिर्देश-मात्रपरं द्रष्टव्यम्। किं पुनः कारणं बर्हिरादिषु वक्तव्येषु देवान् आह? यस्माच्छन्दोदेवत्या अनुयाजाः, 'छन्दांसि' च 'देवानां देवाः', परोक्षत्वाच्च देवशब्दः प्रशस्ततरः; अतः छन्दो वा गायत्र्या-दिर्वा 'तस्माद् देवान् यजेत्येवाध्वर्युराह'।—इत्येत मर्थं 'देवानां वै देवाः सन्ति'—इत्यादिना दर्शयति। 'पशवो हि'—इति देव-त्वोपपत्तिः। पशूनाञ्च साक्षाद्देवत्व मसिद्ध मिति 'गृहा हि पशवः'—इत्याह। गृहभोगाः पशुमत[3] एवेति 'गृहाः पशवः'। गृहाणा मप्यसिद्धं देवत्व मिति 'प्रतिष्ठो हि गृहाः'—इत्याह। प्रतितिष्ठन्त्यस्या मिति 'प्रतिष्ठा' शरणम्, गतिरित्यर्थः। यस्य यस्य शरणं गतिरत्यन्तोपकारी, स तस्य देव इति प्रसिद्धम्। "तस्माद् देवान् यजेत्याह"-इत्युपसंहारः॥ १४॥

"वसुवने वसुधेयस्येति"। अनुयाजेषु[4] सर्वेषु होताहेति सम्बन्धः। "देवताया एवेति। कण्डिकाद्वयेनास्य पदद्वयस्यान्तरार्थ-व्याख्यानम्[5]; तस्योपक्रमः— सर्वत्रैव यागे 'देवतायै एव' होता

---

१— इह प्रथमो बर्हिर्यागः, तत्र 'देवम्'-इति समाम्नातम्; द्वितीयो नराशंसयागः, तृतीयस्तु स्विष्टकृदग्नियागः, तत्रोभयत्रैव 'देवः'-इत्याम्नातः। तै० ब्रा० ३. ५. ९. १, २, ३, मन्त्रा द्रष्टव्याः।

२— पा० सू० ८. १. ४।

३— 'पशुमन्त'-इति ठ।

४— नास्त्येतत् पदं ठ-पुस्तकादन्यत्र।

५— विशेषव्याख्या साधारणव्याख्या चेति व्याख्याद्वैविध्य मिहाभिप्रेतम्। तदिह विशेषव्याख्योपक्रान्ता, परकण्डिकायां समापयिष्यते; तत-स्तस्या एव भाष्यान्ते साधारणव्याख्या चाभिधास्यते।

'वषट् क्रियते'। 'देवतायै' एवाध्वर्युणा 'हूयते'। एतदुचितम्। 'अत्र' तु 'अनुयाजेषु' प्रसिद्धा 'देवता' 'न अस्ति'; बर्हिर्नराशंसयोर्दैवतात्वेनाप्रसिद्धेः, अग्नेश्च गायत्रीप्रधानत्वात्। तेन 'वसुवने'-'वसुधेयस्य'—इतिशब्दाभ्या मग्नि मिन्द्रञ्चोपादाय, ताभ्यां बर्हिरादीनुपलक्ष्य इन्द्राग्न्यात्मकेभ्यो बर्हिरादिभ्यो वषट् करोति होता, अध्वर्युश्च तदात्मकेभ्य एव जुहोतीत्युपसंहारः ॥ १५ ॥

"अथ यद्"। 'अग्निर्वै वसुवनिः'। वसु हविर्लक्षणं वनति भजति, इतरद्वा यजमानेभ्यो ददद्भजतीति 'वसुवनिः'। 'इन्द्रो वसुधेयः'। वसूनि हवींषि धीयन्तेऽस्मिन्निति 'वसुधेयः', वसूनि वा दधाति ददातीति वा 'वसुधेयः'। "कृत्यल्युटो बहुलम्"—इति[1] कर्त्तर्यधिकरणे वा कृत्यः। ततः किन्देवतायै वषट् क्रियत इत्यभिप्रायः। ननु चात्र जगत्यादिभ्यश्छन्दोभ्यो बर्हिरादिशब्दकेभ्यो वषट् कर्त्तव्य मिन्द्राग्न्योः कि मापतितम्? नैष दोषः। इन्द्राग्निभ्यां प्रसिद्धदेवतारूपप्रतिपत्तये जगत्यादीन्येव लक्षयिष्यन्ते, यथा बर्हिरादिभिः। कथं पुनरिन्द्राग्निभ्यां जगत्यादीनि लक्ष्यन्तेऽसम्बद्धाभ्या मित्यत आह— "अस्ति वै छन्दसा मिति। प्राणेनेन्द्रेणाधिष्ठितया वाचा छन्दांस्यभिव्यज्यन्त इति 'इन्द्राग्नी एव देवता छन्दसाम्'। ततश्चाधिष्ठात्र्या देवतया शक्यान्यात्मरूपापन्नानि जगत्यादीनि लक्षयितुम्। एव मपि 'वसुवने!'—इत्यामन्त्रितान्तम्, 'वसुधेयस्य'—इति षष्ठ्यन्तम्; ते कथम् 'बर्हिर्वेतु[2]'—इतिप्रथमान्तेन

---

१ — पा० सू० ३. ३. ११३।

२— तै० ब्रा० ३. ५. ६. १-३। तै० सं० २. ६. ६. ११।

बर्हिरादिना सम्बध्येते ? नैष दोषः । "एव सु हैतदिति । ध्रुवं द्वे अप्येते विभक्ती व्यत्ययेन[1] चतुर्थ्यर्थवृत्ते दर्शयति । तथापि च नैव सामानाधिकरण्येन सम्बन्धः; कथं तर्हि? बर्हिर्वेतु वसुवनि-वसुधेयाभ्यां वौषडिति बर्हिरात्मिका जगती पिबत्वाज्यम्[2] । तस्यै एवेन्द्राग्निरूपायै वषडित्यर्थः । ननु चात्र याज्याया मुपपद्येताप्यय मर्थः, प्रैषे तु वषट्कार एव नास्ति,— "देवं बर्हिः ०—० वसुवने वसुधेयस्य यज"—इति[3], तत्र कथ मेकवाक्यता स्यात् ? नैष दोषः; तस्यापि हि यास्काचार्येण "वसुवननाय च वसुधानाय च"— इति तादर्थ्य-चतुर्थ्या एकवाक्यता दर्शिता[4] । अथवा विनैव विभक्तिव्यत्ययादर्थो वक्तव्यः । हे भगवन् ! 'वसुवने' अग्ने ! छन्दसो देवता ! त्वदात्मकं त्वदनुगृहीत मेतद् 'देवं-बर्हिः'-शब्दकं छन्दः 'वसुधेयस्य' इन्द्रस्य स्वरूप मधिष्ठाय 'वेतु' इति । एव मपि चेन्द्राग्निसम्बन्धकीर्त्तन-मात्रादेव देवतायै वषट् क्रियत इत्यभिप्रायः ।— एवं तावदन्तरोऽर्थः ॥ हे 'वसुवने' अग्ने ! वसुधेयस्य प्रशस्यस्याज्यभागस्य 'वेतु' देवं बर्हिः । —इति बाह्योऽर्थः ॥ १६ ॥

---

१— पा० सू० ३. १. ८५ ।

२— मन्त्रस्थस्य 'वेतु'-पदस्यार्थोऽयम् । यास्काचार्यस्तु 'वीताम्'—इत्यस्य 'पिबेतां कामयेतां वा'—इति द्विविधोऽर्थ उक्तः ( निरु० ८. ४. १०. ) । "आज्येन प्रयाजा इज्यन्ते, पशुना मध्यतः, पृषदाज्येनानुयाजाः"—इति हि तै० सं० ६. ३. ११. ७ ।

३— वा० सं० २८. १२ । का० श्रौ० सू० १८. ६. १२ ।

४— निरु० ८. ४. १० । 'यजेति सम्प्रैषः'—इति तत्र तच्छेषः ।

"अथोत्तमम्"। "प्रयाजानुयाजा वा एत इति। प्राणादनपेतः 'प्रयाजः', अपानादनपेतः 'अनुयाजः' इति; "प्राणा वै प्रयाजा अपाना अनुयाजाः"-इति[1]। प्राणापाननिवृत्तौ समानयनेन भवितव्य मित्यभिप्रायः ॥ १७ ॥ ४ ॥ [ ८. २. ] ॥

श्रीमतोऽवन्तिनाथस्य विक्रमादित्यभूपतेः[2]।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छतपथश्रुतिम्[3] ॥

इत्याचार्यश्रीहरिस्वामिनः कृतौ शतपथब्राह्मणभाष्ये हविर्यज्ञेषु अष्टमाध्यायस्य द्वितीयं ब्राह्मणम् ॥

## ॥ इति षष्ठः प्रपाठकः समाप्तः[4] ॥

---

१— निरु० ८. ३. ७। "आग्नेया वै प्रयाजा आग्नेया अनुयाजाः × × × छन्दांसि वै प्रयाजाश्छन्दांस्यनुयाजाः × × × ऋतवो वै प्रयाजाः पशवोऽनुयाजाः × × × प्राणा वै प्रयाजा अपाना अनुयाजाः × × × आत्मा वै प्रयाजाः प्रजा अनुयाजाः × × × आग्नेया इति तु स्थितिर्भक्तिमात्र मितरत्"-इति।

२— 'विक्रमार्कस्य भूपतेः'-इति, विक्रमस्य क्षितीशितुः'-इति च पाठौ।

३— 'व्याख्यच्छातपथीं श्रुतिम्'-इति च बहुत्र।

४— 'कांडि १११'-इति क, ग; 'कण्डिकासङ्ख्या १११'-इति च। तत्र १ब्रा० २८ क०, २ब्रा० २२ क०, ३ब्रा० ४४ क०, ४ब्रा० १७ क०। तदासां सङ्कलनया १११ कण्डिकाः श्रुता इह षष्ठे प्रपाठके प्र मिति॥

अथ

सप्तमप्रपाठके प्रथमं ब्राह्मणम् ।

अपि वा

अष्टमाध्याये तृतीयं ब्राह्मणम् ।

॥ हरिः ॐ ॥

स वै स्रुचौ व्यूहति । अग्नीषोमयोरुज्जितिमनूज्जेषं व्वाजस्य मा प्रसवेन प्रोहामीति जुहूं प्राचीं दक्षिणेन पाणिनाग्नीषोमौ तमपनुदतां योऽस्मान्द्वेष्टि यं च व्वयं द्विष्मो व्वाजस्यैनं प्रसवेनापोहामीत्युपभृतं प्रतीचीᳬ सव्येन पाणिना यदि स्वयं यजमानः ॥ १ ॥

यद्यु अध्वर्युः । अग्नीषोमयोरुज्जितिमनूज्जयत्वयं यजमानो व्वाजस्यैनं प्रसवेन प्रोहात्वग्नीषोमौ तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि व्वाजस्यैनं प्रसवेनापोहामीति पौर्णमास्यामग्नीषोमीयᳬ हि पौर्णमासᳬ हविर्भवति ॥ २ ॥

अथामावास्यायाम् । इन्द्राग्न्योरुज्जितिमनूज्जेषं

व्वाजस्य मा प्रसवेन प्रोहामीन्द्राग्नी त मपनुदतां योऽस्मान् द्वेष्टि यं च व्वयं द्विष्मो व्वाजस्यैनं प्रसवेनापोहामीति यदि स्वयं यजमानः ॥ ३ ॥

यद्यु ऽअध्वर्युः। इन्द्राग्न्योरुज्जिति मनूज्जयत्वयं यजमानो व्वाजस्यैनं प्रसवेन प्रोहामीन्द्राग्नी त मपनुदतां य मयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि व्वाजस्यैनं प्रसवेनापोहामीत्यमावास्याया मैन्द्राग्नꣳ ह्यामावास्यꣳ हविर्भवत्येवं यथादेवतं व्यूहति तद्यदेवं व्यूहति ॥ ४ ॥

यजमान ऽएव जुह्व मनु। योऽस्मा ऽअरातीयति स ऽउपभृत मनु प्राञ्च मेवैतद् यजमान मुदूहत्युपाञ्चं त मपोहति योऽस्मा ऽअरातीयत्यत्तैव जुह्व मन्वाद्य ऽउपभृत मनु प्राञ्च मेवैतदत्तार मुदूहत्युपाञ्च माद्य मपोहति ॥ ५ ॥

तद्वा ऽएतत्। समान ऽएव कर्म्मन् व्याक्रियते तस्माद् समानादेव पुरुषादत्ता चाद्यश्च जायेते ऽइदꣳ हि चतुर्थे पुरुषे तृतीये सङ्गच्छामह ऽइति व्विदेवं दीव्यमाना जात्या ऽआसत ऽएतस्माद् तत् ॥ ६ ॥

अथ जुह्वा परिधीन्त्समनक्ति। यया देवेभ्यो हौषीद् यया यज्ञꣳ समतिष्ठिपत्तयैवैतत् परिधीन् प्रीणाति तस्माज्जुह्वा परिधीन्त्समनक्ति ॥ ७ ॥

स सुमनक्ति। व्वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वेत्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्या ऽएतेभ्यस्त्वेत्येवैतदाह ॥ ८॥

अथ परिधि मभिपद्याश्रावयति। परिधिभ्यो ह्येतदाश्रावयति यज्ञो वा ऽआश्रावणं यज्ञेनैवैतत् प्रत्यक्षं परिधीन् प्रीणाति तस्मात् परिधि मभिपद्याश्रावयति ॥ ९ ॥

स ऽआश्राव्याह। इषिता दैव्या होतार ऽइति दैव्या वा ऽएते होतारो यत्परिधयोऽग्नयो हीष्टा दैव्या होतार ऽइत्येवैतदाह यदाहेषिता दैव्या होतार ऽइति भद्रवाच्यायेति स्वयं वा ऽएतस्मै देवा युक्ता भवन्ति यत्साधु व्वदेयुर्यत्साधु कुर्युस्तस्मादाह भद्रवाच्यायेति प्रेषितो मानुषः सूक्तवाकायेति तदिमं मानुषꣳ होतारꣳ सूक्तवाकाय प्रसौति* ॥ १० ॥

अथ प्रस्तर मादत्ते। यजमानो वै प्रस्तरस्तद्यत्रास्य यज्ञोऽगंस्तदेवैतद्यजमानꣳ स्वगाकरोति देवलोकं वा ऽअस्य यज्ञोऽगन् देवलोक मेवैतद्यजमान मपि नयति ॥ ११ ॥

स यदि व्वृष्टिकामः स्यात्। एतेनैवाददीत सञ्ज्ञानाथां द्यावापृथिवी ऽइति यदा वै द्यावापृथिवी सञ्ज्ञानाते†

---

* 'प्रसौति'–इति क। † 'सञ्ज्ञानाथे'–इति च।

ऽअथ व्वर्षति तस्मादाह सञ्ज्ञानाथां द्यावापृथिवी ऽइति मित्रावरुणौ त्वा व्वृष्ट्यावता मिति तद्यो व्वर्षस्येष्टे स त्वा व्वृष्ट्यावत्वित्येवैतदाहायं वै व्वर्षस्येष्टे योऽयं पवते सोऽय मेक इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टः प्राङ् च प्रत्यङ् च ताविमौ प्राणोदानौ प्राणोदानौ वै मित्रावरुणौ तद्य एव व्वर्षस्येष्टे स त्वा व्वृष्ट्यावत्त्वित्येवै-तदाह त मेतेनैवाददीत यदा ह्येव कदा च व्वृष्टिः स मिव* त मनक्त्याहुति मेवैतत्करोत्याहुतिर्भूत्वा देव-लोकं गच्छादिति ॥ १२ ॥

स वा ऽअग्रं जुह्वा मनक्ति। मध्य मुपभृ[illegible] मूलं ध्रुवाया मग्र मिव हि जुहूर्मध्य मिवोपभृ[illegible] मिव ध्रुवा ॥ १३ ॥

सोऽनक्ति। व्यन्तु व्वयोऽक्तं रिहाणा ऽ[illegible]ति व्वय ऽएवैन मेतद्भूत मस्मान्मनुष्यलोकाद्देवलोक [illegible]भ्युत्पातयति त न्नीचैरिव हरति दयं तद्यस्मान्नीचैरिव हरेद्यजमानो वै प्रस्तरोऽस्या ऽएवैन मेतत् प्रतिष्ठायै नोद्धन्तीह्यो ऽएव व्वृष्टिं नियच्छति ॥ १४ ॥

स हरति। मरुतां पृषतीर्गच्छेति देवलोकं गच्छेत्येवै-तदाह यदाह मरुतां पृषतीर्गच्छेति व्वशा पृश्निर्भूत्वा

---

* 'घृ मिव'—इति क, ग ।

दिवं गच्छ ततो नो वृष्टि मावहेतीयं वै वशा पृश्नि-
र्यदिद मस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं
वशा पृश्निरियं भूत्वा दिवं गच्छेत्येवैतदाह ततो नो
वृष्टि मावहेति वृष्टाद्वा ऽऊर्ग्रसः सुभूतं जायते तस्मा-
दाह ततो नो वृष्टि मावहेति ॥ १५ ॥

अथैकं तृण मपगृह्णाति। यजमानो वै प्रस्तरः स यत्
कृत्स्नं प्रस्तर मनुप्रहरेत् क्षिप्रे ह यजमानोऽमुं लोक
मियात्तथो ह यजमानो ज्योग् जीवति यावद्वास्येह
मानुष मायुस्तस्मा ऽएवैतदुपगृह्णाति ॥ १६ ॥

त ं हस्ते धारयित्वानुप्रहरति। तद्यचास्येतर ऽआ-
त्मागंस्त ं स्यैतन्नमयत्यथ यन्नानुप्रहरेदन्तरियाद्ध यज-
मानं लोका यो ह यजमानं लोकान्नान्तरेति ॥ १७ ॥

तं प्राञ्च म ं समस्यति। प्राची हि देवानां दिगथो
ऽउदञ्च मुदीची ह मनुष्याणां दिक् त मङ्गुलिभिरेव
योयुप्येरन् न काष्ठैर्हारुभिर्वा ऽइतरं शवं व्यूषन्ति
नेत्तथा करवाम यथेतरं शव मिति तस्मादङ्गुलिभिरेव
योयुप्येरन् न काष्ठैर्यदा होता सूक्तवाक माह* ॥ १८ ॥

अथाग्नीदाहानुप्रहरेति। तद्यचास्येतर ऽआत्मागंस्त-
द्देवास्यैतन्नमयेत्येवैतदाह तूष्णी मेवानुप्रहृत्य चक्षुष्पा

* 'माह'–इति च।

ऽग्नेऽसि* चक्षुर्म्मे पाहीत्यात्मान मुपस्पृशति तेनो ऽअप्यात्मानं नानुप्रवृणक्ति† ॥ १९ ॥

अथाह सव्वदस्वेति । संवादयैनं देवैरित्येवैतदाहा- गानग्नीदित्यगन् खल्वित्येवैतदाहागन्नितीतरः प्रत्याह श्रावयेति तं वै देवैः श्रावय त मनुबोधयेत्येवैतदाह श्रौषडिति विदुर्व्वा ऽएन मनु वा ऽएन मभुत्सते- त्येवैतदाहैव मध्वर्युश्चाग्नीच्च देवलोकं यजमान मपि- नयतः ॥ २० ॥

अथाह स्वगा दैव्या होतृभ्य ऽइति । दैव्या वा ऽएते होतारो यत्परिधयोऽग्नयो हि तानेवैतत् ... ति तस्मादाह स्वगा दैव्या होतृभ्य इति स्व... ानुषेभ्य ऽइति तदस्मै मानुषाय होत्रे ऽस्वला‡ मा... त्ते§ ॥ २१ ॥

अथ परिधीननुप्रहरति । स मध्य... मेवाग्रे परिधि मनुप्रहरति यं परिधिं पर्य्यधत्था|| ऽअग्ने देव पणिभि- र्गुह्यमानः । तं तऽएत मनुजोषं भराम्येष नेत्त्व¶दपचेत-

* 'अग्ने'—इत्येव ग । † 'वृणक्ति'—इति क ।

‡ 'होतृस्वला'—इति, 'होत्रे दस्वला'—इति चेमौ पाठौ दृष्टौ डा०— वेबरेण । पुरस्ताच्चैवं ( ४८२ पृ०— ७. १. ११. ) द्रष्टव्यम् ।

§ 'माग्नात्ते'—इति क । || 'पर्य्यधस्था'—इति ग ।

¶ 'नेत्व'—इति ग, डा०—वेबरेण च दृष्टः । 'ने.म त्व'—इति च ।

याता ऽइत्यग्नेः प्रियं पाथो ऽपीत मितीतरावनु-
समस्यति* ॥ २२ ॥

अथ जुहूञ्चोपभृतं च सम्प्रगृह्णाति। अदो हैवाहुतिं करोति यदनक्त्याहुतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूञ्चोपभृतञ्च सम्प्रगृह्णाति ॥ २३ ॥

स वै विश्वेभ्यो देवेभ्यः सम्प्रगृह्णाति। यद्वा ऽअनादिष्टं देवतायै हविर्गृह्यते सर्वा वै तस्मिन् देवता ऽअपित्विन्यो मन्यन्ते न वा ऽएतत् कस्यैचन देवतायै हविर्गृह्णन्नादिशति यदाज्यं तस्माद्विश्वेभ्यो देवेभ्यः सम्प्रगृह्णात्येतदु वैश्व[illegible] हविर्यज्ञे ॥ २४ ॥

स [illegible] ह्णाति। संस्रवभागा स्थेषा बृहन्त ऽइति संस्रवो [illegible] खलु परिशिष्टो भवति प्रस्तरेष्ठाः परिधे-याश्च देवा [illegible] इति प्रस्तरश्च हि परिधयश्चानुप्रहृता भवन्तीमां वा[illegible] तदु वैश्वदेवं करोत्यासद्यास्मिन् बर्हिषि मादयध्वꣳ स्वाहा वाडिति तद्यथा वषट्कृतꣳ हुत मेव मस्यैतद्भवति ॥ २५ ॥

स यस्यानसो हविर्गृह्णन्ति। अनसस्तस्य धुरि विमुञ्चन्ति यतो युनजाम† ततो विमुञ्चामेति यतो ह्येव‡

---

* 'समस्यति'—इति क।

† 'युनजाम'—इति च।

‡ 'ह्येव'—इति च डा०—वेबरेण वृष्टः।

युञ्जन्ति ततो व्विमुञ्चन्ति यस्यो पात्र्ये स्फ्ये तस्य यतो युनजाम ततो व्विमुञ्चामेति यतो ह्येव युञ्जन्ति ततो व्विमुञ्चन्ति ॥ २६ ॥

युजौ ह वा ऽएते यज्ञस्य यत्स्रुचौ । ते ऽएतद्युङ्क्ते यत् प्रचरति स यं निधाया*वद्येद् यथा व्वाहन मवाच्छिन्द्यादेवं तत्ते ऽएतत् स्विष्टकृति व्विमोचन मागच्छतस्ते तत्साद-यति तद्विमुञ्चति ते ऽएतत्पुनः प्रयुङ्क्तेऽनुयाजेषु सोऽनु-याजैश्चरित्वैतद्विमोचन मागच्छति ते तत्सादयति† तद्विमुञ्चति ते ऽएतत् पुनः प्रयुङ्क्ते यत् सम्प्रगृह्णाति तद्यां गति मभियुङ्क्ते तां गतिं गत्वा व्विमुञ्चते यज्ञं वा ऽअनु प्रजास्तस्मादयं पुरुषो व्युङ्क्तेऽथ ? मुञ्चतेऽथ व्युङ्क्ते तद्यां गति मभियुङ्क्ते तां गतिं गत्वान्ततो व्विमु-ञ्चते स सादयति घृताची स्थो धुर्यौ पातꣳ सुम्ने स्थः सुम्ने मा धत्त मिति साध्व्यौ स्थः साधौ मा धत्त मित्ये-वैतदाह ॥ २७ ॥ १ ॥

॥ इति सप्तमप्रपाठके प्रथमं ब्राह्मणम् [ ८. ३. ] ॥

---

* 'यन्निधाया'–इति क, ग, डा–वेबर्-दृष्टश्च ।

† 'तत्सादयति'–इति च डा०–वेबर्-दृष्टः पाठः ।

"स वै स्रुचौ[1] व्यूहति"। "ऊह वितर्के"[2]; प्रेरणे त्वत्र द्रष्टव्यः। अन्योन्यविपरीतं नामयतीत्युपन्यास मधिकृत्य व्यूहनस्य प्रेरकता-द्यनेकगुणश्रुतेस्त्वन्त्यावेव[3] विधौ मन्तव्यौ। "अग्नीषोमयोरिति[4]। लिङ्गक्रमाख्याप्राप्त मन्त्रानुवादः। 'जुहूम् प्राचीं दक्षिणेन पाणिना' व्यूहतीत्यनुवर्त्तते। एष तावदेको विधिः। अपरोऽपि— 'उपभृतं प्रतीचीं सव्येन पाणिना'- इति[5]। 'यदि स्वयं यजमानः'—इति, लिङ्गात् प्राप्तस्य यजमानस्यानुवादः। एव मेव 'यद्यु अध्वर्युः'-इति[6], मन्त्रोत्पत्तिपरोऽध्वर्योरनुवादः। अनुवादे च सति यदि कालवचनः, 'पौर्णमासी'-शब्दः, यदि वा कर्मवचनः[7], प्रयोगे न कश्चित् कर्मणि विशेषः। एवं यथादेवतं व्यूहतीत्यर्थवत्त्वाय विधिः। ततश्च "अग्नेरग्नीषोमयोरिति पौर्णमास्याम्, "अग्नेर्विष्णोरिन्द्रस्येति साम्नाय्यय। अमावास्यायां प्रयोगः सिद्धः। ननु च या-या यत्र-यत्र देवता, तां-तां तत्र-तत्रेत्यस्मिन्नर्थे अय मव्ययी-भावः[8] समासो यथादेवत मिति, ततश्च प्रयाजादिदेवताभिरपि व्यूहनं प्राप्नोति ? नैष दोषः। प्रधानदेवते अग्नीषोमाविन्द्राग्नी

---

१— 'स्रुचौ' जुहूपभृतौ। का० श्रौ० ३. ५. १७ सू० द्रष्टव्यम्।

२— भ्वा० आ० ६४८ धा०।

३—'०न्यासमात्र मेवैतत्; अत्रानेकगुणश्रुतेस्तूत्तरावेव'—इति ञ, झ।

४— वा० सं० २. १५. १। का० श्रौ० सू० ३. ५. १८।

५— का० श्रौ० सू० ३. ५. १९। तत्र मन्त्रः— वा० सं० २. १५. २।

६— का० श्रौ० सू० ३. ५. २१। ७— 'समुदायवचनः'—इति ञ, झ।

८— 'तत्र-तत्रेत्यभिप्रायः। यथासादृश्येऽव्ययीभावः'—इति ठ।

याजकस्य[1]; एवं शब्देन प्रधानदेवतालक्षण मिति प्रकार मतिदिशति[2]। ततश्च प्रधानदेवताभिरेव व्यूहनम्, नान्याभिः; असर्वाभिरित्यर्थः[3] ॥ १—४ ॥

"यजमानः"। प्रसन्ना ॥ ५ ॥

"तद्वा एतत्"। यस्मात् 'एतत्' 'समाने' अभिन्ने, व्यूहन-कर्मणि विलक्षणम् 'आक्रियते' अभिव्यज्यते, भोक्तृत्वं भोग्यत्वञ्च; तस्माद्यज्ञानुकारेण भूतेष्वपि 'समानात्' अभिन्नात् पुरुषात् 'अत्ता च' भोक्ता च 'आद्यश्च' भोग्यश्च, भर्त्ता च भार्या च 'जायेते'। यथा समाने कर्मणि जुह्वपभृतौ, तथैव[4]।

ननु च समानजातीययोर्विवाह एव नास्ति, कुतो भोक्तृभोग्य-भावः? पशुन्यायेन सति मापिण्ड्ये कश्चिद्वर्त्तेत, न स यज्ञानु-कारः[5] स्यात्; किं तर्हि? यजमानैकतानुकारः स्यात्? सत्यम्; एवंव्यवहारस्य अन्याय्यस्यापि यज्ञमूलत्वात्। त मेव व्यव-हारं[6] दर्शयति— "इदं हीति। यस्मात् 'इदं प्रत्यक्षम्, विल-क्षणम् 'आसते' अधुनापि 'जात्याः' समानजातीयाः, 'दीव्यमानाः'

१— 'तयोरनुकरणस्य'—इति ज, झ।

२— 'मतिदिश्यते'—इति ज, झ।

३— '०रेव व्यूहेत; न सर्वाभिरित्यर्थः'—इति ज झ।

४— जुहूस्थानापन्नानाञ्च सूर्पाकर्पणदोहनौदुम्बरस्रुवादीना मपि व्यूहनं भवति, वसाहोमहवन्याश्च पृषदाज्योपभृतश्च, उपभृत्स्थानापन्नत्वात्। का० श्रौ० ३. ५. १३ सूत्रं द्रष्टव्यम्।

५— 'पश्वान्यायेन सति सापिण्ड्ये कश्चिद् वर्त्तेत, न स यज्ञानुकारी'—इति ठ।

६— 'किं तर्हि? समानजातीयेऽपि क्वचित् दीवनादि (?) व्यवहारं'—इति ठ।

रममाणाः परितुष्टान्तःकरणाः नाकार्य्यकारिण इवापरिध्नूनाः 'आसते'। कथं दीव्यमानाः? 'विदेवम्' दिवेर्व्यवहारार्थस्य[1]। अन्योन्यं भोक्तारो भोग्यैः सह, भोग्या भोक्तृभिः सह 'दीव्यामहे' व्यवहृत्य-व्यवहृत्य। कथं व्यवहृत्य? व्यवहर्तृणा मभिप्रायेण। व्यवहारं दर्शयति— 'इदं' प्रत्यक्ष मेव;— विवाहेन वयं सङ्गच्छामहे। 'एतस्मात्' एव पुरुषान्मूलतः उत्पद्य, पुनरेव कुटुम्बारम्भेण समानापत्यारम्भेण च संयुज्यामह इति भर्तृणां भार्याणां[2] चाभिप्रायवचनम्। एवं व्यवहारं दीव्यमाना आसते। ते क्व पुनः सङ्गच्छामह इत्याहुः, किं मनन्तर एव पुरुषे? नेत्याह— 'चतुर्थे तृतीये'। 'वा'-शब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः; चतुर्थे वा तृतीये वेत्यर्थः। तथा च काण्वानां "तृतीये चतुर्थे वा"—इति श्रूयते। (तृतीये पुरुषे सङ्गच्छामह इति, चतुर्थे सङ्गच्छामह इति च युज्यते।[3]) चतुर्थे सङ्गच्छामह इति सौराष्ट्राणां व्यवहारः। तृतीये सङ्गच्छामह इति दाक्षिणात्यानाम्। ते हि मातुलदुहितृषु[4] पितृष्वसृपुत्रेषु सङ्गच्छन्ते। ते च मूलपुरुषाद्गण्यमानास्तृतीया भवन्ति। तच्चैतस्माल्लिङ्गात् एव दीव्यमाना आसत इति। तच्च न जात्याः न जातीयाः, सदृशाः; श्रेयसः कर्मणश्चतुरन्तरस्याभ्यन्तरा इत्यर्थः। ततः किम्? एतस्मादेव सुगव्यूहनात् कारणात् तथा भवतीति शेषः॥

---

१— दि० प० १धा०। २— 'योषितां'—इति ञ, झ, ठ।
३— नैष ग्रन्थो ठ-पुस्तके। ४— 'मातुलदुहितुः'—इति ञ, झ, ठ।

( एवमनुष्ठिते कथं विवहन मिति समुदये श्रुतितो निर्णयः ? स्थाली चाङ्गाराश्चैकम्, स्रुक् च स्रुवश्चेत्येकम्, आहवनीयश्च समिच्चेत्येकम्, आहुतिश्च स्वाहाकारश्चेत्येकम्; इत्थं चत्वारः। चतुर्थे निवृत्ते तृतीये च निवृत्ते वयं सङ्गच्छामहे इति शिष्टानां समुदयः। चतुर्थे प्रयाजे समानीय, पञ्चमेऽनुयाजे च समानीय, ततो व्यूहन मिति देशव्यवहृत्यनुसारात्; न शास्त्रप्रवृत्तेः। यथा। "मातुलस्य सुतां केचित् पितृस्वसृसुतादिकाम्। विवहन्ति क्वचिद्देशे सङ्कोच्यापि सपिण्डताम्"—इति[१], "आयाहीन्द्र पथिभिरीळितेभिर्यज्ञ मिमं नो भागधेयं जुषस्व। तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृस्वस्रियेव जामि वा"—इति[२] ऋग्वेदे विवहन मेव। "असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने"—इति[३] मनोः। सङ्गत्या मूलतः षण्मिथुनान्यतीत्य विवहेदिति श्रौतं विवहनम्। "यो ह वा अग्निहोत्रे षण्मिथुनानि वेद, मिथुनेन—मिथुनेन ह प्रजायते"—इति[४] षण्मिथुनानि। इत्थं मिथुनसङ्गत्या परिणयन

१— शातातपस्मृतिरिति निर्णयसिन्धुधृतस्त्वेषः श्लोकः।

२— अस्मद्दृष्टर्ग्वेदसंहितायां तु मातुलशब्द एव न क्वचिच्छ्रुतः। इह प्रमाणान्तरत्वेन निर्णयसिन्धुकारधृतापरमन्त्रस्तु श्रूयते— "गर्भे नु नौ जनिता दम्पती (ऋ०सं० १०. १०. ५.)"—इति। सा० भा० द्रष्टव्यम्।

३ — म० सं० ३. ५। मातुलकन्याद्युद्वाहनिषेधोऽपि तत्रैव ११. १७२।

४— शत० ब्रा० ११. २. ५. १। (१मि०) यजमानः, पत्नी। (२मि०) वत्सः, अग्निहोत्री। (३मि०) स्थाली, अङ्गाराः। (४मि०) स्रुक्, स्रुवः। (५मि०) आहवनीयः, समित्। (६मि०) आहुतिः स्वाहाकारः।

मिति जात्याः[१]। न चेयं श्रुतिर्विवाहविषया, किन्त्वियत्सन्तानावध्य-विभागप्रशंसा। यथा जुहूपभृतौ चिरकालं सह स्थिते, तथा तृतीय-चतुर्थसन्तानावधि सह स्थितिः। ततः किम्? 'एतस्मात्' एवम्प्र-कारेण स्रुगव्यूहनात् 'तत्' विवहनम्। 'उ'-इति "अथाप्युकार एतस्मिन्नेवार्थे उत्तरेण"—इति[२] यास्कभणितेः उकारो विनिग्रहा-र्थीयः। एवञ्चात्र विनिग्रहार्थः। यथा। मूलात् षडतीत्य ततो विवहनम्, मूलात् षष्ठे च पञ्चातीत्य, इत्येवं प्रदर्शनपरम्। स्त्री-मिथुने पुम्मिथुने चेति 'तत्' तथा भवतीति विशेषः[३]) ॥ ६ ॥

"अथ जुह्वा"। 'समनक्ति[४]' संश्लेषयति। 'जुह्वा' स्रुक्-पात्रेण, अर्थात्तद्गतेनाज्येन। "यथा देवेभ्यः"—इति। परिधयोऽपि ह्यग्नयो देवा, तेऽपि देवपात्रेण देवान्न[५] मर्हन्ति; पालयित्वा तु न समय मित्यभिप्रायः। 'अश्रौषीत्' कृतवानध्वर्युः। 'समतिष्ठिपत्' संस्थापितवान् ॥ ७ ॥

"स समनक्ति"। त्रय एते मन्त्राः[६]। एषा मेकैकेन एकैक मुप-धानक्रमेण यथाक्रम मनक्ति। "एतेभ्यस्त्वेत्येवैतदाह"—इत्यपि प्रत्येकाभिप्रायम्। वसुभ्यो देवेभ्योऽर्थाय त्वा मानज्मि। त्वयि पार्थिवाग्न्यात्मके तृप्ते पार्थिवा वसवस्तृप्यन्ते; वस्वर्थं त्वा मनज्मी-त्यर्थः। एव मुत्तरत्रापि योज्यम् ॥ ८ ॥

---

१— "सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु। आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते"—इति म० सं० १०. ५। २— निरु० १. २. ४।

३— बन्धनीचिह्नान्तःकृत एष प्रासङ्गिको ग्रन्थो ठ-पुस्तकमात्रे दृश्यते।

४— का० श्रौ० सू० ३. ५. २४ द्रष्टव्यम्।

५— 'देवत्व'—इति ठ। ६— वा० सं० २. १६. १, २, ३।

"अथ परिधिम्"। 'अभिपद्य' अभिगम्य, हस्तेनालभ्येत्यर्थः[१]। "परिधिभ्यो होति। ननु सूक्तवाकप्रैषायैतदाश्रावयति, तद्द्वारेण च सूक्तवाकदेवताभ्यः प्रस्तराय वा, परिधीनां किं मापतितम्? सत्य मेतत्। तद्देवत्वाद्यज्ञार्हाः परिधयः, तेन प्रसिद्धयज्ञोपकरणेनाश्रावणेन परार्थेनारोप्यालभ्य क्रियमाणेन लेशतो यज्ञभाजः कृता भवन्तीत्युपकारमात्रलक्षणार्था तादर्थ्ये चतुर्थी प्रयुक्ता। प्रत्यक्ष मव्यभिचारि यज्ञरूप माश्रावणम्, तेन 'एतत् प्रत्यक्षम्' यो यज्ञः; जुहूस्तु होमेष्वपि यज्ञेष्वपि भवतीति तन्न तथा प्रत्यक्षः। जुह्वाह्वने यज्ञः ॥ ९ ॥

"स आश्राव्याह"। "दैव्या वा एते होतारो यत्परिधयः"—इति प्रतिज्ञा। "अग्नयो होति हेतुवचनम्। 'इष्टाः'—इति। इषितव्याः इच्छया स्थानम् अधीष्टाः[२], सान्त्विता इत्यर्थः[३] ॥ १० ॥

"अथ प्रस्तरम्"। 'स्वगा' अव्यय मेतत्, स्वस्थानगामिवचनम्; स्वस्थानगामिनं करोतीत्यर्थः[४]। 'अगन्' अगमन्, गत इत्यर्थः। 'अपिनयति' सन्नयति[५] ॥ ११ ॥

"स यदि वृष्टिकामः"। काम्यतया मन्त्रं विधाय, नित्यतयापि

---

१— का० श्रौ० सू० ३. ६. १। २— 'इच्छयाख्यात मधीष्टाः'—इति ढ।

३— "इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि"—इति तदाश्रावणानन्तरपाठ्यो मन्त्रः का०श्रौ० ३. ६. १।

४— "स्वगा स्वाधीनम्"—इति तै० सं० सा० भा० १. ४. ४४. ५।

५— "सञ्ज्ञानाथा मिति प्रस्तरादानम्"—इति का० श्रौ० सू० ३. ६. २। अस्य च मन्त्रः वा० सं० आम्नातः (२. १६..४.)।

त मेव विधत्ते— "त मेतेनैवाददीतेति। "यदा ह्येवेति। सर्वदैव वृष्टिः सुखम्; ततश्च सर्व एव वृष्टिकाम इत्यभिप्रायः। ततश्च स्वर्गादिकामेनाप्यविरुद्धत्वात् प्रयोक्तव्य एवैषः। "आकृति मेवैत-दिति। अञ्जनेनायं होमयोग्यो भवतीत्यभिप्रायः॥ १२॥

"स वा अग्रम्"। 'अग्रम्' अग्र मिव जुहूः; सा ह्युपभृतं हित्वाहवनीयं यावद्याति। 'मध्यम्' मध्य मिवोपभृत्; सापि हि वेदेर्यजतिस्थानं यावदुत्क्रामति। 'मूलम्' मूल मिव ध्रुवा; न हि सा चलति कचित्[1]॥ १३॥

"सोऽनक्ति"। 'व्यन्तु' खादन्तु इमं प्रस्तरं देवाः, येभ्यो होष्यन्ते। कीदृशम्? 'वयः' पक्षिभूतं गतं सत् तेनाहवनीयं द्युलोकं वा — इत्येवं मन्त्रार्थं "वय एवैनम्"—इति दर्शयति[2]॥ १४॥

"स हरति[3]"। "इयं भूत्वेति। यथा 'इयं' पृथिवी मूलमूला असंस्पृष्टा 'पृश्निः', तद्योगाच्च 'वशा' वश्या काम्या; एवं त्व मपि दर्भमयत्वान्मूलिनान्तेनोपेतः, हतेन वा मूलेन; ततश्च 'इय मिव भूत्वा'—इत्येत मर्थं[4] मनेनाह। 'वृष्टाद्वा ऊर्जंसः', 'सुभूतं' भूतानां समृद्धिः 'जायते' इति वृष्ट्यावाहनप्रयोजनम्॥ १५॥

"अथैकं तृणम्"। यदेकं तृण मपगृह्णाति, तथा क्रियमाणः

---

१— "अग्रं जुह्वाम्, उपभृति मध्यम्, मूल मितरस्याम्"—इति का० श्रौ० ३. ६. ५, ६, ७ सूत्राणि। २— वा० सं० २. १६. ५।

३— का० श्रौ० सू० ३. ६. ८। तन्मन्त्रस्तु— वा० सं० २. १६. ६।

४— 'इत्येतत् सर्वं'—इति ढ।

'यजमानः' 'ज्योक्' चिरं 'जीवति'। एवं तावत् ह्रत्यानुप्रहरण-कृतदोषपरिहारायापग्ढणातीत्युक्तम्; अधुना तु अन्यकृतोऽप्यायुषः क्षयो तेनापग्रहणेन रक्षत इत्याह— "यावद्देवेति। 'उ'-शब्दश्चार्थे। 'यावत्' च 'इह' लोके 'अस्य' 'मानुषम्' पूर्वकर्मोपात्तम् 'आयुः' 'तस्मै एव एतदपग्ढणाति'—इति। 'एव'-शब्दः समुच्चये॥ १६॥

"तन्मुहूर्त्तम्"। प्रसन्ना॥ १७॥

"तं प्राञ्च मनु"। 'तं' प्रकृतं प्रस्तरं 'प्राञ्चं' प्रागग्रं सूक्तवाके उक्तप्राये[1] 'अनु' पश्चात् 'समस्यति' समग्र मेव प्रक्षिपति। "न मङ्गुलिभिरेव योयुप्येरन्"। "युप रुप लुप विमोहने[2]"। पुनः-पुनस्तं मूर्च्छयेयुः, 'न काष्ठैः'; हस्तेनोपक्षिपेयुरित्यर्थः। किं कारणम्? "दारुभिर्वा इतरं मानुषं शवं वि क्षपन्ति"। "क्षप क्षपी गतौ[3]" नयनेऽत्र द्रष्टव्यः। विस्तारयन्ति, सुगन्धित्वायेत्यर्थः[4]। तदुपचाराच्चास्य यज्ञियस्य विलक्षणेनोपचारेण भवितव्य मिति। "नेत्तयेति। 'नेत्'—इति परिभये। तत्तयेत्याह॥ १८॥

"अथाग्नीदाह"। प्रसन्ना[5]॥ १९॥

---

१— 'उक्ते पश्चात् समग्र मेव प्रक्षिपति'—इति ठ।

२ — 'युपु रुपु लुपु विमोहने'—इति दि० प० १२९–१३१ धा०।

३— तु० प० ७ धा०। ४ — 'सुदग्धत्वायेत्यर्थः'—इति ज, झ, ठ

५— "अग्नीदाहानुप्रहरेति"—इति च का० श्रौ० सू० ३. ६. १३। अ॰
प्रति। तत् प्रस्तरानुप्रहरणं यजमानभागहवनञ्चैतदुभयं सूक्त
भवति। अनुप्रहरणानन्तरञ्चात्मोपस्पर्शनं कर्त्तव्यं भवति
३. ६. १५ सू० द्रष्टव्यम्। तत्र चक्षुष्पा इति मन्त्रो ि
हि वा० संहितायां माम्नातः (२. १६. ७.)।

"अथाह"। 'संवदस्वेत्यादीनां व्याहृतीनां[1] वाक्यस्तावदर्थः।— अग्नीदध्वर्युं प्रेष्यति— 'संवदस्व' त्वं मया सह शंयुवाक[2]प्रैषार्थमिति। त मध्वर्युः पृच्छति— 'अगानग्नीत्' हे अग्नीत्! किमगमत्प्रस्तरशरीरो यजमानः स्वर्गं लोकम्? किं दग्धः प्रस्तर इत्यर्थः। अग्नीत्तु 'अगन्' इति प्रतिवचनं ददाति। गतो यजमानः, दग्धः प्रस्तर इत्यर्थः। अध्वर्युस्त्वाह— यद्येवम्, ततः शंयुवाकपरिधिप्रहरणयोः कालो वर्त्तते, ततस्त्व 'आवय' होतारम्, आकर्षयेत्यर्थः। अग्नीच्चाह— 'श्रौषट्' शृणोत्येवाय मवहितः, ब्रूहि त्वं यद्विवक्षितमिति॥

"स्वगा दैव्या होतृभ्यः"—इति शंयुवाकप्रैषः[3]। हे होतः! शंयोर्बार्हस्पत्यस्य ऋषेरार्षम् ब्रूहि। 'स्वगा' स्वस्थानगामिनं त्वां[4] 'दैव्या' देवेभ्यो 'होतृभ्यः' परिधिशरीरेभ्योऽत्र हूयन्ताम्, परिधय इत्यर्थः; 'मानुषेभ्यः' तु होतृभ्यः 'स्वस्तिः' अविनाशोऽस्त्वित्येवं रूपं वाक्यं[5] 'ब्रूहि' इति॥

---

१— "संवदस्वागानग्नीदगञ्छ्रावय श्रौषट्"—इत्येता व्याहृतयः का० श्रौ० ३. ६. १६ सूत्रे स्मृताः।

२— 'शम्युवाक'—इति ठ। एव मिह सर्वत्रैव; मुद्रितकात्यायनभाष्येऽपि।

३— उत्तरस्यां कण्डिकायां द्रष्टव्यः। "स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि"—इति का० श्रौ० ३. ६. १६ सूत्रेऽपि संस्मृतः। शंयुवाकमन्त्रस्तु तै० ब्रा० ३. ५. ११, तै० आ० ३. १. १ च आम्नातः। [द्विधिब्राह्मणं व्याख्यानञ्च तै० सं० २. ६. १० संश्रुतः।

[४— ...]पदम् ठ-पुस्तके। 'स्वस्थानगामिभ्यः'—इति ठ।

[५— ...]न्यस्त्यर्थरूपं वाक्य'—इति ठ।

श्रुतिस्तु साङ्केतिकं गूढतर[1] मर्थं व्याचष्टे।— तत्र च यथैव प्रहरणसम्बन्धसूक्तवाकप्रैषसम्बद्ध माश्रावणम्, अनुषङ्गतः परिधीना मुपकारक मित्युक्तम् ; तथेहापि परिधिप्रहरणसम्बन्धशंयुवाकप्रैष-सम्बद्धा व्याहृतयः, अनुषङ्गात् प्रस्तरवृत्तान्तं प्रकाशयन्तीति दर्श-यति। "संवादयैनं देवैरिति। प्रिय मिवातिथि मागतैः[2] देवैः सम्भाषयेत्यर्थः। णिचो लोप मत्र दर्शयति। "अगानग्नीदिति। गमनदृढिम्ने। त मेवाग्नीधं पृच्छति— किं गतोऽयं यजमानो येन संवाद्यते ? न गत इतीतरेणोक्तेऽध्वर्युराह— त मेव तर्हि मद्वचनेन श्रावयैत मिति। अग्नीत्त्वाह— "श्रौषडिति। "विदुर्वा एन मिति जानन्त्येवैनं देवाः; उपकारित्वादनाख्यात मपीत्यर्थः। "अनु वा एन मभुत्सतेति"। पूर्व मेवायं बुद्धो देवैरित्ययं वा श्रौषडित्य-स्यार्थः ॥ २० ॥

"अथाह स्वगा"। "तदस्मै मानुषाय"—इति। प्रयोगे बहूनां मानुषाणां होतॄणा मभावादेकवचनस्थाने एवैतद्बहुवचन मिति दर्शयति ॥ २१ ॥

"अथ परिधीन्"। प्रसन्ना[3] ॥ २२ ॥

"अथ जुहूम्"। 'सम्प्रगृह्णाति' सङ्गते उद्गृह्णाति संस्रवहोमाय, आज्यशेषस्य स्वगाकाराय च। कुत एतत् ? मन्त्रवर्णाद्[4], वाक्य-शेषाच्च। "आहुतिर्भूत्वेति। एतेन 'प्रस्तर मनुसमस्यति', 'परि'

---

१— 'रूढतर'—इति ञ, झ, ठ।  २— 'मावृत्तैः'—इति

३— इह द्वौ मन्त्रौ— वा० सं० २. १७. १, २। तत्र, यं परि- द्वेन प्रथमम्, अग्नेःप्रिय मित्यन्तेन युगपदितरौ। का०

सू० द्रष्टव्यम्। ४— 'सᳪस्रवभागाः'—इति मन्त्र—

नुप्रहरति'—इत्येते[1] अपि होमचोदने एव वक्तव्ये। "अदो हैवा-हुतिम्"—इति परिधिसंस्काराशङ्कां निवर्त्तयति। एवं ह्याशङ्कते।—"यद्वै हविरभ्युक्तं यदभिघारितं तज्जुष्टं तन्मेध्यम्"—इतिवचनाद् हविरभिघारणीयम्, अनन्तर मेव च हुताः परिधयः; तेऽभिघा रिताः[2] आहुतिर्भवति; अतस्तेषा माहुतित्वायैते स्रुचौ सम्प्रगृह्येते, न पृथगेव संस्रवहोमः कर्मेति; तन्निराकरोति। अत एव परिधय आहुतिहृता ये ते आज्येन औहवेनाक्तास्तस्मान्न तेषा माहुति-त्वाय स्रूचौ सम्प्रगृह्येते; किं तर्हि ? 'आहुतिर्भूत्वा'[3] इद मेवाज्यं 'देवलोकं' गच्छेदित्येतमर्थं 'सम्प्रगृह्णाति'। यथैव प्रस्तरपरिधीनां स्रुगाकारो युक्तः[4], एव माज्यशेषस्यापि विलग्नस्येत्यभिप्रायः ॥ २ ३ ॥

"स वै विश्वेभ्यः"। 'अपित्विन्यः' भागिन्यः; अत्र वय मपीत्येवं मन्यन्ते ॥ २ ४ ॥

"स सम्प्रगृह्णाति"[5]। "संस्रवो ह्येवेति। यदा यः 'परिशिष्टः संस्रवः', तदा तद्भाजः संस्रवभागा एव भवन्तीत्यभिप्रायः। "प्रस्तरश्च हीति। प्रस्तरे परिधिषु च हुतेषु तदिन्धनोऽग्निः शरीरं येषां ते, 'प्रस्तरेष्ठाः परिधेयाश्च' भवन्त्येवेत्यभिप्रायः॥ २ ५ ॥

"स यस्यानसः"। 'विमुञ्चन्ति' जुहूपभृतौ। यतो युनजामेति व्याख्यातम् ॥ २ ६ ॥

---

८, २२ कण्डिके द्रष्टव्ये। का० श्रौ० ३. ६. १३, १४, १७ सूत्राणि।

घारणेन'—इति ठ। ३— 'आहुतिं हुत्वा'—इति ठ।

रधीना मञ्जनादिनावाहन मुक्तम्'—इति ठ।

सं० २. १८. २। का० श्रौ० ३. ६. १८ सू० द्रष्टव्यम्।

Pariçișta Parvan, (Text) Fasc. 1–5 @ /6/ each ... ... Rs. 1 14
Prākrita-Paingalam, Fasc. 1–7 @ /6/ each ... ... ... 2 10
Prithivirāj Rāsa, (Text) Part II, Fasc. 1–5 @ /6/ each ... ... 1 14
Ditto (English) Part II, Fasc. 1 ... ... ... 0 12
Prākṛta Lakṣaṇam, (Text) Fasc. 1 ... ... ... ... 1 8
Parāçara Smṛti, (Text) Vol. I, Fasc. 1–8; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6 @ /6/ each ... ... ... ... 7 8
Parāçara, Institutes of (English) ... ... ... ... 0 12
Prabandhacintāmaṇi (English) Fasc. 1–3 @ /12/ each ... ... 2 4
*Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5–10; II, 1–6; III, 1–7; IV, 1–6; V, 1–8, @ /6/ each Fasc. ... ... ... 12 6
Sāṅkhya Sūtra Vṛtti, (Text) Fasc. 1–4 @ /6/ each .. ... 1 8
Ditto (English) Fasc. 1–3 @ /12/ each ... ... 2 4
Suçruta Saṁhitá, (Eng.) Fasc. 1 @ /12/ ... ... ... 0 12
*Taittereya Saṁhitā, (Text) Fasc. 14–45 @ /6/ each ... ... 12 0
Tāṇḍya Brāhmaṇa, (Text) Fasc. 1–19 @ /6/ each ... ... 7 2
Tattva Cintāmaṇi, (Text) Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–10, Vol. III, Fasc. 1–2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1–5, Part IV, Vol. II, Fasc. 1–12 @ /6/ each ... ... ... 14 10
Trikāṇḍa-Maṇḍanam, (Text) Fasc. 1–2 @ /6/ ... ... ... 0 12
Tul'si Sat'sai, (Text) Fasc. 1–5 @ /6/ each ... ... ... 1 14
Upamita-bhava-prapañca-kathā (Text) Fasc. 1–4 @ /6/ each ... 1 2
Uvāsagadasāo, (Text and English) Fasc. 1–6 @ /12/ ... ... 4 8
Varāha Purāṇa, (Text) Fasc. 1–14 @ /6/ each ... ... ... 5 4
Varsa Krya Kaumudi, Fasc. 1–5 @ /6/ ... ... ... 1 14
*Vāyu Purāṇa, (Text) Vol. I, Fasc. 2–6; Vol. II, Fasc. 1–7, @ /6/ each ... ... ... ... ... ... 4 8
Viṣṇu Smṛti, (Text) Fasc. 1–2 @ /6/ each ... ... ... 0 12
Vivādaratnākara, (Text) Fasc. 1–7 @ /6/ each ... ... ... 2 10
Vṛhannāradīya Purāṇa, (Text) Fasc. 1–6 @ /6/ ... ... 2 4
Vṛhat Svayambhū Purāṇa, Fasc. 1–6 ... ... ... 2 4

*Tibetan Series.*

Pag-Sam Thi S'iñ, Fasc. 1–4 @ 1/ each ... ... ... 4 0
Sher-Phyin, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1–5, @ 1/ each ... ... ... ... ... ... 13 0
Rtogs *brjod dpag hkhri* S'iñ (Tib. & Sans.) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... ... 10 0

*Arabic and Persian Series.*

'Ālamgīrnāmah, with Index, (Text) Fasc. 1–13 @ /6/ each... ... 4 14
Al-Muqaddasi (English) Vol. I, Fasc. 1–3 @ /12/ ... ... 2 4
Āīn-i-Akbarī, (Text) Fasc. 1–22 @ 1/ each ... ... ... 22 0
Ditto (English) Vol. I, Fasc. 1–7, Vol. II, Fasc. 1–5, Vol. III, Fasc. 1–5, @ 1/12/ each ... ... ... ... 29 12
Akbarnāmah, with Index, (Text) Fasc. 1–37 @ 1/ each ... ... 37 0
Ditto English Fasc, 1–6 @ 1/ each ... ... ... 6 0
Arabic Bibliography, by Dr. A. Sprenger ... ... ... 0 6
Bādshāhnāmah, with Index, (Text) Fasc. 1–19 @ /6/ each ... ... 7 2
Catalogue of Arabic Books and Manuscripts ... ... ... 1 2
Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1–3 @ 1/ each ... ... 3 0
Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1–21 @ 1/ each ... ... ... ... ... ... 21 0
Farhang-i-Rashīdī, (Text) Fasc. 1–14 @ 1/ each ... ... 14
Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1–4 @ /12/ each ... ... ... ... ... ... 3
Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1–9 @ /6/ each ... ... 3
Ditto of Āzādī, (Text) Fasc. 1–4 @ /6/ each ... ...
Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ...
History of the Caliphs, (English) Fasc. 1–6 @ /12/ each ...
Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1–3 @ /6/ each ...
Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ...
Maāṣir-ul-Umarā, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–9; Vol. II[illegible] Index to Vol. I, Fasc. 10-11; Index to Vol. III, Fa[illegible] Index to Vol. II, Fasc. 10–12 @ /6/ each ..
Maghāzi of Wāqidi, (Text) Fasc. 1–5 @ /6/ each

* The other Fasciculi of these works are out of stock, and [illegible] be supplied.

| | | |
|---|---|---|
| Muntakhabu-t-Tawārīkh, (Text) Fasc. 1–15 @ /6/ each ... Rs. | 5 | 0 |
| Muntakhabu-t-Tawārīkh, (English) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5 and 3 Indexes; Vol. III, Fasc. 1 @ /12/ each ... ... | 12 | 0 |
| Muntakhabu-l-Lubāb, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Ma'āṣir-i-'Ālamgīrī, (Text), Fasc. 1–6 @ /6/ each ... ... | 2 | 4 |
| Nukhbatu-l-Fikr, (Text) Fasc. 1 ... ... ... ... | 0 | 6 |
| Niẓāmī's Khiradnāmah-i-Iskandarī, (Text) Fasc. 1-2 @ /12/ each | 1 | 8 |
| Riyāẓu-s-Salāṭīn, (Text) Fasc. 1–5 @ /6/ each .. ... ... | 1 | 14 |
| Ditto Ditto (English) Fasc. 1 ... ... ... | 0 | 12 |
| Ṭabaqāt-i-Nāṣirī, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Ditto (English) Fasc. 1–14 @ /12/ each ... ... | 10 | 8 |
| Ditto Index ... ... ... ... | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barni (Text) Fasc. 1–7 @ /6/ each... | 2 | 10 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, (Text) Fasc. 1–6 @ /6/ each... | 2 | 4 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... | 3 | 0 |
| Wis o Rāmin. (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Ẓafarnāmah, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–8 @ /6/ each .. | 6 | 6 |
| Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 ... ... ... ... | 0 | 12 |

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | |
|---|---|---|
| 1. ASIATIC RESEARCHES. Vol. VII, Vols. XI and XVII, and Vols. XIX and XX @ 10/ each ... ... ... | 50 | 0 |
| 2. PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No. | | |
| 3. JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) & 1901 (7), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members | | |
| *N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.* | | |
| 4. Centenary Review of the Researches of the Society from 1784–1883 ... | 3 | 0 |
| A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... ... .. | 4 | 0 |
| Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J.A.S.B.*, 1868) ... ... .. ... | 2 | 0 |
| Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... ... | 4 | 0 |
| Introduction to the Maithilī Language of North Bihār, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J.A.S.B.*, 1882) ... ... ... ... ... | 4 | 0 |
| 5. Anīs-ul-Musharraḥīn ... ... ... ... ... | 3 | 0 |
| 6. Catalogue of Fossil Vertebrata ... ... ... ... | 3 | 0 |
| 7. Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion | 3 | 8 |
| 8. Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... | 32 | 0 |
| 9. Jawāmlu-l-'ilm ir-riyāẓī, 168 pages with 17 plates, 4to. Part I ... | 2 | 0 |
| 10. Khizānatu-l-'ilm ... ... ... ... ... | 4 | 0 |
| 11. Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... | 40 | 0 |
| 12. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ... | 18 | 0 |
| '. Sharaya-ool-Islām ... ... ... ... ... | 4 | 0 |
| Tibetan Dictionary, by Csoma de Körös ... ... ... | 10 | 0 |
| Ditto Grammar " " ... ... ... | 8 | 0 |
| Kaçmiraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... | 3 | 0 |
| ' descriptive catalogue of the paintings, statues, &c., in the rooms of ↄ Asiatic Society of Bengal by C. R. Wilson... ... ... | 1 | 0 |
| ɔir on maps illustrating the Ancient Geography of Kaśmir by Stein PH.D., Jl. Extra No. 2 of 1899 ... ... ... | 4 | 0 |

| | | |
|---|---|---|
| 'anskrit Manuscripts, Fasc. 1–29 @ 1/ each ... ... | 29 | 0 |
| ɔhist Sanskrit Literature, by Dr. R. L. Mitra ... | 5 | 0 |

. Money Orders, &c., must be made payable to the "Treasurer,

22–7–02.

**oks are supplied by V.-P.P.**

BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 1038.



# ॥ शतपथब्राह्मणम् ॥

## ॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRĀHMAṆA

## OF THE WHITE YAJURVEDA,

WITH THE

## COMMENTARY OF SĀYAṆA ĀCĀRYA.

EDITED BY

ĀCĀRYA SATYAVRATA SĀMAS'RAMĪ.

VOL. I, FASCICULUS VII.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1903.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.,

46, GREAT RUSSELL STREET, LONDON, W.C., AND MR. OTTO HARRASSOWI, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each ... Rs. | 1 | 8 |
| Advaitachinta Kaustubhe, Fasc. 1 ... ... ... ... | 0 | 6 |
| *Agni Purāṇa, (Text) Fasc. 4–14 @ /6/ each ... ... ... | 4 | 2 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5 and Vol. II, Fasc. 1–5 Vol. III, Fasc. 1–5 Vol. IV, Fasc. 1–5 @ /6/ ... ... ... | 7 | 8 |
| Aṇu Bhāṣyam, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... ... ... | 0 | 12 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1–6 @ /6/ each ... | 2 | 4 |
| Açvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... ... | 10 | 0 |
| *Bhāmatī, (Text) Fasc. 4–8 @ /6/ each ... ... ... | 1 | 14 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1–3 ... ... ... ... | 1 | 2 |
| Bṛhaddēvatā (Text) Fasc. 1–4 @ /6/ each ... ... ... | 1 | 8 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1–6 @ /6/ each ... ... | 2 | 4 |
| Bodhicaryavatara of Cantidevi, Fasc. 1–2 ... ... ... | 0 | 12 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–3 @ 2/ each ... | 6 | 0 |
| Çatapatha Brāhmaṇa, Fasc. 1–7 ... ... ... ... | 2 | 10 |
| Catasahasrika Projnaparamita, (Text) Fasc. 1–4 @ /6/ each ... | 1 | 8 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–10 @ /6/ each ... ... ... ... | 19 | 14 |
| Catasahasrika-prajna-parimita Part I Fasc. 1–3 @ /6/ ... ... | 1 | 2 |
| Çlokavartika, (English) Fasc. 1–3 ... ... ... ... | 2 | 4 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 4–17 @ /6/ each ... | 5 | 4 |
| Ditto Çāṅkhāyana, (Text) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4, Vol. III, Fasc. 1–4 @ /6/ each ... ... ... | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1–3 @ /6/ each ... ... ... | 1 | 2 |
| Dan Kriya Kaumudi, Fasc. 1 ... ... ... ... | 0 | 6 |
| Gadadhara Paddhati Kālasāra Vol I. Fasc. 1–5 ... ... ... | 1 | 14 |
| Kāla Mādhava, (Text) Fasc. 1–4 @ /6/ each ... ... ... | 1 | 8 |
| Kāla Viveka, Fasc. 1–4 ... ... ... ... ... | 1 | 8 |
| Kātantra, (Text) Fasc. 1–6 @ /12/ each ... ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1–14 @ /12/ each ... ... | 10 | 8 |
| Kūrma Purāṇa, (Text) Fasc. 1–9 @ /6/ each ... ... ... | 3 | 6 |
| lita-Vistara, (English) Fasc. 1–3 @ /12/ each ... ... | 2 | 4 |
| ana Pārijāta, (Text) Fasc. 1–11 @ /6/ each... ... ... | 4 | 2 |
| bhāṣya-pradīpōdyōta, (Text) Fasc. 1–9 & Vol. II, Fasc. 1–7 @ /6/ ... ... ... ... ... ... | 6 | 0 |
| Saṅgraha, (Text) Fasc. 1–3 @ /6/ each ... ... | 1 | 2 |
| Purāṇa, (English) Fasc. 1–6 @ /12 each ... ... | 4 | 8 |
| çana, (Text) Fasc. 7–19 @ /6/ each ... ... | 4 | 14 |
| Text) Fasc. 1–3 @ /6/ ... ... ... | 1 | 2 |
| xt) Fasc. 1–5 @ /6/ ... ... ... | 1 | 14 |
| l. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each ... | 5 | 4 |
| sc. 1–7 (Text) @ /6/ ... ... ... | 2 | 10 |
| ... ... ... ... ... | 0 | 10 |
| karaṇa (Text) Vol. I, Fasc. 1–6; Vol. II, Fasc. ... ... ... ... | 3 | 6 |

# BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NOS. 961, 973, 984, 988, 996, 1016, & 1038.


---

# THE ÇATAPATHA BRĀHMAṆA

OF

THE WHITE YAJURVEDA,

WITH THE

COMMENTARY OF SĀYAṆA ĀCĀRYA.


EDITED BY

ĀCĀRYA SATYAVRATA SĀMAS'RAMĪ,

*Associate Member of the Asiatic Society of Bengal; Editor, Author Commentator, Annotator, Compiler, Translator, and Publisher of different vedic works, &c., &c.,*


VOL. I. KAṆḌA I.


CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1903.

# ॥ शतपथब्राह्मणम् ॥

( शुक्लयजुर्वेदस्य माध्यन्दिनशाखीयम् )

## श्रीमत्सायणाचार्यकृतवेदार्थप्रकाशनामभाष्येण सहितम् ॥

वङ्गदेशीयासियाटिकसमितेरनुमत्या व्ययेन च,

सामश्रमीत्युपनामाचार्यसत्यव्रतशर्म्मणा

यथामति संशोध्य सटीक्य च सम्पादितम् ।

॥ १भा० । १का० ॥

( प्रथमकाण्डात्मकः प्रथमो भागः )

कालीकोठा-राजन्वत्याम्,

१९६०-संवत्समायां वाप्तिस्तमिशनयन्त्रे मुद्रितम् ॥

## ॥ अथ सम्पादकोक्तिः ॥



अथ माध्यन्दिनशतपथब्राह्मणस्य सायणाचार्यकृतवेदार्थप्रकाशनाम-भाष्येण साकं सम्पादनायेहत्यास्यायितिकसमाजेनानुमोदितचेष्टः प्रथमं तावदादर्शपुस्तकानां सङ्ग्रहे मनो निवेशयन् न्त्वैक मपि विशुद्धं पूर्णं च तद्भाष्यपुस्तकं नोपलभे ।

अहो वत ! वेदजीवनार्याणा मिहार्यावर्त्तेऽधुना स्वाध्यायाध्ययनविधे-र्हतादरतया तत्पुस्तकाना मीदृशी दुर्लभता सञ्जाता, यदेतद्भारतवेश्मान्त-र्मणिदीपिकेव प्रस्फुरन्ती प्राच्योदीच्यप्रतीच्यावाच्यविप्रवृन्दारकवृन्दैः समु-ज्ज्वलन्ती विविधार्यविद्याविशिनीविकशनविशिनीशविभा विभावयन्ती येयं विश्वराजराजनगरीव भासन्ती काशी पुरी, इह च बह्वन्वेषणतो नैक मप्यधेतियुतं पुस्तकं शतपथब्राह्मणीयसायणभाष्यस्यावेच्चितम् । किं वर्णया-म्यस्मत्कर्मफलगतिप्राबल्यम् ! यदेतद्यपि प्रचलत्स्वाध्यायाध्ययनेषु दाक्षिणा-त्येष्वप्येव मेव । अद्यापि हि वैदिकक्रियाकलापकुशलाना मग्निहोत्राद्यनु-तिष्ठता मार्यजातिगौरवभूतानां भूसुरसूराणा मावासक्षेत्रं यदस्त्यन्वर्थसञ्ज्ञं पुण्यपत्तनं नाम, तत्रत्यैस्वाह मभ्यर्थित एतत्सम्पादनाय, याचितस्तैष ग्रन्थो ग्रन्थांशो वा प्रकाशाय्यैव । कालप्रभावाद्धि तेषां पारायणमात्रपरायणतया-नाकाङ्क्षितार्थबोधत्व मेवात्र निदान मभिगम्यते ।

एव मपि, प्रवृत्तस्य पश्चादनुसरणं नोचितम्, अप्युचित मेव येन केन प्रकारेण कृतकृत्यतालाभाय संयतन मेवेति कृतनिश्चयः शोधने विशुद्धपाठ-निर्णये चातिश्रम मुररीकृत्यैवैतत्प्रथमकाण्डस्य मणमूलपुस्तकानि षडेव भाष्यपुस्तकानि च सङ्गृह्य कार्यारम्भः कृतः ।

समासतोऽत्र पाठभेदादिज्ञापनाय तेषां नामधेयानि चैवं कल्पितानि—

क = २४१पत्रात्मकम्, १५११-संवल्लिखितम्, पूर्णम् ।

ख = ११०पत्रात्मकम्, ३ प्र० ४ ब्रा० २कण्डिकारम्भान्तम् ।

ग = ९३पत्रात्मकम्, ६ प्र० २ ब्रा० २२कण्डिकारम्भान्तम् ।

घ = ११९—२२८ प०, ३ प्र० ४ ब्रा० २ कण्डिकान्ततः पूर्णम् ।

ङ = श्रीरामपुरकलेजीयम् (ट-स्थं मूलं), ख़्रि०१८१८-लिखितं पूर्णम् ।

च = डा०–वेबरस्य बार्लिन्-मुद्रितम् (ख़्रि० १८४९), पूर्णम् ।

छ = ८०पत्रात्मकम्, अनतिप्राचीनम् (ड-स्थं मूलम्) ३ प्रपाठकान्तम् ।

ज = १९९पत्रात्मकम्, १९९१-संवल्लिखितम्, पूर्णम् ।

झ = १९२पत्रात्मकम्, ७ प्र० १ ब्रा० १५कण्डिकाव्याख्यान्तम्, प्रायः पूर्णम् ।

ञ = २८पत्रात्मकम्, ख़्रि० १८२९-लिखितम्, पूर्णम् ।

ट = श्रीरामपुरकलेजीयम् (ङ-स्थं भाष्यम्), ख़्रि० १८१८-लि०, पूर्णम् ।

ठ = ६९पत्रात्मकम्, अनतिप्राचीनम्, ख़्रि० १८८०-क्रीतम् पूर्णम् ।

ड = ८०पत्रात्मकम्, ठ-समकालीनम् (छ-स्थं भाष्यम्), ३ प्रपाठकान्तम् ।

एषु खघयोर्योगतयैक मेव पूर्णं पुस्तकं सम्पन्न मिति वस्तुतो द्वादशै-वैतानि गण्यन्ते । तदेतद्द्वादशसु प्रथमषट्कं मूलस्यापरषट्कं भाष्यस्येति ।

मत्सम्पादितेष्वेषु षट्स्वपि भाष्यपुस्तकेषु, डा०-वेबर्-सम्पादितेष्वपि तेषु सर्वेषु, नैकस्मिन्नपि सप्तमाध्यायीयचतुर्थादिसप्तब्राह्मणानां सायणीय-भाष्यं विद्यते, अस्ति तु तत्र सर्वत्रैव हरिस्वामिकृतं भाष्यं संयोजित मिति चात्रैतद् विचिन्त्य मेव ।

अथ माध्यन्दिनशतपथस्य मूलपुस्तकानि बहून्येव लभ्यन्ते, काण्वशत-पथस्य तु दुरापत्वेऽपि तस्य च प्रायः पूर्णं जीर्णपुस्तक मेक मापादितम् ।

अथ यद्यपि प्राचीनमूलपुस्तकानि हि प्रायशः शुद्धान्येव भवन्ति, पाठभेदा अपि तेष्वदृष्टचरा एव प्रायः, तथापि लिपिकरलिपिशैलीभेदतः शोधनदोषतश्च क्वचित्क्वचिदनिवार्यपाठभिन्नता समुपलभ्यते । तद्यथा— 'तिष्ठन्नप ऽउपस्पृशति'–इति क-ख-ङ-पुस्तकेषु, 'तिष्ठन्नप उपस्पृशति'-इति

ग-च-छ-पुस्तकेषु (५ पृ०); 'यदिमांल्लोकानति'-इति कादिषु, 'यदिमाल्लोकानति'-इति ग-पुस्तकमात्रे (६४ पृ०); 'देवां३ऽआज्यपां३'-इति क-खयोः, 'देवाॅं३ऽआज्यपाॅं३'-इति गे, 'देवाँऽआज्यपाँ'-इति छे, 'देवां२॥ ऽआज्यपां २॥'-इति त्वन्यत्र (२८८ पृ०)। एवं ८पृ०— 'यज्ञ्व'-इति क, 'यद्यध्व'-इति त्वन्यत्र ; ३६ पृ०— 'विद्योब्धो'-इति ख, 'विद्युब्धो'-इति त्वन्यत्र। वर्णद्वित्वलेखविषयेऽप्येव मतिप्राचीनानतिप्राचीनपुस्तकवर्गयोर्भेदोऽवगम्यते। तद्यथा ग्रन्थारम्भे एव— 'व्रत'-इति ख-च-पुस्तकयोः, अन्यत्र तु 'व्व्रत'-इत्येव। यदि चैतच्छुक्लयजुरध्यापनव्यवहारत एव द्वित्वाध्ययनसिद्धेस्तथालेखस्यानतिप्रयोजनीयतयोपेक्षणीयत्व मेवोचितम्, तथाप्यद्यतनानां गुरुमुखानधिगतवेदविद्याना मपि पाठसौकर्याय अनतिप्राचीनपुस्तकानां मर्यादारक्षणाय चेह तथा द्वित्वपाठ एवाद्रियते भूयम्। बहुषु प्राचीनपुस्तकेष्वदृष्टत्वात् क्वचिदेकत्र दृष्टो वेबरमहोदयेनावलम्बितो वा सायणसम्मतश्च पाठोऽप्रधानीकृतोऽनेकत्र; 'दुपचं'-इति (७ पृ०), 'हैत'-इति (३६पृ०), 'माधवः'-इति (२७१ पृ०) च यथा। यत्र च क्वचित् सायणीयव्याख्यापद मवलम्ब्यैव सायणसम्मतोऽयं मूलपाठ इत्यवधारितं डा०-वेबरेण, तत्र तु तं पाठ मप्रधानीकृत्यैव टीप्पनी कृता 'सा०-सम्मत इति डा०-वेबरः'-इति, ४६० पृ०— 'अपाघस्ताभ्यायत्य'-इति यथा। प्रयोजनीयत्वेनावधृत एकपुस्तकमात्रदृष्टोऽधिकपाठस्तु बन्धनीचिह्नान्तःकृतः सर्वत्र ; २४ पृष्ठस्यसप्तमपङ्क्तौ यथा।

अथेह सर्वत्र कण्डिकामुखेषु कतिचित्पदानि छेदचिह्नतः ( ) पृथक्कृतानि दृश्यन्ते बहुषु पुस्तकेषु, केषुचिन्नापि। तादृशकण्डीप्रतीकपार्थक्ये त्वद्यतनाध्यापनरीतिरेव वीजं सम्भाव्यते। अध्यापयन्ति हि यजुरध्यापकाः पूर्वकण्डीसहैवापरकण्डीप्रतीकं कण्डीनां पारम्पर्याभ्यासप्राबल्याय। तदेवं प्रतीकाभ्यासनं 'सन्ता'-इत्युच्यते तैः। यद्यप्येवं कण्डीमुखच्छेदोऽवैध एवेत्यस्माकम्, तथापि बहुपुस्तकानुरोधात् ग्रन्थमण्याध्यापकेन तेनोररीकृतत्वाच्चापि सम्पाद्यते तथैव।

अथानोदात्तस्वरितान्तरनिम्नस्य मुभयतः किञ्चिदूर्द्धमुखतिर्यग्रेखाकार मेकविधं स्वरचिह्नं ( ‿ ) दरीदृश्यते सर्वप्राचीनपुस्तकेषु; एतत्प्रातिशाख्ये-ऽपि भाषिकस्वर इत्येकविध एवास्य स्वरो विहितः; अतो मयापि तथैव सम्पाद्यते। केषुचिदनतिप्राचीनपुस्तकेषु काण्डीमुखान्तकाण्डान्तयोः स्वरितत्वज्ञापकं बिन्दुत्रयात्मक मप्यपरं (...) चिह्न मवलोक्यते, तदपीह पाठान्तररूपेण प्रदर्श्यते बहुत्र। यत्तु युग्मरेखात्मकं (=) बिन्दुषट्कात्मकञ्चेति (:::) चिह्नद्वयं डा॰-वेबरमहोदयेन स्वसम्पादितशतपथे प्रकाशितम्, तयोः क्वचिदधुनातनपुस्तके सम्भावितस्थितित्वेऽपि बहुपुस्तकेष्वनुपलब्धेरप्रामाणिकत्वाच्च नेह स्थिति माद्रिये।

अथैतद्भाष्यविषयकं चास्त्यन्यविधं विचार्यद्वयम्। प्रथमं ननु सकलवेदभाष्यकारेण भगवता सायणाचार्येण हि शुक्लयजुषः संहिताव्याख्यानाय काण्वशाखावलम्बिता, ब्राह्मणव्याख्यानाय तु माध्यन्दिनीति कथं नामैव मसमञ्जसं कृत मिति। द्वितीयं तु सप्तप्रपाठकात्मकस्यास्य प्रथमकाण्डस्य भाष्यपुष्पिकोक्त्या नवाध्यायीत्वेन परिच्छेदीकरणं तस्य, हरिस्वामिनस्च कथं सङ्गच्छत इति शम्॥

कालीकोठा-राजन्वती। सं १९५९। ख्रि॰ १९०२। — श्रीसत्यव्रतशर्म्मा। (आवसथ, सामश्रमी, आचार्य्यस्च)

# अथ मूलशुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | प्र० ब्रा० क० | पृष्ठे |
|---|---|---|---|
| परिच्छिन्नं ... ... | परिच्छिन्नं ... ... | १. २. ४. ... | ३५ |
| सक्षितमं ... ... | सक्षितमं ... ... | १. २. १२. ... | ३७ |
| अग्नेपुव ... ... | अग्नेपुव ... ... | १. ३. ६०. ... | ६१ |
| तिनत्येव ... ... | तिनत्येव* ... ... | १. ४. ४. ... | ७२ |
| प्रवन्ति ... ... | प्रुवन्ति ... ... | १. ४. २२. ... | ७६ |
| कृष्णाजिनायच ... | कृष्णाजिनाय च ... | १. ५. १५. ... | ८५ |
| हैतेषां ... ... | हैतेषां ... ... | २. ५. ६. ... | २०० |
| लब्धा त्वेच ... ... | लब्धात्वेच ... ... | ३. ३. १५. ... | २६० |
| (त्वा †) ... ... | (त्वा †) ... ... | ३. ६. १५. ... | ३०७ |
| आहित्या ... ... | आदित्या ... ... | ४. २. १७. ... | ३३० |
| कुर्वत ... ... | कुर्वत ... ... | ४. ६. ११. ... | ३८३ |
| चद्रमा ... ... | चन्द्रमा ... ... | ५. २. २४. ... | ४१८ |
| सम्भत्या ... ... | सम्भृत्या ... ... | ५. ३. ६. ... | ४४५ |
| अभ्यद्ध ... ... | अभ्यर्द्ध ... ... | ६. १. ११. ... | ४९८ |
| ऽवात्तर ... ... | ऽवान्तर ... ... | ६. ३. ४०. ... | ५३३ |
| यज्ञमानं ... ... | यजमानं ... ... | ७. ३. ३२. ... | ६०४ |
| योक्तेया ... ... | योक्तेया ... ... | ७. ३. ३३. ... | ६०४ |
| व्विदेघो * ... ... | व्विदेघो ... ... | ३. ३. १०. ... | २५९ |

स्यादेव मन्योऽन्योऽपि चाशुद्धपाठः प्रोधकदृष्टिदोषतः ॥

---

* "तिनयत्येव"—इति पाठः स्यात् कर्कसम्मतः ।

अथ

# शतपथब्राह्मण-प्रथमकाण्डस्य

# सूचीपत्राणि ।

## ॥ अथ प्रपाठकसूची ॥


अथ प्रथमः प्रपाठकः (व्रत मुपैष्यन् १अ० १ब्रा०) ... ... ५ए०

अथ द्वितीयः प्रपाठकः (चतुर्द्धा विहितो ह २अ० ३ब्रा०)... १२४

अथ तृतीयः प्रपाठकः (ते वा ऽआर्द्राः स्युः ३अ० ४ब्रा०) ... २३२

अथ चतुर्थः प्रपाठकः (स स्रुचोत्तरमाघार ४अ० ५ब्रा०) ... ३१४

अथ पञ्चमः प्रपाठकः (यज्ञेन वै देवाः। इमां ६अ० २ब्रा०)... ४०५

अथ षष्ठः प्रपाठकः (यज्ञेन वै देवाः। दिव ७अ० ३ब्रा०)... ४६४

अथ सप्तमः प्रपाठकः (स वै स्रुचौ व्यूहति ८अ० ३ब्रा०) ... ५५८


## ॥ अथाध्यायसूची ॥


अथ प्रथमाध्यायः (व्रत मुपैष्यन् १प्र० १ब्रा०) ... ५ए०

अथ द्वितीयाध्यायः (स वै कपालान्ये- १प्र० ५ब्रा०) ... ६२

अथ तृतीयाध्यायः (स वै स्रुचः २प्र० ४ब्रा०) ... ... १७५

| | | | |
|---|---|---|---|
| अथ चतुर्थोऽध्यायः | ( हिङ्कृत्यान्वाह ३प्र० ३ब्रा० ) | ... | २५८ |
| अथ पञ्चमाध्यायः | ( स वै प्रवरायां ४प्र० २ब्रा० ) | ... | ३२७ |
| अथ षष्ठाध्यायः | ( ऋतवो ह वै ४प्र० ६ब्रा० ) | ... | ३९१ |
| अथ सप्तमाध्यायः | ( स वै पर्संग्राखया ५प्र० ४ब्रा० ) | ... | ४६० |
| अथाष्टमाध्यायः | ( मनवे ह वै ६प्र० ३ब्रा० )... | ... | ५२४ |
| अथ नवमाध्यायः | ( स यत्राह ७प्र० २ब्रा० ) ... | ... | ५७९ |


---

## ॥ अथ ब्राह्मणसूची ॥


| सङ्ख्या | ब्राह्मणनाम | प्रपाठकस्य | अध्यायस्य | पृष्ठे |
|---|---|---|---|---|
| १ | व्रतब्राह्मणम् | १प्र० १ब्रा० | १अ० १ब्रा० | ५ |
| २ | हविर्ब्राह्मणम् | १प्र० २ब्रा० | १अ० २ब्रा० | ३५ |
| ३ | ,, | १प्र० ३ब्रा० | १अ० ३ब्रा० | ६० |
| ४ | ,, | १प्र० ४ब्रा० | १अ० ४ब्रा० | ७१ |
| ५ | ,, | १प्र० ५ब्रा० | २अ० १ब्रा० | ९२ |
| ६ | ,, | १प्र० ६ब्रा० | २अ० २ब्रा० | ११० |
| ७ | आग्नब्राह्मणम् | २प्र० १ब्रा० | २अ० ३ब्रा० | १२४ |
| ८ | वेदिब्राह्मणम् | २प्र० २ब्रा० | २अ० ४ब्रा० | १३४ |
| ९ | ,, | २प्र० ३ब्रा० | २अ० ५ब्रा० | १५१ |
| १० | पात्रब्राह्मणम् | २प्र० ४ब्रा० | ३अ० १ब्रा० | १७५ |
| ११ | आज्यब्राह्मणम् | २प्र० ५ब्रा० | ३अ० २ब्रा० | २०० |
| १२ | इध्मब्राह्मणम् | २प्र० ६ब्रा० | ३अ० ३ब्रा० | २१५ |
| १३ | परिधिब्राह्मणम् | ३प्र० १ब्रा० | ३अ० ४ब्रा० | २३२ |
| १४ | सामिधेनीब्राह्मणम् | ३प्र० २ब्रा० | ३अ० ५ब्रा० | २४४ |
| १५ | ,, | ३प्र० ३ब्रा० | ४अ० १ब्रा० | २५८ |

| सङ्ख्या | ब्राह्मणनाम | प्रपाठकस्य | अध्यायस्य | पृष्ठे |
|---|---|---|---|---|
| १६ ... | सामिधेनीब्राह्मणम् | ३प्र० ४ब्रा० ... | ४अ० २ब्रा० ... | २८५ |
| १७ ... | ,, ... | ३प्र० ५ब्रा० ... | ४अ० ३ब्रा० ... | २६४ |
| १८ ... | आघारब्राह्मणम् ... | ३प्र० ६ब्रा० ... | ४अ० ४ब्रा० ... | ३०४ |
| १६ ... | ,, ... | ४प्र० १ब्रा० ... | ४अ० ५ब्रा० ... | ३१४ |
| २० ... | प्रवरब्राह्मणम् ... | ४प्र० २ब्रा० ... | ५अ० १ब्रा० ... | ३२७ |
| २१ ... | स्रुग्ब्राह्मणम् ... | ४प्र० ३ब्रा० ... | ५अ० २ब्रा० ... | ३४५ |
| २२ ... | प्रयाजब्राह्मणम् ... | ४प्र० ४ब्रा० ... | ५अ० ३ब्रा० ... | ३६१ |
| २३ ... | ,, ... | ४प्र० ५ब्रा० ... | ५अ० ४ब्रा० ... | ३८२ |
| २४ ... | ,, ... | ४प्र० ६ब्रा० ... | ६अ० १ब्रा० .. | ३६१ |
| २५ ... | पुरोडाशब्राह्मणम् | ५प्र० १ब्रा० ... | ६अ० २ब्रा० ... | ४०५ |
| २६ ... | ,, ... | ५प्र० २ब्रा० ... | ६अ० ३ब्रा० ... | ४१४ |
| २७ ... | सान्नाय्यब्राह्मणम् ... | ५प्र० ३ब्रा० ... | ६अ० ४ब्रा० ... | ४४४ |
| २८ ... | ,, ... | ५प्र० ४ब्रा० ... | ७अ० १ब्रा० ... | ४६० |
| २६ ... | अवदानब्राह्मणम् ... | ५प्र० ५ब्रा० ... | ७अ० २ब्रा० ... | ४७५ |
| ३० ... | स्विष्टकृद्ब्राह्मणम् ... | ६प्र० १ब्रा० ... | ७अ० ३ब्रा० ... | ४६४ |
| ३१ ... | प्राशित्रब्राह्मणम् ... | ६प्र० २ब्रा० ... | ७अ० ४ब्रा० ... | ५१२ |
| ३२ ... | इडाब्राह्मणम् ... | ६प्र० ३ब्रा० ... | ८अ० १ब्रा० ... | ५२४ |
| ३३ ... | अनुयाजब्राह्मणम् ... | ६प्र० ४ब्रा० ... | ८अ० २ब्रा० ... | ५४६ |
| ३४ | सूक्तवाकशंयुवाकप्रैषब्रा० | ७प्र० १ब्रा० ... | ८अ० ३ब्रा० ... | ५५८ |
| ३५ | सूक्तवाकशंयुवाकहौत्रब्रा० | ७प्र० २ब्रा० ... | ६अ० १ब्रा० ... | ५७६ |
| ३६ ... | पत्नीसंयाजब्राह्मणम् | ७प्र० ३ब्रा० ... | ६अ० २ब्रा० ... | ५६८ |
| ३७ ... | याजमानब्राह्मणम् | ७प्र० ४ब्रा० ... | ६अ० ३ब्रा० ... | ६१७ |

## ॥ अथ कण्डिकासूची ॥


| कण्डिकाप्रतीकम् | पृष्ठे | कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|---|---|
| अग्न आ याहि वीतय इति | २९१ | अथ जुह्वा परिधीन्त्समनक्ति | ५५८ |
| अग्निन्दूतं वृणीमह इति ... | २९५ | अथ तनूनपातं यजति। ग्रीष्मो | ३९३ |
| अग्निरिदꣳ हविः ... ... | ५८१ | अथ तनूनपातं यजति। रेतो | ३८२ |
| अग्निर्वै देवानां नेदिष्ठं ... | ४०८ | अथ तृणं मन्तर्द्धाय ... | १३७ |
| अग्निर्वै देवाना मद्धातमाम् | ४०७ | अथ तृणैः परिस्तृणाति ... | १० |
| अग्निर्वै देवानां मृदुहृदयतमः | ४०७ | अथ तृतीयं प्रहरति ... | १३७ |
| अग्निर्वै सर्वा देवताः ... | ४०७ | अथ ते पवित्रे प्रस्तरे ... | ५३४ |
| अग्निर्होता वेत्त्वग्ने र्होत्र मिति | ३४५ | अथ त्रिष्टुभा यजति ... | ४७८ |
| अग्ने दीदयतं बृहदिति ... | २९५ | अथ त्वष्टारं यजति ... | ५९९ |
| अग्ने महाꣳ२॥ असि ... | २८६ | अथ दक्षिणं परिदधाति... | २३२ |
| अग्ने वेर्होत्रं ... ... | ३१५ | अथ दक्षिणेन जुहूं ... | २३५ |
| अच्छिद्या विष्णो मा ... | ३१४ | अथ दक्षिणेनोलूखल माहरति | ७२ |
| अतूर्त्तो होता ... ... | २८७ | अथ दृषद मुपदधाति ... | ९५ |
| अथ कृष्णाजिन मादत्ते। यज्ञस्यैव | ७१ | अथ देवताया आदिशति | ३८ |
| अथ कृष्णाजिन मादत्ते। शर्म- | ७१ | अथ देवानाम्पत्नीर्यजति ... | ५९९ |
| अथ गार्हपत्य मुपतिष्ठते... | ६२१ | अथ द्वितीयं प्रहरति ... | १३७ |
| अथ गृह्णाति ... ... | ३८ | अथ द्वेधा करोति... ... | ११० |
| अथ चतुर्थे प्रयाजे ... ... | ३९५ | अथ नराशꣳसं द्वितीयं ... | ५४८ |
| अथ जघनेन कस्तम्भी ... | ३७ | अथ निष्पुनाति ... ... | ७६ |
| अथ जुहूञ्च स्रुवञ्च ... ... | ६०१ | अथ पत्नीꣳ सन्नह्यति ... | १७७ |
| अथ जुहूञ्चोपभृतञ्च ... | ५६४ | अथ पत्नीः संयाजयन्ति ... | ५९८ |
| अथ जुहूं प्रतिगृह्णाति ... | २३५ | अथ परिधि मभिपद्या- ... | ५६० |

"अथ त्वष्टारम्"। मिथुनोपपादनाय यत्र क्वचन पुंसि यष्टव्ये मिथुनात् त्रिगुण एवाश्रयनीय इत्यभिप्रायः। 'त्वष्टा' वायुः[१] सोऽध्यात्म मवस्थितः सिक्तमात्र मेव 'रेतः' यावन्त्यस्थीनि यस्य प्राणिनः, तावन्ति तस्य सूक्ष्मविभागानि खण्डितानि करोति। तस्याधियज्ञानुकारेण, नान्यथेति यज्ञे ऽपि मिथुने त्वष्टा विकुर्वन् दर्शनीयः[२]। सोऽयं यज्ञ्यत इति तदेष एवैतदित्याह॥ १०॥

"अथ देवानाम्पत्नीः"। "पत्नीषु वै योनाविति। पत्न्या एव 'योनिः' प्रजाधारणस्थानम्[३], तस्मिन्नेव 'रेतः' 'प्रतिष्ठितम्'। 'ततः' एव च 'प्रजायते' अपत्यरूपेण[४]; पत्नीनां योनेरेव विकृतरेतः सप्रसूतिर्भवति। 'तत्पत्नीष्वेव' योनिभूतासु 'सिक्तं रेतः' 'प्रतिष्ठापयति'[५]। 'ततः' ताभ्यः देवानाम्पत्नीभ्यः 'प्रजायते' सर्वः; योषितो ऽनुलक्ष्येत्यभिप्रायः[६]॥ ११॥

"स यत्र देवानाम्पत्नीः"। "तत्पुरस्तात्तिरः करोति" अन्तर्द्धान माहवनीयात्। ताभ्य एवैतत् 'तिरः' अन्तर्द्धानं 'करोति'। 'तस्मात्' हेतोः 'मानुष्यः स्त्रियः' 'तिर इव' 'पुंसः' "अन्तर्द्धौ

---

१— निरु० ८. २. १०, ११, १२; १०. ३. १० खण्डेषु व्याख्यातः।

२— "त्वष्टा रूपाणि स हि प्रभुः"—इत्यादिर्मन्त्रस्तेष्टव्योच्चः (ऋ० स०)।

३— 'योनिः' स्थानम्'—इत्येव क, भ।

४— नास्त्येतत्पदं ठ-पुस्तकादन्यत्र।

५— पत्नीनामित्यादिः प्रतिष्ठापयतीत्यन्तो ग्रन्थस्तु ठ-पुस्तकेऽपाठ्यः।

६— "प्रजायते' ताभ्यः सर्वा योषितोऽनुरक्ता इव स्वपुरुष मुपासत इति किंवदन्ती न विरुद्धा'—इति ठ।

येनादर्शन मिच्छति"-इत्यपादानात्पञ्चमी[१]— 'पुंसः'-इति। 'पुंसः अन्तर्हिता', पुंसः अदृश्यमाना[२] 'जिघत्सन्ति' भक्षयितु मिच्छन्ति। 'याः इव'-इत्यनुकारः। याः पुंसः पुरो जिघत्सन्त्यश्नन्ति स्त्रियः, 'ताः इव'। अस्माद्यज्ञाङ्गानुकारात् 'इत्याह याज्ञवल्क्यः'। क्षुद्र-योषितस्तु पुंसः समक्ष मप्यन्तेऽश्नन्ति[३]; तथैवातो ऽनुकारादित्यभि-प्रायः ॥ १२ ॥

"अथाग्निं गृहपतिं"। 'अयं लोकोऽग्निः' गृहपतिः। गार्हपत्यो हि गृहपतिः; "अय मग्निर्गार्हपत्यः"-इतिवचनात्; गार्हपत्यश्चायं लोकः। ततश्च यत् 'अग्निं गृहपतिं यजति' तत् 'इमं लोकम्' लोकोपलक्षिते देशे 'प्रजाः प्रजनयति'। ततश्च यज्ञानुकारेण तथैव 'ताः प्रजायन्ते' ॥ १३ ॥

"तदिडान्तं"। इडान्तवत् 'इडान्तं'। 'इडान्तं' यजनान्त मित्यभिप्राये, तत् इडा पत्नीसंयाजेषु विधीयते। तस्याश्च पूर्वोक्त एव विधिः। अर्थवादोऽपि च पूर्वोक्त एवेति नोक्तः। तस्माद्यज्ञेऽव-कल्पयेत्यादि यथैव हि देवेष्विडावकॢप्ता, तथा स्त्रीष्वपि देवेष्वि-त्यभिप्रायः। "न ह्यत्र परिधयः"-इत्यादिस्तु इडाया अन्तले-ऽर्थवादः। तत्राभिप्रायः। अत्रापि पत्नीयज्ञे। यथैव इडा देवयज्ञे भवन्त्येवं सूक्तवाक-शंयुवाकाभ्या मपि भवितव्य मित्यत आह— "न

१— पा० सू० १. ४. २८।

२— "'करोति' अन्तर्द्धानेनादर्शन मिच्छति। 'पुंसः अन्तर्हिता' पुंसस्त्वादृश्यमाना (पुंसश्च दृश्यमाना C.)"–इति ठ।

३— 'मप्यन्ते माश्नन्ति'–इति ठ।

ह्यत्र परिधयो भवन्तीति। परिधिप्रस्तरसम्बन्धौ सूक्तवाक-शंयुवाकौ तदभावेऽनुपपन्नावित्यभिप्रायः। ननु च प्रस्तरप्रहरणेन यजमानः स्वगाकृतो देवयज्ञः, अत्रापि यज्ञे पत्नी तथा स्वगाकर्त्तव्या; इतरथा तु स्वर्गाल्लोकात्स्यान्तरितैव स्यात्? इत्यत आह— "प्रस्तरेणेति। प्रस्तरकरणे 'इयमितं ह कुर्यात्' 'इयम्'-शब्दोऽवसानवचनः कण्वादिषु[1] पठ्यते। अवसन्न[2] मवसादं पत्न्याः कुर्याद्;— यजमाने गच्छति स्वर्गं लोकं पत्नी न गता, अत्रैवावसन्ना सा, अधुना यातीत्येतत्कुर्याद्; न च युक्तम्; पतिं ह्यनु च जायेत्यभिप्रायः ॥ १४ ॥

"स यदि प्रस्तरस्य"। 'प्रस्तरस्य' 'रूपं' प्रतिनिधिं 'कुर्यात्', अध्वर्युणा ततः "यथैवाद इति। स्वेनैव महिम्ना यजमानवत् तां 'स्वगाकरोति' नाभिदध्या मानयतीत्यर्थः ॥ १५ ॥

"स यदि"। प्रसन्ना ॥ १६ ॥

"अथाग्नीदाह"। स प्रस्तररूपवचनात् सूक्तवाको मा प्रापदित्याह— "अथाग्नीदाहेति। यावदुक्त मेव भवति; प्रैषसामर्थ्यात्; न सूक्तवाक माह ॥ १७ ॥

"अथाह संवदस्व"। प्रसन्ना ॥ १८ ॥

"अथ जुह्वं च स्रुवं च"। "सम्प्रगृह्णातीति[3]। होतुं तत्स्य

---

१— ग. पा. ३. १. २७ (३४.)।

२— 'अवसान'—इति ढ।

३— तत्र मन्त्रः—वा० सं० २. २०. १।

माज्यम्; न तु चरुवत्[1] तृणस्याकृतिकरणार्थत्वम्। किं कारणम्? 'अद एव' तृण मध्वर्युः 'आकृतिं करोति'। 'यत्' तत् 'अनक्ति' अग्रं जुह्वा मित्यादि। किमर्थञ्च जुह्वञ्च सम्प्रगृह्णाति, कथं नाम? 'आकृतिर्भूत्वा' इद माज्यं 'देवलोकं गच्छादिति'॥ १९॥

"स वा अग्नये"। 'अग्नीतमः' भोक्तृतमः[2]। 'अनमीवम्' अमीवा व्याधिः, स यस्य कार्यतया नास्ति, तदनमीवम्। 'आत्मनि' अग्नौ; दक्षिणाग्निहोमादिशाखान्तरात्॥ २०॥

"अथ वेदं"[3]। विस्रंसन मुपन्यस्त मेव, अर्थवादस्तु "यद्धि युक्तं न विमुच्यते प्र तद्ह्यते"–इति[4] गम्यमान एवेति नोक्तः। पत्न्यास्तु कर्तृत्वेऽर्थवादं वक्ष्यति– "अथ यत् पत्नी विस्रंसयति"–इति[5], अधुना विस्रंसनप्रसङ्गादुत्पत्तिविनियोगौ वेदस्याह। तत्रोत्पत्तिस्तावद् "योषा वै वेदिरिति। विनियोगः– 'अथ यत्' 'एनेन' वेदेन यज्ञे' किञ्चित् 'उपालभते' उपगृह्णाति, गृहीत मपि सत् 'उपचर्याय' उपकाराय सुगृहीतत्वात् यद् गृह्णाति; यत् 'मिथुनं क्रियते'; उपग्राह्यस्य च वेदस्य वेत्युपग्रहणे विनियोगः। स च एकद्रव्ये इत्येतन्मिथुनवचनादेव गम्यते; नैकद्रव्ये हि कर्मणि

---

१— नास्त्येतत्पदं ठ–पुस्तकादन्यत्र।

२— महीधरकृतं भाष्यञ्चेह द्रष्टव्यम् (वा० सं० २. २०. १.)।

३— "पत्नी वेदं प्रमुञ्चति वेदोऽसीति"–इति का० श्रौ० सू० ३. ७. १। मन्त्रस्तु वा० सं० २. २१. १।

४— उपरिष्टाद् (६. ७. ४. ८.) द्रष्टव्यम्।

५— अनुपद मेव २२ कण्डिकायाम्।

(अनावृत्तौ[1]) तेषां यस्योक्तान्योन्य मिव मिथुनं सिद्धम्। तदपि साध्ये कर्मणि संस्रवहोमादौ वेदेनोपग्रहणम्, न सर्वत्रेत्येतच्छाखान्तरात् ॥ २१ ॥

"अथ यत् पत्नी"। प्रसन्ना ॥ २२ ॥

"सा विस्रंसयति"। 'यदि यजुषा' कर्त्तु मिच्छेदिति। 'यदि'-शब्दात् पाक्षिकं वेदस्य यजुषा करण मिति गम्यते। अथ यजुषा करणचिकीर्षानुपपन्नेतिसामर्थ्यात् पतिः कुर्यादिति। तच्च करण माज्यनिर्वापकाले चिकीर्षति। कः पुनः कुर्याद्? यजमानः; शाखान्तरात्, "मह्यं भूयाः"-इति[2]मन्त्रलिङ्गाच्च[3] ॥ २३ ॥

"त मा वेदेः[4]"। 'आङ्' अत्राभिविधौ; संस्तर्यते वेदिं व्याप्येति। "योषा वै वेदिर्वृषा वेदः"-इतिश्रेषात्। वेदिं संस्तृणाति[5]। समाख्यानादध्वर्युः; हौत्रे तु विशेषवचनाद्धोता संस्तृणाति ॥ २४ ॥

"अथ समिष्टयजुः[6]"। प्रसन्नास्ततस्त्रः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

"अथ बर्हिः[7]"। 'अयं वै लोको बर्हिः' "वृहि वृहि वृद्धौ"

---

१— नैतत् पदं ठ-पुस्तकादन्यत्र।

२— वा० स० २. २०. १ मन्त्रपाठो द्रष्टव्यः।

३— 'इतिवचनादाशीर्योगः'-इति क, भ।

४— "स्तृणात्यावेदेः"-इति का० श्रौ० सू० ३. ७. ३।

५— शाङ्खायने तूत्तरेण गार्हपत्य मा बर्हिषस्तीर्लैति (१. १५. १५.)।

६— का० श्रौ० सू० ३. ८. ४। तत्र मन्त्रः— वा० सं० २. २१. १। समिष्टयजुरिति कर्मणः सञ्ज्ञा। वातस्त्वाच्च देवता; 'स्वाहा वाते धाः'-इति (वा० सं० २. २१. १.) मन्त्रलिङ्गात्।

७— का० श्रौ० सू० ३. ८. ५। मन्त्रस्तु वा० सं० २. २२. १।

परिवृद्धो[१]ऽयं लोकः। ततः कियदेतद्बर्हिःशब्दवाच्यता च ओषधिवाच्यता च? बर्हिःशब्दवाच्यांशेन तद् 'बर्हिरयं लोकः' तस्यापि बर्हिःशब्दकत्वात्, ओषधित्वांशेन तत्सर्वाः 'ओषधयः'। ततश्च यद् 'बर्हिः' अधियज्ञं 'जुहोति', तत् 'एतल्लोके' 'ओषधीः' बर्हिष ओषध्यात्मकत्वात् 'दधाति'; तच्चेदं तथैव दृश्यते ॥ २९ ॥

"तां वा अतिरिक्तां"। बर्हिराहुतिं यस्मात् 'अतिरिक्तां जुहोति'। कथम्? 'समिष्टयजुर्ह्यन्तो यज्ञस्य'; तद्धि देवताविसर्जनार्थमित्यभिप्रायः[२]। ततश्च या 'ऊर्ध्वं समिष्टयजुषः' सातिरिक्ता, इष्टासु गतासु च देवतासु। 'यदा हि'। 'हि'-शब्दः 'च'-शब्दार्थे; यदा च 'समिष्टयजुर्जुहोति', 'अथ' अनन्तरम् 'एताभ्यः' ओषधिभ्यः। "तादर्थ्ये चतुर्थी[३]" ओषधयोऽस्मिंल्लोके कथं नाम भविष्यन्तीत्येवमर्थं 'जुहोति' ॥ ३० ॥

"स जुहोति[४]"। प्रसन्ना ॥ ३१ ॥

"अथ प्रणीताः[५]"। अध्वर्युरुत्तरपार्श्वाद् दक्षिणपार्श्वं वेदेः

---

१— 'परिवृढो'–इति ठ।

२— समिष्टयजुर्होमेनैव यज्ञसमाप्तिः। अत एतत् प्रतिपत्तिकर्मेत्युच्यते। अथेहोपरिष्टादाहुतिपरिगणनानुसारतः सामिधेनीसङ्ख्या चेत्थं श्रुतम्— "ताः पञ्चदश सामिधेन्यः। द्वावाघारौ पञ्च प्रयाजा इडा त्रयोऽनुयाजाः सूक्तवाकश्च शंयोर्वाकश्च तास्त्रयोदशाहुतयोऽथ यदेवादः पत्नीसंयाजेषु सम्प्रगृह्णाति सुमिष्टयजुश्च ताः पञ्चदशाहुतयः"–इत्यादि ११. २. ८. ५, ६।

३— पा० २. ३. १३ सू० १ वा०।

४— अत्र मन्त्रः— वा० सं० २. २२. १।

५— प्रणीताः = आपः। ( १२. ५. २. ७. ) प्रणीताप्रणयनं वक्ष्यति।

(आहवनीयं प्रदक्षिणतो[1]) गत्वा स्वदेशेऽवस्थिता एव 'प्रणीताः' 'निनयति' नीचैर्नयति, भूमौ पर्यस्यतीत्यर्थः। "युङ्क्ते वा इति निनयनार्थवादः। "दक्षिणत इत्येतस्य तु "तथा ह्युदग् भवती- त्यर्थवादं वक्ष्यति[2]। 'पराङ्' अनावृत्तौ 'यज्ञो यजमानं प्रक्षि- णीयात्' "क्षि हिंसायाम्[3]" हिंस्यात्। 'तथा' नीयमानासु प्रणी- तासु 'न प्रक्षिणाति' न हिनस्ति ॥ ३२ ॥

"स निनयति[4]"। "तत्पुष्टि मुत्तमा मिति। पुष्टेर्हेतुरापः, तासु निरस्यमानासु मा भूत् पुष्टेर्निरासस्तेन पुष्टिं निराह- "उत्तमा मिति। आध्वर्यवस्यान्ते इत्यर्थः। आध्वर्यवे शिष्टम्, तच्च रक्षोनिरासप्रधानयागादि; ततस्र निनयन मेवाध्वर्योर्यज्ञे उक्त मित्यभिप्रायः[5]। "स येनैव प्रणयतीति। "कस्त्वेत्येताभिरनिरुक्ता- भिर्व्याहृतिभिरित्यभिप्रायः। "अथ फलीकरणान् कपालेनाधोऽधः'। फलीक्रियन्ते तण्डुला एभिरिति फलीकरणाः अङ्गीभवन्ति तण्डुल- निष्पत्तौ। "अभूततद्भावे[6]", "कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः[7]"। 'फलीकरणान्' तण्डुलादीन् 'उपास्यति' उत्क्षिपति उत्करे। 'कपालेन' मध्यमेन प्रथमं नातिक्रामेदिति 'अधोऽधः' अधस्तात्

---

१— ठ-पुस्तके लेष पाठोऽधिकः।

२— इत उत्तरस्मिन्नेव ब्राह्मणे (१ क०)।

३— स्वा० प० २८ धा०।

४— का० श्रौ० सू० २५. ७. २७। मन्त्रस्तु वा० सं० २. २३. १।

५— सन्त्यत्रापाठ्यकल्पाः पाठभेदाः।

६— पा० ५. ४. ५० सू० १ वा०।

७— पा० सू० ५. ४. ५०।

नातिदूरे । 'कृष्णाजिनम्'-इति, 'अधोऽध इत्येतद्योगनिमित्ता द्वितीया[1]; कृष्णाजिनस्याधस्तात्, समीप इत्यर्थः[2] ॥ ३३ ॥

"देवाश्च वै" । प्रसन्ना ॥ ३४ ॥

"ततो देवाः" । 'सर्वं यज्ञं' हविर्यज्ञाख्यम्, 'संवृज्य' समाप्तिपूर्वं संहृत्य[3] । "अथेति । 'अथ' अनन्तरम् । 'भागधेयं' भाग एव भागधेयम्; स्वार्थिको धेयः[4] । 'तेन' भागधेयेन पापिष्ठेन 'एनान्' असुरान् 'निरभजन्' निर्भक्तवन्तः, बहिर्यज्ञात् कृतवन्तः । केन, कस्मात्? आह— "अस्ना, पशोः" । असृक्शब्दस्य अस्नादेशः[5] । 'अस्ना' लोहितेन 'पशोः' 'निरभजन्' । 'फलीकरणैः' पाण्डुरभागैः 'हविर्यज्ञात्' निर्भजन्तोऽभूवन् । 'एष सुनिर्भक्तः' 'भागिनं' स्वल्पभागेनापि भक्तम्, 'अभागं' भाग मदत्त्वा यं 'निर्भजन्ति'[6] । 'सः' भागी प्रथमम् 'शंसते' एव, 'उत' अपि अबलो हि बलवतां वशे भवति । 'लब्ध्वा' आसाद्य 'आह' ब्रूते— कुतश्चित्कालपर्यायात् 'किं' त्वं 'मा' मां 'बभक्थ', मनसि किं मह्यं त्वया दत्त मित्यर्थः । 'यं भागम्' 'एभ्यः' रक्षोभ्यः 'देवाः' 'अकल्पयन्' कल्पितवन्तः, समीपे प्रक्षिपति, अग्निहीने 'अन्धे तमसि' 'प्रवेशयति', 'तथा' 'पशोः असृक्'

---

१— पा० २. ३. २ सू० ३ वा० द्रष्टव्यम् ।

२— का० श्रौ० सू० ३. ८. ७ । मन्त्रस्तु वा० सं० २. २३. २ ।

३— "ततो देवाः" । 'सर्वयज्ञं हविर्यज्ञाख्यं संवृत्तं कृत्वा'—इति ठ ।

४— "भागरूपनामभ्यो धेयः"—इति पा० ६. ४. ३६ सू० २ वा० ।

५— पा० सू० ६. १. ६३ ।

६— " 'अभागं' भागहीनं 'निर्भजन्ति' "—इति ठ ।

अपि। "तस्मादिति। तेदनीकरणाभावेन रक्षोभागः। तेदनीकरणेन लोहितं[1] विद्धम् ॥ ३५ ॥ ३[2] [९. २.] ॥

श्रीमतोऽवन्तिनाथस्य विक्रमादित्यभूपतेः।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छतपथश्रुतिम् ॥

इत्याचार्यहरिस्वामिनः कृतौ शतपथभाष्ये हविर्यज्ञेषु
नवमाध्यायस्य द्वितीयं ब्राह्मणम् ॥

---

१—'तेदनी (तमनी A. C.) लोहितम्'—इति ठ। तेदनीशब्दोऽत्र पुनः श्रोष्यति १३. ५. ३. ८; अन्यत्रान्यत्र च, तथाहि वा० सं० २५. २, अथ० सं० २०. १३१. ११, ता० ब्रा० २१. ४, साङ्खा. श्र. ६. १२. १२. 'तेमनं तु निष्ठानम्'—इत्यमरः २. ९. ४४।

२— अत्र पद्धतिः। होता वेद मादाय, अध्वर्युर्जुहूं स्रुवञ्चादाय, अग्नीदाज्यस्थाली मादाय, आग्नीध्रप्रथमाः पत्नीसंयाजान् कर्त्तुं गार्हपत्यं प्रति गच्छन्ति। तत्राध्वर्युर्गार्हपत्यदक्षिणाग्नी अन्तरेण गत्वा पत्न्या अग्रे गार्हपत्यस्य दक्षिणत ईशानाभिमुखः, गार्हपत्यस्य पश्चाद्धोता ऊर्द्धजानुः, तदुत्तरतोऽग्नीद्दक्षिणाभिमुख इत्येवं सर्वे उपविशन्ति। ततोऽध्वर्युर्वेदं गृहीत्वा क्रमेण 'सोमायानुब्रूहि', 'त्वष्ट्रेऽनुब्रूहि', 'देवानाम्पत्नीभ्योऽनुब्रूहि', 'अग्नये गृहपतयेऽनुब्रूहि'—इत्युक्त्वा जुह्वां चतुर्गृहीत माज्यं गृहीत्वा, आश्राव्य, क्रमेण 'सोमं यज'—इत्यादिक माह। तथा 'इदं सोमाय'—इत्यादित्यागश्च। ततः सर्वेषा मिडाभागभक्षणम्, मार्जनम्, तृणप्रहरणम्, आत्मोपस्पर्शनम्, अग्नीदध्वर्योः संवादः, संस्रवहोमः, गार्हपत्यं परीत्योत्तरहोमद्वयम्, पत्न्या

सुꣳस्थिते यज्ञे। दक्षिणतः परीत्य पूर्णपात्रं निनयति तथा ह्युदग् भवति तस्माद्दक्षिणतः परीत्य पूर्णपात्रं निनयति देवलोके मेऽप्यसदिति वै यजते यो यजते सोऽस्यैष यज्ञो देवलोक मेवाभिप्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणा मन्वारभ्य यजमानः ॥ १ ॥

स ऽएष देवयानो वा पितृयाणो वा पन्थाः। तदुभयतोऽग्निशिखे समोषन्त्यौ तिष्ठतः प्रति त मोषतो यः प्रत्युष्योऽत्यु तꣳ सृजेते यो ऽतिसृज्यः शान्तिरापस्तदेत मेवैतत्पन्थानꣳ शमयति ॥ २ ॥

पूर्णं निनयति। सर्वं वै पूर्णꣳ सर्वेणैवैन मेतच्छमयति सन्तत मव्यवच्छिन्नं निनयति सन्ततेनैवैन मेतदव्यवच्छिन्नेन शमयति ॥ ३ ॥

यद्वेव पूर्णपात्रं निनयति। यद्वै यज्ञस्य मिथ्या

---

वेदयोक्त्रयोर्विमुञ्चनम्, होतुर्वेदयोक्त्रपरिविमुञ्चनम्, गार्हपत्यस्योत्तरत आरभ्य वेदेः पूर्वान्तं यावत् वेदतृणपरिस्तरणञ्चेति पत्नीसंयाजसङ्क्षेपः।

ततोऽध्वर्युर्ध्रौव माज्यं विलाप्य, बर्हिषः सकाशात् कुशमुष्टिं सव्ये पाणौ गृहीत्वा, ऊर्द्ध्वस्तिष्ठन्, सततं ध्रुवयैव समिष्टयजुर्जुहोति। ततो दर्भमुष्टेरनुप्रहरणम्, बर्हिर्होमश्च। ततो वेदिमध्ये उदङ्मुख उपविष्टः प्रणीता निनयति। ततः फलीकरणानन्तरं स्थापितान् कणान् प्रथमकपाले निधाय, सव्येनोत्करस्योपरि कृष्णाजिनं धारयन्, कृष्णाजिनस्याधस्तादुत्करे कपालेनैव कणान् प्रास्यति, तत उदकोपस्पर्श इति समिष्टयजुःसङ्क्षेपः॥

क्रियते व्यस्य तद्दहन्ति क्षखन्ति*। शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति ॥ ४ ॥

पूर्णं निनयति। सर्वं वै पूर्णꣳ सर्वेणैवैतत्सन्दधाति सन्तत मव्यवच्छिन्नं निनयति सन्ततेनैवैतदव्यवच्छिन्नेन सन्दधाति ॥ ५ ॥

तदञ्जलिना प्रतिगृह्णाति। सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्ट मिति यद्विरूढं तत्सन्दधाति ॥ ६ ॥

अथ मुख मुपस्पृशते। द्वयं तद्यस्मान्मुख मुपस्पृशतेऽमृतं वा आपोऽमृतेनैवैतत्सꣳस्पृशत एतदु चैवैतत्कर्म्मात्मन् कुरुते तस्मान्मुख मुपस्पृशते ॥ ७ ॥

अथ विष्णुक्रमान् क्रमते। देवान्वा एष प्रीणाति यो यजत एतेन यज्ञेनर्ग्भिरिव त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान् प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भूत्वा तानेवाभिप्रक्रामति ॥ ८ ॥

यद्वेव व्विष्णुक्रमान् क्रमते। यज्ञो वै विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषा मियं विक्रान्ति-

---

* 'त्वक्षन्ति'- इति च।

रिद मेव प्रथमेन पदेन पस्पाराथेद मन्तरिक्षं द्वितीयेन दिव मुत्तमेनैताम्वेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते तस्माद्विष्णुक्रमान् क्रमते तद्वा ऽइत एव पराचीनं भूयिष्ठा ऽइव क्रमन्ते ॥ ९ ॥

तद् तत्पृथिव्यां विष्णुर्व्यक्रंस्त। गायत्रेण छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मो दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म ऽइत्येव मिमांल्लोकान्त्समारुह्याथैषा गतिरेषा प्रतिष्ठा य ऽएष तपति तस्य ये रश्मयस्ते सुकृतोऽथ यत्परं भाः प्रजापतिर्वा स स्वर्गो वा लोकस्तदेव मिमांल्लोकान्त्समारुह्याथैतां गति मेतां प्रतिष्ठां गच्छति परस्तात् त्वेवार्वाङ् क्रमेत य ऽइतोऽनुशासनं चिकीर्षेद् द्वयं तद्यस्मात्परस्तादर्वाङ् क्रमेत* ॥ १० ॥

अपसरणतो ह वा ऽअग्रे देवा जयन्तोऽजयन्। दिव मेवाग्रेऽथेद मन्तरिक्ष मथेतोऽनपसरणात्सपत्नाननुदन्त तथो ऽएवैष एतदपसरणत ऽएवाग्रे जयन् जयति† दिव

---

* 'क्रमते'—इति च।

† 'जयं जयति'—इति क, 'जयञ्जयति'—इति घ।

मेवाग्रेऽथेदु मन्तरिक्ष मथेतोऽनपसरणात्सपत्नान्नुदत
ऽइयं वै पृथिवी प्रतिष्ठा तदस्या मेवैतत्प्रतिष्ठायां प्रति-
तिष्ठति ॥ ११ ॥

तदु तद्दिवि व्विष्णुर्व्यक्रंᳫस्त । जागतेन छन्दसा ततो
निर्भक्तो योऽस्मान् द्वेष्टि यञ्च व्वयं द्विष्मोऽन्तरिक्षे व्विष्णु-
र्व्यक्रंᳫस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि
यञ्च व्वयं द्विष्मः पृथिव्यां विष्णुर्व्यक्रंᳫस्त गायत्रेण
छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं
द्विष्मोऽस्मादन्नादस्यै प्रतिष्ठाया ऽइत्यस्याᳫं हीदᳫं सर्व
मन्नाद्यं प्रतिष्ठितं तस्मादाहास्मादन्नादस्यै प्रतिष्ठाया
ऽइति ॥ १२ ॥

अथ प्राङ् प्रेक्षते । प्राची हि देवानां दिक् तस्मात्
प्राङ् प्रेक्षते ॥ १३ ॥

स प्रेक्षते । अगन्म स्वरिति देवा वै स्वरगन्म
देवानित्येवैतदाह सं ज्योतिषाभूमेति सं देवैरभूमे-
त्येवैतदाह ॥ १४ ॥

अथ सूर्य मुदीक्षते । सैषा गतिरेषा प्रतिष्ठा तदेतां
गति मेतां प्रतिष्ठां गच्छति तस्मात् सूर्य मुदी-
क्षते ॥ १५ ॥

स ऽउदीक्षते । स्वयम्भूरसि श्रेष्ठो रश्मिरित्येष वै

श्रेष्ठो रश्मिर्यत्सूर्यस्तस्मादाह स्वयम्भूरसि श्रेष्ठो रश्मि-रिति वर्चोदा ऽअसि वर्चो मे देहीति त्वेवाहं ब्रवी-मीति ह स्माह याज्ञवल्क्यस्तद्ध्येव ब्राह्मणेनैष्टव्यं यद् ब्रह्मवर्चसी स्यादित्युतो ह स्माहौपोदितेय ऽएष वाव मह्यं गा दास्यति गोदा गा मे देहीत्येवं यं कामं कामयते सोऽस्मै कामः समृद्ध्यते ॥ १६ ॥

अथावर्त्तते। सूर्यस्यावृत मन्वावर्त्त ऽइति तद्देतां गति मेतां प्रतिष्ठां गत्वैतस्यैवावृत मन्वावर्त्तते* ॥ १७ ॥

अथ गार्हपत्य मुपतिष्ठते। इयं तद्यस्माद्गार्हपत्य मुप-तिष्ठते गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद् गृहेष्वे-वैतत्प्रतिष्ठायां प्रतितिष्ठति यावद्वेवास्येह मानुष मायुस्तस्मा ऽएवैतदुपतिष्ठते तस्माद्गार्हपत्य मुप-तिष्ठते ॥ १८ ॥

स ऽउपतिष्ठते। अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासꣳ सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूया ऽइति नात्र तिरोहित मिवास्त्यस्थूरि णौ गार्ह-पत्यानि सन्त्वित्यनार्त्तानि नौ गार्हपत्यानि सन्त्वित्येवै-तदाह शतꣳ हिमा ऽइति शतं वर्षाणि जीव्यास

---

* 'मन्वावर्त्तते'—इति घ।

मित्येवैतदाह तदप्येतद् ब्रुवन्नाद्रियेतापि हि भूयांसि शताद्वर्षेभ्यः पुरुषो जीवति तस्मादप्येतद् ब्रुवन्नाद्रियेत ॥ १९ ॥

अथावर्त्तते। सूर्यस्यावृत मन्वावर्त्त ऽइति तदेतां गति मेतां प्रतिष्ठां गत्वैतस्यैवावृत मन्वावर्त्तते* ॥ २० ॥

अथ पुत्रस्य नाम गृह्णाति। इदं मेऽस्य वीर्यं पुत्रोऽनुसन्तनवदिति यदि पुत्रो न स्यादप्यात्मन एव नाम गृह्णीयात् ॥ २१ ॥

अथाहवनीय मुपतिष्ठते। प्राञ्चे यज्ञोऽनुसन्तिष्ठाता ऽइति तूष्णी मुपतिष्ठते† ॥ २२ ॥

अथ व्रतं विसृजते। इद महं य एवास्मि सोऽस्मीत्यमानुष इव वा ऽएतद् भवति यद् व्रत मुपैति न हि तदवकल्पते यद् ब्रूयादिद महꣳ सत्यादनृत मुपैमीति तद् खलु पुनर्मानुषो भवति तस्मादिद महं य एवास्मि सोऽस्मीत्येवं व्रतं विसृजेत ॥ २३ ॥ ४ ॥

॥ इति सप्तमप्रपाठके चतुर्थं ब्राह्मणम् [९. ३.] ॥

"संस्थिते यज्ञे"। याजमानकर्माभिधायि ब्राह्मण मेतत्। 'दक्षिणतः परीत्य' अध्वर्युः 'निनयति'। 'हि' यतः, 'तथा' कृते 'उदक् भवति', परीत्येत्युक्ते दक्षिणादागत्य निनयनायोदगागमनं

* 'मन्वावर्त्तते'—इति क, घ। † 'मुपतिष्ठते'—इति क।

भवति। उदपात्रनिनयनस्यानुवादो न सर्वतो विधिः। कुतः? "अथ विष्णुक्रमान् क्रमते"-इति[1] परतः 'अथ'-शब्देनानन्तर्यवचनं संयुज्य पदार्थान्तराणां विधानात्। तथा प्रागुदगित्ययं दक्षिणतः परीत्ये-त्यर्थवादोऽयम्। पूर्णनिनयने "देवलोके मेऽस्यादि। अयं यज्ञः 'असत्' भवतु। एव मर्थं यजमानो 'यजते'; 'यो यजते, स यज्ञोऽस्य (यजमानस्य) देवलोक मेवाभिप्रैति'। मां संस्कृतवानसौ, अतो मया प्रत्युपकरणीय मित्यभिप्रायः। 'तदनूची:'। दक्षतेः समृद्ध्यर्थस्य[2] 'दक्षिणा' रूपम्। यज्ञसमृद्ध्यर्थं यज्ञ मनु विलग्ना दक्षिणेति। 'दक्षिणा मन्वारभ्य'। सा हि परिक्रयार्था; ऋत्विङ्निष्पादिता परिक्रीयते, यथान्यत्रापि परिक्रयसम्बद्धः परिक्रेता, एव मत्रापि ॥ १ ॥[3]

"स एष देवयानः"। आत्मयाजिनस्तस्य कुणपादिमोक्षप्राप्तेः

---

१— इहैवोपरिष्टादष्टमकण्डिका द्रष्टव्या (६१८ पृ० १३ पं०)।

२— भ्वा० आ० ६०६ धा०।

३— ठ-पुस्तके त्विद मेव हरिस्वामिकृतं भाष्य मिहान्यथा दृश्यते। तद्यथा— "संस्थिते समाप्ते यज्ञे पूर्णपात्रासादितं जलं निनयति; अर्थादध्वर्युर्यजमानाञ्जलौ। यजमानोऽपि तदञ्जलिना प्रतिगृह्णा-तीति वक्ष्यति। यो दर्शपूर्णमासात्मना यजते, मम यज्ञोऽयं देव-लोकेऽपि असत्। लेट् लिङर्थे, स्यादित्यर्थः। एष यज्ञोऽस्य देव-लोक मेव आभिमुख्येन एति। तस्मादन्वगामिनशीला मन्वाहार्य-लक्षणशीलां यां दक्षिणां ददाति, सा देवलोकमेति। ततो दक्षिणां समृद्धिस्वरूपा मन्वारभ्य यजमानो देवलोक मेत्येव ॥ १ ॥"—इति।

देवयाजिनः पितृलोकः पन्थाः। एवञ्च केवलकर्मिणः पुनरावृत्ति-र्दर्शिता ; यतस्तत्राय मेव 'अन्वावर्त्तते'-इत्युपसंहारः[१]। "अपि हि न ऋषेर्वचः श्रुतम्—द्वे सृती अशृणवं पितृणा मित्युपक्रम्य, ज्ञान-समुच्चितकर्मिणः पुनरावृत्तिर्दर्शिता— "ते य एव मेतद्विदुः"-इत्या-दिना[२]। 'वा'-शब्दो व्यवस्थितः। 'तदुभयतः' 'अग्निशिखे' अग्निज्वाले 'ओषन्त्यौ' भस्मसात् कुर्वन्त्यौ 'सन्तिष्ठतः'। दहनात् मुक्तिरित्यर्थः। ज्ञानसहकारिकर्मकारी यजमानः 'अतिसृज्यः'। ज्ञानिनस्तौष्ण्यं पन्थानञ्च उष्णशमनसमर्थाभिरद्भिः शमयति। शान्तिसाधनं 'शान्तिः', ज्ञानसमुच्चितकर्मफलमलचालकं भवतीति सम्मतम्। केवलस्य स्वर्गादि-फलं तु कार्य्यारम्भादौपचारिक मिति ( मां कोकिलशब्देणैव गच्छ-न्तीति यतस्तेऽतः किं [?][३] ) यदि फलभोगाय देवलोकं यजमानो याति, स देव एव। स एष देवफलभोगार्थं देवानेति; "देवो भूत्वा देवानप्येतीतिवचनात्। पितृंश्च केवलात्कर्म्मणः। 'तदुभयतः' तच उभयतः, उभयोरपि मार्गयोः 'अग्निशिखे' सूर्यरश्मयः 'ओषतः' दहतः। योऽकृतकृत्यः, त मोषतः ; यस्तु कृतनियतकर्मा, त मतिसृजतः। परन्त्वनेन पूर्णसेकेन शान्ते जाते 'यः' 'प्रत्युष्यः', "उष दाहे[४]" प्रतिदहनार्हः, 'तं' 'प्रत्योषतः' प्रतिदहतः। यथा दर्शित-यज्ञादावेष एवाग्निसंयोगो निमित्त मिति, एवं तदपि ते प्रदीप्ते दहतः। 'अतिसृजेते' अतिसर्जनं विसर्जनम् ॥ २ ॥

---

१— इहैव विंशकाण्डिकान्ते द्रष्टव्यम् (६२२ पृ० ५ पं०)।

२— इहैवान्यकाण्डे ७प्र० २ब्रा० ४—१९का० (१४.९. १. ४—१९.)।

३— एष च पाठो ज-ञ-पुस्तकयोः। ४— भ्वा० प० ६९७ धा०।

"पूर्णां" । अपां पूर्णम्; 'शान्तिरापः'-इतिवचनात्[1] । उदकस्य एवं तावदाधिदैविकं निनयनस्य प्रयोजनम्[2] ॥ ३ ॥

अधियज्ञं दर्शयन्नाह—"यद्वेवेति । 'यद्वै मिथ्या क्रियते यज्ञस्य' अकरण मन्यथाकरणञ्च, 'तद् विवृहन्ति' व्यर्थं कुर्वन्ति यज्ञी-याप:, 'चण्वन्ति' "चणु हिंसायाम्"[3]; हिंसन्ति, दुःखायन्ती-त्यर्थः ॥ ४ ॥ ॥ ५ ॥[3]

---

१— इहैव पुरस्तात् (६१७ पृ० ८ पं०) द्रष्टव्यम् ।

२— का० श्रौ० सू० ३. ८. ८ । ३— त० उ० ३धा० ।

३— ठ-पुस्तके तु द्वितीयादिचतुःकण्डिकानां भाष्यास्येवम्—

"देवलोकप्राप्तौ प्रसङ्गात् मार्गान्तरं श्रुतिरेवाह—"स एषः" । स यज्ञो देवयानः देवैः प्रापणीयः, पितृभिः प्रापणीयः पितृयाणः । देवयानोऽग्निहोत्रिणा मध्वा स्वर्गगमनाय; पितृयाणोऽन्यमनुष्याणा मध्वा । तदुभयतः अमेराहवनीयादेः देवयानपितृयाणौ शिखे ऊर्द्ध्वज्वाले ओषन्त्यौ सन्तिष्ठतः । अपां शान्तिस्वरूपत्वात् तन्निनयनेन शान्तो भवति देवपन्थाः ॥ २ ॥

पूर्णां । अपांञ्जलेन निनयनधर्माच्च पूर्णाम् । सन्तत मव्यवच्छिन्नम् अनवखण्डितेन धारानिनयनेन ॥ ३ ॥

यद्वेव । यज्ञस्य यत्किञ्चिन्मिथ्या प्रमादादिना क्रियते । व्यस्य तदिति । अस्य यजमानस्य तन्मिथ्याकृतं विवृहन्ति विनाशयति, यज्ञः सम्पूर्णो भवति; च्णवन्ति छिनत्ति, तत् मिथ्यादि न दुःखायतीत्यर्थः ॥ शान्तिराप इति समानम् ॥ ४ ॥

पूर्णां । एतत् मिथ्याकृतं सन्दधाति सन्धितं करोति । सन्तत मनवखण्डितम् । तेन यज्ञस्यानुसन्धानं भवतीति शेषः ॥ ५ ॥"-इति ।

"तदञ्जलिना"[१]। यद्यपि "अनुमार्ष्टु तन्वो यद्विलिष्टम्"—इतिलिङ्गात्[२] मुखोपस्पर्शनाङ्गता मन्त्रस्य प्रतिभाति, तथापि वाक्यात्प्रतिग्रहणाङ्गता। तथाहि "यद्विवृढं[३] तत्सन्दधाति"-इतिग्रहणार्थवाद एव परतो दृश्यते, अर्थवादान्तराभावात्; अथशब्देन[४] च मुखोपस्पर्शनस्य व्यवधानादर्थवादान्तर[५]दर्शनाच्च। लिङ्गञ्चाविरुद्ध मेव; मुखवद्धस्तयोरपि शरीरैकदेशत्वात्। "यद्विवृढ मिति। यजमानस्य एव यज्ञो वर्त्तते; तत्रैव स्थितस्य 'यद्विवृढं तत्सन्दधाति'-इत्यभिप्रायः। कण्वानान्तु "तदञ्जलिना प्रतिगृह्णाति, तत्र जपति संवर्चसेति"[६]। गृह्णतः यज्ञवीर्य मत्र च जप्यमानः प्रतिग्रहणाय स्पर्शनेऽपि प्रकाशयिष्यति। कः पुनः प्रतिगृह्णाति? यजमानः; अध्वर्योर्निनयने व्यापृतत्वात्, अन्यः कोऽपीति सिद्धे आशीर्लिङ्गत्वान्मन्त्रस्य यजमान एव। तथाच यज्ञस्य "यद् विवृढं तत्सन्दधातीति (उपपत्त्या, अत उत्तरत्र[७] च "एतदु चैवैतत् कर्म कुरुते"-इतिमन्त्रवाक्यशेषैरेव च सर्व मेवातः परं याजमान मित्यवसीयते[८] ॥ ६ ॥

---

१— का० श्रौ० सू० ३. ८. ६। तन्मन्त्रस्तु वा० सं० २. २४. १।

२— वा० सं० २. २४. १ द्रष्टव्यः।

३— 'यद्वृढं'—इति क, भ।

४— 'उपशब्देन'-इति ठ (उत्तरकण्डिकारम्भे)।

५— 'व्यवधानार्थवादान्तर'-इति ठ।

६— संवर्चसेति मन्त्रस्तु वा० सं० २. २४. १।

७— ७ क० द्रष्टव्या।

८— उपपत्त्येत्यादिग्रन्थः ठ-पुस्तके नास्ति।

"अथ मुखम्"[१]। "एतद् वैवैतत्कर्मात्मन् कुरुते"-इतिशेषाद् यजमान आत्मीय मेव मुख मद्भिरुपस्पृशत इति गम्यते। यस्मात् कारणात् मुखं स्पृशति, 'तद् द्वयम्' द्वे ते कारणे इत्यर्थः। तत्रैकं तावत्— 'अमृतेनैवैतदात्मानं संस्पृशते'-इति। कथ मद्भिः संस्पृश्यमाने अमृतेन संस्पृशते? तदाह— "अमृतं वा आपः"-इति। यत्ते देवाना मन्न ममृतम्, ता आपः; आप एव हि शुद्धतमा अमृत मित्यभिप्रायः। अमृतसंस्पर्शनं यजमानेन कर्त्तव्य मित्येकं कारणम्। अपर मपि— 'एतच्च कर्म आत्मनः कुरुते' यजमानः। कथम्? यज्ञो वा आपः; आपश्च संश्लेषणहेतुरित्यभिप्रायः॥ ७॥

"अथ विष्णुक्रमान्"[२]। ('विष्णोः यज्ञस्य') सम्प्रवेश मिव दत्त्वा 'देवान् प्रीत्वा', (देवेषु मध्ये) 'अपित्वी' भागी 'भूत्वा' च उपेति विष्णुक्रमैर्देवयाजीत्यर्थः। "अनुपसर्गाद्वा"-इति[३] क्रमेरात्मनेपदम्॥ ८॥[४]

---

१— का० श्रौ० सू० ३. ८. १०। "एतच्चार्थकर्म, ततश्चान्तापच्छिन्नादौ न भवति"—इति च तद्वृत्तौ याज्ञिकदेवः।

२— का० श्रौ० सू० ३. ८. ११। मन्त्रास्तु वा० सं० २. २५. १, २, ३।

३— पा० सू० १. ३. ४३।

४— इहाप्यन्यथा भाष्यं ठ-पुस्तके। तद्यथा—

"अथ विष्णुक्रमान्। विष्णोर्यज्ञस्य क्रमणं विष्णुक्रमस्तं विष्णुप्रवेश मेव कुरुते। देवान् वा। देवानेतान् एष यजमानः प्रीतान् करोति, यो हविर्यज्ञं संस्थापयति। त्वच्छब्दः समुच्चये। ऋगादिभिर्देवान् प्रीत्वा तेषु देवेषु मध्ये भागवान् भवति। भागित्वं प्राप्य तान् विष्णुक्रमानेव सर्वतोभावेन प्रक्रामति॥ ८॥"—इति।

"यद्वेव विष्णुक्रमान्"। यजमानशरीरस्थ एव 'यज्ञो विष्णुः' यजमानार्थं 'विक्रमते'।[1] 'तद्वै' तत्र 'इत एव' लोकात् 'पराचीनम्' ऊर्द्ध्वम्, अन्तरिक्षं दिव मित्येवं 'भूयिष्ठा इव' बहुतमा इव 'क्रमन्ते' ॥ ९ ॥

विष्णुक्रमणे मन्त्राः[2]— "तदु तत् पृथिव्याम्"—इति। प्रथमा। "इत्येव मिमांल्लोकान्"-इति उत्तरपक्षस्यार्थवादः। गम्यत इति 'गतिः', प्रतितिष्ठन्त्यस्या मिति 'प्रतिष्ठा'। 'तस्य' आदित्यस्य 'ये रश्मयः' कदम्बकेसरवदनन्तभेदाः, 'ते सुकृतः' ये पूर्वे यजमानाः तेजःशरीराः। उपरित[न] मेव 'यद्' यज्ञरूपः 'प्रजापतिः', 'स्वर्गो वा लोकः' अज्ञानानां कर्मकर्तॄणां प्रजानां पतिः, ज्ञानिना मुपभोग्यं स्थानम्, 'तत्' तत्र; ते गच्छन्तीत्यभिप्रायः। 'भाः' प्रकाशमात्रं सूर्यरूपम्। (पक्षान्तरोपन्यासः।) "परस्तात् त्वेव"। 'तु'-शब्दः स्वशब्दार्थे, 'एव'-इत्यवधारणार्थः। 'इतः' अस्मादेव लोकात् 'अनुशासनम्' अस्मिन्नेव लोके फलोपभोगं बहुकाल माशास्ते, सः

---

१— ठ-पुस्तके त्वेतदुत्तर मेष ग्रन्थोऽधिकः—

"विष्णुरेव देवेभ्योऽर्थायेमां विष्णुक्रमलक्षणां विक्रान्तवान्। प्रथमेन पादेन पृथिवीक्रमलक्षणेन, पस्पार। "स्पृ प्रीतिचलनयोः" लिट्। द्वितीयेन पादेनान्तरिक्षं विक्रान्तवान्। उत्तमेन दिवि क्रमणात्मकेन। एतां विष्णुक्रमात्मिकां यज्ञो विक्रमते। तस्माद्धेतोः विष्णुक्रमान् क्रमते॥"—इति।

२— वा० सं०,२. २५. ३, २, १ द्रष्टव्याः।

'अर्वाङ्' विक्रमणेनैव 'यस्मात्' अध्वर्यवः 'परस्मात्' क्रमेत, 'तत् द्वयं' कारणम् ॥ १० ॥[१]

"अपसरणतो ह"। जितापसरणेन जितवन्तो द्युलोकाख्यम्, अस्माल्लोकादपसृत्य असुरान् हतवन्तः देवाः। द्वितीयश्च फलोपभोगानन्तरं प्रतिष्ठायां प्रच्युतानां स्वर्गाल्लोकान्निरुपद्रवात्। ततश्च यदितः पराचीनं क्रमेत, तदेतां गतिं गत्वा 'प्रतिष्ठायां प्रतितिष्ठति' ॥ ११ ॥[२]

"तदु तद्दिवि"[३]। यद्धि स्वर्गे अनाद्यम्, तदप्यस्मिन्नेव लोके

---

१— "तदु तत् पृथिव्याम्। प्रसन्ना। इमान् पृथिव्यन्तरिक्षद्युसञ्ज्ञकान्, एवं समारूढान् कृत्वा अनन्तरम्। विष्णुक्रमणस्यार्थवादः— एषा गतिः। गम्यत इति गतिः, प्रतिकूलं तिष्ठत्यस्या मिति प्रतिष्ठा। य एष आदित्यः, तस्यादित्यस्य ये रश्मयः किरणकदम्बाः, ते सुकृत इति। अथेति। पर मुत्कृष्टं भासनं प्रजापतिर्वा, स एव स्वर्गो लोको निरुपद्रवत्वात्। एवम्प्रकारेण यज्वा एतां गतिं प्रतिष्ठां प्राप्नोति, परस्मात्तु अर्वाङ् अर्वाग्गमनशीलः क्रमेत, इतो लोकादनुप्रासनं कर्त्तु मिच्छेत्। इयम्, इहामुत्रलक्षणम् अर्वाग्गमश्चेति ॥१०॥"— इतीद मेव भाष्यं ठ-पुस्तके।

२— अत्र ठ-पुस्तकलिखितं भाष्यपाठान्तरं चैतत्—

"अपसरणतः। जयन्तो देवा दिव मग्रे, ततोऽन्तरिक्षम्। इतः अपसरणात् एतदाचरणादेव सम्पन्नाञ्छत्रून् व्यथितवन्तः। एव मस्याचरणस्यापि भवति। इयं वै इति। अतिरोहितम् ॥ ११ ॥"—इति।

३— दिवीत्यादयः प्रतिष्ठाया इत्यन्ताः पञ्च मन्त्राः वा० सं० २. २५. १–५। तत्र "अस्मादस्मादिति भाग मवेक्षते"—इति का० श्रौ० सू०

प्रतिष्ठितम् ; चन्द्रमसोऽप्याप्यायनं प्रतिपदि साम्राज्येन क्रियते ; अतः 'अस्मादस्मात्' निष्काशने द्विषन् सर्वस्मान्निष्काशितो भवति ॥ १२ ॥[१]

"अथ प्राङ् प्रेक्षते"[२]। प्राङ्निरीक्षणेन सन्तर्पिता गच्छन्तो देवा निरीक्षिता भवन्तीत्यभिप्रायः[३] ॥ १३ ॥

"स प्रेक्षते"[४]। मञ्चाः क्रोशन्तीतिवत् 'स्वर्=देवाः'; तेजः-शरीरत्वात् ज्योतिर्=देवाः। 'समभूम' तद्देवत्वं प्राप्ता इत्यर्थः ॥ १४ ॥[५]

"अथ सूर्य मुदीक्षते"[६]। (सूर्यः खलु) यज्ञकर्त्तॄणां गन्तव्यं प्रतिष्ठा च[७] ॥ १५ ॥

"स उदीक्षते"[८]। तेजोधनो रश्मिशब्देनोच्यते। 'एषः' तेषा मति-

---

३. ८. १३। "अस्यै प्रतिष्ठाया इति भूमिम्"–इति च तदुत्तरसूत्रम् (१४)। 'भूमिम्' वेदिभूमिम्; उपविष्ट एव।

१— इह चास्ति ठ–पुस्तकस्थता पाठान्तरता। तद्यथा—

"इत ऊर्द्धा वेदीति तत्प्रकार माह— "तदु तदिति। दिवि अन्तरिक्षे पृथिव्या मस्मादन्नाद्भागलक्षणात्। अस्यै प्रतिष्ठायाः वेदेः। यावती वै वेदिस्तावती पृथिवीति ॥ १२ ॥"–इति।

२— का० श्रौ० सू० ३. ८. १५। वा० सं० २. २५. ६।

३— ठ–पुस्तके त्विह 'प्रसन्ना'–इत्येव।

४— का० श्रौ० सू० ३. ८. १६। वा० सं० २. २५. ७।

५— "स प्रेक्षते। स्वरिति। यज्ञो ह वै स्वरिति यज्ञदेवसूर्य्याः स्वः-शब्दवाच्याः, अत्र देवा अभिप्रेताः; देवानगन्मेति ॥ १४ ॥"–इति ठ।

६— का० श्रौ० सू० ३. ८. १७। वा० सं० २. २६. १।

७— एषा तु 'प्रसन्ना'–इत्यव्याख्यातैव ठ–पुस्तके।

८— का० श्रौ० सू० ३. ८. १८। वा० सं० २. २६. २।

मयः। 'याज्ञवल्क्य इत्याह स्म'– 'वर्चोदा अधि वर्चो मे देहीति (एत देवाशास्महे वयम्) 'अहमिति ब्रवीमि'। 'ब्राह्मणेन तदेष्टव्यम्' 'यत्' अहं ब्राह्मण्ययुक्तः स्या मिति तु 'आह स्म' उक्तवान् 'औपोदितेयः'। उपगम्य उदिता पितुरुपोदिता; "स्त्रीभ्यो ढक्[१]"; उपोदिताया अपत्य मिति विग्रहः। 'गा दास्यति' इति गो-प्रार्थना। 'एवं' प्रजादिष्वपि वक्तव्यम् ॥ १६ ॥[२]

"अथावर्त्तते"[३]। प्रदक्षिण मावर्त्तते। एवं तस्य सूर्यस्यानु-वृत्तिः[४] ॥ १७ ॥

"अथ गार्हपत्यम्"[५]। कारणद्वयं तस्याप्युपस्थाने। सूर्योप-स्थानादिना स्वर्गतिः, गार्हपत्योपस्थानेन स्वगृहे प्रतितिष्ठति। द्वितीयश्च 'यावद्देवास्येह' मानुषायुष 'उपतिष्ठते' ॥ १८ ॥[६]

---

१— पा० सू० ४. १. १२० ।

२— एतद्भाष्यस्याप्यन्यविधं ठ–पुस्तके। तद्यथा—

"स उदीच्यते। प्रसन्ना। 'इति त्वेवाहं' इत्येवाहं ब्रवीमि। वर्च एव याचते। ब्राह्मणेन तद्धि एष्टव्य मेव यतो ब्रह्मवर्चसी स्यात्। उप समीपे उदिता आदित्यो यस्य इत्युपोदिता, तस्या अपत्य मौपोदितेयः। एष राजा मह्यं सम्प्रदानभूताय गाः पयस्वतीः दास्यति। हे गोदाः मे मह्यं गाः देहि। एव मित्याद्याशीः ॥ १६ ॥"–इति।

३— का० औ० सू० ३. ८. १६। वा० सं० २. २६. ३।

४— इय मप्यव्याख्याता प्रसन्नेति ठ–पुस्तके।

५—का० औ० सू० ३. ८. २१।

६— एतद्भाष्यस्यान्यविधं ठ–पुस्तके। तद्यथा—

"अथ गार्हपत्यम्। द्वयं गतिप्रतिष्ठात्मकं गार्हपत्योपस्थाना-

"स उपतिष्ठते"[1]। 'अस्थूरिणौ' असहाय-गो-वाह्यः स्थूरः, तत्रा-सहायमात्रं लक्ष्यते; स्थूरोऽस्मिन्नस्तीति स्थूरी, न स्थूरी अस्थूरी, ससहायिनौ। तत्र गार्हपत्ये कर्मणि प्रवृत्ते अहमिन्धनादिना पालकः, अस्थूरी गृहपतिः; त्वम् कर्मणाम्[2]। अत आह—"अनार्त्तानीति। अस्थूरित्वेन च सामर्थ्यताच्चिरं यजमानस्य जीवित मिति "शतं वर्षाणि जीव्यास मित्याह"-इति[3] विवृणोति॥ १९ ॥[4]

---

दवाप्यते। गृहा वै इत्याद्याशीः प्रवर्त्तनार्था। यावदिति। उ इति अनेककर्मा निपातः। यावत्प्रमाणा मस्य पुरुषस्य आयुर्जीवनम्, तस्मै एतदायुषे उपतिष्ठते। तस्मादिति निगमः॥ १८॥"—इति।

१— वा० सं० २. २७. १।

२—"'अस्थूरि' अस्थूरीणि। एकाश्वयुक्तः शकटः स्थूरिरित्युच्यते, तद्विपरीतो बहुभिरश्वैरुपेतः शकटोऽस्थूरिः। तेन च सम्पूर्णता लक्ष्यते"—इति ऋ० सं० ६. १५. १९ सा० भा०। "एकपार्श्वे बलीवर्दयुक्तं शकटं स्थूरि, न स्थूरि अस्थूरि। लुप्तोपमानम्"—इति वा० सं० २. २७. १ मही० भा०। इहोत्तरत्रापि पुनः श्रोष्यति ३. ७. ४. १०। का० श्रौ० सू० ६. ४. ३ अपि द्रष्टव्यम्।

३—"शतं हिमा इति ब्रूयाद्वा"—इति का० श्रौ० सू० ३. ८. २२।

४— ठ-पुस्तके त्वतोऽधिकोऽप्येष पाठः—

"स उपतिष्ठते। अग्ने इति। गृहपत्योः परस्पर माशंसन स्फुटतर मेव। अस्थूरि। असहायगोवाह्यः स्थूरः, तत्रासहायमात्रं लक्ष्यते; स्थूरोऽस्मिन्नस्तीति स्थूरि, अस्थूरि सहाययुक्तः त्वम्। अत आहानार्त्तानीति। अस्थूरित्वेन च सामर्थ्याच्चिरं यजमानस्य जीवित माशास्ते— शतं हिमा। वर्षाणि शतसङ्ख्याकानि जीव्यासम्। इत्याहेति विवृणोति— एतत् ब्रुवन् अपि न आद्रियेत। तेन अपि

"अथावर्त्तते"[1]। मन्त्रवर्णात् प्रादक्षिण्यम्; — "सूर्यस्यावृत मन्विति मन्त्रे[2] दृश्यते, सूर्यो हि प्रादक्षिण्येन गच्छति। 'एतस्यैव' सूर्यस्य[3] ॥ २० ॥[4]

"अथ पुनस्य"[5]। कथं पुनर्गृह्णाति? "ततोऽसि तन्तुरसि"-इत्येतस्मिन्मन्त्रे[6] तत्पदैरेकवाक्यभूतं गृह्णाति। कुतः? काण्वसमाम्नानात्। "इदं मे कर्म, इदं वीर्यम्, पुत्रो देवदत्तोऽनुसन्तनवत्"-इति। किमर्थं नाम गृह्णाति? 'इदं मे' 'वीर्यं' विक्रमम्, 'पुत्रः' देवदत्तादिः 'अयम्' 'अनुसन्तनवत्' अनुसन्तनोतु। कथम्? 'मे' मम 'इदं वीर्य मनुसन्तनवदिति' मा विच्छिन्द्यादित्येवमर्थम्।

---

वर्षेभ्यः शतात् वर्षशत मतीत्यापि पुरुषो जीवति। तस्मादिति निगमनम् ॥ १९ ॥"-इति।

१— का० श्रौ० सू० ३. ८. २३। २— वा० सं० २. २७. २।

३— अत्र "गच्छति प्राङुदङ्विष्वाविति"-इति च का० श्रौ० सू० ३. ८. २४। मन्त्रस्तु— वा० सं० ५. ३८. १।

४— इहाप्यन्यविध मेव भाष्यं ठ-पुस्तके। तद्यथा—

"अथावर्त्तते। सूर्यस्य आवर्त्तन मावृत्, ता मन्वावर्त्तते। तदेता मिति निगदव्याख्यातम्। श्रुत्या मन्त्रवर्णात्प्रदक्षिणं समावृत्याग्निषं गृह्णीयात् ॥ २० ॥"-इति।

५— का० श्रौ० सू० ३. ८. २५।

६— एष मन्त्रः शाखान्तरीय इति का० श्रौ० ३. ८. २५ सूत्रे पूर्ण एव संस्मृतः। तद्यथा—"ततोऽसि तन्तुरस्यनु मा तनुह्यस्मिन् यज्ञेऽस्याॅं साधुकृत्याया मस्मिन्ब्रह्मेऽस्मिंल्लोक इदं मे कर्मेदं वीर्यं पुत्रोऽनुसन्तनोतु"-इति।

(पक्षान्तर माह[1]—) 'यदि पुत्रो न स्यात्' कथञ्चित् पुत्ररहितश्चेत्, अजातपुत्रो मृतपुत्रो वा, तदा 'आत्मनो नाम गृह्णीयात्'। तथाच[2] "इदं मे कर्मेदं वीर्यं देवदत्तोऽहं सन्तनवानि"-इति नाम ग्रहणम्[3] ॥ २१ ॥

"अथाहवनीयम्"[4]। (गार्हपत्योपस्थानादिकर्मणा यत् पदं न प्राप्नोति, अतः[5]) उपस्थानयज्ञक्रिया प्रत्यक्संस्था जाता; सा च जघन्या, अधोगतित्वात्; अत आहवनीयोपस्थानं विधत्ते प्राक्-संस्थित्यै। अपिच प्रत्यग्गमनशब्दो हि नरकपातवाचकः; एव-ञ्चाधोगतिर्यज्ञस्य स्यात्। "तूष्णी मिति[6]। सामर्थ्यान्मन्त्रे प्राप्ते तूष्णी मुपस्थानं विधेय मिति मन्त्रनिवृत्तिः क्रियते[7] ॥ २२ ॥[8]

---

१— ठ-पुस्तके त्विदेष पाठोऽधिकः।

२— तथाचेत्यादिग्रन्थस्तु ठ-पुस्तके नास्ति; अस्ति च तत्रैष ग्रन्थः— 'अतो जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति सम्मतम्'—इति।

३— "अनेकेषु पुत्रेषु सर्वेषां ज्येष्ठस्य पुत्रस्य नामाभिव्याहृत्य"—इति साङ्ख्यायनः २. १२. ११। "प्रियस्य पुत्रस्य नाम गृह्णाति"—इत्या-पस्तम्बः ४. १६. ४। ४— का० श्रौ० सू० ३. ८. २८।

५— बन्धनीचिह्नान्तर्गत एष पाठः झ-ञ-पुस्तकयोरधिकः।

६— 'तूष्णी मिति लौकिकवागुच्चारणनिषेधः क्रियते; मन्त्राभावात्। एवञ्च तत्समीपे स्थित्वा तं विलोकयत्येव'—इतीह याज्ञिकदेवः।

७— अथ विष्णुक्रमानित्यारभ्य आहवनीयोपस्थानान्तं कर्म विष्णुक्रमसञ्ज्ञं भवति (का० श्रौ० ३. ८. २८ सू० या० दे० वृ०)।

८— "अथाहवनीयम्। प्राक्संस्थं यज्ञस्याशास्ते। तूष्णी मेवोपस्थानम ॥ २२ ॥"—इत्येव भाष्यं दृश्यत इह ठ-पुस्तके।

"अथ व्रतम्"[१]। पूर्वोक्ता मितिकर्त्तव्यता मनूद्य यज्ञसमाप्तिः व्रतविसर्गसम्बद्धा विधीयते ; यदिद मुक्तं "संस्थिते"–इति[२], तदिद मवसरप्राप्तं व्रतं विसृजते। स्वशाखायाम् "इद मह मनृतात् सत्य मुपैमि"–इति[३]मन्त्रोच्चारोऽभिप्रेतः[४] ; अत एव पश्चान्मन्त्रोपन्यासो न कृतो भगवत्या श्रुत्या ॥[५]

समाप्तोऽयं पौर्णमासः, सर्वास्विष्टिषु पशुबन्धेषु यागेषु सौत्रामण्यां च प्रकृतिभूतः। यद्यप्ययं कृताधानस्य भवति, तथापि आधानेष्टीनां तनूहविस्संज्ञकानां पौर्णमासयागः प्रकृतिः, तस्मात्

---

१— का० श्रौ० सू० ३. ८. २९। २— १. १. ३६ ( ६पृ० ३पं० )।

३— वा० सं० १. ५. १। इह च पुरस्तात् १. १. ४।

४— पूर्वं हि व्रतग्रहणे द्वौ मन्त्रावुक्तौ "अग्ने व्रतपते"–इति ( ५पृ० १३पं० ), "इद मह मनृतात्"–इति च (६पृ० ८पं०)। तत्र यद्यग्ने व्रतपत इति गृहीतम्, तदा "अग्ने व्रतपते व्रत मचारिषम्"–इति (६पृ० ३पं०) विसर्गः कार्यः ; यदीद मह मिति गृहीतम्, तदा "इद मह य एवास्मि सोऽस्मीति"–इति ( ६पृ० १३ पं० ) विसर्गः कार्य इति कातीयश्रौतसूत्राभिप्रेतः। ३. ८. २९ सू० द्रष्टव्यम्।

५— "अथ व्रतम्। व्रत मिति कर्मणो नामधेयम्। तस्य विसर्गं कुरुते यजमानः इद मह मिति। यद् व्रतं विसृजते, तेन व्रतो ऽमानुष इव देव इव भवति। न ह्येति। मन्त्ररूपान्तरं दूषणम्। व्रतविसर्गानन्तरं पुनः मानुषो जायते, तस्मादिद मह मित्येतेन मन्त्रेण व्रतं विसृजेतेति विधिः। तदु खल्वित्यवधारणार्थः ; "अथाप्युकार एतस्मिन्नेवार्थे उत्तरेण"–इतिस्मरणात् ( निरु० १.२.६. )। खलु पदं सत्यवचनसिद्धये, स वै सत्य मेव वदेदित्यादि विध्यर्थम् ॥ २३ ॥"–इति ठ-भाष्यम्।

पूर्व मुपदेश्यः। ननु तर्हि तनूहविषा मेव सर्वेष्टिप्रकृतित्वं कृत्वा तान्येव पूर्वं कस्मान्नोपदिष्टानि ? सत्यम् ! किन्तु तेष्वितिकर्त्तव्यता-वैकृत्यदर्शनात् सर्वप्रकृतित्वं न सम्भवति, तस्मात् पौर्णमासयाग एव पूर्व मुपदिष्टः[१] ॥ २३ ॥ ४ ॥ [९. ३.] ॥

इत्याचार्यहरिस्वामिनः कृतौ शतपथभाष्ये
नवमस्य तृतीयं ब्राह्मणम्[२] ॥

---

१— "त्रिंशतं वर्षाण्येव दर्शपूर्णमासाभ्यां यजेत। पञ्चदश दाक्षायण-याजी। अग्निहोत्र मेव वा जुहुयात्"–इति का० श्रौ० सू० ४. २. ४७. ४८. ४९। 'दाक्षायणयाजी' दाक्षायणयज्ञसञ्ज्ञक-दर्शपूर्णमासयाजीत्यर्थः। दाक्षायणो नाम न कर्मान्तर मपि तु दर्शपूर्णमासविशेष एवेति च तत्रैव तत्प्रकरणे स्फुटम् (४. ३. १—३.)। तृतीयसूत्रे चेह एवशब्दः खल्विवार्थो विवक्षितः; आपस्तम्बसूत्राद्यनुरोधात् (३. १४. ८—१३.)। तथाच यथाग्नि-होत्रं यावज्जीवं जुहुयात्, तथा दर्शपूर्णमासावपीत्यर्थो लभ्यते। तदेवं यावज्जीवं त्रिंशद्वर्षाणि वेति साधारणकालविधिः, दाक्षायण-याजिनां तु यावज्जीवं पञ्चदश वर्षाण्येव वेति च।

२— एतस्मिन् ब्राह्मणे तावत् पूर्णपात्रनिनयनम्, विष्णुक्रमणम्, व्रत-विसर्जनञ्चेति त्रीणि कर्माणि विहितानि। तत्रेयं पद्धतिः — अध्वर्युः पूर्णपात्र मादाय पूर्वेणाहवनीयं परीत्य दक्षिणत उत्तराभिमुखो यजमानस्याञ्जलौ सन्ततं निनयति, निनीयमानं पूर्णपात्रं यज-मानोऽञ्जलिना प्रतिगृह्णाति। ततस्तूष्णीं मुखं विमृष्टे। अत आरभ्य भागप्राशनान्तं सर्वं कर्म यजमानः करोति। तत उत्थाय दक्षिणवेदिश्रोणेरारभ्याहवनीयादर्वाक् विष्णुक्रमान् क्रमते।

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः ।
श्रुत्यर्थं दर्शयामास[1] शक्तितः पौष्करीयकः ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः[2] ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ[3] शतपथभाष्ये
नवमोऽध्यायः समाप्तः ॥ ९ ॥

## ॥ इति सप्तमः प्रपाठकः समाप्तः[4] ॥

---

तत्रैव स्वं भाग मवेक्षते, प्राचीं दिश मवेक्षते, सूर्य मीक्षते, सूर्यं प्रार्थयते, सूर्यस्य प्रदक्षिण मावर्त्तनं करोति, अप्रदक्षिणं चावर्त्तते, ततो गार्हपत्यसमीपे आगत्य त मग्नि मुपतिष्ठते, पुनस्तथैव प्रदक्षिण मप्रदक्षिणञ्च सूर्य मावर्त्तते। ततो गार्हपत्यात् प्राच्यां गत्वोपविष्टः पुत्राणां नाम गृह्णाति, अविद्यमाने पुत्रे त्वात्मनामग्रहणम्। तत उत्थाय तूष्णी माहवनीय मुपतिष्ठते। एतदन्तं गतं विष्णुक्रमणम्। तत आहवनीयस्याग्रे स्थित्वा व्रतं विसृज्य पूर्वेणाहवनीयं दक्षिणाग्नेश्चोत्तरेण गत्वाग्न्योरन्तरालेन निष्क्रामेत्। ततो भागप्राशन-ब्राह्मणभोजने। समाप्ता चेत्थं दर्शपूर्णमासेष्टिरिति शम्॥

१— 'श्रुत्यर्थविवृतिं चक्रे'–इति ठ। २— 'शासितुः'–इति ठ।

३— 'इत्याचार्यवर्यश्रीहरिस्वाम्युत्प्रेक्षिते'–इति ठ।

४— इत उत्तर मिदं 'काण्डी ११४'–इति क, घ; 'कण्डिकासङ्ख्या

भूभर्त्रा विक्रमार्केण कृप्तां कनकवेदिकाम् ।
दानायाध्यास्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ १ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां
शुक्लयजुर्वेदीये माध्यन्दिनीयशतपथब्राह्मणभाष्ये
हविर्यज्ञं नाम

## प्रथमं काण्डं समाप्तम्[1] ॥

---

११४'–इति च । तत्र १ब्रा० २७ क०, २ब्रा० २९ क०, ३ ब्रा० ३५ क० ४ ब्रा० २३ क० । तदासां सङ्कलनयास्मिन् प्रपाठके ११४ कण्डिकाः सम्पन्नाः ।

१— अथ प्रथमे काण्डे ८३८ कण्डिकाः श्रुताः । तत्र प्रथमे प्रपाठके १२१, द्वितीये १२२, तृतीये १२८, चतुर्थे १२१, पञ्चमे च १२१, षष्ठे १११, सप्तमे ११४ । तदासां सङ्कलनया ८३८ इति सिद्धम् ॥

..sc. 1–4 @ 2/ ... ... ... Rs. 8 0
. arvan, (Text) Fasc. 1–5 @ /6/ each ... ... ... 1 14
,ta-Paingalam, Fasc. 1–7 @ /6/ each ... ... ... 2 10
ithivirāj Rāsa, (Text) Part II, Fasc. 1–5 @ /6/ each ... ... 1 14
Ditto (English) Part II, Fasc. 1 ... ... ... 0 12
ākṛta Lakṣaṇam, (Text) Fasc. 1 ... ... ... ... 1 8
.rāçara Smṛti, (Text) Vol. I, Fasc. 1–8; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6 @ /6/ each ... ... ... ... ... 7 8
.rāç.ra, Institutes of (English) ... ... ... ... 0 12
abandhacintāmaṇi (English) Fasc. 1–3 @ /12/ each ... ... 2 4
Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5–10; II, 1–6; III, 1–7; IV, 1–6; V, 1–8, @ /6/ each Fasc. ... ... 12 6
āṅkhya Sūtra Vṛtti, (Text) Fasc. 1–4 @ /6/ each ... ... 1 8
Ditto (English) Fasc. 1–3 @ /12/ each ... ... 2 4
uçruta Saṁhitā, (Eng.) Fasc. 1 @ /12/ ... ... ... 0 12
Taittereya Saṁhitā, (Text) Fasc. 14–45 @ /6/ each ... ... 12 0
āṇḍya Brāhmaṇa, (Text) Fasc. 1–19 @ /6/ each ... ... 7 2
attva Cintāmaṇi, (Text) Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–10, Vol. III, Fasc. 1–2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1–5, Part IV, Vol. II, Fasc. 1–12 @ /6/ each ... ... ... ... 14 10
rikāṇḍa-Maṇḍanam, (Text) Fasc. 1–2 @ /6/ ... ... ... 0 12
'ul'si Sat'sai, (Text) Fasc. 1–5 @ /6/ each ... ... ... 1 14
'pamita-bhava-prapañca-kathā (Text) Fasc. 1–5 @ /6/ each ... 1 14
vāsagadasāo, (Text and English) Fasc. 1–6 @ /12/ ... ... 4 8
arāha Purāṇa, (Text) Fasc. 1–14 @ /6/ each ... ... ... 5 4
.rsa Krya Kaumudi, Fasc. 1–6 @ /6/ ... ... ... 2 4
'āyu Purāṇa, (Text) Vol. I, Fasc. 2–6; Vol. II, Fasc. 1–7, @ /6/ each ... ... ... ... ... ... 4 8
'idhons Pariguta Fasc. I ... ... ... ... 0 6
Viṣṇu Smṛti, (Text) Fasc. 1–2 @ /6/ each ... ... ... 0 12
Vivādaratnākara, (Text) Fasc. 1–7 @ /6/ each ... ... ... 2 10
Vṛhannāradīya Purāṇa, (Text) Fasc. 1–6 @ /6/ ... ... ... 2 4
Vṛhat Svayambhū Purāṇa, Fasc. 1–6 ... ... ... 2 4

## *Tibetan Series.*

Pag-Sam Ṭhi S'iñ, Fasc. 1–4 @ 1/ each ... ... ... 4 0
Sher-Phyin, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1–5, @ 1/ each ... ... ... ... ... ... 13 0
Rtogs *brjod dpag hkhri* S'iñ (Tib. & Sans.) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... ... 10 0

## *Arabic and Persian Series.*

'Ālamgīrnāmah, with Index, (Text) Fasc. 1–13 @ /6/ each... ... 4 14
Al-Muqaddasi (English) Vol. I, Fasc. 1–3 @ /12/ ... ... 2 4
Āīn-i-Akbarī, (Text) Fasc. 1–22 @ 1/ each ... ... ... 22 0
Ditto (English) Vol. I, Fasc. 1–7, Vol. II, Fasc. 1–5, Vol. III, Fasc. 1–5, @ 1/12/ each ... ... ... ... 29 12
Akbarnāmah, with Index, (Text) Fasc. 1–37 @ 1/ each ... ... 37 0
Ditto English Fasc, 1–8 @ 1/ each ... ... ... 8 0
Arabic Bibliography, by Dr. A. Sprenger ... ... ... 0 6
Bādshāhnāmah, with Index, (Text) Fasc. 1–19 @ /6/ each ... ... 7 2
Catalogue of Arabic Books and Manuscripts ... ... ... 1 2
Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1–3 @ 1/ each ... ... 3 0
Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1–21 @ 1/ each ... ... ... ... ... ... 21 0
Farhang-i-Rashīdī, (Text) Fasc. 1–14 @ 1/ each ... ... 14 0
Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1–4 @ /12/ each ... ... ... ... ... ... 3 0
Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1–9 @ /6/ each ... ... 3 6
Ditto of Āzādī, (Text) Fasc. 1–4 @ /6/ each ... ... 1 8
Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... 0 12
History of the Caliphs, (English) Fasc. 1–6 @ /12/ each ... ... 4 8
Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1–3 @ /6/ each ... ... 1 2
Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... ... 38 4
Maāṣir-ul-Umarā, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–9; Vol. III, 1–10; Index to Vol. I, Fasc. 10–11; Index to Vol. III, Fasc. 11–12; Index to Vol. II, Fasc. 10–12 @ /6/ each ... ... ... 13 2
Maghāzi of Wāqidī, (Text) Fasc. 1–5 @ /6/ each ... ... 1 14

**The other Fasciculi of these works are out of stock, and complete copies cannot upplied.**

Muntakhabu-t-Tawārīkh, (Text) Fasc. 1–15 @ /(
Muntakhabu-t-Tawārīkh, (English) Vol. I, Fasc. 1–5 and 3 Indexes; Vol. III, Fasc. 1 @ /12/ each ...
Muntakhabu-l-Lubāb, (Text) Fasc. 1–19 @ /6/ each ...
Ma'āṣir-i-'Ālamgīrī, (Text), Fasc. 1–6 @ /6/ each ... .
Nukhbatu-l-Fikr, (Text) Fasc. 1 ... ... ... .
Niẓāmī's Khiradnāmah-i-Iskandari, (Text) Fasc. 1-2 @ /12/ each
Riyāẓu-s-Salātīn, (Text) Fasc. 1–5 @ /6/ each ... ... .
Ditto Ditto (English) Fasc. 1–3 ... ... .
Tabaqāt-i-Nāṣirī, (Text) Fasc. 1–5 @ /6/ each ... ... .
Ditto (English) Fasc. 1–14 @ /12/ each ... .
Ditto Index ... ... ... .
Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barni (Text) Fasc. 1–7 @ /6/ each.
Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, (Text) Fasc. 1–6 @ /6/ each.
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... .
Wīs o Rāmīn, (Text) Fasc. 1–5 @ /6/ each ... ... .
Ẓafarnāmah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1–8 @ /6/ each .
Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 ... ... ... .

---

ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES, Vol. VII, Vols. XI and XVII, and Vols. XI and XX @ 10/ each ... ... ... ... .
2. PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ pe No.; and from 1870 to date @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 184 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 187 8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8 1900 (7) & 1901 (7), @ 1/8 per No. to Members and @ 2/ per No. Non-Members.
*N.B.—The figures enclosed in brackets give the number of Nos. in each V*
4. Centenary Review of the Researches of the Society from 1784–1883 .
A sketch of the Turki language as spoken in Eastern Turkistan, b R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... ... .
Theobald's Catalogue of Reptiles in the Museum of the Asiatic Societ (Extra No., *J.A.S.B.*, 1868) ... ... .. ..
Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No *J.A.S.B.*, 1875) ... ... ... ... ..
Introduction to the Maithilī Language of North Bihār, by G. A Grierson, Part II, Chrestomathy and Vocabulary (Extra No *J.A.S.B.*, 1882) ... ... ... ... ..
5. Anīs-ul-Musharrahīn ... ... ... ... ..
6. Catalogue of Fossil Vertebrata ... ... ... ..
7. Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bio
8. Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each..
9. Jawāmlu-l-'ilm ir-riyāẓī, 168 pages with 17 plates, 4to. Part I .
10. Khizānatu-l-'ilm ... ... ... ... .
11. Mahābhārata, Vols. III and IV, @ 20/ each ... ... ..
12. Moore and Hewitson's Descriptions of New Indian Lepidopter Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ..
13. Sharaya-ool-Islām ... ... ... ... ..
14. Tibetan Dictionary, by Csoma de Körös ... ... ..
15. Ditto Grammar " " ... ... ..
16. Kaçmiraçabdāmṛta, Parts I & II @ 1/8/ ... ... ..
17. A descriptive catalogue of the paintings, statues, &c., in the rooms o the Asiatic Society of Bengal by C. R. Wilson... ... .
18. Memoir on maps illustrating the Ancient Geography of Kaśmir b M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... ... ..

---

Notices of Sanskrit Manuscripts, Fasc. 1–29 @ 1/ each ... ..
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ..
*N.B.*—All Cheques, Money Orders, &c., must be made payable to the " Asiatic Society," only.

12–2–03

Books are supplied by V.-P.P.

